अर्हम् ।



श्रीमच्छ्यामाचार्यदृब्धं श्रीमन्मलयगिर्याचार्यविहितविवरणयुतं

# श्रीप्रज्ञापनोपाङ्गम् (पूर्वार्द्धम्)

प्रकाशयित्री—कर्पटवाणिज्यपुरीयश्रेष्ठिमीठाभाइकल्याणचंद्राख्यसंस्थाद्वारागतश्रीसङ्घसत्कभगवतीसूत्रीय-
२३२१ रूप्यक एकत्रिंशदधिकत्रयोविंशतिशतश्रेष्ठिमगनलालभाइचन्द्रकारितसुधातुमयस्व[illegible]भवसमुत्
त्र्यधिकैकादशशत ११७० रूप्यकसाहाय्येनागमोदयसमितिः श्रेष्ठिसुरचन्द्रात्मजवेणीचन्द्रद्वारा

मोहमय्यां 'निर्णयसागर' मुद्रणालये रामचंद्र येसु शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४४४ विक्रमसंवत् १९७४ क्राइष्ट १९१८.

प्रतयः १००० ]

वेतनं ३-१४-० [ Rs. 3-14-0 ]

# श्रीआगमवाचनामां मदद.



| मददनी रकम. | मददगारोनां नाम. | गामनुं नाम. |
|---|---|---|
| × ३००० | शेठ उत्तमचंद खीमचंद | पाटण. |
| * १५०० | वोरा लल्लुभाइ कीशोरदास | मेसाणा. |
| × १५०० | दोसी कस्तुरचंद वीरचंद | मेसाणा. |
| ॥ १००१ | शा. रायचंदभाइ दुर्लभदास | कालीयावाडी. |
| १००१ | संघवी बुलाखीदास पुंजीराम | मेसाणा. |
| ॥ १००१ | भणसाली रूपचंद मूलजीनी विधवाबाई रामकुंवरबाइ | पोरबंदर. |
| × १००१ | गांधी रामचंद हरगोविन्ददास | मेसाणा. |
| × १००० | शा. हालाभाइ मगनलाल | पाटण. |
| × ५५१। | शा. खुशालभाइ करमचंद | वेरावळ. |

| मददनी रकम. | मददगारोनुं नाम. | गामनुं नाम. |
|---|---|---|
| ५५१ | बाबु चुनीलालजी पन्नालालजी | पाटण. |
| × ५०१ | पारी त्रीकमदास हीराचंद | मेसाणा. |
| ५०१ | शेठ नगीनदास छगनलाल | माणसा. |
| × ५०१ | शा. कल्याणचंद उत्तमचंदनी विधवा नंदुबाइ | प्रभासपाटण. |
| × ५०१ | शा. कल्याणचंद लक्ष्मीचंद | वेरावळ. |
| × ५०१ | परी बालाभाइ देवचंद | कपडवंज. |
| × ५०१ | शेठ जेसींगभाइ प्रेमाभाइ केवलभाइ | कपडवंज. |
| × ५०० | झवेरी कस्तुरचंद झवेरचंद | सुरतबंदर. |

# श्रीआगमछपाववामां मदद.

| मदद रकम. | अमूक सूत्रमां. | मददगारनुं नाम. | गाम. |
|---|---|---|---|
| × २२०० | श्रीआचारांगजीमां | वोरा जेसींगभाइ डोसाभाइ हस्ते वोरा लल्लुभाइ कीशोरदास | मेसाणा. |
| १००१ | सूयगडांगजीमां | शेठ नगीनदास जीवणजी | नवसारी. |
| × ६०१ | " | शेठ लल्लुभाइ केवलदास | कपडवंज. |
| × ५०१ | " | शेठ मगनलाल दीपचंद | माणसा. |
| × ५०१ | " | शा नथुभाइ लालचंदनी दीकरी बाइ परसन | कपडवंज. |
| × ५०० | " | झवेरी कस्तुरचंद झवेरचंद | सुरतबंदर. |
| × ५०० | " | बाइ पारवती ते शा. दलछराम वखतचंदनी विधवा | अमदावाद. |

| मदद रकम. | अमूक सूत्रमां. | मददगारनुं नाम. | गाम. |
|---|---|---|---|
| × ५०० | " | नाई मोंघीबाई शेठ लल्लुभाइ चुनीलालनी धणीयाणी | श्रीसुरतबंदर. |
| ५०० | " | शेठ सोभाग्यचंद माणेकचंद | " |
| × १००० | ठाणांगजीमां | श्रीछाणीना संघतरफथी | छाणी. |
| × १००० | " | शेठ मगनलाल पीतांबरदास | अमदावाद. |
| × १००० | " | शेठ दीपचंद सुरचंद | श्रीसुरतबंदर. |
| × ७५१ | समवायांगजीमां | शेठ मगनभाइ कस्तुरचंदनी विधवा बाइ हीराकोर | भरुच. |
| × ६२५ | " | शेठ कस्तुरचंद नानचंद | रुपाल. |
| × ५०० | " | श्रीशान्तिनाथना देरासरना उपाश्रयना हा० बेन नवल | मुंबाइ. |

| मदद रकम. | अमूंक सूत्रमां. | मददगारनुं नाम. | गाम. |
|---|---|---|---|
| ४२०० | श्रीभगवतीजीमां | शेठ पुनमचंदजी करमचंदजी कोटावाळा पत्रव्यवहार चाले छे. | पाटण. |
| × ४२०० | ,, | शाखाते हा: झवेरी हीराचंद तलकचंद | सुरतबंदर. |
| ४२०० | ,, | शेठ उत्तमचंद मूलचंद तथा शेठ अमेचंद मूलचंद | सुरतबंदर. |
| १२५० | श्रीज्ञाताजीमां | शेठ उत्तमचंद खीमचंद | पाटण. |
| × १२०० | ,, | झवेरी मगनभाइ प्रतापचंद | सुरतबंदर. |
| १००० | ,, | शेठ अमीचंद खुशालभाइ फुलचंद जवेरी. | सुरतबंदर. |
| × ५०१ | उपाशकदशांग, अंतगडदशांग, तथा अनुत्तरोववाइ. | शेठ चुनीलाल छगनचंद श्रोफ अडधा भागमां | सुरतबंदर. |

| मदद रकम. | अमूक सूत्रमां. | मददगारनुं नाम. | गाम. |
|---|---|---|---|
| × १००० | रायपसेणीजीमां | पारी-सरूपचंद लल्लुभाइ | मेसाणा. |
| ॥ १००० | ,, | शा. रायचंदभाइ दुर्लभदास | कालीयावाडी. |
| × ६५१ | ,, | शेठ मोहनलाल सांकलचंद | अमदाबाद. |
| × ७५० | प्रश्नव्याकरणमां | बाबु गुलाबचंदजी अमीचंदजी झवेरी | मुंबाइबंदर. |
| ७५० | ,, | शेठ मंछुभाइ तलकचंद | सुरतबंदर. |
| ५०० | ,, | शेठ कल्याणचंद सोभाग्यचंद झवेरी | सुरतबंदर. |
| * ३७२५ | आवश्यकजीमां | बाबु चुनीलालजी पन्नालालजी झवेरी | मुंबाइबंदर. |

| मदद रकम. | अमूक सूत्रमां. | मददगारनुं नाम. | गाम. |
|---|---|---|---|
| × ५५० | उववाइजीमां | शा. हरखचंद अमरचंदनी-दीकरी बेन रतन तथा तेजकोर | सुरतबंदर. |
| × ५४० | ” | झवेरी नवलचंद उदेचंदनी विधवाबाइ नंदकोर | सुरतबंदर |
| × ३५०१ | पन्नवणाजीमां | श्रीकपडवंजना संघतरफथी पारी-मीठाभाइ कल्याणचंदनी पेढीमांथी ज्ञानखाताना मारफत परी बाला-भाइ दलसुखभाइ रु. २३३१. चउद सुपननी उपजना रु: ११७० | कपडवंज |
| * १८०० | नंदीजीमां | शेठ प्रेमचंद रायचंद | मुंबाइबंदर |
| ÷ १७५५ | ओघनिर्युक्तिमां | जैनविद्याशाला तरफथी सुबाजी रवचंद जयचंद | अमदावाद |
| * २८५१ | चंदपन्नतिसूत्रमां | झवेरी भगवानदास हीराचंद | मुंबाइबंदर |

× आ निशानीवाळा सद्ग्रहस्थोनी रकम वसुल आवी गइ छे माटे तेओने धन्यवाद घटे छे.

॥ आ निशानीवाळा सद्ग्रहस्थोनी रकम अर्ध वसुल आवी गई छे.

* आ निशानीवाळा सद्ग्रहस्थोनी रकमनो थोडो भाग बाकी छे.

÷ आ निशानीवाळा सद्ग्रहस्थोनी रकमनो झाझो भाग बाकी छे.

॥ अर्हम् ॥

श्रीमदार्यश्यामाचार्यसंकलितम्

श्रीमन्मलयगिर्याचार्यविरचितवृत्तिपरिकरितं

# श्रीप्रज्ञापनासूत्रम्



जयति नमदमरमुकुटप्रतिबिम्बच्छद्मविहितबहुरूपः । उद्धर्तुमिव समस्तं विश्वं भवपङ्कतो वीरः ॥ १ ॥

जिनवचनामृतजलधिं वन्दे यद्बिन्दुमात्रमादाय । अभवन्नूनं सत्त्वा जन्मजराव्याधिपरिहीणाः ॥ २ ॥

प्रणमत गुरुपदपङ्कजमधरीकृतकामधेनुकल्पलतम् । यदुपास्तिवशान्निरुपममश्नुवते ब्रह्म तनुभाजः ॥ ३ ॥

जडमतिरपि गुरुचरणोपास्तिसमुद्भूतविपुलमतिविभवः । समयानुसारतोऽहं विदधे प्रज्ञापनाविवृतिम् ॥ ४ ॥

अथ प्रज्ञापनेति कः शब्दार्थः ?, उच्यते, प्रकर्षेण—निःशेषकुतीर्थितीर्थकरासाध्येन यथावस्थितस्वरूपनिरूपणलक्षणेन ज्ञाप्यन्ते—शिष्यबुद्धावारोप्यन्ते जीवाजीवादयः पदार्था अनयेति प्रज्ञापना, इयं च समवायाख्यस्य चतुर्था-

ङ्गस्योपाङ्गं, तदुक्तार्थप्रतिपादनात्, उक्तप्रतिपादनमनर्थकमिति चेत्, न, उक्तानामपि विस्तरेणाभिधानस्य मन्दमतिविनेयजनानुग्रहार्थतया सार्थकत्वात् । इदञ्चोपाङ्गमपि प्रायः सकलजीवाजीवादिपदार्थशासनात् शास्त्रं, शास्त्रस्य चादौ प्रेक्षावतां प्रवृत्त्यर्थमवश्यं प्रयोजनादित्रितयं मङ्गलं च वक्तव्यम्, उक्तं च–"प्रेक्षावतां प्रवृत्त्यर्थं, फलादित्रितयं स्फुटम् । मङ्गलं चैव शास्त्रादौ, वाच्यमिष्टार्थसिद्धये ॥ १ ॥ इति" तत्र प्रयोजनं द्विधा–परमपरं च, पुनरेकैकं द्विधा—कर्तृगतं श्रोतृगतं च, तत्र द्रव्यास्तिकनयमतपर्यालोचनायामागमस्य नित्यत्वात् कर्त्तुरभाव एव, तथाचोक्तम्–"एषा द्वादशाङ्गी न कदाचिन्नासीत् न कदाचिन्न भवति न कदाचिन्न भविष्यति,ध्रुवा नित्या शाश्वती"त्यादि, पर्यायास्तिकनयमतपर्यालोचनायां चानित्यत्वादवश्यंभावी तत्सद्भावः, तत्त्वपर्यालोचनायां तु सूत्रार्थोभयरूपत्वादागमस्यार्थापेक्षया नित्यत्वात् सूत्रापेक्षया चानित्यत्वात् कथञ्चित् कर्तृसिद्धिः, तत्र सूत्रकर्त्तुरनन्तरं प्रयोजनं सत्त्वानुग्रहः परम्परं त्वपवर्गप्राप्तिः, उक्तं च–"सर्वज्ञोक्तोपदेशेन, यः सत्त्वानामनुग्रहम् । करोति दुःखतप्तानां, स प्राप्नोत्यचिराच्छिवम् ॥ ११ ॥" तदर्थप्रतिपादकस्यार्हतः किं प्रयोजनमिति चेत्, न किञ्चित्, कृतकृत्यत्वात्, प्रयोजनमन्तरेणार्थप्रतिपादनप्रयासो निरर्थक इति चेत्, न, तस्य तीर्थकरनामकर्मविपाकोदयप्रभवत्वात्, उक्तं च–"[1]तं च कहं वेइज्जइ?, अगिलाए धम्म देसणाए उ" इति, श्रोतृणामनन्तरं प्रयोजनं विवक्षिताध्ययनार्थपरिज्ञानं, परम्परं

१ तच्च कथं वेद्यते?, अग्लान्या धर्मदेशनायैव (०देसणाईहिं (आव० नि०) ।

तु निःश्रेयसावासिः, ते हि विवक्षितमध्ययनमर्थतः सम्यगवगम्य संसाराद्विरज्यन्ते, विरक्ताश्च सन्तः संसाराद्विनिर्जिगमिषवः संयमाध्वनि यथाऽऽगमं सम्यक् प्रवृत्तिमातन्वते, प्रवृत्तानां च संयमप्रकर्षवशत उपजायते सकलकर्म्मक्षयान्निःश्रेयसावासिरिति, उक्तं च–"सम्यग्भावपरिज्ञानाद्विरक्ता भवतो जनाः । क्रियाऽऽसक्ता ह्यविघ्नेन, गच्छन्ति परमां गतिम् ॥ १ ॥" इति, अभिधेयं जीवाजीवस्वरूपं, तच्च प्राक् प्रदर्शितनामव्युत्पत्तिसामर्थ्यमात्रादवगतम् । सम्बन्धो द्वेधा–उपायोपेयभावलक्षणो गुरुपर्वक्रमलक्षणश्च, तत्राद्यस्तर्कानुसारिणः प्रति, तद्यथा–वचनरूपापन्नं प्रकरणमुपायः तत्परिज्ञानं चोपेयं, गुरुपर्वक्रमलक्षणः केवलश्रद्धानुसारिणः प्रति, तं चाग्रे स्वयमेव सूत्रकृदभिधास्यति। इदं च प्रज्ञापनाख्यमुपाङ्गं सम्यग्ज्ञानहेतुत्वादत एव परम्परया मुक्तिपदप्रापकत्वात् श्रेयोभूतम्, अतो मा भूदत्र विघ्न इति विघ्नविनायकोपशान्तये शिष्याणां मङ्गलबुद्धिपरिग्रहाय स्वतो मङ्गलभूतस्याप्यस्यादिमध्यावसानेषु मङ्गलमभिधातव्यम्, आदिमङ्गलं ह्यविघ्नेन शास्त्रपारगमनार्थं, मध्यमङ्गलमवगृहीतशास्त्रार्थस्थिरीकरणार्थम्, अन्तमङ्गलं शिष्यप्रशिष्यपरम्परया शास्त्रस्याव्यवच्छेदार्थं, उक्तं च–"तं[1] मङ्गलमाईए मज्झे पज्जंतए य सत्थस्स । पढमं सत्थत्थाविग्घपारगमणाय निद्दिट्ठं ॥१॥ तस्सेव य थेज्जत्थं मज्झिमयं अन्तिमंपि तस्सेव । अव्वोच्छित्तिनिमित्तं

---

१ तन्मङ्गलमादौ मध्ये पर्यन्ते च शास्त्रस्य । प्रथमं शास्त्रार्था (स्त्रस्या) विघ्नपारगमनाय निर्दिष्टम् ॥ १ ॥ तस्यैव च (तु) स्थैर्यार्थं मध्यमन्त्यमपि तस्यैव । अव्युच्छित्तिनिमित्तं + प्रदर्शितमेव व्यु० प्र०

सिंस्सपसिस्साइवंसस्स[1] ॥ २ ॥'' तत्र प्रथमपदगतेन 'ववगयजरमरणभये' इत्यादिना ग्रन्थेनादिमङ्गलम्, इष्टदेवतास्तवस्य परममङ्गलत्वात्, उपयोगपदगतेन 'कइविहे णं भन्ते ! उवओगे पन्नत्ते' इत्यादिना मध्यमङ्गलम्, उपयोगस्य ज्ञानरूपत्वात्, ज्ञानस्य च कर्मक्षयं प्रति प्रधानकारणतया मङ्गलत्वात्, न च कर्मक्षयं प्रति प्रधानकारणता तस्य न प्रसिद्धा, तस्याः साक्षादागमेऽभिधानात्, तथा चागमः—''[2]जं अन्नाणी कम्मं खवेइ बहुयाहिं वासकोडीहिं। तं नाणी तिहिं गुत्तो खवेइ उस्सासमित्तेणं ॥ १ ॥'' तथा समुद्घातपदगतेन केवलिसमुद्घातपरिसमाप्त्युत्तरकालभाविना सिद्धाधिकारप्रतिबद्धेन—''[3]निच्छिन्नसव्वदुक्खा जाइजरामरणबन्धणविमुक्का। सासयमव्वाबाहं चिट्ठन्ति सुही सुहं पत्ता ॥ १ ॥'' इत्यादिना अवसानमङ्गलम् ॥ अधुनाऽऽदिमङ्गलसूत्रं व्याख्यायते—

ववगयजरमरणभये सिद्धे अभिवन्दिऊण तिविहेणं । वन्दामि जिणवरिन्दं तेलोक्कगुरुं महावीरं ॥ १ ॥

सितं—बद्धमष्टप्रकारं कर्मेन्धनं ध्मातं—दग्धं जाज्वल्यमानशुक्लध्यानानलेन यैस्ते निरुक्तविधिना सिद्धाः, अथवा 'षिधु गतौ' सेधन्ति स्म—अपुनरावृत्त्या निर्वृतिपुरीमगच्छन् यदिवा 'षिध संराद्धौ' सिध्यन्ति स्म—निष्ठितार्था भवन्ति स्म यद्वा 'षिधु शास्त्रे माङ्गल्ये च' सेधन्ते स्म—शासितारोऽभवन् मङ्गल्यरूपतां वाऽनुभवन्ति स्मेति सिद्धाः, अथवा

१ शिष्यप्रशिष्यादिवंशे ॥ २ ॥ २ यदज्ञानी कर्म क्षपयति बहुकाभिर्वर्षकोटीभिः। तत् ज्ञानी त्रिभिर्गुप्तः क्षपयत्युच्छ्वासमात्रेण ॥ १ ॥

३ निश्छिन्नसर्वदुःखा जातिजरामरणबन्धनविमुक्ताः। शाश्वतमव्याबाधं तिष्ठन्ति सुखिनः सुखं प्राप्ताः ॥ १ ॥

सिद्धाः—नित्या अपर्यवसानस्थितिकत्वात्, प्रख्याता वा भव्यैरुपलब्धगुणसन्दोहत्वात्, उक्तं च—"ध्मातं सितं येन पुराणकर्म, यो वा गतो निर्वृतिसौधमूर्ध्नि। ख्यातोऽनुशास्ता परिनिष्ठितार्थो, यः सोऽस्तु सिद्धः कृतमङ्गलो मे ॥ १ ॥" सिद्धाश्च नामादिभेदतोऽनेकधा ततो यथोक्तसिद्धप्रतित्त्यर्थं विशेषणमाह—'व्यपगतजरामरणभयान्' जरा-वयोहानिलक्षणा मरणं—प्राणत्यागरूपम् भयम्—इहलोकादिभेदात्सप्तप्रकारम्, उक्तं च—"ईहपरलोगादाणं अक-म्हआजीवमरणमसिलोए" इति, विशेषतः—अपुनर्भावरूपतया अपगतानि—परिभ्रष्टानि जरामरणभयानि येभ्यस्ते तथा तान्, 'त्रिविधेन' मनसा वाचा कायेन, अनेन योगत्रयव्यापारविकलं द्रव्यवन्दनमित्याह, 'अभिवन्द्य' अभिमुखं वन्दित्वा, प्रणम्येत्यर्थः। अनेन समानकर्तृकतया पूर्वकाले क्त्वाप्रत्ययविधानान्नित्यानित्यैकान्तपक्षव्यवच्छेदमाह, एकान्तनित्यानित्यपक्षे क्त्वाप्रत्ययस्यासम्भवात्, तथाहि—अप्रच्युतानुत्पन्नस्थिरैकस्वभावं नित्यम्, तस्य कथं भिन्न-कालक्रियाद्वयकर्तृत्वोपपत्तिः?, आकालमेकस्वभावत्वेनैकस्या एव कस्याश्चित् क्रियायाः सदा भावप्रसङ्गात्, अनित्य-मपि प्रकृत्यैकक्षणस्थितिधर्मकम्, ततस्तस्यापि भिन्नकालक्रियाद्वयकर्तृत्वायोगः, अवस्थानाभावादित्यलं विस्तरेण, अन्यत्र सुचर्चितत्वात्, क्त्वाप्रत्ययस्योत्तरक्रियासापेक्षत्वादुत्तरक्रियामाह—'वन्दामि जिणवरिन्द' मित्यादि, 'सूर वीर विक्रान्तौ' वीरयति स्म कषायादिशत्रून् प्रति विक्रामति स्मेति वीरः, महांश्चासौ वीरश्च महावीरः, इदं च 'महावीर'

१ इहपरलोकादानाकस्मादाजीवमरणाश्लोकाः।

इति नाम न यादृच्छिकम्, किन्तु यथावस्थितमनन्यसाधारणं परीषहोपसर्गादिविषयं वीरत्वमपेक्ष्य सुरासुरकृतम्, उक्तं च—"अयले भयभेरवाणं खन्तिखमे परीसहोवसग्गाणं। देवेहिं कए महावीर" इति, अनेनापायापगमातिशयो ध्वन्यते, तं कथंभूतमित्याह—'जिनवरेन्द्रम्' जयन्ति—रागादिशत्रूनभिभवन्ति जिनाः, ते च चतुर्विधाः, तद्यथा—श्रुतजिना अवधिजिना मनःपर्यायजिना केवलिजिनाः, तत्र केवलिजिनत्वप्रतिपत्तये वरग्रहणम्, जिनानां वरा—उत्तमा भूतभवद्भाविभावस्वभावावभासिकेवलज्ञानकलितत्वात् जिनवराः, ते चातीर्थकरा अपि सन्तः सामान्यकेवलिनो भवन्ति ततस्तीर्थकरत्वप्रतिपत्त्यर्थमिन्द्रग्रहणम्, जिनवराणामिन्द्रो जिनवरेन्द्रः, प्रकृष्टपुण्यस्कन्धरूपतीर्थकरनामकर्मोदयात्तीर्थकर इत्यर्थः। अनेन ज्ञानातिशयं पूजातिशयं चाह, ज्ञानातिशयमन्तरेण जिनेषु मध्ये उत्तमत्वस्य पूजातिशयमन्तरेण जिनवराणामपि मध्ये इन्द्रत्वस्यायोगात्, तं पुनः किंभूतमित्याह—'त्रैलोक्यगुरुम्' गृणाति यथावस्थितं प्रवचनार्थमिति गुरुः त्रैलोक्यस्य गुरुस्त्रैलोक्यगुरुः, तथा च भगवान् अधोलोकनिवासिभवनपतिदेवेभ्यस्तिर्यग्लोकनिवासिव्यन्तरनरपशुविद्याधरज्योतिष्केभ्य ऊर्ध्वलोकनिवासिवैमानिकदेवेभ्यश्च धर्मं दिदेश, तम्, अनेन वागतिशयमाह। एते चापायापगमातिशयादयश्चत्वारोऽप्यतिशया देहसौगन्ध्यादीनामतिशयानामुपलक्षणम्, तानन्तरेणैषामसम्भवात्, ततश्चतुस्त्रिंशदतिशयोपेतं भगवन्तं महावीरं वन्दे इत्युक्तं द्रष्टव्यम्॥ आह—ननु

१ अचलो भयभैरवेषु क्षान्तिक्षमः परीषहोपसर्गाणां देवैः कृतं (श्रमणो भगवान्) महावीरः (इति)।

ऋषभादीन् व्युदस्य किमर्थं भगवतो महावीरस्य वन्दनम् ?, उच्यते, वर्त्तमानतीर्थाधिपतित्वेनासन्नोपकारित्वात्, तदेवासन्नोपकारित्वं दर्शयति—

सुयरयणनिहाणं जिणवरेणं भवियजणणिव्वुइकरेणं । उवदंसिया भगवया पन्नवणा सव्वभावाणं ॥ २ ॥

अत्र प्रज्ञापनेति विशेष्यं शेषं सामानाधिकरण्येन वैय्यधिकरण्येन च विशेषणं, 'जिणवरेण'न्ति जिनाः—सामान्यकेवलिनः तेषामपि वरः—उत्तमस्तीर्थकृत्त्वात् जिनवरस्तेन सामर्थ्यात् महावीरेण, अन्यस्य वर्त्तमानतीर्थाधिपतित्वाभावात्, इह छद्मस्थक्षीणमोहजिनापेक्षया सामान्यकेवलिनोऽपि जिनवरा उच्यन्ते ततस्तत्कल्पं मा ज्ञासीद्विनेयजन इति तीर्थकृत्त्वप्रतिपत्तये विशेषणान्तरमाह—'भगवता' भगः—समग्रैश्वर्यादिरूपः, उक्तं च—"ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः । धर्मस्याथ प्रयत्नस्य, षण्णां भग इतीङ्गना ॥ १ ॥" भगोऽस्याऽस्तीति भगवान्, अतिशायने वतुप्रत्ययः, अतिशायी च भगो वर्द्धमानस्वामिनः शेषप्राणिगणापेक्षया, त्रैलोक्याधिपतित्वात्, तेन भगवता, परमार्हन्त्यमहिमोपेतेनेत्यर्थः; पुनः कथंभूतेनेत्याह—'भव्यजननिर्वृतिकरेण' भव्यः—तथाविधानादिपारिणामिकभावात् सिद्धिगमनयोग्यः स चासौ जनश्च भव्यजनः निर्वृतिः—निर्वाणं सकलकर्ममलापगमनेन स्वस्वरूपलाभतः परमं स्वास्थ्यं तद्धेतुः सम्यग्दर्शनाद्यपि कारणे कार्योपचारात् निर्वृतिस्तत्करणशीलो निर्वृतिकरः भव्यजनस्य निर्वृतिकरो भव्यजननिर्वृतिकरस्तेन, आह—भव्यग्रहणमभव्यव्यवच्छेदार्थमन्यथा तस्य नैरर्थक्यप्रसङ्गात्, तत इदमापतितं—भव्यानामेव

सम्यग्दर्शनादिकं करोति नाभव्यानाम्, न चैतदुपपन्नम्, भगवतो वीतरागत्वेन पक्षपातासम्भवात्, नैतत्सारम्, सम्यक्वस्तुतत्त्वापरिज्ञानात्, भगवान् हि सवितेव प्रकाशमविशेषेण प्रवचनार्थमातनोति, केवलमभव्यानां तथास्वाभाव्यादेव तामसखगकुलानामिव सूर्यप्रकाशो न प्रवचनार्थ उपदिश्यमानोऽपि उपकाराय प्रभवति, तथा चाह वादिमुख्यः—"सद्धर्म्मबीजवपनानघकौशलस्य, यल्लोकबान्धव ! तवापि खिलान्यभूवन् । तन्नाद्भुतं खगकुलेषु हि तामसेषु, सूर्यांशवो मधुकरीचरणावदाताः ॥ १ ॥" ततो भव्यानामेव भगवद्वचनादुपकारो जायते इति भव्यजननिर्वृतिकरेणेत्युक्तम् । किमित्याह—'उवदंसिय'त्ति उप—सामीप्येन यथा श्रोतॄणां झटिति यथाऽवस्थितवस्तुतत्त्वाववोधो भवति तथा, स्फुटवचनैरित्यर्थः, दर्शिता—श्रवणगोचरं नीता, उपदिष्टा इत्यर्थः, काऽसौ ?—'प्रज्ञापना' प्रज्ञाप्यन्ते—प्ररूप्यन्ते जीवादयो भावा अनया शब्दसंहत्या इति प्रज्ञापना, किंविशिष्टेत्यत आह—'श्रुतरत्ननिधानम्' इह रत्नानि द्विविधानि भवन्ति, तद्यथा—द्रव्यरत्नानि भावरत्नानि (च), तत्र द्रव्यरत्नानि वैडूर्यमरकतेन्द्रनीलादीनि, भावरत्नानि श्रुतव्रतादीनि, तत्र द्रव्यरत्नानि न तात्त्विकानीति भावरत्नैरिहाधिकारः, तत एवं समासः—श्रुतान्येव रत्नानि श्रुतरत्नानि न तु श्रुतानि च रत्नानि च, नापि श्रुतानि रत्नानीवेति, कुत इति चेत् ?, उच्यते, प्रथमपक्षे श्रुतव्यतिरिक्तैर्द्रव्यरत्नैरिहाधिकाराभावात्, द्वितीयपक्षे तु श्रुतानामेव तात्त्विकरत्नत्वात्, शेषरत्नैरुपमाया अयोगात्, निधानमिव निधानं श्रुतरत्नानां निधानं श्रुतरत्ननिधानं, केषां प्रज्ञापनेत्यत आह—'सर्वभावानाम्' सर्वे च ते भावाश्च सर्वभावाः—

जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षाः, तथाहि—अस्यां प्रज्ञापनाया षट्त्रिंशत्पदानि तत्र प्रज्ञापना[1] बहुवक्तव्य[3]विशेष[10]चरम[13]परिणामसञ्ज्ञेषु पञ्चसु पदेषु जीवाजीवानां प्रज्ञापना प्रयोगपदे[16] क्रियापदे[22] चाश्रवस्य 'कायवाङ्मनःकर्म योगः (स) आश्रवः' (तत्त्वा० अ० ६ सू०१–२) इति वचनात्, कर्मप्रकृतिपदे[23] बन्धस्य समुद्घातपदे[36] केवलिसमुद्घातप्ररूपणायां संवरनिर्जरामोक्षाणां त्रयाणां, शेषेषु तु स्थानादिषु[2] पदेषु क्वचित्कस्यचिदिति, अथवा 'सर्वभावाना'मिति द्रव्यक्षेत्रकालभावानाम्, एतद्व्यतिरेकेणान्यस्य प्रज्ञापनीयस्याभावात्, तत्र प्रज्ञापनापदे[1] जीवाजीवद्रव्याणां प्रज्ञापना स्थानपदे[2] जीवाधारस्य क्षेत्रस्य स्थितिपदे[4] नारकादिस्थितिनिरूपणात् कालस्य शेषपदेषु सङ्ख्याज्ञानादिपर्यायव्युत्क्रान्त्युच्छ्वासादीनां भावानामिति । अस्याश्च गाथाया 'अज्झयणमिणं चित्त' मित्यनया गाथया सहाभिसम्बन्धः ॥ केवलं येनेयं सत्त्वानुग्रहाय श्रुतसागरादुद्धृता असावप्यासन्नतरोपकारित्वादस्मद्विधानां नमस्कारार्ह इति तन्नमस्कारविषयमिदमपान्तराल एवान्यकर्तृकं गाथाद्वयम्—

वायगवरवंसाओ तेवीसइमेण धीरपुरिसेणं । दुद्धरधरेण मुणिणा पुव्वसुयसमिद्धबुद्धीण ॥ १ ॥

सुयसागरा विणेऊण जेण सुयरयणमुत्तमं दिन्नं । सीसगणस्स भगवओ तस्स नमो अज्जसामस्स ॥ २ ॥ (प्र०)

वाचकाः—पूर्वविदः वाचकाश्च ते वराश्च वाचकवराः—वाचकप्रधानाः तेषां वंशः—प्रवाहो वाचकवरवंशः तस्मिन्, सूत्रे च पञ्चमीनिर्देशः प्राकृतत्वात्, प्राकृते हि सर्वासु विभक्तिष्वपि सर्वा विभक्तयो यथायोगं प्रवर्त्तन्ते, तथा चाह पाणिनिः स्वप्राकृतव्याकरणे—'व्यत्ययोऽप्यासा' मिति, त्रयोविंशतितमेन तथा च सुधर्मस्वामिन आरभ्य भगवा-

नार्यश्यामस्त्रयोविंशतितम एव, किंभूतेन ?–'धीरपुरुषेण' धीः–बुद्धिस्तया राजते इति धीरः धीरश्चासौ पुरुषश्च धीरपुरुषस्तेन, तथा दुर्द्धराणि प्राणातिपातादिनिवृत्तिलक्षणानि पञ्च महाव्रतानि धारयतीति दुर्द्धरधरस्तेन, तथा मन्यते जगतस्त्रिकालावस्थामिति मुनिस्तेन, विशिष्टसंवित्समन्वितेनेत्यर्थः, पुनः कथंभूतेनेत्याह–'पूर्वश्रुतसमृद्धबुद्धिना' पूर्वाणि च तत् श्रुतं च पूर्वश्रुतं तेन समृद्धा–वृद्धिमुपगता बुद्धिर्यस्य स पूर्वश्रुतसमृद्धबुद्धिस्तेन, आह–यो वाचकवरवंशान्तर्गतः स पूर्वश्रुतसमृद्धबुद्धिरेव भवति, ततः किमनेन विशेषणेन ?, सत्यमेतत्, किन्तु पूर्वविदोऽपि षट्स्थानपतिता भवन्ति, तथा च चतुर्दशपूर्वविदामपि मतिमधिकृत्य षट्स्थानकं वक्ष्यति, तत आधिक्यप्रदर्शनार्थमिदं विशेषणमित्यदोषः, 'समिद्धबुद्धीणे' त्यत्र णाशब्दस्य ह्रस्वत्वं द्धिशब्दस्य च दीर्घताऽऽर्षत्वात्, तथा श्रुतमनर्वाक्पारत्वात् सुभाषितरत्नयुक्तत्वाच्च सागर इव श्रुतसागरः 'व्याघ्रादिभिर्गौणैस्तद्गुणानुक्ताविति(म० नामप्र० पा० ८ सू० ३१)' समासः, तस्मात् 'विणेऊणन्ति' देशीवचनमेतत्, साम्प्रतकालीनपुरुषयोग्यं वीनयित्वेत्यर्थः, येनेदं प्रज्ञापनारूपं श्रुतरत्नमुत्तमं–प्रधानं, प्राधान्यं च न शेषश्रुतरत्नापेक्षया, किन्तु स्वरूपतः, दत्तं शिष्यगणाय तस्मै, भगवते–ज्ञानैश्वर्यधर्मादिमते आरात्सर्वहेयधर्मेभ्यो यातः–प्राप्तो गुणैरित्यार्यः स चासौ श्यामश्च आर्यश्यामः तस्मै, सूत्रे च षष्ठी चतुर्थ्यर्थे[1] द्रष्टव्या, 'छट्ठिविभत्तीएँ भन्नइ चउत्थी' इति वचनात् ॥ अधुनोक्तसम्बन्धैवेयं गाथा—

१ षष्ठीविभक्तया भण्यते चतुर्थी।

१ प्रज्ञापनापदं आर्यश्यामायनतिः.

अज्झयणमिणं चित्तं सुयरयणं दिट्ठिवायणीसन्दं । जह वन्नियं भगवया अहमवि तह वन्नइस्सामि ॥ ३ ॥

अध्ययनमिदं–प्रज्ञापनाख्यम्, ननु यदीदमध्ययनं किमित्यस्यादावनुयोगादिद्वारोपन्यासो न क्रियते ?, उच्यते, नायं नियमो यदवश्यमध्ययनादावुपक्रमाद्युपन्यासः क्रियते इति, अनियमोऽपि कुतोऽवसीयते ? इति चेत्, उच्यते, नन्द्यध्ययनादिष्वदर्शनात्, तथा चित्रार्थाधिकारयुक्तत्वाच्चित्रम्, श्रुतमेव रत्नं श्रुतरत्नं दृष्टिवादस्य–द्वादशाङ्गस्य निष्यन्द इव दृष्टिवादनिष्यन्दः, सूत्रे नपुंसकतानिर्देशः प्राकृतत्वात्, यथा वर्णितं भगवता–श्रीमन्महावीरवर्धमानस्वामिना इन्द्रभूतिप्रभृतीनामध्ययनार्थस्य वर्णितत्वात् अध्ययनं वर्णितमित्युक्तम्, अहमपि तथा वर्णयिष्यामि ॥ आह–कथमस्य छद्मस्थस्य तथा वर्णयितुं शक्तिः ?, नैष दोषः, सामान्येनाभिधेयपदार्थवर्णनमात्रमधिकृत्यैवमभिधानात्, तथा चाहमपि तथा वर्णयिष्यामीति किमुक्तं भवति?–तदनुसारेण वर्णयिष्यामि, न स्वमनीषिकयेति ॥ अस्यां च प्रज्ञापनायां षट्त्रिंशत् पदानि भवन्ति, पदं प्रकरणमर्थाधिकार इति पर्यायाः, तानि च पदान्यमूनि—

पन्नवणा[1] ठाणाइं[2] बहुवत्तव्वं[3] ठिई[4] विसेसा[5] य । वक्कन्ती[6] ऊसासो[7] सन्ना[8] जोणी[9] य चरिमाइं[10] ॥ ४ ॥
भासा[11] सरीर[12] परिणाम[13] कसाए[14] इन्दिए[15] पओगे[16] य । लेसा[17] कायठिई[18] या सम्मत्ते[19] अन्तकिरिया[20] य ॥ ५ ॥
ओगाहणसण्ठाणा[21] किरिया[22] कम्मे[23] इयावरे । [कम्मस्स] बन्धए[24] [कम्मस्स] वेदे[25] [ए] वेदस्स बन्धए[26] वेयवेयए[27] ॥ ६ ॥
आहारे[28] उवओगे[29] पासणया[30] सन्नि[31] सञ्जमे[32] चेव । ओही[33] पवियारण[34] वेदणा[35] य तत्तो समुग्घाए[36] ॥ ७ ॥

१ प्रज्ञापनापदं पदाभिधेयनिर्देशः.

तत्र प्रथमं पदं प्रज्ञापनाविषयं प्रश्नमधिकृत्य प्रवृत्तत्वात् प्रज्ञापना १ एवं द्वितीयं स्थानानि २ तृतीयं बहुवक्तव्यम् ३ चतुर्थं स्थितिः ४ पञ्चमं विशेषाख्यं ५ षष्ठं व्युत्क्रान्तिः, व्युत्क्रान्तिलक्षणार्थाधिकारयुक्तत्वात् ६ सप्तममुच्छ्वासः ७ अष्टमं सञ्ज्ञा ८ नवमं योनिः ९ दशमं चरमाणि चरमाणीति प्रश्नमुद्दिश्य प्रवृत्तत्वात् १० एकादशं भाषा ११ द्वादशं शरीरं १२ त्रयोदशं परिणामः १३ चतुर्दशं कषायं १४ पञ्चदशमिन्द्रियं १५ षोडशं प्रयोगः १६ सप्तदशं लेश्या १७ अष्टादशं कायस्थितिः १८ एकोनविंशतितमं सम्यक्त्वम् १९ विंशतितममन्तक्रिया २० एकविंशतितममवगाहनास्थानं २१ द्वाविंशतितमं क्रिया २२ त्रयोविंशतितमं कर्म २३ चतुर्विंशतितमं कर्मणो बन्धकः, तस्मिन् हि यथा जीवः कर्मणो बन्धको भवति तथा प्ररूप्यते इति तत्तथानाम २४ एवं पञ्चविंशतितमं कर्मवेदकः २५ षड्विंशतितमं वेदस्य बन्धक इति, वेदयते—अनुभवतीति वेदस्तस्य बन्ध एव बन्धकः, किमुक्तं भवति ?—कति प्रकृतीर्वेदयमानस्य कतिप्रकृतीनां बन्धो भवतीति तत्र निरूप्यते ततस्तद्वेदस्य बन्ध इति नाम २६ एवं कां प्रकृतिं वेदयमानः कति प्रकृतीर्वेदयति इत्यर्थप्रतिपादकं वेदवेदको नाम सप्तविंशतितमम् २७ अष्टाविंशतितममाहारप्रतिपादकत्वादाहारः २८ एवमेकोनत्रिंशत्तममुपयोगः २९ त्रिंशत्तमं 'पासणय'त्ति दर्शनता ३० एकत्रिंशत्तमं सञ्ज्ञा ३१ द्वात्रिंशत्तमं संयमः ३२ त्रयस्त्रिंशत्तममवधिः ३३ चतुस्त्रिंशत्तमं प्रविचारणा ३४ पञ्चत्रिंशत्तमं वेदना ३५ षट्त्रिंशत्तमं समुद्घातः ३६ ॥ तदेवमुपन्यस्तानि पदानि ॥ साम्प्रतं यथाक्रमं पदगतानि सूत्राणि वक्तव्यानि, तत्र प्रथमपदगतमिदमादिसूत्रम्—

से किं तं पन्नवणा ?, पन्नवणा दुविहा पन्नत्ता, तंजहा—जीवपन्नवणा य अजीवपन्नवणा य ॥ ( सू०१ )

अथास्य सूत्रस्य कः प्रस्तावः ?, उच्यते, प्रश्नसूत्रमिदम्, एतच्चादावुपन्यस्तमिदं ज्ञापयति—पृच्छतो मध्यस्थबुद्धिमतोऽर्थिनो भगवदर्हदुपदिष्टतत्त्वप्ररूपणा कार्या, न शेषस्य, तथा चोक्तम्—'मध्यस्थो बुद्धिमानर्थी, श्रोता पात्रमिति स्मृतः', तत्र सेशब्दो मागधदेशीप्रसिद्धो निपातः तत्रशब्दार्थे, अथवा अथशब्दार्थे, स च वाक्योपन्यासार्थः, किमिति परप्रश्ने, 'तं'ति तावदिति द्रष्टव्यम्, तच्च क्रमोद्द्योतने, तत एष समुदायार्थः—तिष्ठन्तु स्थानादीनि पदानि प्रष्टव्यानि; वाचः क्रमवर्त्तित्वात् प्रज्ञापनाऽनन्तरं च तेषामुपन्यस्तत्वात्, तत्रैतावदेव तावत् पृच्छामि—किं प्रज्ञापनेति, ? अथवा प्राकृतशैल्या 'अभिधेयवल्लिङ्गवचनानि योजनीयानि' इति न्यायादेवं द्रष्टव्यम्, तत्र का तावत् प्रज्ञापनेति ?, एवं सामान्येन केनचित्प्रश्ने कृते सति भगवान् गुरुः शिष्यवचनानुरोधेनादरार्थं किञ्चित् शिष्योक्तं प्रत्युच्चार्याह—'पन्नवणा दुविहा पन्नत्ता' इति, अनेन चागृहीतशिष्याभिधानेन निर्वचनसूत्रेणैतदाचष्टे—न सर्वमेव सूत्रं गणधरप्रश्नतीर्थकरनिर्वचनरूपम्, किन्तु किञ्चिदन्यथाऽपि, बाहुल्येन तु तथारूपम्, यत उक्तम्—'[1]अत्थं भासइ अरिहा सुत्तं गन्थन्ति गणहरा निउण'मित्यादि, तत्र प्रज्ञापनेति पूर्ववत्, 'द्विविधा' द्विप्रकारा 'प्रज्ञप्ता' प्ररूपिता, यदा तीर्थकरा एव निर्वक्तारस्तदाऽयमर्थोऽवसेयः—अन्यैरपि तीर्थकरैः, यदा पुनरन्यः कश्चिदाचार्यस्तन्मतानुसारी तदा तीर्थकरगणधरैरिति, द्वैवि-

१ अर्थं भाषतेऽर्हन् सूत्रं ग्रथ्नन्ति गणधरा निपुणम् ।

ध्यमेवोपदर्शयति—'तंजहा जीवपन्नवणा य अजीवपन्नवणा य' 'तद्यथे'ति वक्ष्यमाणभेदकथनप्रकाशनार्थः, जीवन्ति—प्राणान् धारयन्तीति जीवाः, प्राणाश्च द्विधा—द्रव्यप्राणा भावप्राणाश्च, तत्र द्रव्यप्राणा इन्द्रियादयो भावप्राणा ज्ञानादीनि, द्रव्यप्राणैरपि प्राणिनः संसारसमापन्ना नारकादयः, केवलभावप्राणैः प्राणिनो व्यपगतसमस्तकर्मसङ्गाः सिद्धाः, जीवानां प्रज्ञापना जीवप्रज्ञापना, न जीवा अजीवा—जीवविपरीतस्वरूपाः, ते च धर्माधर्माकाशपुद्गलास्तिकायाद्धासमयरूपास्तेषां प्रज्ञापना अजीवप्रज्ञापना, चकारौ द्वयोरपि प्राधान्यख्यापनार्थौ, न खल्विहान्यतरस्याः प्रज्ञापनायाः गुणभावः, एवं सर्वत्राप्यक्षरगमनिका कार्या ॥ तदेवं सामान्येन प्रज्ञापनाद्वयमुपन्यस्य सम्प्रति विशेपस्वरूपावगमार्थमादावल्पवक्तव्यत्वादजीवप्रज्ञापनां प्रतिपिपादयिषुस्तद्विषयं प्रश्नसूत्रमाह—

से किं तं अजीवपन्नवणा ?, अजीवपन्नवणा दुविहा पन्नत्ता, तंजहा—रूविअजीवपन्नवणा य अरूविअजीवपन्नवणा य (सू० २)

अथ किं तत् अजीवप्रज्ञापनेति ?, अथवा का साऽजीवप्रज्ञापना ?, सूरिराह—'अजीवपन्नवणा दुविहा पन्नत्ता, तंजहा' इत्यादि, अजीवप्रज्ञापना द्विविधा प्रज्ञप्ता, तद्यथा—रूप्यजीवप्रज्ञापना च अरूप्यजीवप्रज्ञापना च, रूपमेषामस्तीति रूपिणः, रूपग्रहणं गन्धादीनामुपलक्षणम्, तद्व्यतिरेकेण तस्यासम्भवात्, तथाहि—प्रतिपरमाणु रूपरसगन्धस्पर्शाः, उक्तं च—"कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः । एकरसगन्धवर्णो द्विस्पर्शः कार्यलिङ्गश्च ॥१॥"

१ परमश्चासावणुश्चेति, वर्णगन्धरसस्पर्शादिकारणमेव तदन्त्यमित्यादि, सूक्ष्मो नित्यश्च परमाणुर्भवति, सर्वेभ्यः पुद्गलेभ्योऽतिसूक्ष्म इत्यर्थः,

तस्मादव्यतिरेकः परस्परं रूपादीनामिति, अथवा रूपं नाम-स्पर्शरूपादिसम्मूर्च्छनात्मिका मूर्त्तिस्तदेषामस्तीति रूपिणः, रूपिणश्च तेऽजीवाश्च रूप्यजीवाः तेषां प्रज्ञापना रूप्यजीवप्रज्ञापना, पुद्गलस्वरूपाजीवप्रज्ञापनेतियावत् , पुद्गलानामेव रूपादिमत्त्वात् , रूपिव्यतिरेकेणारूपिणो धर्मास्तिकायादयस्ते च तेऽजीवाश्चारूप्यजीवाः तेषां प्रज्ञापना अरूप्यजीवप्रज्ञापना, चशब्दौ प्राग्वत् ॥ तत्राल्पवक्तव्यत्वात् प्रथमतोऽरूप्यजीवप्रज्ञापनां चिकीर्षुरिदमाह—

से किं तं अरूविअजीवपन्नवणा ?, अरूविअजीवपन्नवणा दसविहा पन्नत्ता, तंजहा-धम्मत्थिकाए धम्मत्थिकायस्स देसे धम्मत्थिकायस्स पदेसा अधम्मत्थिकाए अधम्मत्थिकायस्स देसे अधम्मत्थिकायस्स पदेसा आगासत्थिकाए आगासत्थिकायस्स देसे आगासत्थिकायस्स पदेसा अद्धासमए १०, सेत्तं अरूविअजीवपन्नवणा ॥ ( सू०३ )

सेशब्दोऽथशब्दार्थः, अथ का सा अरूप्यजीवप्रज्ञापना ?, सूरिराह-अरूप्यजीवप्रज्ञापना 'दशविधा' दशप्रकारा

---

पर्यायार्थतयाऽनित्यत्वेपि द्रव्यार्थतया तु नित्यः, पुनः कीदृशः परमाणुः ?—'एकरसवर्णगन्धः' एक एव वर्णो गन्धो रसश्च परमाणौ यस्मिन् सः, पुनः की० ?—'द्विस्पर्शः' द्वौ स्पर्शौ यस्मिन् स शीतोष्णस्निग्धरूक्षाख्यानां चतुर्णां स्पर्शानां मध्यादविरुद्धस्पर्शद्वयोपेत इत्यर्थः, पुनः कीदृशः परमाणुः ?—'कार्यलिङ्गः' कार्यं घटपटादिवस्तुजातं तल्लिङ्ग—ज्ञापकं यस्य स कथमित्याह—यतः, तत्परमाण्वाख्यं सर्वेषां पदार्थानामन्त्यं कारणं वर्त्तते, अयमत्र भावार्थः—सर्वेऽपि द्विप्रदेशादयः स्कन्धाः, तथा सङ्ख्यातप्रदेशा असङ्ख्यातप्रदेशा अनन्तप्रदेशाश्च ये स्कन्धास्तेषां सर्वेषां पदार्थानामन्त्यं कारणं परमाणुरस्तीत्यर्थः;

प्रज्ञप्ता, अरूप्यजीवानां दशविधत्वात् तत्प्ररूपणाऽपि दशविधोक्ता, तदेव दशविधत्वं दर्शयति—'तंजहे' त्यादि, तद्यथेति वक्ष्यमाणभेदकथनोद्द्योतनार्थः, 'तद्'दशविधत्वम्, यदिवा 'तदि'त्यव्ययं सर्वलिङ्गवचनेषु सा दशविधाऽरूप्यजीवप्रज्ञापना यथा भवति तथा दर्श्यते—'धम्मत्थिकाए'त्ति जीवानां पुद्गलानां च स्वभावत एव गतिपरिणामपरिणतानां तत्स्वभावधरणात्—तत्स्वभावपोषणाद्धर्मः अस्तयश्चेह प्रदेशास्तेषां कायः—सङ्घातः, 'गण काए य निकाए खन्धे वग्गे तहेव रासी य' इतिवचनात्, अस्तिकायः प्रदेशसङ्घात इत्यर्थः; धर्मश्चासौ अस्तिकायश्च धर्मास्तिकायः, अनेन च सकलमेव धर्मास्तिकायरूपमवयविद्रव्यमाह, अवयवी च नामावयवानां तथारूपसङ्घातपरिणामविशेष एव, न पुनरवयवद्रव्येभ्यः पृथगर्थान्तरं द्रव्यम्, तथाऽनुपलम्भात्, तन्तव एव हि आतानवितानरूपसङ्घातपरिणामविशेषमापन्ना लोके पटव्यपदेशभाज उपलभ्यन्ते, न तदतिरिक्तं पटाख्यं नाम, उक्तं चान्यैरपि—'तन्त्वादिव्यतिरेकेण, न पटाद्युपलम्भनम्। तन्त्वादयो विशिष्टा हि, पटादिव्यपदेशिनः ॥१॥" कृतं प्रसङ्गेन, अन्यत्र चिन्तितत्वादेतद्वादस्य, तथा 'धर्मास्तिकायस्य देश' इति तस्यैव धर्मास्तिकायस्य बुद्धिविकल्पितो द्व्यादिप्रदेशात्मको विभागः, 'धम्मत्थिकायस्स पदेसा' इति प्रकृष्टा देशाः प्रदेशाः—निर्विभागा भागा इति भावः, ते चासङ्ख्येयाः, लोकाकाशप्रदेशप्रमाणत्वात् तेषाम्, अत एव बहुवचनम्, धर्मास्तिकायप्रतिपक्षभूतोऽधर्मास्तिकायः, किमुक्तं भवति ?—जीवपुद्गलानां स्थिति-

१ गणः कायो निकायः स्कन्धो वर्गः तथैव राशिश्च ।

परिणामपरिणतानां तत्परिणामोपष्टम्भकोऽमूर्त्तोऽसंख्यातप्रदेशसंघातात्मकोऽधर्मास्तिकायः 'अधर्मास्तिकायस्य देश' इत्यादि पूर्ववत्। तथा 'आङि'ति मर्यादया स्वस्वभावापरित्यागरूपया काशन्ते—स्वरूपेण प्रतिभासन्ते अस्मिन् व्यवस्थिताः पदार्था इत्याकाशम्, यदा त्वभिविधावाङ् तदा 'आङि'ति सर्वभावाभिव्याप्त्या काशते इत्याकाशम्, अस्तयः—प्रदेशास्तेषां कायोऽस्तिकायः आकाशं च तदस्तिकायश्चाकाशास्तिकायः, 'आकाशास्तिकायस्य देश' इत्यादि पूर्ववत्, नवरं प्रदेशा अनन्ता द्रष्टव्याः, अलोकस्यानन्तत्वात्। 'अद्धेति' कालस्याख्या, अद्धा चासौ समयश्चाद्धासमयः, अथवाऽद्धायाः समयो निर्विभागो भागः, अयं च एक एव वर्त्तमानः परमार्थः सन्, नातीता नानागताः समयाः, तेषां यथाक्रमं विनष्टानुत्पन्नत्वेनासत्त्वात्, ततः कायत्वाभाव इति देशप्रदेशकल्पनाविरहः, आवलिकादयस्तु पूर्वसमयनिरोधेनैवोत्तरसमयसद्भाव इति ततः समुदयसमित्याद्यसम्भवेन व्यवहारार्थमेव कल्पिता इति द्रष्टव्यम्। तथा अमीषामित्थं क्रमोपन्यासे किं प्रयोजनम्?, उच्यते, इह धर्मास्तिकाय इति पदं मङ्गलभूतम्, आदौ धर्मशब्दान्वितत्वात्, पदार्थप्ररूपणा च सम्प्रति प्रथमत उत्क्षिप्ता वर्त्तते, ततो मङ्गलार्थमादौ धर्मास्तिकायस्योपादानम्, धर्मास्तिकायप्रतिपक्षभूतश्चाधर्मास्तिकाय इति तदनन्तरमधर्मास्तिकायस्य, द्वयोरपि चानयोराधारभूतमाकाशमिति तदनन्तरमाकाशास्तिकायस्य, ततः पुनरजीवसाधर्म्याद‍द्धासमयस्य, अथवेह धर्माधर्मास्तिकायौ विभू न भवतः, तद्विभुत्वे तत्सामर्थ्यतो जीवपुद्गलानामस्खलितप्रचारप्रवृत्तौ लोकालोकव्यवस्थाऽनुपपत्तेः, अस्ति च लोकालोकव्यवस्था, तत्र तत्र प्रदेशे सूत्रे साक्षाद्दर्शनात्,

ततो यावति क्षेत्रेऽवगाढौ तावत्प्रमाणो लोकः शेषस्त्वलोक इति सिद्धम्, उक्तं च—"धर्माधर्मविभुत्वात् सर्वत्र च जीवपुद्गलविचारात् । नालोकः कश्चित्स्यान्न च सम्मतमेतदार्याणाम् ॥ १ ॥ तस्माद्धर्माधर्माववगाढौ व्याप्य लोकखं सर्वम् । एवं हि परिच्छिन्नः सिध्यति लोकस्तदविभुत्वात् ॥ २ ॥" ततः एवं लोकालोकव्यवस्थाहेतू धर्माधर्मास्तिकायावित्यनयोरादावुपादानम्, तत्रापि माङ्गलिकत्वात् प्रथमतो धर्मास्तिकायस्य, तत्प्रतिपक्षत्वात् ततोऽधर्मास्तिकायस्य, ततो लोकालोकव्यापित्वादाकाशास्तिकायस्य, तदनन्तरं लोके समयासमयक्षेत्रव्यवस्थाकारित्वादद्धासमयस्य, एवमागमानुसारेणान्यदपि युक्त्यनुपाति वक्तव्यम्, इत्यलं प्रसङ्गेन । प्रकृतोपसंहारमाह—'सेत्तं अरूविअजीवपन्नवणा' सैषा अरूप्यजीवप्रज्ञापना ॥ पुनराह विनेयः—

से किं तं रूविअजीवपन्नवणा ?, रूविअजीवपन्नवणा चउव्विहा पन्नत्ता, तंजहा—खन्धा खन्धदेसा खन्धपएसा परमाणुपोग्गला, ते समासओ पञ्चविहा पन्नत्ता, तंजहा—वण्णपरिणया गन्धपरिणया रसपरिणया फासपरिणया सण्ठाणपरिणया ।

अथ का सा रूप्यजीवप्रज्ञापना ?, सूरिराह—रूप्यजीवप्रज्ञापना चतुर्विधा प्रज्ञप्ता, तद्यथा—'स्कन्धाः' स्कन्दन्ति शुष्यन्ति धीयन्ते च—पुष्यन्ते पुद्गलानां विचटनेन चटनेन चेति स्कन्धाः, 'पृषोदरादय' इति रूपनिष्पत्तिः, अत्र बहुवचनं पुद्गलस्कन्धानामानन्त्यख्यापनार्थम्, न चानन्त्यमनुपपन्नम्, आगमेऽभिधानात्, तथा च वक्ष्यति—'दव्वओ णं पुग्गलत्थिकाए' इत्यादि, 'स्कन्धदेशाः' स्कन्धानामेव स्कन्धत्वपरिणाममजहतो बुद्धिपरिकल्पिता द्व्यादिप्रदेशात्मका

१ प्रज्ञापनापदे अरूप्यजीवप्रज्ञा. (सू. ३)

विभागाः, अत्रापि बहुवचनमनन्तानन्तप्रादेशिकेषु तथाविधेषु स्कन्धेषु देशानन्तत्वसम्भावनार्थम्, स्कन्धानां स्कन्धत्वपरिणामपरिणतानां बुद्धिपरिकल्पिताः प्रकृष्टा देशा निर्विभागा भागाः परमाणव इत्यर्थः स्कन्धप्रदेशाः, अत्रापि बहुवचनं प्रदेशानन्तत्वसम्भावनार्थम्, 'परमाणुपुद्गला इति' परमाश्च तेऽणवश्च परमाणवो निर्विभागद्रव्यरूपाः ते च ते पुद्गलाश्च परमाणुपुद्गलाः, स्कन्धत्वपरिणामरहिताः केवलाः परमाणव इत्यर्थः । 'ते समासओ' इत्यादि, ते स्कन्धादयो यथासम्भवं 'समासतः' सङ्क्षेपेण पञ्चविधाः प्रज्ञप्ताः, तद्यथा—'वर्णपरिणताः' वर्णतः परिणताः, वर्णपरिणामभाज इत्यर्थः, एवं गन्धपरिणता रसपरिणताः स्पर्शपरिणताः संस्थानपरिणताः, परिणता इत्यतीतकालनिर्देशो वर्त्तमानानागतकालोपलक्षणं, वर्त्तमानानागतत्वमन्तरेणातीतत्वस्यासम्भवात्, तथाहि—यो वर्तमानत्वमतिक्रान्तः सोऽतीतो भवति, वर्त्तमानत्वं च सोऽनुभवति योऽनागतत्वमतिक्रान्तवान्, उक्तं च—"भवति स नामातीतो यः प्राप्तो नाम वर्त्तमानत्वम् । एष्यंश्च नाम स भवति यः प्राप्स्यति वर्त्तमानत्वम् ॥ १ ॥" ततो वर्णपरिणता इति वर्णरूपतया परिणताः परिणमन्ति परिणमिष्यन्तीति द्रष्टव्यम्, एवं गन्धरसपरिणता इत्याद्यपि परिभावनीयम् ।

जे वण्णपरिणया ते पञ्चविहा पन्नत्ता, तंजहा—कालवण्णपरिणया नीलवण्णप० लोहियवण्णप० हालिद्दवण्णप० सुक्किल्लवण्णपरिणया, जे गन्धपरिणता ते दुविहा पं०तं०—सुब्भिगन्धपरिणता य दुब्भिगन्धपरिणता य, जे रसपरिणता ते पञ्चविहा पं०तं०—तित्तरसपरिणता कडुयरसपरिणता कसायरसपरिणया अम्बिलरसपरिणता महुरसपरिणया, जे फासपरिणता ते अट्ठविहा पं०तं०—

कक्खडफासपरिणया मउयफासपरिणया गुरुयफासपरिणता लहुयफासपरिणया सीयफासपरिणया उसिणफासपरिणया णिद्धफासपरिणया लुक्खफासपरिणया, जे सण्ठाणपरिणया ते पञ्चविहा पं०तं०—परिमण्डलसण्ठाणपरिणया वट्टसण्ठाणपरि० तंससण्ठाणप० चउरंससं०प० आयतसण्ठाणपरिणया ।

ये वर्णपरिणतास्ते पञ्चविधाः प्रज्ञप्ताः, तद्यथा—कृष्णवर्णपरिणताः कज्जलादिवत्, नीलवर्णपरिणता नील्यादिवत्, लोहितवर्णपरिणता हिङ्गुलकादिवत्, हारिद्रवर्णपरिणता हरिद्रादिवत्, शुक्लवर्णपरिणताः शङ्खादिवत् । ये गन्धपरिणतास्ते द्विविधाः प्रज्ञप्ताः, तद्यथा—सुरभिगन्धपरिणताश्च दुरभिगन्धपरिणताश्च, चशब्दौ परिणामभवनं प्रति विशेषाभावख्यापनार्थौ, तथाहि—यथा कथञ्चिदवस्थिताः सामग्रीवशतः सुरभिगन्धपरिणामं भजन्ते तथा कथञ्चिदवस्थिता एव सामग्रीवशतो दुरभिगन्धपरिणाममपीति, सुरभिगन्धपरिणताश्च यथा श्रीखण्डादयः, दुरभिगन्धपरिणता लसुनादिवत् । ये रसपरिणतास्ते पञ्चविधाः प्रज्ञप्ताः, तद्यथा—तिक्तरसपरिणताः कोशातक्यादिवत्, कटुकरसपरिणताः सुण्ठ्यादिवत्, कपायरसपरिणता अपक्वकपित्थादिवत्, अम्लरसपरिणता अम्लवेतसादिवत्, मधुररसपरिणताः शर्करादिवत् । ये स्पर्शपरिणतास्तेऽष्टविधाः प्रज्ञप्ताः, तद्यथा—कर्कशस्पर्शपरिणताः पाषाणादिवत्, मृदुस्पर्शपरिणता हंसरुतादिवत्, गुरुकस्पर्शपरिणताः वज्रादिवत्, लघुकस्पर्शपरिणता अर्कतूलादिवत्, शीतस्पर्शपरिणता मृणालादिवत्, उष्णस्पर्शपरिणता वह्न्यादिवत्, स्निग्धस्पर्शपरिणता घृतादिवत्, रूक्षस्पर्शपरिणता भस्मादिवत् । ये संस्थानप-

रिणतास्ते पञ्चविधाः प्रज्ञप्ताः, तद्यथा—परिमण्डलसंस्थानपरिणता वलयवत्, वृत्तसंस्थानपरिणताः कुलालचक्रादिवत्, त्र्यस्रसंस्थानपरिणताः शृङ्गाटकादिवत्, चतुरस्रसंस्थानपरिणताः कुम्भिकादिवत्, आयतसंस्थानपरिणता दण्डादिवत्, एतानि च परिमण्डलादीनि संस्थानानि घनप्रतरभेदेन द्विविधानि भवन्ति, पुनः परिमण्डलमपहाय शेषाणि ओजःप्रदेशजनितानि युग्मप्रदेशजनितानीति द्विधा, तत्रोत्कृष्टं परिमण्डलादि सर्वमनन्ताणुनिष्पन्नमसङ्ख्येयप्रदेशावगाढं चेति प्रतीतमेव, जघन्यं तु प्रतिनियतसङ्ख्यपरमाण्वात्मकम्, अतो नानिर्दिष्टं ज्ञातुं शक्यते इति विनेयजनानुग्रहाय तदुपदर्श्यते—तत्रौजःप्रदेशप्रतरवृत्तं पञ्चपरमाणुनिष्पन्नं पञ्चाकाशप्रदेशावगाढं च, तद्यथा—एकः परमाणुर्मध्ये स्थाप्यते, चत्वारः क्रमेण पूर्वादिषु चतसृषु दिक्षु, स्थापना—



$\frac{1}{1}$ युग्मप्रदेशप्रतरवृत्तं द्वादशपरमाण्वात्मकं द्वादशप्रदेशावगाढं च, तत्र निरन्तरं चत्वारः परमाणवश्चतुर्ष्वाकाशप्रदेशेषु रुचकाकारेण व्यवस्थाप्यन्ते, ततस्तत्परिक्षेपेण शेषा अष्टौ



$\frac{2}{2}$ ओजःप्रदेशं घनवृत्तं सप्तप्रदेशं सप्तप्रदेशावगाढं च, तच्चैवं—तत्रैव पञ्चप्रदेशे प्रतरवृत्ते मध्यस्थितस्य परमाणोरुपरिष्टादधस्ताच्च एकैकोऽणुरवस्थाप्यते, तत एवं सप्तप्रदेशं भवति $\frac{1}{3}$, युग्मप्रदेशं घनवृत्तं द्वात्रिंशत्प्रदेशं द्वात्रिंशत्प्रदेशावगाढं च, तच्चैवं—पूर्वोक्तद्वादशप्रदेशात्मकस्य प्रतरवृत्तस्योपरि द्वादश, तत उपरिष्टादधश्चान्ये चत्वारश्चत्वारः परमाणव इति $\frac{1}{4}$ १॥ ओजःप्रदेशं प्रतरत्र्यस्रं त्रिप्रदेशं

त्रिप्रदेशावगाढं च, तत्रैवं–पूर्वं तिर्यगणुद्वयं न्यस्यते, तत आद्यस्याध एकोऽणुः, स्थापना–



२/१, युग्मप्रदेशं प्रतरत्र्यस्रं षट्परमाणुनिष्पन्नं षट्प्रदेशावगाढं च, तत्र तिर्यग् निरन्तरं त्रयः परमाणवः स्थाप्यन्ते, तत आद्यस्याध उपर्यधोभावेनाणुद्वयं द्वितीयस्याध एकोऽणुः, स्थापना–



२/२, ओजःप्रदेशं घनत्र्यस्रं पञ्चत्रिंशत्परमाणुनिष्पन्नं पञ्चत्रिंशत्प्रदेशावगाढं च, तत्रैवं–तिर्यग् निरन्तराः पञ्च परमाणवः स्थाप्यन्ते, तेषां चाधोऽधः क्रमेण तिर्यगेव चत्वारस्त्रयो द्वावेकश्चेति पञ्चदशात्मकः प्रतरो जातः, स्थापना–



अस्यैव च प्रतरस्योपरि सर्वपङ्क्तिष्वन्त्यान्त्यपरित्यागेन दश १०, तथैव तदुपर्युपरि षट् त्रय एकश्चेति क्रमेणाणवः स्थाप्यन्ते, स्थापना–





एते मीलिताः पञ्चत्रिंशद्भवन्ति २/३, युग्मप्रदेशं घनत्र्यस्रं चतुष्परमाण्वात्मकं चतुष्प्रदेशावगाढं च प्रतरत्र्यस्रस्यैव त्रिप्रदेशात्मकस्य सम्बन्धिन एकस्याणोरुपर्येकोऽणुः स्थाप्यते, ततो मीलिताश्चत्वारो भवन्ति २/४ २ ॥ ओजःप्रदेशं प्रतरचतुरस्रं नवपरमाण्वात्मकं नवप्रदेशावगाढं च, तत्र तिर्यग् निरन्तरं त्रिप्रदेशास्तिस्रः पङ्क्तयः स्थाप्यन्ते, स्थापना— १/३, युग्मप्रदेशं प्रतरचतुरस्रं चतुष्परमाण्वात्मकं चतुष्प्रदेशावगाढं च, तत्र तिर्यग् द्विप्रदेशे द्वे पङ्क्ती स्थाप्येते, ३/२, ओजःप्रदेशं घनचतुरस्रं सप्तविंशतिपरमाण्वात्मकं सप्तविंशतिप्रदेशावगाढं च, तत्र नवप्रदेशात्मकस्यैव पूर्वोक्तस्य प्रतरस्याध उपरि च नव नव प्रदेशाः स्थाप्यन्ते, ततः सप्तविंशतिप्रदेशात्मकमोजःप्रदेशं घनचतुरस्रं भवति ३/३, अस्यैव युग्मप्रदेशं घनचतुरस्रमष्टपरमाण्वात्मकमष्टप्रदेशावगाढं च, तच्चैवं—चतुष्प्रदेशात्मकस्य पूर्वोक्तस्य प्रतरस्योपरि चत्वारोऽन्ये परमाणवः स्थाप्यन्ते ३/४ ३॥ ओजःप्रदेशं श्रेण्यायतं त्रिपरमाणु त्रिप्रदेशावगाढं च, तत्र तिर्यग् निरन्तरं त्रयः स्थाप्यन्ते— ४/१, युग्मप्रदेशं श्रेण्यायतं द्विपरमाणु द्विप्रदेशावगाढं च, तथैवाणुद्वयं स्थाप्यते ४/२, ओजःप्रदेशं प्रतरायतं पञ्चदशपरमाण्वात्मकं पञ्चदशप्रदेशावगाढं च, तत्र पञ्चप्रदेशात्मिकास्तिस्रः

पङ्क्तयस्तिर्यक् स्थाप्यन्ते—

| | | | | |
|---|---|---|---|---|
| ○ | ○ | ○ | ○ | ○ |
| ○ | ○ | ○ | ○ | ○ |
| ○ | ○ | ○ | ○ | ○ |

४/३, युग्मप्रदेशं प्रतरायतं षट्परमाण्वात्मकं षट्प्रदेशावगाढं च, तत्र त्रिप्रदेशं पङ्क्तिद्वयं स्थाप्यते, स्थापना—

| | | |
|---|---|---|
| ○ | ○ | ○ |
| ○ | ○ | ○ |

४/४, ओजःप्रदेशं घनायतं पञ्चचत्वारिंशत्परमाण्वात्मकं तावत्प्रदेशावगाढं च, तत्र पूर्वोक्तस्यैव प्रतरायतस्य पञ्चदशप्रदेशात्मकस्याध उपरि तथैव पञ्चदश परमाणवः स्थाप्यन्ते ४/५, युग्मप्रदेशं घनायतं द्वादशपरमाण्वात्मकं द्वादशप्रदेशावगाढं च, तत्र प्रागुक्तस्य षट्प्रदेशस्य प्रतरायतस्योपरि तथैव तावन्तः परमाणवः स्थाप्यन्ते ४/६ ४॥ प्रतरपरिमण्डलं विंशतिपरमाण्वात्मकं विंशतिप्रदेशावगाढं च, तच्चैवं—प्राच्यादिषु चतसृषु दिक्षु प्रत्येकं चत्वारश्चत्वारोऽणवः स्थाप्यन्ते, विदिक्षु च प्रत्येकमेकैकोऽणुः स्थाप्यते ५/१, घनपरिमण्डलं चत्वारिंशत्प्रदेशावगाढं चत्वारिंशत्परमाण्वात्मकं च, तत्र तस्या एव विंशतेरुपरि तथैवान्या विंशतिरवस्थाप्यते ५/२ ५॥ इत्थं चैषां प्ररूपणमितोऽपि न्यूनप्रदेशतायां यथोक्तसंस्थानाभावात्, एतत्सङ्ग्राहिकाश्चेमा उत्तराध्ययननिर्युक्तिगाथाः—"[1]परिमण्डले य वट्टे तंसे चउरंस आयए चेव । घणपयर पढमवज्जं ओजपएसे य जुम्मे य ॥ १ ॥ पञ्चगबारसगं खलु सत्तगबत्तीसगं च वट्टम्मि । तिय छक्कपणगतीसा चत्तारि य होन्ति तंसम्मि ॥ २ ॥ नव चेव तहा चउरो सत्तावीसा य अट्ठ चउरंसे ।

१ परिमण्डलं च वृत्तं त्र्यस्रं चतुरस्रमायतं चैव । घनप्रतरौ प्रथमवर्जेषु ओजःप्रदेशानि युग्मानि च ॥ १ ॥ पञ्चकं द्वादशकं खलु सप्तकं द्वात्रिंशच्च वृत्ते । त्रिकं षट्कं पञ्चत्रिंशत् चत्वारश्च भवन्ति त्र्यस्रे ॥ २ ॥ नव चैव तथा चत्वारः सप्तविंशतिश्चाष्टौ चतुरस्रे ।

तिगदुगपन्नरसेव य छच्चेव य आयए होन्ति॥३॥ पणयाला बारसगं तह चेव य आययम्मि सण्ठाणे । वीसा चत्तालीसा परिमण्डलए य सण्ठाणे ॥ ४ ॥" इत्यादि ॥ सम्प्रत्येतेषामेव वर्णादीनां परस्परं संवेधमाह—

जे वण्णओ कालवण्णपरिणता ते गन्धओ सुब्भिगन्धपरिणतावि दुब्भिगन्धपरिणतावि रसओ तित्तरसपरिणयावि कडुयरसपरिणयावि कसायरसपरिणयावि अम्बिलरसपरिणयावि महुररसपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीयफासपरिणयावि उसिणफासपरिणयावि णिद्धफासपरिणयावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणतावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आयतसण्ठाणपरिणयावि २०, जे वण्णओ नीलवण्णपरिणता ते गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ तित्तरसपरिणयावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणतावि महुररसपरिणतावि फासओ कक्खडफासपरिणतावि मउयफासपरिणतावि गुरुयफासपरिणतावि लहुयफासपरिणतावि सीतफासपरिणतावि उसिणफासपरिणतावि निद्धफासपरिणतावि लुक्खफासपरिणतावि सण्ठाणओ परिमण्डलसण्ठाणपरिणतावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आयतसण्ठाणपरिणयावि २०, जे वण्णओ लोहियवण्णपरिणया ते गन्धओ सुब्भिगन्धपरिणयावि दुब्भि-

---

त्रिकं द्विकं पञ्चदशैव च षट् चैवायते भवन्ति ॥३॥ पञ्चचत्वारिंशत् द्वादशकं तथा चैव चायते भवन्ति । विंशतिश्चत्वारिंशत् परिमण्डले च संस्थाने ॥ ४ ॥

गन्धपरिणयावि रसओ तित्तरसपरिणतावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणयावि महुररसपरिणतावि फासओ कक्खडफासपरिणतावि मउयफासपरिणतावि गुरुयफासपरिणयावि लहुयफासपरिणतावि सीतफासपरिणतावि उसिणफासपरिणतावि निद्धफासपरिणयावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणतावि वट्टसण्ठाणपरिणतावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आयतसण्ठाणपरिणतावि २०, जे वण्णओ हालिद्दवण्णपरिणया ते गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ तित्तरसपरिणयावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणतावि महुररसपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीयफासपरिणयावि उसिणफासपरिणयावि णिद्धफासपरिणयावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणतावि आयतसण्ठाणपरिणतावि २०, जे वण्णओ सुक्किल्लवण्णपरिणता ते गन्धओ सुब्भिगन्धपरिणतावि दुब्भिगन्धपरिणतावि रसओ तित्तरसपरिणतावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणतावि महुररसपरिणतावि फासओ कक्खडफासपरिणतावि मउयफासपरिणतावि गुरुयफासपरिणतावि लहुयफासपरिणतावि सीयफासपरिणतावि उसिणफासपरिणतावि णिद्धफासपरिणतावि लुक्खफासपरिणतावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि २०,१००। जे गन्धओ सुब्भिगन्धपरिणया ते वण्णओ कालवण्णपरिणयावि णीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि रसओ तित्तरसपरिणयावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणतावि महुररस-

परिणयावि फासओ कक्खडफासपरिणतावि मउयफासपरिणतावि गरुयफासपरिणतावि लहुयफासपरिणतावि सीतफासपरिणतावि उसिणफासपरिणयावि णिद्धफासपरिणयावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि २३, जे गन्धओ दुब्भिगन्धपरिणया ते वण्णओ कालवण्णपरिणयावि णीलवण्णपरिणयावि लोहियवण्णपरिणयावि हारिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि रसओ तित्तरसपरिणयावि कडुयरसपरिणयावि कसायरसपरिणयावि अम्बिलरसपरिणयावि महुररसपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीयफासपरिणयावि उसिणफासप० णिद्धफासप० लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि २६, ४६ । जे रसओ तित्तरसपरिणया ते वण्णओ कालवण्णपरिणतावि णीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणतावि गुरुयफासपरिणतावि लहुयफासपरिणतावि सीतफासपरिणतावि उसिणफासपरिणतावि निद्धफासपरिणयावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि २०, जे रसओ कडुयरसपरिणता ते वण्णओ कालवण्णपरिणयावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीतफासपरिणयावि

उसिणफासपरिणयावि णिद्धफासपरिणयावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आयतसण्ठाणपरिणयावि२०,जे रसओ कसायरसपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणतावि लोहियवण्णपरिणतावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीतफासपरिणतावि उसिणफासपरिणयावि णिद्धफासपरिणयावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणतावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि२०,जे रसओ अम्बिलरसपरिणया ते वण्णओ कालवण्णपरिणयावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीतफासपरिणयावि उसिणफासपरिणयावि निद्धफासपरिणयावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि २०, जे रसओ महुररसपरिणया ते वण्णओ कालवण्णपरिणयावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणतावि लहुयफासपरिणतावि सीतफासपरिणयावि उसिणफासपरिणयावि निद्धफासपरिणयावि लुक्खफासरिणतावि सण्ठाणओ परिमण्डलसण्ठाणपरिणतावि वट्टसण्ठाणपरिणतावि तंससण्ठाणपरिणतावि चउरंससण्ठाणपरिणतावि आय-

यसण्ठाणपरिणयावि २०, १००। जे फासतो कक्खडफासपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणतावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणतावि सुक्किल्लवण्णपरिणतावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणतावि रसओ तित्तरसपरिणतावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणतावि महुररसपरिणतावि फासओ गुरुयफासपरिणतावि लहुयफासपरिणतावि सीतफासपरिणतावि उसिणफासपरिणतावि णिद्धफासपरिणतावि लुक्खफासपरिणतावि सण्ठाणतो परिमण्डलसण्ठाणपरिणतावि वट्टसण्ठाणपरिणतावि तंससण्ठाणपरिणतावि चउरंससण्ठाणपरिणतावि आयतसण्ठाणपरिणयावि २३, जे फासओ मउयफासपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणतावि लोहियवण्णपरिणतावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणतावि दुब्भिगन्धपरिणतावि रसओ तित्तरसपरिणतावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणतावि महुररसपरिणतावि फासओ गुरुयफासपरिणयावि लहुयफासपरिणयावि सीतफासपरिणयावि उसिणफासपरिणयावि णिद्धफासपरिणतावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि २३, जे फासओ गुरुयफासपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणतावि लोहियवण्णपरिणतावि हालिद्दवण्णपरिणतावि सुक्किल्लवण्णपरिणतावि गन्धओ सुब्भिगन्धपरिणतावि दुब्भिगन्धपरिणतावि रसओ तित्तरसपरिणतावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणतावि महुररसपरिणतावि फासओ कक्खडफासपरिणतावि मउयफासपरिणतावि सीयफासपरिणतावि उसिणफासपरिणतावि णिद्धफासपरिणतावि लुक्खफासपरिणतावि सण्ठाणओ परिमण्डलसण्ठाणपरिणतावि वट्टसण्ठाणपरिणयावि तंससण्ठाणप-

रिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि २३, जे फासओ लहुयफासपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणतावि सुक्किल्लवण्णपरिणतावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ तित्तरसपरिणतावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणतावि महुररसपरिणतावि फासओ कक्खडफासपरिणतावि मउयफासपरिणयावि सीयफासपरिणयावि उसिणफासपरिणयावि णिद्धफासपरिणतावि लुक्खफासपरिणतावि सण्ठाणओ परिमण्डलसण्ठाणपरिणतावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि २३, जे फासओ सीयफासपरिणता ते वण्णओ कालवण्णपरिणयावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणतावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणतावि दुब्भिगन्धपरिणतावि रसओ तित्तरसपरिणयावि कडुयरसपरिणयावि कसायरसपरिणतावि अम्बिलरसपरिणतावि महुररसपरिणतावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणतावि लहुयफासपरिणयावि निद्धफासपरिणतावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आयतसण्ठाणपरिणयावि २३, जे फासओ उसिणफासपरिणता ते वण्णओ कालवण्णपरिणयावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ तित्तरसपरिणयावि कडुयरसपरिणयावि कसायरसपरिणयावि अम्बिलरसपरिणयावि महुररसपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि निद्धफासपरिणयावि लुक्खफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि

तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आयतसण्ठाणपरिणतावि २३, जे फासओ निद्धफासपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणतावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ तित्तरसपरिणयावि कडुयरसपरिणयावि कसायरसपरिणयावि अम्बिलरसपरिणयावि महुररसपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीतफासपरिणतावि उसिणफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणयावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणपरिणयावि आययसण्ठाणपरिणयावि २३, जे फासओ लुक्खफासपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि तित्तरसपरिणयावि कडुयरसपरिणयावि कसायरसपरिणयावि अम्बिलरसपरिणयावि महुररसपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीतफासपरिणयावि उसिणफासपरिणयावि सण्ठाणओ परिमण्डलसण्ठाणपरिणतावि वट्टसण्ठाणपरिणयावि तंससण्ठाणपरिणयावि चउरंससण्ठाणप० आययसण्ठाणप० २३, १८४।

जे सण्ठाणओ परिमण्डलसण्ठाणपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ तित्तरसपरिणयावि कडुयरसपरिणयावि कसायरसपरिणयावि अम्बिलरसपरिणयावि महुररसपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीयफासपरिणयावि उसिणफासपरिणयावि निद्धफासपरिणयावि लुक्खफास-

परिणयावि २०, जे सण्ठाणओ वट्टसण्ठाणपरिणता ते वण्णओ कालवण्णपरिणयावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ तित्तरसपरिणतावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणयावि महुररसपरिणतावि फासओ कक्खडफासपरिणतावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीयफासपरिणयावि उसिणफासपरिणयावि निद्धफासपरिणयावि लुक्खफासपरिणयावि २०, जे सण्ठाणओ तंससण्ठाणपरिणता ते वण्णओ कालवण्णपरिणयावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ तित्तरसपरिणयावि कडुयरसपरिणयावि कसायरसपरिणयावि अम्बिलरसपरिणयावि महुररसपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीयफासपरिणयावि उसिणफासपरिणयावि णिद्धफासपरिणयावि लुक्खफासपरिणयावि २०, जे सण्ठाणओ चउरंससण्ठाणपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणतावि लोहियवण्णपरिणतावि हालिद्दवण्णपरिणयावि सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ तित्तरसपरिणयावि कडुयरसपरिणयावि कसायरसपरिणयावि अम्बिलरसपरिणयावि महुररसपरिणयावि फासओ कक्खडफासपरिणतावि मउयफासपरिणतावि गुरुयफासपरिणतावि लहुयफासपरिणतावि सीयफासपरिणयावि उसिणफासपरिणयावि निद्धफासपरिणयावि लुक्खफासपरिणयावि २०, जे सण्ठाणओ आयतसण्ठाणपरिणता ते वण्णओ कालवण्णपरिणतावि नीलवण्णपरिणयावि लोहियवण्णपरिणयावि हालिद्दवण्णपरि[illegible] सुक्किल्लवण्णपरिणयावि गन्धओ सुब्भिगन्धपरिणयावि दुब्भिगन्धपरिणयावि रसओ

तित्तरसपरिणतावि कडुयरसपरिणतावि कसायरसपरिणतावि अम्बिलरसपरिणयावि महुररसपरिणयावि फासओ कक्खडफासपरिणयावि मउयफासपरिणयावि गुरुयफासपरिणयावि लहुयफासपरिणयावि सीयफासपरिणयावि उसिणफासपरिणयावि णिद्धफासपरिणयावि लुक्खफासपरिणतावि २०, १०० । सेत्तं रूविअजीवपन्नवणा, सेत्तं अजीवपण्णवणा । ( सू० ४ )

ये स्कन्धादयो 'वर्णतो' वर्णमाश्रित्य कालवर्णपरिणता अपि भवन्ति ते 'गन्धतो' गन्धमाश्रित्य सुरभिगन्धपरिणता अपि भवन्ति, दुरभिगन्धपरिणता अपि, किमुक्तं भवति ?—गन्धमधिकृत्य ते भाज्याः, केचित् सुरभिगन्धपरिणता भवन्ति केचिद्दुरभिगन्धपरिणताः, न तु प्रतिनियतैकगन्धपरिणामपरिणता एवेति, एवं च रसतः स्पर्शतः संस्थानतश्च वाच्याः, तत्र द्वौ गन्धौ पञ्च रसा अष्टौ स्पर्शाः पञ्च संस्थानानीति, एते च मीलिता विंशतिरिति कृष्णवर्णपरिणता एतावतो भङ्गांल्लभन्ते २०, एवं नीलवर्णपरिणता अपि २०, लोहितवर्णपरिणता अपि २०, हारिद्रवर्णपरिणता अपि २०, शुक्लवर्णपरिणता अपि २०, एवं पञ्चभिर्वर्णैर्लब्धं शतम् १००। गन्धमधिकृत्याह—'ये गन्धतो' इत्यादि, ये 'गन्धतो' गन्धमधिकृत्य सुरभिगन्धपरिणामपरिणतास्ते वर्णतः कालवर्णपरिणता अपि नीलवर्णपरिणता अपि लोहितवर्णपरिणता अपि हारिद्रवर्णपरिणता अपि शुक्लवर्णपरिणता अपि ५, एवं रसतः ५ स्पर्शतः ८ संस्थानतः ५, एते च मीलितास्त्रयोविंशतिः २३ इति सुरभिगन्धपरिणतास्त्रयोविंशतिभङ्गांल्लभन्ते, एवं दुरभिगन्धपरिणता अपि २३, ततो गन्धपदेन लब्धा भङ्गानां षट्चत्वारिंशत् ४६। रसमधिकृत्याह—ये 'रसतो' रसमधिकृत्य तिक्तरसपरिणतास्ते वर्णतः

५ गन्धतः २ स्पर्शतः ८ संस्थानतः ५ एते सर्वेऽप्येकत्र मीलिता विंशतिः इति तिक्तरसपरिणता विंशतिभङ्गाल्लभन्ते, एवं कटुकरसपरिणताः २० कषायरसपरिणताः २० अम्लरसपरिणताः २० मधुररसपरिणताश्च २०, एवं रसपञ्चकसंयोगे लब्धं भङ्गकानां शतम् १०० [इत्यादि]। स्पर्शमधिकृत्याह–'जे फासतो कक्खडफासपरिणया' इत्यादि, ये स्पर्शतः कर्कस्पर्शपरिणतास्ते वर्णतः ५ गन्धतः २ रसतः ५ स्पर्शतः ६ प्रतिपक्षस्पर्शयोगाभावात् संस्थानतः ५, एते सर्वेऽप्येकत्र मीलितास्त्रयोविंशतिः २३, एतावतो भङ्गान् कर्कशस्पर्शपरिणता लभन्ते २३, एतावत एव मृदुस्पर्शपरिणताः २३ गुरुस्पर्शपरिणताः २३ लघुस्पर्शपरिणताः २३ शीतस्पर्शपरिणताः २३ उष्णस्पर्शपरिणताः २३ स्निग्धस्पर्शपरिणताः २३ रूक्षस्पर्शपरिणताः २३, एतेपामेकत्र मीलने जातं भङ्गकानां चतुरशीत्यधिकं शतं १८४ [इत्यादि]। संस्थानमधिकृत्याह–'जे सण्ठाणओ परिमण्डलसण्ठाणपरिणया' इत्यादि,ये संस्थानतः परिमण्डलसंस्थानपरिणतास्ते वर्णतः ५ गन्धतः २ रसतः ५ स्पर्शतः ८ एते सर्वेऽप्येकत्र मीलिताः विंशतिः२० एतावतो भङ्गान् परिमण्डलसंस्थानपरिणता लभन्ते, एवं वृत्तसंस्थानपरिणताः २० त्र्यस्रसंस्थानपरिणताः २० चतुरस्रसंस्थानपरिणताः २० आयतसंस्थानपरिणताः २०, अमीषां चैकत्र मीलने लब्धं भङ्गकानां शतम्, एतेषां च वर्णगन्धरसस्पर्शसंस्थानानां सकलभङ्गसङ्कलने जातानि पञ्च शतानि त्रिंशदधिकानि ५३०। इह यद्यपि बादरेषु स्कन्धेषु पञ्चापि वर्णा द्वावपि गन्धौ पञ्चापि रसाः प्राप्यन्ते, ततोऽवधिकृतवर्णादिव्यतिरेकेण शेषवर्णादिभिरपि भङ्गाः सम्भवन्ति, तथापि तेष्वेव बाद-

रेषु स्कन्धेषु ये व्यवहारतः केवलकृष्णवर्णाद्युपेता अपान्तरालस्कन्धा यथा देहस्कन्ध एव लोचनस्कन्धः कृष्णस्तदन्तर्गत एव कश्चिल्लोहितोऽन्यस्तदन्तर्गत एव शुक्ल इत्यादि ते इह विवक्ष्यन्ते, तेषां चान्यद्वर्णान्तरादि न सम्भवति, स्पर्शचिन्तायां त्ववधिकृतस्पर्शं प्रति प्रतिपक्षव्यतिरेकेणान्ये स्पर्शा लोकेऽप्यविरोधिनो दृश्यन्ते ततो यथोक्तैव भङ्गसङ्ख्या, साऽपि च परिस्थूरन्यायमङ्गीकृत्याभिहिता, अन्यथा प्रत्येकमप्येषां तारतम्येनानन्तत्वादनन्ता भङ्गाः संभवन्ति, एतेषां च वर्णादिपरिणामानां जघन्यतोऽवस्थानमेकं समयमुत्कर्षतोऽसङ्ख्येयं कालम्, सम्प्रत्युपसंहारमाह—'सेत्तं रूविअजीवपन्नवणा, सेत्तं अजीवपन्नवणा' सैषा रूप्यजीवप्रज्ञापना, सैषाऽजीवप्रज्ञापना ॥ साम्प्रतं जीवप्रज्ञापनामभिधित्सुस्तद्विषयं प्रश्नसूत्रं चा(त्रमा)ह—

से किं तं जीवपन्नवणा ?, २ दुविहा पन्नत्ता, तंजहा—संसारसमावण्णजीवपन्नवणा य असंसारसमावण्णजीवपण्णवणा य (सू०५)

अथ का सा जीवप्रज्ञापना ?, सूरिराह—जीवप्रज्ञापना द्विविधा प्रज्ञप्ता, तद्यथा—संसारसमापन्नजीवप्रज्ञापना चासंसारसमापन्नजीवप्रज्ञापना च, तत्र संसरणं संसारो—नारकतिर्यग्नरामरभवानुभवलक्षणस्तं सम्यग्—एकीभावेनापन्नाः संसारसमापन्नाः, संसारवर्त्तिन इत्यर्थः, ते च ते जीवाश्च तेषां प्रज्ञापना संसारसमापन्नजीवप्रज्ञापना, न संसारोऽसंसारो—मोक्षस्तं समापन्ना असंसारसमापन्ना मुक्ता इत्यर्थः, ते च ते जीवाश्च तेषां प्रज्ञापनाऽसंसारसमाप-

एवं वर्णस्य भेदाः १००, गन्धस्य भेदाः ४६, रसस्य भेदाः १००, स्पर्शस्य भेदाः १८४, संस्थानस्य भेदाः—१००, एवं च ५३०.

न्नजीवप्रज्ञापना, चशब्दौ प्राग्वत् । तत्राल्पवक्तव्यत्वात्प्रथमतोऽसंसारसमापन्नजीवप्रज्ञापनामभिधित्सुस्तद्विषयं प्रश्नसूत्रमाह—

से किं तं असंसारसमावण्णजीवपण्णवणा ?, असंसारसमावण्णजीवपण्णवणा दुविहा पण्णत्ता, तंजहा—अणन्तरसिद्धअसंसारसमावण्णजीवपण्णवणा य परम्परसिद्धअसंसारसमावण्णजीवपण्णवणा य (सू०६) से किं तं अणन्तरसिद्धअसंसारसमावण्णजीवपण्णवणा ?, अणन्तरसिद्धअसंसारसमावण्णजीवपण्णवणा पण्णरसविहा पण्णत्ता, तंजहा—तित्थसिद्धा अतित्थसिद्धा तित्थगरसिद्धा अतित्थगरसिद्धा सयंबुद्धसिद्धा पत्तेयबुद्धसिद्धा बुद्धबोहियसिद्धा इत्थीलिङ्गसिद्धा पुरिसलिङ्गसिद्धा नपुंसकलिङ्गसिद्धा सलिङ्गसिद्धा अन्नलिङ्गसिद्धा गिहिलिङ्गसिद्धा एगसिद्धा अणेगसिद्धा (सू०७)

अथ का सा असंसारसमापन्नजीवप्रज्ञापना ?, सूरिराह—असंसारसमापन्नजीवप्रज्ञापना द्विविधा प्रज्ञप्ता, तद्यथा—अनन्तरसिद्धासंसारसमापन्नजीवप्रज्ञापना च परम्परसिद्धासंसारसमापन्नजीवप्रज्ञापना च, तत्र न विद्यतेऽन्तरं—व्यवधानमर्थात्समयेन येषां तेऽनन्तरास्ते च ते सिद्धाश्चानन्तरसिद्धाः, सिद्धत्वप्रथमसमये वर्त्तमाना इत्यर्थः, ते च तेऽसंसारसमापन्नजीवाश्चानन्तरसिद्धासंसारसमापन्नजीवास्तेषां प्रज्ञापनाऽनन्तरसिद्धाऽसंसारसमापन्नजीवप्रज्ञापना, चशब्दः स्वगतानेकभेदसूचकः, तथा विवक्षिते प्रथमे समये यः सिद्धस्तस्य यो द्वितीयसमयसिद्धः स परस्तस्यापि यस्तृतीयसमयसिद्धः स परः, एवमन्येऽपि वाच्याः, परे च परे चेति वीप्सायां 'पृषोदरादय' इति परम्पर-

शब्दनिष्पत्तिः, परम्पराश्च ते सिद्धाश्च परम्परसिद्धाः विवक्षितसिद्धस्य प्रथमसमयात् प्राग् द्वितीयादिषु समयेष्वनन्तामतीताद्धां यावद्वर्त्तमाना इति भावः, ते च तेऽसंसारसमापन्नाश्च परम्परसिद्धासंसारसमापन्नास्ते च ते जीवाश्च तेषां प्रज्ञापना परम्परसिद्धासंसारसमापन्नजीवप्रज्ञापना, अत्रापि चशब्दः स्वगतानेकभेदसूचकः ॥ 'से किन्त'मित्यादि, अथ का सा अनन्तरसिद्धासंसारसमापन्नजीवप्रज्ञापना ?, सूरिराह—अनन्तरसिद्धासंसारसमापन्नजीवप्रज्ञापना पञ्चदशविधा प्रज्ञप्ता, अनन्तरसिद्धानामुपाधिभेदतः पञ्चदशविधत्वात्, तदेव पञ्चदशविधत्वं तेषामाह—'तंजहे'त्यादि, 'तद्यथे'ति पञ्चदशभेदोपदर्शनसूचकं, तीर्थसिद्धाः तीर्यते संसारसागरोऽनेनेति तीर्थं—यथावस्थितसकलजीवाजीवादिपदार्थसार्थप्ररूपकं परमगुरुप्रणीतं प्रवचनम्, तच्च निराधारं न भवति इति सङ्घः प्रथमगणधरो वा वेदितव्यः, उक्तं च—"तित्थं भन्ते ! तित्थं तित्थकरे तित्थं ?, गोयमा !, अरिहा ताव ( नियमा ) तित्थकरे, तित्थं पुण चाउव्वण्णो समणसङ्घो पढमगणहरो वे'ति, तस्मिन्नुत्पन्ने ये सिद्धास्ते तीर्थसिद्धाः, तथा तीर्थस्याभावोऽतीर्थं, तीर्थस्याभावश्चानुत्पादोऽपान्तराले व्यवच्छेदो वा तस्मिन् ये सिद्धास्तेऽतीर्थसिद्धाः, तत्र तीर्थस्यानुत्पादे सिद्धा मरुदेवीप्रभृतयः, न हि मरुदेव्यादिसिद्धिगमनकाले तीर्थमुत्पन्नमासीत्, तथा तीर्थस्य व्यवच्छेदः सुविधिस्वाम्याद्य-

१ तीर्थं ( शासनं ) भदन्त ! तीर्थं ( तरणसाधनं ) तीर्थकरस्तीर्थम् ?, गौतम ! अर्हन् तावत् नियमात्तीर्थकरः, तीर्थं पुनश्चतुर्वर्णः श्रमणसङ्घः प्रथमगणधरो वा ।

पान्तरालेषु तत्र ये जातिस्मरणादिनाऽपवर्गमार्गमवाप्य सिद्धास्ते तीर्थव्यवच्छेदसिद्धाः २, तथा तीर्थकराः सन्तो ये सिद्धास्ते तीर्थकरसिद्धाः ३ सामान्यकेवलिनः सन्तो ये सिद्धास्तेऽतीर्थकरसिद्धाः ४ तथा स्वयंबुद्धाः सन्तो ये सिद्धास्ते स्वयम्बुद्धसिद्धाः ५, प्रत्येकबुद्धाः सन्तो ये सिद्धास्ते प्रत्येकबुद्धसिद्धाः ६, अथ स्वयम्बुद्धप्रत्येकबुद्धानां कः प्रतिविशेषः ?, उच्यते, बोध्युपधिश्रुतलिङ्गकृतो विशेषः, तथाहि—स्वयम्बुद्धा बाह्यप्रत्ययमन्तरेणैव बुध्यन्ते, स्वयमेव—बाह्यप्रत्ययमन्तरेणैव निजजातिस्मरणादिना बुद्धाः स्वयम्बुद्धा इति व्युत्पत्तेः, ते च द्विधा—तीर्थकरास्तीर्थकरव्यतिरिक्ताश्च, इह तीर्थकरव्यतिरिक्तैरधिकारः, आह च नन्द्यध्ययनचूर्णिकृत्—'ते दुविहा सयंबुद्धा—तित्थयरा तित्थयरवइरित्ता य, इह वइरित्तेहिं अहिगारो' इति । प्रत्येकबुद्धास्तु बाह्यप्रत्ययमपेक्ष्य, प्रत्येकं—बाह्यं वृषभादिकं कारणमभिसमीक्ष्य बुद्धाः प्रत्येकबुद्धा इति व्युत्पत्तेः, तथा च श्रूयते—बाह्यप्रत्ययसापेक्षा करकण्ड्वादीनां बोधिः, बहिःप्रत्ययमपेक्ष्य च ते बुद्धाः सन्तो नियमतः प्रत्येकमेव विहरन्ति, न गच्छवासिन इव संहताः, आह च नन्द्यध्ययनचूर्णिकृत्—पत्तेयं—बाह्यं वृषभादिकं कारणमभिसमीक्ष्य बुद्धाः, बहिप्पत्तयं प्रति बुद्धानां च पत्तेयं नियमा विहारो जम्हा तम्हा य ते पत्तेयबुद्धा' इति, स्वयम्बुद्धानामुपधिर्द्वादशविध एव पात्रादिकः, प्रत्येकबुद्धानां तु द्विधा—जघन्यतस्तथोत्कर्षतश्च, तत्र जघन्यतो द्विविधः, उत्कर्षतो नवविधः प्रावरणवर्जः, उक्तं च—"पत्तेयबुद्धाणं जहन्नेणं दुविहो उक्कोसेणं नवविहो नियमा पाउरणवज्जो भवइ" इति, तथा स्वयम्बुद्धानां पूर्वाधीतं श्रुतं भवति वा न वा, यदि

१ प्रज्ञापनापदे न्तरसिद्धप्रज्ञा. (सू. ७)

भवति ततो लिङ्गं देवता वा प्रयच्छति गुरुसन्निधौ वा गत्वा प्रतिपद्यते, यदि च एकाकिविचरणसमर्थः इच्छा वा तस्य तथारूपा जायते तत एकाकी विहरति, अन्यथा गच्छवासेऽवतिष्ठते, अथ पूर्वाधीतं श्रुतं तस्य न भवति तर्हि नियमाद्गुरुसन्निधौ गत्वा लिङ्गं प्रतिपद्यते गच्छं चावश्यं न मुञ्चति, तथा चोक्तम्—"पुव्वाहीयं सुयं से हवइ वा न वा, जइ से नत्थि तो लिङ्गं नियमा गुरुसन्निहे पडिवज्जइ गच्छे य विहरइत्ति, अह पुव्वाधीयसुयसम्भवोऽत्थि तो से लिङ्गं देवया पडियच्छइ गुरुसन्निहे वा पडिवज्जइ, जइ य एगविहारविहरणसमत्थो इच्छा वा से तो एक्को चेव विहरइ, अन्यथा गच्छे विहरइ"त्ति प्रत्येकबुद्धानां तु पूर्वाधीतं श्रुतं नियमतो भवति, तच्च जघन्यत एकादशाङ्गानि, उत्कर्षतः किञ्चिन्न्यूनानि दश पूर्वाणि, तथा लिङ्गं तस्मै देवता प्रयच्छति लिङ्गरहितो वा कदाचिद्भवति, तथा चोक्तम्—"पत्तेयबुद्धाणं पुव्वाहीयं सुयं नियमा हवइ, जहन्नेणं इक्कारस अङ्गा, उक्कोसेणं भिन्नदसपुव्वा, लिङ्गं च से देवया पयच्छइ, लिङ्गवज्जिओ वा भवइ, जओ भणियं—रुप्पं पत्तेयबुद्धा" इति। तथा बुद्धा—आचार्यास्तैर्बोधिताः सन्तो ये सिद्धास्ते बुद्धबोधितसिद्धाः। एते च सर्वेऽपि केचित्स्त्रीलिङ्गसिद्धाः, स्त्रिया लिङ्गं स्त्रीलिङ्गं, स्त्रीत्वस्योपलक्षणमित्यर्थः, तच्च त्रिधा, तद्यथा—वेदः शरीरनिर्वृत्तिर्नेपथ्यं च, तत्रेह शरीरनिर्वृत्त्या प्रयोजनम्, न वेदनेपथ्याभ्यां, वेदे सति सिद्धत्वाभावात्, नेपथ्यस्य चाप्रमाणत्वात्, आह च नन्द्यध्ययनचूर्णिकृत्—"इत्थीए लिङ्गं इत्थिलिङ्गं, इत्थीए उवलक्खणंति वुत्तं भवइ, तं च तिविहं—वेदो सरीरनिव्वित्ती नेवत्थं च, इह सरीरनिव्वत्तीए अहिगारो, न वेयनेवत्थेहिं"ति।

ततस्तस्मिन् स्त्रीलिङ्गे वर्त्तमानाः सन्तो ये सिद्धास्ते स्त्रीलिङ्गसिद्धाः, एतेन यदाहुराशाम्बराः—'न स्त्रीणां निर्वाण'मिति, तदपास्तं द्रष्टव्यं, स्त्रीनिर्वाणस्य साक्षादनेन सूत्रेणाभिधानात्, तत्प्रतिषेधस्य युक्तया अनुपपन्नत्वात्, तथाहि—मुक्तिपथो ज्ञानदर्शनचारित्राणि 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' इति वचनात् (तत्त्वार्थे अ० १ सू० १), सम्यग्दर्शनादीनि च पुरुषाणामिव स्त्रीणामप्यविकलानि, तथाहि—दृश्यन्ते स्त्रियोऽपि सकलमपि प्रवचनार्थमभिरोचयमानाः, जानते च षडावश्यककालिकोत्कालिकादिभेदभिन्नं श्रुतं, परिपालयन्ति सप्तदशप्रकारमकलङ्कं संयमं, धारयन्ति च देवासुराणामपि दुर्धरं ब्रह्मचर्यं, तप्यन्ते च तपांसि मासक्षपणादीनि, ततः कथमिव न तासां मोक्षसम्भवः ?, स्यादेतत्—अस्ति स्त्रीणां सम्यग्दर्शनं ज्ञानं वा, न पुनश्चारित्रं, संयमाभावात्, तथाहि—स्त्रीणामवश्यं वस्त्रपरिभोगेन भवितव्यमन्यथा विवृताङ्ग्यस्तास्तिर्यक्स्त्रिय इव पुरुषाणामभिभवनीया भवेयुः, लोके च गर्होपजायते, ततोऽवश्यं ताभिर्वस्त्रं परिभोक्तव्यं, वस्त्रपरिभोगे च सपरिग्रहता, सपरिग्रहत्वे च संयमाभाव इति, तदसमीचीनम्, सम्यक् सिद्धान्तापरिज्ञानात्, परिग्रहो हि परमार्थतो मूर्छाऽभिधीयते, 'मुच्छा परिग्गहो वुत्तो' इतिवचनात्, तथाहि—मूर्छारहितो भरतश्चक्रवर्ती सान्तःपुरोऽप्यादर्शकगृहेऽवतिष्ठमानो निष्परिग्रहो गीयते, अन्यथा केवलोत्पादासम्भवात्, अपि च—यदि मूर्छाया अभावेऽपि वस्त्रसंसर्गमात्रं परिग्रहो भवेत् ततो जिनकल्पं प्रतिपन्नस्य कस्यचित्साधोस्तुपार-

१ प्रज्ञापनापदे अनन्तरसिद्धप्रज्ञा. (सू. ७)

॥ २० ॥

१ आशाम्बरकृतगोमटसारे—अडयाला पुंवेया, इत्थीवेया हवन्ति चालीसा । वीस नपुंसकवेया, समएणेगेण सिज्झन्ति ॥ १ ॥

कणानुषक्ते प्रपतति शीते केनाप्यविषह्योपनिपातमद्य शीतमिति विभाव्य धर्मार्थिना शिरसि वस्त्रे प्रक्षिप्ते तस्य सपरिग्रहता भवेत्, न चैतदिष्टं, तस्मान्न वस्त्रसंसर्गमात्रं परिग्रहः, किन्तु मूर्छा, सा च स्त्रीणां वस्त्रादिषु न विद्यते, धर्मोपकरणमात्रतया तस्योपादानात्, न खलु ता वस्त्रमन्तरेणात्मानं रक्षयितुमीशते, नापि शीतकालादिषु व्यग्रदशायां स्वाध्यायादिकं कर्तुं, ततो दीर्घतरसंयमपरिपालनाय यतनया वस्त्रं परिभुञ्जाना न ताः परिग्रहवत्यः, अथोच्येत—सम्भवति नाम स्त्रीणामपि सम्यग्दर्शनादिकं रत्नत्रयं,परं न तत् सम्भवमात्रेण मुक्तिपदप्रापकं भवति,किन्तु प्रकर्षप्राप्तम्,अन्यथा दीक्षानन्तरमेव सर्वेषामप्यविशेषेण मुक्तिपदप्राप्तिप्रसक्तिः, सम्यग्दर्शनादिरत्नत्रयप्रकर्षश्च स्त्रीणामसम्भवी, ततो न निर्वाणमिति, तदप्ययुक्तम्, स्त्रीषु रत्नत्रयप्रकर्षासम्भवे ग्राहकप्रमाणस्याभावात्, न खलु सकलदेशकालव्याप्त्या स्त्रीषु रत्नत्रयप्रकर्षासम्भवग्राहकं प्रमाणं विजृम्भते, देशकालविप्रकृष्टेषु प्रत्यक्षस्याप्रवृत्तेः, तदप्रवृत्तौ चानुमानस्याप्यसम्भवात्, नापि तासु रत्नत्रयप्रकर्षासम्भवप्रतिपादकः कोऽप्यागमो विद्यते, प्रत्युत सम्भवप्रतिपादकः स्थाने स्थानेऽस्ति,यथेदमेव प्रस्तुतं सूत्रं, ततो न तासां रत्नत्रयप्रकर्षासम्भवः, अथ मन्येथाः—स्वभावत एवातपेनेव छाया विरुध्यते स्त्रीत्वेन सह रत्नत्रयप्रकर्षः, ततस्तदसम्भवोऽनुमीयते, तदयुक्तमुक्तं, युक्तिविरोधात्, तथाहि—रत्नत्रयप्रकर्षः स उच्यते यतोऽनन्तरं मुक्तिपदप्राप्तिः, स चायोग्यवस्थाचरमसमयभावी, अयोग्यवस्था चास्मादृशामप्रत्यक्षा, ततः कथं विरोधगतिः?, न हि अदृष्टेन सह विरोधः प्रतिपत्तुं शक्यते, मा प्रापत्पुरुषेष्वपि प्रसङ्गः, ननु जगति सर्वोत्कृष्टपदप्राप्तिः सर्वोत्कृष्टेना-

ध्यवसायेनावाप्यते, नान्यथा, एतच्चोभयोरप्यावयोरागमप्रामाण्यबलतः सिद्धं, सर्वोत्कृष्टे च द्वे पदे—सर्वोत्कृष्टदुःखस्थानं सर्वोत्कृष्टसुखस्थानं च, तत्र सर्वोत्कृष्टदुःखस्थानं सप्तमनरकपृथ्वी, अतः परं परमदुःखस्थानस्याभावात्, सर्वोत्कृष्टसुखस्थानं तु निःश्रेयसं, तत्र स्त्रीणां सप्तमनरकपृथिवीगमनमागमे निषिद्धं, निषेधस्य च कारणं तद्गमनयोग्यतथाविधसर्वोत्कृष्टमनोवीर्यपरिणत्यभावः, ततः सप्तमपृथिवीगमनवत्त्वाभावात्, सम्मूर्छिमादिवत्, अपि च—यासां वादलब्धौ विकुर्वणत्वादिलब्धौ पूर्वगतश्रुताधिगतौ च न सामर्थ्यमस्ति तासां मोक्षगमनसामर्थ्यमित्यतिदुःश्रद्धेयं, तदेतदयुक्तं, यतो यदि नाम स्त्रीणां सप्तमनरकपृथिवीगमनं प्रति सर्वोत्कृष्टमनोवीर्यपरिणत्यभावः, तत एतावता कथमवसीयते—निःश्रेयसमपि प्रति तासां सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो, न हि यो भूमिकर्षणादिकं कर्म कर्तुं न शक्नोति स शास्त्राण्यप्यवगाढुं न शक्नोतीति प्रत्येतुं शक्यम्, प्रत्यक्षविरोधात्, अथ सम्मूर्छिमादिषूभयत्रापि सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो दृष्टः ततोऽत्राप्यवसीयते, ननु यदि तत्र दृष्टस्तर्हि कथमत्रावसीयते ?, न खलु बहिर्व्याप्तिमात्रेण हेतुर्गमको भवति, किन्त्वन्तर्व्याप्त्या, अन्तर्व्याप्तिश्च प्रतिबन्धबलेन, न चात्र प्रतिबन्धो विद्यते, न खलु सप्तमपृथिवीगमनं निर्वाणगमनस्य कारणं, नापि सप्तमपृथिवीगमनाविनाभावि निर्वाणगमनं, चरमशरीरिणां सप्तमपृथिवीगमनमन्तरेणैव निर्वाणगमनभावात्, न च प्रतिबन्धमन्तरेणैकस्याभावेऽन्यस्यावश्यमभावः, मा प्रापत् यस्य तस्य वा कस्यचिदभावे सर्वस्याभावप्रसङ्गः, यद्येवं तर्हि कथं सम्मूर्छिमादिषु निर्वाणगमनाभाव इति ?, उच्यते, तथाभवस्वाभाव्यात्, तथाहि—

ते सम्मूर्छिमादयो भवस्वभावत एव न सम्यग्दर्शनादिकं यथावत्प्रतिपत्तुं शक्यन्ते, ततो न तेषां निर्वाणसम्भवः, स्त्रियस्तु प्रागुक्तप्रकारेण यथावत्सम्यग्दर्शनादिरत्नत्रयसम्पद्योग्याः, ततस्तासां न निर्वाणगमनाभावः, अपि च–भुजपरिसर्प्पा द्वितीयामेव पृथिवीं यावद्गच्छन्ति न परतः, परपृथिवीगमनहेतुतथारूपमनोवीर्यपरिणत्यभावात्, तृतीयां यावत्पक्षिणश्चतुर्थीं चतुष्पदाः पञ्चमीमुरगाः, अथ च सर्वेऽप्यूर्ध्वमुत्कर्षतः सहस्रारं यावद्गच्छन्ति, तत्राधोगतिविषये मनोवीर्यपरिणतिवैषम्यदर्शनादूर्ध्वगतावपि च तद्वैषम्यम्, आह च–"विषमगतयोऽप्यधस्तादुपरिष्टात्तुल्यमासहस्रारम्। गच्छन्ति च तिर्यञ्चस्तदधोगत्यूनताऽहेतुः ॥ १ ॥" तथा च सति सिद्धं स्त्रीपुंसानामधोगतिवैषम्येऽपि निर्वाणं समं, यदप्युक्तम्–'अपि च यासां वादलब्धावित्यादि' तदप्यश्लीलं, वादविकुर्वणत्वादिलब्धिविरहेऽपि विशिष्टपूर्वगतश्रुताभावेऽपि माषतुषादीनां निःश्रेयससम्पदधिगमश्रवणात्, आह च–"वादविकुर्वणत्वादिलब्धिविरहे श्रुते कनीयसि च। जिनकल्पमनःपर्यवविरहेऽपि न सिद्धिविरहोऽस्ति॥ १ ॥" अपि च–यदि वादादिलब्ध्यभाववन्निःश्रेयसाभावोऽपि स्त्रीणामभविष्यत् ततस्तथैव सिद्धान्ते प्रत्यपादयिष्यत्, यथा जम्बूयुगादारात् केवलज्ञानाभावो, न च प्रतिपाद्यते क्वापि स्त्रीणां निर्वाणाभाव इति, तस्मादुपपद्यते स्त्रीणां निर्वाणमिति कृतं प्रसङ्गेन। तथा पुंलिङ्गे–शरीरनिर्वृत्तिरूपे व्यवस्थिताः सन्तो ये सिद्धास्ते पुंलिङ्गसिद्धाः, एवं नपुंसकलिङ्गसिद्धाः, तथा स्वलिङ्गे–रजोहरणादिरूपे व्यवस्थिताः सन्तो ये सिद्धास्ते स्वलिङ्गसिद्धाः, तथाऽन्यलिङ्गे–परिव्राजकादिसम्बन्धिनि वल्कलकाषायादिरूपे द्रव्यलिङ्गे व्यवस्थिताः सन्तो

ये सिद्धास्तेऽन्यलिङ्गसिद्धाः, गृहिलिङ्गे सिद्धा गृहिलिङ्गसिद्धाः मरुदेवीप्रभृतयः, तथैकसिद्धा एकस्मिन् २ समये एकका एव सन्तः सिद्धा एकसिद्धाः, 'अणेगसिद्धा' इति एकस्मिन् समयेऽनेके सिद्धा अनेकसिद्धाः, अनेके चैकस्मिन्समये सिध्यन्त उत्कर्षतोऽष्टोत्तरशतसङ्ख्या वेदितव्याः, यस्मादुक्तम्—"बत्तीसा अडयाला सट्ठी बावत्तरी य बोद्धव्वा। चुलसीई छन्नउइ उ दुरहियमठ्ठुत्तरसयं च ॥१॥" अस्या विनेयजनानुग्रहाय व्याख्या—अष्टौ समयान् यावन्निरन्तरमेकादयो द्वात्रिंशत्पर्यन्ताः सिध्यन्तः प्राप्यन्ते, किमुक्तं भवति ?—प्रथमे समये जघन्यत एको द्वौ वोत्कर्षतो द्वात्रिंशत्सिध्यन्तः प्राप्यन्ते, द्वितीयेऽपि समये जघन्यत एको द्वौ वोत्कर्षतो द्वात्रिंशत्, एवं यावदष्टमेऽपि समये जघन्यत एको द्वौ वोत्कर्षतो द्वात्रिंशत्, ततः परमवश्यमन्तरं, तथा त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ता निरन्तरं सिध्यन्तः सप्त समयान् यावत्प्राप्यन्ते, परतो नियमादन्तरं, तथा एकोनपञ्चाशदादयः षष्टिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतः षट् समयान् यावदवाप्यन्ते परतोऽवश्यमन्तरं,तथैकषष्ट्यादयो द्विसप्ततिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतः पञ्च समयान् यावदवाप्यन्ते ततः परमन्तरं,त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतश्चतुरः समयान् यावत्तत ऊर्ध्वमन्तरं, तथा पञ्चाशीत्यादयः षण्णवतिपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतस्त्रीन् समयान् यावत्परतो नियमादन्तरं, तथा सप्तनवत्यादयो द्व्युत्तरशतपर्यन्ता निरन्तरं सिध्यन्त उत्कर्षतो द्वौ समयौ परतोऽवश्यमन्तरं, तथा त्र्युत्तरशतादयोऽष्टोत्तरशतपर्यन्ताः सिध्यन्तो नियमादेकमेव समयं यावदवाप्यन्ते, न द्वित्रादिसमयान्, तदेवमेकस्मिन् समये उत्कर्ष-

१ प्रज्ञापनापदे अनन्तरसिद्धप्रज्ञा. (सू. ७)

तोऽष्टोत्तरशतसङ्ख्याः सिध्यन्तः प्राप्यन्ते इत्यनेकसिद्धा उत्कर्षतोऽष्टोत्तरशतप्रमाणा वेदितव्याः । आह—तीर्थसिद्धातीर्थसिद्धरूपभेदद्वय एव शेषभेदा अन्तर्भवन्ति तत्किमर्थं शेषभेदोपादानम् ?, उच्यते, सत्यमन्तर्भवन्ति परं न तीर्थसिद्धातीर्थसिद्धभेदद्वयोपादानमात्राच्छेषभेदपरिज्ञानं भवति, विशेषपरिज्ञानार्थं च एष शास्त्रारम्भप्रयास इति शेषभेदोपादानम् , उपसंहारमाह—'सेत्तमि'त्यादि, सैषा अनन्तरसिद्धासंसारसमापन्नजीवप्रज्ञापना ॥

से किं तं परम्परसिद्धअसंसारसमावण्णजीवपण्णवणा ?,२ अणेगविहा पण्णत्ता, तंजहा—अपढमसमयसिद्धा दुसमयसिद्धा तिसमयसिद्धा चउसमयसिद्धा जाव सङ्खिज्जसमयसिद्धा असङ्खिज्जसमयसिद्धा अणन्तसमयसिद्धा, सेत्तं परम्परसिद्धासंसारसमावण्णजीवपण्णवणा, सेत्तं असंसारसमावण्णजीवपण्णवणा ( सू०८)

अथ का सा परम्परसिद्धासंसारसमापन्नजीवप्रज्ञापना ?, सूरिराह—परम्परसिद्धासंसारसमापन्नजीवप्रज्ञापनाऽनेकविधा प्रज्ञप्ता, परंपरसिद्धानामनेकविधत्वात् , तदेवानेकविधत्वमाह—'तंजहे'त्यादि, 'तद्यथे'त्यनेकविधत्वोपदर्शने, 'अप्रथमसमयसिद्धा' इति, न प्रथमसमयसिद्धा अप्रथमसमयसिद्धाः—परम्परसिद्धविशेषणप्रथमसमयवर्त्तिनः, सिद्धत्वसमयाद्द्वितीयसमयवर्त्तिन इत्यर्थः, त्र्यादिषु तु समयेषु द्वितीयसमयसिद्धादय उच्यन्ते, यद्वा सामान्यतः प्रथममप्रथमसमयसिद्धा इत्युक्तं, तत एतद्विशेषतो व्याचष्टे—द्विसमयसिद्धास्त्रिसमयसिद्धाश्चतुःसमयसिद्धा इत्यादि यावच्छ-

न्दकरणात् पञ्चमसमयसिद्धादयः परिगृह्यन्ते। 'सेत्त'मित्यादि निगमनद्वयं सुगमं, तदेवमुक्ता असंसारसमापन्नजीवप्रज्ञापना ॥ सम्प्रतिसंसारसमापन्नजीवप्रज्ञापनामभिधित्सुस्तद्विषयं प्रश्नसूत्रमाह—

से किं तं संसारसमावण्णजीवपण्णवणा ?, संसारसमावण्णजीवपन्नवणा पञ्चविहा पण्णत्ता, तंजहा—एगेंदियसंसारसमावण्णजीवपण्णवणा बेइन्दियसंसारसमावण्णजीवपण्णवणा तेइन्दियसंसारसमावण्णजीवपण्णवणा चउरिन्दियसंसारसमावण्णजीवपण्णवणा पञ्चिन्दियसंसारसमावण्णजीवपण्णवणा(सू०९)

अथ का सा संसारसमापन्नजीवप्रज्ञापना ?, सूरिराह—संसारसमापन्नजीवप्रज्ञापना पञ्चविधा प्रज्ञप्ता,तद्यथा—एकेन्द्रियसंसारसमापन्नजीवप्रज्ञापनेत्यादि, तत्रैकं स्पर्शनलक्षणमिन्द्रियं येषां ते एकेन्द्रियाः—पृथिव्यम्बुतेजोवायुवनस्पतयो वक्ष्यमाणस्वरूपास्ते च ते संसारसमापन्नजीवाश्च तेषां प्रज्ञापना एकेन्द्रियसंसारसमापन्नजीवप्रज्ञापना, एवं सर्वपदेष्वक्षरघटना कार्या, नवरं द्वे स्पर्शनरसनालक्षणे इन्द्रिये येषां ते द्वीन्द्रियाः शङ्खशुक्तिकादयः, त्रीणि—स्पर्शनरसनाघ्राणलक्षणानीन्द्रियाणि येषां ते त्रीन्द्रियाः—यूकामत्कुणादयः, चत्वारि स्पर्शनरसनाघ्राणचक्षुर्लक्षणानीन्द्रियाणि येषां ते चतुरिन्द्रियाः—दंशमशकादयः, पञ्च स्पर्शनरसनाघ्राणचक्षुःश्रोत्रलक्षणानीन्द्रियाणि येषां ते पञ्चेन्द्रियाः—मत्स्यमकरमनुजादयः। अमीषां चैकादिसङ्ख्यानामिन्द्रियाणां स्पर्शनादीनामसंव्यवहारराशेरारभ्य प्रायोऽनेनैव क्रमेण लाभ इति सम्प्रत्ययार्थमित्थं क्रमेणैकेन्द्रियाद्युपन्यासः। इन्द्रियाणि च द्विधा, तद्यथा—द्रव्येन्द्रियाणि भावेन्द्रियाणि

१ प्रज्ञापनापदेपरम्परसिद्धप्रज्ञा. (सू. ८) संसारसमापन्न. (सू. ९)

च, तत्र द्रव्येन्द्रियाणि निर्वृत्त्युपकरणरूपाणि, तानि च सविस्तरं नन्द्यध्ययनटीकायां व्याख्यातानीति न भूयो व्याख्यायन्ते, भावेन्द्रियाणि क्षयोपशमोपयोगरूपाणि, तानि चानियतानि, एकेन्द्रियाणामपि क्षयोपशमोपयोगरूपभावेन्द्रियपञ्चकसम्भवात्, केषाञ्चित्तत्फलदर्शनात्, तथाहि–वकुलादयो मत्तकामिनीगीतध्वनिश्रवणसविलासकटाक्षनिरीक्षणमुखक्षिप्तसुरागण्डूषगन्धाघ्राणरसास्वादस्तनाद्यवयवस्पर्शनतः प्रमोदभावेनाकालक्षेपमुपलभ्यन्ते पुष्फफलानि प्रयच्छन्तः, उक्तं च—"जं किर वउलाईणं दीसइ सेसिन्दिओवलम्भोऽवि। तेणऽत्थि तदावरणक्खओवसमसम्भवो तेसिं ॥ १ ॥" ततो न भावेन्द्रियाणि लौकिकव्यवहारपथावतीर्णैकेन्द्रियादिव्यपदेशनिबन्धनं, किन्तु द्रव्येन्द्रियाणि, तथाहि–येषामेकं बाह्यं द्रव्येन्द्रियं स्पर्शनलक्षणमस्ति ते एकेन्द्रियाः येषां द्वे ते द्वीन्द्रियाः एवं यावद्येषां पञ्च ते पञ्चेन्द्रियाः, आह च–"पंचिंदिओवि वउलो नरोव सव्वविसयोवलम्भाओ। तहवि न भण्णइ पञ्चिन्दिओत्ति बज्झिन्दियाभावा॥ १॥"

से किन्तं एगेन्दियसंसारसमावण्णजीवपण्णवणा ?, एगेन्दियसंसारसमावण्णजीवपण्णवणा पञ्चविहा पन्नत्ता, तंजहा–पुढविकाइया आउकाइया तेउकाइया वाउकाइया वणस्सइकाइया ( सू०१० )

अथ का सा एकेन्द्रियसंसारसमापन्नजीवप्रज्ञापना ?, सूरिराह—एकेन्द्रियसंसारसमापन्नजीवप्रज्ञापना पञ्चविधा

---

१ यत्किल बकुलादीनां दृश्यते शेषेन्द्रियोपलम्भोऽपि। तेनास्ति तदावरणक्षयोपशमसंभवस्तेषाम् ॥ १ ॥ २ पञ्चेन्द्रियोऽपि बकुलो नर इव सर्वविषयोपलम्भात्। तथापि न भण्यते पञ्चेन्द्रिय इति बाह्येन्द्रियाभावात् ॥ १ ॥

प्रज्ञप्ता, एकेन्द्रियाणां पञ्चविधत्वात्, तदेव पञ्चविधत्वमाह—'तंजहे'त्यादि, पृथिवी—काठिन्यादिलक्षणा प्रतीता सैव कायः—शरीरं येषां ते पृथिवीकायाः पृथिवीकाया एव पृथिवीकायिकाः, स्वार्थे इकप्रत्ययः, आपो—द्रवास्ताश्च प्रतीता एव ताः कायः—शरीरं येषां तेऽप्कायाः अप्काया एवाप्कायिकाः, तेजो—वह्निः तदेव कायः—शरीरं येषां ते तेजस्काया तेजस्काया एव तेजस्कायिकाः, वायुः—पवनः स एव कायो येषां ते वायुकायाः वायुकाया एव वायुकायिकाः, वनस्पतिः—लतादिरूपः स एव कायः—शरीरं येषां ते वनस्पतिकायाः वनस्पतिकाया एव वनस्पतिकायिकाः। इह सर्वभूताधारत्वात् पृथिव्याः पृथिवीकायिकानां प्रथममुपादानं, तदनन्तरं तत्प्रतिष्ठितत्वादप्कायिकानां, अप्कायिकाश्च तेजःप्रतिपक्षभूतास्ततदनन्तरं तेजस्कायिकानामुपादानं, तेजश्च वायुसम्पर्कतः प्रवृद्धिमुपयाति तत एतदनन्तरं वायुकायिकग्रहणं, वायुश्च दूरस्थितो वृक्षशाखादिकम्पनतो लक्ष्यते ततस्तदनन्तरं वनस्पतिकायिकोपादानं॥ सम्प्रति पृथिवीकायिकमनवबुध्यमानस्तद्विषयं शिष्यः प्रश्नं करोति—

से किं तं पुढविकाइया ?, पुढविकाइया दुविहा पण्णत्ता, तंजहा—सुहुमपुढविकाइया य बादरपुढविकाइया य। (सू० ११)

अथ के ते पृथिवीकायिकाः ?, सूरिराह—पृथिवीकायिकाः द्विविधाः प्रज्ञप्ताः, तद्यथा—सूक्ष्मपृथिवीकायिकाश्च बादरपृथिवीकायिकाश्च, सूक्ष्मनामकर्मोदयात्सूक्ष्माः बादरनामकर्मोदयाद्बादराः, कर्मोदयजनिते खल्वेते सूक्ष्मबादरत्वे नापेक्षिके बदरामलकयोरिव, सूक्ष्माश्च ते पृथिवीकायिकाश्च सूक्ष्मपृथिवीकायिकाः, चशब्दः स्वगतपर्या-

सापर्याप्तभेदसूचकः, बादराश्च ते पृथिवीकायिकाश्च बादरपृथिवीकायिकाः, अत्रापि चशब्दः शर्करावालुकादिभेदसूचकः, तत्र सूक्ष्मपृथिवीकायिकाः समुद्गकपर्याप्तप्रक्षिप्तगन्धावयववत्सकललोकव्यापिनो, बादराः प्रतिनियतदेशचारिणः, तच्च प्रतिनियतदेशचारित्वं द्वितीयपदे प्रकटयिष्यते ॥ तत्र सूक्ष्मपृथिवीकायिकानां स्वरूपं जिज्ञासुरिदमाह—

से किन्तं सुहुमपुढविकाइया ?, २ दुविहा पण्णत्ता, तंजहा—पज्जत्तसुहुमपुढविकाइया य अपज्जत्तसुहुमपुढविकाइया य, से त्तं सुहुमपुढविकाइया । ( सू. १२ )

अथ के ते सूक्ष्मपृथिवीकायिकाः ?, सूरिराह—सूक्ष्मपृथिवीकायिका द्विविधाः प्रज्ञप्ताः, तद्यथा—पर्याप्तसूक्ष्मपृथिवीकायिकाश्चापर्याप्तसूक्ष्मपृथिवीकायिकाश्च, तत्र पर्याप्तिर्नाम आहारादिपुद्गलग्रहणपरिणमनहेतुरात्मनः शक्तिविशेषः, स च पुद्गलोपचयादुपजायते, किमुक्तं भवति ?—उत्पत्तिदेशमागतेन प्रथमं ये गृहीताः पुद्गलास्तेषां तथाऽन्येषामपि प्रतिसमयं गृह्यमाणानां तत्सम्पर्कतः तद्रूपतया जातानां यः शक्तिविशेषः आहारादिपुद्गलखलरसरूपताऽऽपादानहेतुर्यथोदरान्तर्गतानां पुद्गलविशेषाणामाहारपुद्गलखलरसरूपतापरिणमनहेतुः, सा च पर्याप्तिः षोढा—आहारपर्याप्तिः शरीरपर्याप्तिरिन्द्रियपर्याप्तिः प्राणापानपर्याप्तिर्भाषापर्याप्तिर्मनःपर्याप्तिश्च, तत्र यया बाह्यमाहारमादाय खलरसरूपतया परिणमयति सा आहारपर्याप्तिः, यया रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया

परिणमयति सा शरीरपर्याप्तिः, यया धातुरूपतया परिणमितमाहारमिन्द्रियरूपतया परिणमयति सा इन्द्रियपर्याप्तिः, तथा चायमर्थोऽन्यत्रापि भङ्ग्यन्तरेणोक्तः, पञ्चानामिन्द्रियाणां प्रायोग्यान् पुद्गलान् गृहीत्वाऽनाभोगनिर्वर्त्तितेन वीर्येण तद्भावनयनशक्तिरिन्द्रियपर्याप्तिरिति, यया पुनरुच्छ्वासप्रायोग्यान् पुद्गलानादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुञ्चति सा उच्छ्वासपर्याप्तिः, यया तु भाषाप्रायोग्यान् पुद्गलानादाय भाषात्वेन परिणमय्यालम्ब्य च मुञ्चति सा भाषापर्याप्तिः, यया पुनर्मनःप्रायोग्यान् पुद्गलानादाय मनस्त्वेन परिणमय्यालम्ब्य च मुञ्चति सा मनःपर्याप्तिः, एताश्च यथाक्रममेकेन्द्रियाणां संज्ञिवर्जानां द्वीन्द्रियादीनां सञ्ज्ञिनां चतुःपञ्चपट्सङ्ख्या भवन्ति, उक्तं च प्रज्ञापनामूलटीकाकृता—"एकेन्द्रियाणां चतस्रो विकलेन्द्रियाणां पञ्च सञ्ज्ञिनां षट्" इति, उत्पत्तिप्रथमसमय एव एता यथायथं सर्वा अपि युगपन्निष्पादयितुमारभ्यन्ते, क्रमेण च निष्ठामुपयान्ति, तद्यथा—प्रथममाहारपर्याप्तिस्ततः शरीरपर्याप्तिस्तत इन्द्रियपर्याप्तिरित्यादि, आहारपर्याप्तिश्च प्रथमसमय एव निष्पत्तिमुपपद्यते, शेषास्तु प्रत्येकमन्तर्मुहूर्त्तेन कालेन, अथाहारपर्याप्तिः प्रथमसमय एव निष्पद्यते इति कथमवसीयते ?, उच्यते, यत आहारपदे द्वितीयोद्देशके सूत्रमिदम्—'आहारपज्जत्तिए अपज्जत्तए णं भंते ! किं आहारए अणाहारए ?, गोयमा ! नो आहारए अणाहारए' इति, तत आहारपर्याप्त्याऽपर्याप्तो विग्रहगतावेवोपपद्यते, नोपपातक्षेत्रमागतोऽपि, उपपातक्षेत्रमागतस्य प्रथमसमय एवाहारकत्वात्, तत एकसामयिकी आहारपर्याप्तिनिर्वृत्तिः, यदि पुनरुपपातक्षेत्रमागतोऽप्याहारपर्याप्त्याऽपर्याप्तः

स्यात् तत एवं सति व्याकरणसूत्रमित्थं भवेत्—"सिय आहारए सिय अणाहारए' यथा शरीरादिपर्याप्तिषु 'सिय आहारए सिय अणाहारए" इति, सर्वासामपि च पर्याप्तीनां परिसमाप्तिकालोऽन्तर्मुहूर्तप्रमाणः, पर्याप्तयो विद्यन्ते येषां ते पर्याप्ता "अभ्रादिभ्य' इति मत्वर्थीयोऽप्रत्ययः, पर्याप्तकाश्च ते सूक्ष्मपृथिवीकायिकाश्च पर्याप्तकसूक्ष्मपृथिवीकायिकाः, चशब्दो लब्धिपर्याप्तकरणपर्याप्तरूपस्वगतभेदद्वयसूचकः, ये पुनः स्वयोग्यपर्याप्तिपरिसमाप्तिविकलास्तेऽपर्याप्ताः अपर्याप्ताश्च ते सूक्ष्मपृथिवीकायिकाश्चापर्याप्तसूक्ष्मपृथिवीकायिकाः, चशब्दः करणलब्धिनिबन्धनस्वगतभेदद्वयसूचकः, तथाहि—द्विविधाः सूक्ष्मपृथिवीकायिका अपर्याप्तास्तद्यथा—लब्ध्या करणैश्च, तत्र येऽपर्याप्तका एव सन्तो म्रियन्ते ते लब्ध्यपर्याप्तकाः, ये पुनः करणानि—शरीरेन्द्रियादीनि न तावन्निर्वर्त्तयन्ति अथचावश्यं निर्वर्त्तयिष्यन्ति ते करणापर्याप्ताः, उपसंहारमाह—'सेत्त' मित्यादि, त एते सूक्ष्मपृथिवीकायिकाः ॥ तदेवं सूक्ष्मपृथिवीकायिकानभिधाय सम्प्रति बादरपृथिवीकायिकानभिधित्सुस्तद्विषयं प्रश्नसूत्रमाह—

से किं तं बादरपुढविकाइया ?, बादरपुढविकाइया दुविहा पन्नत्ता, तंजहा—सण्हबादरपुढविकाइया य खरबादरपुढविकाइया य ( सू. १३ )

अथ के ते बादरपृथिवीकायिकाः ?, सूरिराह—बादरपृथिवीकायिका द्विविधाः प्रज्ञप्ताः, तद्यथा—श्लक्ष्णबादरपृथिवीकायिकाश्च खरबादरपृथिवीकायिकाश्च, तत्र श्लक्ष्णा नाम चूर्णितलोष्ठकल्पा मृदुपृथिवी तदात्मका जीवा अप्युपचा-

रतः श्लक्ष्णास्ते च ते बादरपृथिवीकायिकाश्च श्लक्ष्णबादरपृथिवीकायिकाः, अथवा श्लक्ष्णा च सा बादरपृथिवी च २ सा कायः—शरीरं येषां ते श्लक्ष्णबादरपृथिवीकायाः त एव स्वार्थिकेकप्रत्ययविधानात् श्लक्ष्णबादरपृथिवीकायिकाः, चशब्दो वक्ष्यमाणस्वगतानेकभेदसूचकः, खरा नाम पृथिवीसङ्घातविशेषं काठिन्यविशेषं चापन्ना तदात्मका जीवा अपि खरास्ते च ते बादरपृथिवीकायिकाश्च खरबादरपृथिवीकायिकाः, अथवा पूर्ववत्प्रकारान्तरेण समासः, चशब्दः स्वगतवक्ष्यमाणचत्वारिंशद्भेदसूचकः ॥

से किं तं सण्हबायरपुढविकाइया ?, सण्हबायरपुढविकाइया सत्तविहा पन्नता, तंजहा—किण्हमत्तिया नीलमत्तिया लोहियमत्तिया हालिद्दमत्तिया सुक्किल्लमत्तिया पाण्डुमत्तिया पणगमत्तिया, सेत्तं सण्हबादरपुढविकाइया । ( सू. १४ )

अथ के ते श्लक्ष्णबादरपृथिवीकायिकाः, सूरिराह—श्लक्ष्णबादरपृथिवीकायिकाः सप्तविधाः प्रज्ञप्ताः, तदेव सप्तविधत्वं तद्यथेत्यादिनोपदर्शयति, कृष्णमृत्तिकाः—कृष्णमृत्तिकारूपा एवं नीलमृत्तिका लोहितमृत्तिका हारिद्रमृत्तिका शुक्लमृत्तिकाः, इत्थं वर्णभेदेन पञ्चविधत्वमुक्तं, पाण्डुमृत्तिका नाम देशविशेषे या धूलीरूपा सती पाण्डू इति प्रसिद्धा, तदात्मका जीवा अप्यभेदोपचारात् पाण्डुमृत्तिकेत्युक्ताः, 'पणगमट्टियत्ति' नद्यादिपूरप्लाविते देशे नद्यादिपूरेऽपगते यो भूमौ श्लक्ष्णमृदुरूपो जलमलापरपर्यायः पङ्कः स पनकमृत्तिका तदात्मका जीवा अप्यभेदोपचारात्पनकमृत्तिकाः, निगमनमाह—सेत्तं सण्हबायरपुढविकाइया, सुगमम् ॥

से किं तं खरबायरपुढविकाइया ?, खरबायरपुढविकाइया अणेगविहा पण्णत्ता, तंजहा–पुढवी य सक्करा वालुया य उवले सिला य लोणूसे। अय तंब तउय सीसय रुप्प सुवन्ने य वइरे य १४ ॥१॥ हरियाले हिंगुलए मणोसिला सासगंजणपवाले। अब्भपडलब्भवालुय बायरकाए मणिविहाणा ८ ॥ २ ॥ गोमेज्जए य रुयए अंके फलिहे य लोहियक्खे य। मरगय मसारगल्ले भुयमोयग इन्दनीले य ९ ॥ ३ ॥ चंदण गेरुय हंसगब्भ पुलए सोगन्धिए य बोद्धव्वे। चन्दप्पभवेरुलिए जलकंते सूरकंते य ९ ॥४॥–४०॥ जेयावन्ने तहप्पगारा ते समासओ दुविहा पन्नत्ता, तंजहा–पज्जत्तगा य अपज्जत्तगा य, तत्थणं जे ते अपज्जत्तगा ते णं असंपत्ता तत्थ णं जे ते पज्जत्तगा एतेसिं वन्नादेसेणं गन्धादेसेणं रसादेसेणं फासादेसेणं सहस्सग्गसो विहाणाइं, सङ्खेज्जाइं जोणिप्पमुहसतसहस्साइं, पज्जत्तगणिस्साए अपज्जत्तगा वक्कमंति, जत्थ एगो तत्थ नियमा असङ्खेज्जा, से त्तं खरबायरपुढविकाइया, सेत्तं बायरपुढविकाइया, सेत्तं पुढविकाइया। ( सू० १५ )

अथ के ते खरबादरपृथिवीकायिकाः ?, सूरिराह—खरबादरपृथिवीकायिका अनेकविधाः प्रज्ञप्ताः, चत्वारिंशद्भेदा मुख्यतया प्रज्ञप्ता इत्यर्थः, तानेव चत्वारिंशद्भेदानाह–'तंजहा पुढवी य'इत्यादि गाथाचतुष्टयं, पृथिवीति भामा सत्यभामावत् शुद्धपृथिवी च नदीतटभित्त्यादिरूपा, चशब्द उत्तरभेदापेक्षया समुच्चये १ शर्करा–लघूपलशकलरूपा २ वालुका–सिकताः ३ उपलः–टङ्काद्युपकरणपरिकर्मणायोग्यः पाषाणः ४ शिला–घटनयोग्या देवकुलपीठाद्युपयोगी महान् पाषाणविशेषः ५ लवणं–सामुद्रादि ६ ऊषो–यद्वशादूषरं क्षेत्रम् ७ अयस्ताम्रत्रपुसीसकरूप्यसुव-

र्णानि प्रतीतानि १३ वज्रो—हीरकः १४ हरितालहिङ्गुलकमनःशिलाः प्रतीताः १७ सासगं—पारदः १८ अञ्जनं—सौवीराञ्जनादि १९ प्रवालं—विद्रुमः २० अभ्रपटलं—प्रसिद्धम् २१ अभ्रवालुका—अभ्रपटलमिश्रा वालुका २२ 'वायरकाये' इति बादरपृथिवीकायेऽमी भेदा इति शेषः, 'मणिविहाणा' इति चशब्दस्य गम्यमानत्वान्मणिविधानानि च—मणिभेदाश्च बादरपृथिवीकायभेदत्वेन ज्ञातव्याः। तान्येव मणिविधानानि दर्शयति—'गोमिज्जए' इत्यादि, गोमेज्जकः २३ चः समुच्चये रूचकः २४ अङ्कः २५ स्फटिकः २६ चः पूर्ववत् लोहिताक्षः २७ मरकतः २८ मसारगल्लः २९ भुजमोचकः ३० इन्द्रनीलश्च ३१ चन्दनो ३२ गैरिको ३३ हंसगर्भः ३४ पुलकः ३५ सौगन्धिकश्च ३६ चन्द्रप्रभो ३७ वैडूर्यो ३८ जलकान्तः ३९ सूर्यकान्तश्च ४०, तदेवमाद्यगाथया पृथिव्यादयश्चतुर्दश भेदा उक्ताः, द्वितीयगाथयाऽष्टौ हरितालादयः, तृतीयगाथया गोमेज्जकादयो नव, तुर्यया गाथया नवेति सङ्ख्यया चत्वारिंशत् ४०, 'जे यावन्ने तहप्पगारा' इति येऽपि चान्ये तथाप्रकारा मणिभेदाः—पद्मरागादयस्तेऽपि खरबादरपृथिवीकायत्वेन वेदितव्याः 'ते समासओ' इत्यादि, 'ते' सामान्यतो बादरपृथिवीकायिकाः 'समासतः' सङ्क्षेपेण द्विविधाः प्रज्ञप्ताः, तद्यथा—पर्याप्तका अपर्याप्तकाश्च, तत्र येऽपर्याप्तकास्ते स्वयोग्याः पर्याप्तीः साकल्येनासंप्राप्ता अथवाऽसंप्राप्ता इति—विशिष्टान् वर्णादीननुपगताः, तथाहि—वर्णादिभेदविवक्षायामेते न शक्यन्ते कृष्णादिना वर्णभेदेन व्यपदेष्टुं, किं कारणमिति चेद्, उच्यते, इह शरीरादिपर्याप्तिषु परिपूर्णासु सतीषु बादराणां वर्णादिविभागः प्रकटो भवति नापरिपूर्णासु, ते चाप-

यांसा उच्छ्वासपर्याप्त्याऽपर्याप्ता एव म्रियन्ते, ततो न स्पष्टतरवर्णादिविभाग इत्यसंप्राप्ता इत्युक्तं, ननु कस्मादुच्छ्वासपर्याप्त्यैवापर्याप्ता म्रियन्ते नार्वाक् शरीरेन्द्रियपर्याप्तिभ्यामपर्याप्ता अपि ?, उच्यते, यस्मादागामिभवायुर्बद्ध्वा म्रियन्ते सर्व एव देहिनो नाबद्ध्वा, तच्च शरीरेन्द्रियपर्याप्तिभ्यां पर्याप्तानां बन्धमायाति नान्यथेति, अन्ये तु व्याचक्षते—सामान्यतो वर्णादीनसंप्राप्ता इति, तच्च न युक्तं, यतः शरीरमात्रभाविनो वर्णादयः, शरीरं च शरीरपर्याप्त्या सञ्जातमिति । 'तत्थ णं जे ते पज्जत्तगा'इत्यादि, तत्र ये ते पर्याप्तकाः—परिसमाप्तस्वयोग्यसमस्तपर्याप्तयः, एतेषां 'वर्णादेशेन' वर्णभेदविवक्षया एवं गन्धादेशेन रसादेशेन स्पर्शादेशेन 'सहस्राग्रशः' सहस्रसङ्ख्यया विधानानि—भेदाः, तद्यथा—वर्णाः कृष्णादिभेदात्पञ्च गन्धौ सुरभीतरभेदाद्द्वौ रसाः तिक्तादयः पञ्च स्पर्शा मृदुकर्कशादयोऽष्टौ, एकैकस्मिंश्च वर्णादौ तारतम्यभेदेनानेकेऽवान्तरभेदाः, तथाहि—भ्रमरकोकिलकज्जलादिषु तरतमभावात् कृष्णकृष्णतरकृष्णतमेत्यादिरूपतया अनेके कृष्णभेदाः, एवं नीलादिष्वप्यायोज्यं, तथा गन्धरसस्पर्शेष्वपि, तथा परस्परं वर्णानां संयोगतो धूसरकर्बुरत्वादयोऽनेकसङ्ख्या भेदाः, एवं गन्धादीनामपि परस्परं गन्धादिभिः समायोगाद्, अतो भवन्ति वर्णाद्यादेशैः सहस्राग्रशो भेदाः, 'सङ्खेज्जाइं जोणिप्पमुहसयसहस्साइं'ति सङ्ख्येयानि योनिप्रमुखाणि—योनिद्वाराणि शतसहस्राणि, तथाहि—एकैकस्मिन् वर्णे गन्धे रसे स्पर्शे च संवृता योनिः पृथिवीकायिकानां, सा पुनस्त्रिधा—सचित्ता अचित्ता मिश्रा च, पुनरेकैका त्रिधा—शीता उष्णा शीतोष्णा, शीतादीनामपि प्रत्येकं तारतम्यभेदादनेकभेदत्वं, केवलमेवं विशि-

ष्टवर्णादियुक्ताः सङ्ख्यातीता अपि स्वस्थाने व्यक्तिभेदेन योनयो जातिमधिकृत्यैकैव योनिर्गण्यते, ततः सङ्ख्येयानि पृथिवीकायिकानां योनिशतसहस्राणि भवन्ति, तानि च सूक्ष्मवादरगतसर्वसङ्ख्यया सप्त, 'पज्जत्तगनिस्साए'इत्यादि, पर्याप्तकनिश्रयाऽपर्याप्तका व्युत्क्रामन्ति—उत्पद्यन्ते, कियन्त इत्याह—यत्रैकः पर्याप्तकस्तत्र नियमात्तन्निश्रयाऽसङ्ख्येयाः—सङ्ख्यातीता अपर्याप्तकाः, उपसंहारमाह—'सेत्त'मित्यादि निगमनत्रयं सुगमम् ॥ तदेवमुक्ताः पृथिवीकायिकाः, सम्प्रत्यप्कायिकप्रतिपादनार्थमाह—

से किं तं आउकाइया ?, आउकाइया दुविहा पण्णत्ता, तंजहा—सुहुमआउकाइया य वादरआउकाइया य। से किं तं सुहुमआउकाइया ?, सुहुमाउका० दुविहा पन्नत्ता, तंजहा—पज्जत्तसुहुमआउकाइया य अपज्जत्तसुहुमआउकाइया य, सेत्तं सुहुमआउकाइया। से किं तं वादरआउकाइया ?, २ अणेगविहा पन्नत्ता, तंजहा—उस्सा हिमए महिया करए हरतणुए सुद्धोदए सीतोदए उसिणोदए खारोदए खट्टोदए अम्बिलोदए लवणोदए वारुणोदए खीरोदए घओदए खोतोदए रसोदए, जे यावन्ने तहप्पगारा ते समासओ दुविहा पण्णत्ता तं०—पज्जत्तगा य अपज्जत्तगा य, तत्थ णं जे ते अपज्जत्तगा ते णं असंपत्ता, तत्थ णं जे ते पज्जत्तगा एतेसिं वण्णादेसेणं गन्धादेसेणं रसादेसेणं फासादेसेणं सहस्सग्गसो विहाणाइं संखेज्जाइं जोणिप्पमुहसयसहसाइं, पज्जत्तगनिस्साए अपज्जत्तगा वक्कमंति, जत्थ एगो तत्थ नियमा असंखिज्जा, से तं वादरआउकायिया, सेतं आउकाइया ( सू० १६ )

सुगमम्, 'उस्सा' इत्यवश्यायः त्रेहः 'हिमं'स्त्यानोदकं 'महिका' गर्भमासेषु सूक्ष्मवर्षः करको—घनोपलः हरतनुर्यो भुवमुद्भिद्य गोधूमाङ्कुरतृणाग्रादिषु वद्धो विन्दुरुपजायते 'शुद्धोदकं' अन्तरिक्षसमुद्भवं नद्यादिगतं च, तच्च स्पर्शरसादि-

भेदादनेकभेदं, तदेवानेकभेदत्वं दर्शयति—'शीतोदकं' नदीतडागावटवापीपुष्करिण्यादिषु शीतपरिणामं 'उष्णोदकं' स्वभावत एव क्वचिन्निर्झरादावुष्णपरिणामं 'क्षारोदकं' ईषल्लवणस्वभावं यथा लाटदेशादौ केषुचिदवटेषु 'खट्टोदकम्' ईषदम्लपरिणामं 'अम्लोदकं' स्वभावत एवाम्लपरिणामं काञ्जिकवत् लवणोदकं लवणसमुद्रे वारुणं वारुणसमुद्रे क्षीरोदकं क्षीरसमुद्रे क्षोदोदकं इक्षुसमुद्रे रसोदकं पुष्करवरसमुद्रादिषु, येऽपि चान्ये तथाप्रकाराः—रसस्पर्शादि-भेदभिन्ना घृतोदकादयो वादरा अप्कायिकाः ते सर्वे वादराप्कायिकतया प्रतिपत्तव्याः, ते समासओ इत्यादि प्राग्वत्, नवरं सङ्ख्येयानि योनिप्रमुखाणि शतसहस्राणि इत्यत्रापि सप्त वेदितव्यानि ॥ उक्ता अप्कायिकाः, सम्प्रति तेजस्कायिकान् प्रतिपिपादयिषुराह—

से किं तं तेऊकाइया?, २ दुविहा पन्नत्ता, तंजहा—सुहुमतेऊकाइया य बादरतेऊकाइया य । से किन्तं सुहुमतेऊकाइया ?, २ दुविहा पन्नत्ता, तंजहा—पज्जत्तगा य अपज्जत्तगा य, सेत्तं सुहुमतेऊकाइया। से किं तं वादरतेऊकाइया ?, २ अणेगविहा पण्णत्ता, तंजहा—इङ्गाले जाला मुम्मुरे अच्ची अलाए सुद्धागणी उक्का विज्जू असणी णिग्घाए संघरिससमुट्ठिए सूरकन्तमणिणिस्सिए, जे यावन्ने तहप्पगारा ते समासओ दुविहा पण्णत्ता, तं०—पज्जत्तगा य अपज्जत्तगा य, तत्थ णं जे ते अपज्जत्तगा ते णं असंपत्ता, तत्थ णं जे ते पज्जत्तगा एएसिणं वन्नादेसेणं गन्धादेसेणं रसादेसेणं फासादेसेणं सहस्सग्गसो विहाणाइं सङ्खेज्जाइं जोणिप्पमुहसयसहस्साइं, पज्जत्तगणिस्साए अपज्जत्तगा वक्कमंति, जत्थ एगो तत्थ नियमा असंखिज्जा, सेत्तं वादरतेऊकाइया, से त्तं तेऊकाइया सू० १७

१ प्रज्ञापनापदे तेजस्काय. (सू. १६) वायुकाय. (सू. १७)

सुगमं, नवरमङ्गारो–विगतधूमः 'ज्वाला' जाज्वल्यमानखादिरादिज्वाला अनलसम्बद्धा दीपशिखेत्यन्ये 'मुर्मुरः' फुम्फकादौ भस्ममिश्रिताग्निकणरूपः 'अर्चिः' अनलाप्रतिबद्धा ज्वाला 'अलातं' उल्मुकं 'शुद्धाग्निः' अयःपिण्डादौ 'उल्का' चुडुल्ली विद्युत् प्रतीता 'अशनिः' आकाशे पतन् अग्निमयः कणः निर्घातो–वैक्रियाशनिप्रपातः सङ्घर्षसमुत्थितः–अरण्यादिकाष्ठनिर्म्मथनसमुद्भूतः सूर्यकान्तमणिनिसृतः–सूर्यखरकिरणसम्पर्के सूर्यकान्तमणेर्यः समुपजायते, 'जे यावन्ने तहप्पगारा' इति येऽपि चान्ये तथाप्रकाराः–एवंप्रकारास्तेजस्कायिकास्तेऽपि वादरतेजस्कायिकतया वेदितव्याः, 'ते समासओ' इत्यादि प्राग्वत्, नवरमत्रापि सङ्ख्येयानि योनिप्रमुखाणि शतसहस्राणि सप्त वेदितव्यानि ॥ उक्ताः तेजस्कायिकाः, वायुकायिकप्रतिपादनार्थमाह—

से किन्तं वाउकाइया ?, २ दुविहा पन्नत्ता, तंजहा–सुहुमवाउकाइया य वादरवाउकाइया य । से किन्तं सुहुमवाउकाइया ?, २ दुविहा पण्णत्ता, तंजहा–पज्जत्तगसुहुमवाउकाइया य अपज्जत्तगसुहुमवाउकाइगा य, सेत्तं सुहुमवाउकाइया । से किन्तं वादरवाउकाइया ?, २ अणेगविहा पण्णत्ता, तंजहा–पाइणवाए पडीणवाए दाहिणवाए उदीणवाए उड्ढवाए अहोवाए तिरियवाए विदिसीवाए वाउब्भामे वाउक्कलिया वायमंडलिया उक्कलियावाए मंडलियावाए गुंजावाए झंझावाए संवट्टवाए घणवाए तणुवाए सुद्धवाए, जे यावण्णे तहप्पगारा ते समासओ दुविहा पन्नत्ता, तंजहा—पज्जत्तगा य अपज्जत्तगा य, तत्थ णं जे ते अपज्जत्तगा ते णं असंपत्ता, तत्थ णं जे ते पज्जत्तगा एतेसिणं वण्णादेसेणं गन्धादेसेणं रसादेसेणं फासादेसेणं सहस्सग्गसो विहाणाइं संखेज्जाइं ॥ २९ ॥

जोणिप्पमुहसयसहस्साइं, पज्जत्तगनिस्साए अपज्जत्तया वक्कमंति, जत्थ एगो तत्थ नियमा असंखेज्जा, से त्तं बादरवाउकाइया, से तं वाउकाइया ( सू० १८ )

प्रतीतं, नवरं 'पाईणवाए'इति यः प्राच्या दिशः समागच्छति वातः स प्राचीनवातः एवमपाचीनवातः दक्षिणवातः उदीचीनवातश्च वक्तव्यः, ऊर्ध्वमुद्गच्छन् यो वाति वातः स ऊर्ध्ववातः, एवमधोवाततिर्यग्वातावपि परिभावनीयौ, 'विदिग्वातो' यो विदिग्भ्यो वाति 'वातोद्भ्रामः' अनवस्थितवातः वातोत्कलिका—समुद्रस्येव वातोत्कलिका 'वातमण्डली' वातोली 'उत्कलिकावात' उत्कलिकाभिः प्रचुरतराभिः सम्मिश्रितो यो वातो 'मण्डलीकावातो' मण्डलिकाभिर्मूलत आरभ्य प्रचुरतराभिः समुत्थो यो वातः 'गुञ्जावातो' यो गुञ्जन्—शब्दं कुर्वन् वाति 'झञ्झावातः' सवृष्टिरशुभनिष्ठुर इत्यन्ये, 'संवर्त्तकवातः' तृणादिसंवर्त्तनस्वभावः 'घनवातो' घनपरिणामो रत्नप्रभापृथिव्याद्यधोवर्त्ती 'तनुवातो' विरलपरिणामो घनवातस्याधः स्थायी 'शुद्धवातो' मन्दस्तिमितो बस्तिदृत्यादिगत इत्यन्ये, 'ते समासओ' इत्यादि प्राग्वत्, अत्रापि सङ्ख्येयानि योनिप्रमुखाणि शतसहस्राणि समवसेयानि ॥ उक्ता वायुकायिकाः, सम्प्रतिवनस्पतिकायिकप्रतिपादनार्थमाह—

से किं तं वणस्सइकाइया ?, वणस्सइकाइया दुविहा पण्णत्ता, तंजहा—सुहुमवणस्सइकाइया य बायरवणस्सइकाइया य (सू० १९) से किन्तं सुहुमवणस्सइकाइया ?, २ दुविहा पण्णत्ता, तंजहा—पज्जत्तगसुहुमवणस्सइकाइया य अपज्जत्तगसुहुमवणस्सइकाइया य,

सेत्तं सुहुमवणस्सइकाइया ( सू० २० ) से किन्तं वादरवणस्सइ० ?, २ दुविहा पन्नत्ता, तंजहा—पत्तेयसरीरवादरवणस्सइ० साहारणस० वादरवणस्सइ० (सू० २१ ) से किन्तं पत्तेयसरीरवादरवणस्सइकाइया ?, २ दुवालसविहा पन्नत्ता, तंजहा—रुक्खा गुच्छा गुम्मा लता य वल्ली य पव्वगा चेव । तणवलयहरियओसहिजलरुहकुहणा य वोद्धव्वा ॥ १ ॥ ( सू० २२ )

सुगमं यावत् 'सेत्तं सुहुमवणस्सइकाइया,' 'से किन्त'मित्यादि, अथ के ते वादरवनस्पतिकायिकाः ?, २ द्विविधाः प्रज्ञप्ताः, तद्यथा—प्रत्येकशरीरवादरवनस्पतिकायिकाश्च साधारणशरीरवादरवनस्पतिकायिकाश्च, तत्रैकमेकं जीवं प्रति गतं प्रत्येकं प्रत्येकं शरीरं येषां ते प्रत्येकशरीराः ते च ते वादरवनस्पतिकायिकाश्च प्रत्येकशरीरवादरवनस्पतिकायिकाः, चशब्दः स्वगतानेकभेदसूचकः, समानं—तुल्यं प्राणापानाद्युपभोगं यथा भवति एवमा—समन्तादेकीभावेनानन्तानां जन्तूनां धारणं—सङ्ग्रहणं येन तत्साधारणं साधारणं शरीरं येषां ते साधारणशरीराः ते च ते वादरवनस्पतिकायिकाश्च साधारणवादरवनस्पतिकायिकाः, चशब्दोऽत्रापि स्वगतानेकभेदसूचकः । 'से किन्त' मित्यादि, अथ के ते प्रत्येकशरीरवादरवनस्पतिकायिकाः ?, सूरिराह—प्रत्येकशरीरवादरवनस्पतिकायिकाः द्वादशविधाः प्रज्ञप्ताः, तद्यथा—'रुक्खे'त्यादि, 'वृक्षाः' चूतादयः 'गुच्छा' वृन्ताकीप्रभृतयः 'गुल्मानि' नवमालिकाप्रभृतीनि 'लताः' चम्पकलतादयः, इह येषां स्कन्धप्रदेशे विवक्षितोर्ध्वगतैकशाखाव्यतिरेकेणाऽन्यच्छाखान्तरं परिस्थूरं न निर्गच्छति ते लता विज्ञेयास्ते च चम्पकादय इति, 'वल्ल्यः' कूष्माण्डीत्रपुषीप्रभृतयः, 'पर्वगा' इक्ष्वादयः, 'तृणानि' कुशजंजुकाऽर्जुनादीनि

'वलयानि' केतकीकदल्यादीनि तेषां हि त्वचा वलयाकारेण व्यवस्थितेति, 'हरितानि' तण्डुलीयकवास्तुलप्रभृतीनि 'औषध्यः' फलपाकान्ताः ते च शाल्यादयः, जले रुहन्तीति जलरुहाः—उदकावकपनकादयः 'कुहणा' भूमिस्फोटाभिधानाः ते चाप्कायप्रभृतयः ।

से किन्तं रुक्खा ?,२ दुविहा पण्णत्ता, तंजहा—एगट्ठिया य बहुबीयगा य । से किं तं एगट्ठिया ?, २ अणेगविहा पन्नत्ता, तंजहा—'णिंबंबजंबुकोसंबसालअंकुल्ल पीलु सेलू य । सल्लइमोयइमालुय बउल पलासे करंजे य ॥ १२ ॥ पुत्तंजीवयऽरिट्ठे विहेलए हरिडए य भिल्लाए । उंबेभरिया खीरिणि बोद्धव्वे धायइ पियाले ॥ १३ ॥ पूइयनिंबकरञ्जे सुण्हा तह सीसवा य असणे य । पुन्नागनागरुक्खे सीवण्णि तहा असोगे य ॥ १४ ॥ जे यावण्णे तहप्पगारा, एएसि णं मूलावि असंखेज्जजीविया कंदावि खंधावि तयावि सालावि पवालावि पत्ता पत्तेयजीविया पुप्फा अणेगजीविया फला एगट्ठिया, से त्तं एगट्ठिया ।

तत्र 'यथोद्देशं निर्देश' इतिन्यायात् प्रथमतो वृक्षप्रतिपादनार्थमाह—'से किं तमि'त्यादि, अथ के ते वृक्षाः ?, सूरिराह—वृक्षा द्विविधाः प्रज्ञप्ताः, तद्यथा—एकास्थिकाश्च बहुबीजकाश्च, तत्र फलं फलं प्रति एकमस्थि येषां ते एकास्थिकाः, चशब्दो वक्ष्यमाणस्वगतानेकभेदसूचकः, तथा प्रायोऽस्थिबन्धमन्तरेणैवमेव फलान्तर्वर्त्तीनि बहूनि बीजानि येषां ते बहुबीजकाः, 'शेषाद्वे'ति कप्रत्ययः, अत्रापि चशब्दो वक्ष्यमाणस्वगतानेकभेदसूचकः ॥ तत्रैकास्थिकप्रतिपादनार्थमाह—अथ के ते एकास्थिकाः ?, २ अनेकविधाः प्रज्ञप्ताः, तद्यथा—'णिंबंबे'त्यादि गाथात्रयं, तत्र निम्बाम्रजम्बुकोश-

म्बाः प्रतीताः शालः–सर्जः 'अङ्कोल्ल'त्ति अङ्कोठः प्राकृतत्वात्सूत्रे ठकारस्य लादेशः, 'अङ्कोठे ल्ल'इति वचनात्, पीलुः–प्रतीतः शेलुः–श्लेष्मातकः सल्लकी–गजप्रिया मोचकीमालुकौ देशविशेषप्रतीतौ वकुलः—केसरः पलाशः–किंशुकः करञ्जो–नक्तमालः पुत्रजीवको–देशविशेषप्रसिद्धः अरिष्टः–पिचुमन्दः विभीतकः–अक्षः हरीतकः–कोङ्कणदेशप्रसिद्धः कषायबहुलः भल्लातको यस्य भल्लातकाभिधानानि फलानि लोकप्रसिद्धानि उम्बेभरिकाक्षीरणीधातकीप्रियालपूति-(निम्ब) करञ्जश्लक्ष्णाशिंशपाऽशनपुन्नागनागश्रीपर्ण्यशोका लोकप्रतीताः। 'जे यावण्णे तहप्पगारा' इति येऽपि चान्ये तथाप्रकाराः–एवंप्रकारास्तत्तद्देशविशेषभाविनः ते सर्वेऽप्येकास्थिका वेदितव्याः, एतेषाम्–एकास्थिकानां मूलान्यप्यसङ्ख्येयजीवकानि–असङ्ख्येयप्रत्येकशरीरजीवात्मकानि, एवं कन्दा अपि स्कन्धा अपि त्वचोऽपि शाखा अपि प्रवाला अपि प्रत्येकमसङ्ख्येयप्रत्येकशरीरजीवकाः, तत्र मूलानि यानि कन्दस्याधस्ताद् भूमेरन्तः प्रसरन्ति, तेषामुपरि कन्दास्ते च लोकप्रतीताः, स्कन्धाः स्थुडाः, त्वचः–छल्यः शालाः–शाखाः प्रवालाः–पल्लवाङ्कुराः, 'पत्ता पत्तेयजीवय'त्ति पत्राणि प्रत्येकजीविकानि–एकैकं पत्रमे(कै)केन जीवेनाधिष्ठितमिति भावः, 'पुप्फा अणेगजीविय'त्ति पुष्पाण्यनेकजीवानि, प्रायः प्रतिपुष्पपत्रं जीवभावात्, फलान्येकास्थिकानि, उपसंहारमाह–'से त्तं एगट्ठिया' सुगमं ॥ बहुबीजकप्रतिपादनार्थमाह–

१ प्रज्ञापनापदे बादरपृथ्व्येकवन. (सू.२३)

से किं तं वहुवीयगा ?, वहुवीयगा अणेगविहा पं० तं०—अत्थिय तेंदु कविट्ठे अंवाडगमाउलिंग विल्ले या । आमलग फणिस दालिम आसोठे उंवर वडे य ॥१५॥ णग्गोह णंदिरुक्खे पिप्परी सयरी पिलुक्खरुक्खे य । काउंवरि कुत्थुंभरि वोद्धवा देवदाली य ॥१६॥ तिलए लउए छत्तोह सिरीस सत्तवन्न दहिवन्ने । लोद्धद्धवचंदणज्जुणणीमे कुडए कयंवे या ॥१७॥ जे यावन्ने तहप्पगारा, एतेसि णं मूलावि असंखेज्जजीविया कंदावि खंधावि सालावि पत्ता पत्तेयजीविया पुप्फा अणेगजीविया फला वहुवीयगा । से त्तं वहुवीयगा, से त्तं रुक्खा ।

अथ के ते वहुवीजकाः ?, सूरिराह—वहुवीजका अनेकविधाः प्रज्ञप्ताः, तद्यथा—'अत्थिये'त्यादि गाथात्रयं, एते च अस्थिकतिन्दुककपित्थअम्वाडकमातुलिङ्गविल्वामलकपनसदाडिमअश्वत्थउदुम्वरवटन्यग्रोधनन्दिवृक्षपिप्पलीशतरीप्लक्षकादुम्वरिकुस्तुम्भरिदेवदालितिलकलवकच्छत्रोपगशिरीपसप्तपर्णदधिपर्णलोध्र (द्र)धवचन्दनार्जुननीपकुटजकदम्वकानां मध्ये केचिदतिप्रसिद्धाः केचिद्देशविशेपतो वेदितव्याः, नवरमिहामलकादयो न लोकप्रसिद्धाः प्रतिपत्तव्याः, तेपामेकास्थिकत्वात्, किन्तु देशविशेपप्रसिद्धा वहुवीजका एव केचन, 'जे यावन्ने तहप्पगार'त्ति, येऽपि चान्ये तथा-प्रकाराः—एवंप्रकारास्तेऽपि च वहुवीजका मन्तव्याः, एतेपामपि मूलकन्दस्कन्धत्वक्शाखाप्रवालाः प्रत्येकमसङ्ख्येयप्रत्येकशरीरजीवकाः, पत्राणि प्रत्येकजीवकानि, पुष्पाण्यनेकजीवकानि, फलानि वहुवीजकानि, उपसंहारमाह—सेत्तमित्यादि निगमनद्वयं सुगमं ॥ सम्प्रति गुच्छप्रतिपादनार्थमाह—

से किं तं गुच्छा ?, गुच्छा अणेगविहा पन्नत्ता, तं०—वाइंगणिसल्लइथुण्डई य तह कत्थुरी य जीभुमणा। रूवी आढइ णीली तुलसी तह माउलिंगी य ॥१८॥ कच्छुंभरि पिप्पलिया अतसी विल्ली य काइमाईया। वुचू पडोलकंदे विउव्वा वत्थलंदेरे ॥१९॥ पत्तउर सीयउरए हवति तहा जवसए य बोद्धवे। णिग्गुमिअंकतवरि अत्थई चेव तलउदाडा ॥२०॥ सणपाणकासमुद्दग अग्घाडग साम सिंदुवारे य। करमद्दअद्दरूसग करीर एरावणमहित्थे ॥२१॥ जाउलगमीलपरिली गयमारिणि कुव्वकारिया भंडा। जीवइ केयइ तह गंज पाडलादासिअंकोले ॥२२॥ जे यावन्ना तहप्पगारा, सेत्तं गुच्छा। से किं तं गुम्मा ?, गुम्मा अणेगविहा पन्नत्ता, तं०—सेणयए णोमालिय कोरंटय बंधुजीवगमणोज्जे। पिइयं पाणं कणयर कुज्जय तह सिंदुवारे य ॥२३॥ जाई मोग्गर तह जूहिया य तह मल्लिया य वासंती। वत्थुल कत्थुल सेवाल गंठी मगदंतिया चेव ॥२४॥ चंपगजीइ णीइया कुंदो (कन्दो) तहा महाजाई। एवमणेगागारा हवंति गुम्मा मुणेयव्वा, सेत्तं गुम्मा॥ से किं तं लयाओ ?, लयाओ अणेगविहाओ पन्नत्ताओ, तं०—पउमलया णागलया असोग चंपगलया य चूतलता। वणलय वासंतिलया अइमुत्तय कुंदसामलया ॥ २५ ॥ जे यावन्ने तहप्पगारा, से त्तं लयाओ॥ से किं तं वल्लीओ ?, वल्लीओ अणेगविहाओ पन्नत्ताओ, तं०—पूसफली कालिंगी तुंबी तउसी य एलवालुंकी। घोसाडइ पंडोला पंचंगुलि आयणीली या ॥ २६ ॥ कंगूया कंडुइया कक्कोडई कारियल्लई सुभगा। कुयवाय वागली पाव वल्ली तह देवदाली य ॥ २७ ॥ अप्फोया अइमुत्तगणागलया कण्हसूरवल्ली य। संघट्टसुमणसावि य जासुवण कुविंदवल्ली य ॥२८॥ मुद्दिय अंबावल्ली किण्हछीरालि जयंति गोवाली। पाणी मासावल्ली गुंजीवल्ली य विच्छाणी ॥२९॥ ससिवी दुगोत्तफुसिया गिरिकण्णइ मालुया य अंजणई। दहिफोल्लइ कागलि मोगली

य तह अक्कबोंदी या ॥३०॥ जे यावन्ने तहप्पगारा, से त्तं वल्लीओ ॥ से किं तं पव्वगा?, पव्वगा अणेगविहा पन्नत्ता, तं०—इक्खू य इक्खुवाडी वीरुणी तह एक्कडे य मासे य। सुंठे सरे य वेत्ते तिमिरे सतपोरग णले य ॥३१॥ वंसे वेच्छू कणए कंकावंसे य चाववंसे य। उदए कुडए विसए कंडा वेल्ले य कल्लाणे ॥३२॥ जे यावन्ना तहप्पगारा, से त्तं पव्वगा ॥ से किं तं तणा?, तणा अणेगविहा पन्नत्ता, तं—संडिय मंतिय होत्तिय दब्भकुसे पव्वए य पोडइला। अज्जुण असाढए रोहियंसे सुयवेयखीरभुसे॥३३॥एरंडे कुरुविंदे करजर सुंठे तहा विभंगू य। महुरतण छुरय सिप्पिय बोद्धव्वे सुंकलितणे य ॥३४॥ जे यावन्ने तहप्पगारा, से त्तं तणा ॥ से किं तं वलया?, वलया अणेगविहा पन्नत्ता, तं०—ताल तमाले तक्कलि तोयली साली य सारकत्ताणे। सरले जावति केतइ कदली तह धम्मरुक्खे य ॥३५॥ भुयरुक्ख हिंगुरुक्खे लवंगुरुक्खे य होइ बोद्धव्वे। पूयफली खज्जुरी बोद्धव्वा णालिएरी य ॥३६॥ जे यावन्ना तहप्पगारा, से त्तं वलया ॥ से किं तं हरिया?, हरिया अणेगविहा पन्नत्ता, तं०—अज्जोरुह वोडाणे हरितग तह तंदुलेज्जगतणे य। वत्थल पोरग मज्जारयाइ बिल्ली य पालक्का ॥३७॥ दगपिप्पली य दव्वी सोत्तिय साए तहेव मंडुक्की। मूलग सरिसव अंबिल साएय जियंतए चेव ॥३८॥ तुलस कण्ह उराले फणिज्जए अज्जए य भूयणए। वारग दमणग मरुयग सतपुप्फींदीवरे य तहा ॥३९॥ जे यावन्ना तहप्पगारा, से त्तं हरिया ॥ से किं तं ओसहिओ?, ओसहिओ अणेगविहाओ पन्नत्ताओ, तं०—साली वीही गोहुम जव जवजवा कलमसूरतिलमुग्गमासणिप्फावकुलत्थआलिसंदसतीणपलिमंथा अयसीकुसुंभकोद्दव कंगूरालगमासकोदंसा सणसरिसवमूलिगबीया, जे यावन्ना तहप्पगारा, से त्तं ओसहीओ ॥ से किं तं जलरुहा?, जलरुहा अणेगविहा पन्नत्ता, तं०—उदए अवए पणए सेवाले कलंबुया हढे कसेरुया कच्छभाणी उप्पले पउमे कुमुदे णलिणे सुभए सुगंधिए

पोण्डरीयए महापुंडरीयए सयपत्ते सहस्सपत्ते कल्हारे कोकणदे अरविंदे तामरसे भिसे भिसमुणाले पोक्खले पोक्खलत्थिभुए, जे यावन्ना तहप्पगारा, से त्तं जलरुहा॥ से किं तं कुहुणा ?, कुहुणा अणेगविहा पन्नत्ता, तं-आए काए कुहणे कुणके दव्वहलिया सफाए सज्झाए छत्तोए वंसीण हिताकुरए, जे यावन्ना तहप्पगारा, से त्तं कुहुणा ॥ णाणाविह संठाणा रुक्खाणं एगजीविया पत्ता। खंधावि एगजीवा तालसरलणालिएरीणं ॥ ४० ॥ जह सगलसरिसवाणं सिलेसमिस्साण वट्टिया विट्टी। पत्तेयसरीराणं तहेति सरीरसंघाया ॥ ४१ ॥ जह वा तिलपप्पडिया बहुएहिं तिलेहि संहता संती। पत्तेयसरीराणं तह होंति सरीरसंघाया ॥ ४२ ॥ से त्तं पत्तेयसरीरबादरवणप्फइकाइया ॥ सू० २३ ॥

एते गुच्छादिभेदाः प्रायः स्वरूपत एव प्रतीताः, केचिद्देशविशेषादवगन्तव्याः, अत्र वृक्षादिषु यस्यैकस्य नाम गृहीत्वाऽपरत्रापि तन्नाम गृहीतं तत्रान्यो भिन्नजातीयः सदृनामा प्रतिपत्तव्यः, अथवा एकोऽपि कश्चिदनेकजातीयको भवति, यथा—नालिकेरीतरुरेकास्थिकत्वादेकास्थिकः, त्वचो वलयाकारत्वाच्च वलयः, ततोऽनेकजातीयत्वादपि तन्नाम निर्दिश्यमानं न विरुध्यते । साम्प्रतमुक्तानुक्तार्थसंग्रहार्थमिदमाह—'णाणाविहेत्यादि' नानाविधं—नानाप्रकारं संस्थानं—आकृतिर्येषां तानि नानाविधसंस्थानानि, 'वृक्षाणा'मिति वृक्षग्रहणमुपलक्षणं, तेन गुच्छगुल्मादीनामपि द्रष्टव्यं, पत्राणि एकजीवकानि—एकजीवाधिष्ठितानि वेदितव्यानि, स्कन्धोऽपि एकजीवाधिष्ठितः, किं सर्वेषामपि ?, नेत्याह—तालसरलनालिकेरीणां, तालसरलनालिकेरीग्रहणमुपलक्षणं, तेनान्येषामपि यथाऽऽगममेकजीवाधिष्ठितत्वं

स्कन्धस्य प्रतिपत्तव्यं, अन्येषां तु स्कन्धाः प्रत्येकमनेकप्रत्येकशरीरजीवात्मका इति सामर्थ्यादवसेयं, 'खंधावि अणेगजीविया' इति पूर्वमभिधानात् । अथ यदि प्रत्येकमनेकशरीरजीवाधिष्ठितास्ततः कथमेकखण्डशरीराकारा उपलभ्यन्ते इति ?, तदवस्थानस्वरूपमाह—'जह सगले'त्यादि, यथा सकलसर्षपाणां 'श्लेष्ममिश्राणां' श्लेष्मद्रव्यविमिश्रितानां वलिता वर्त्तिरेकरूपा भवति, अथ ते सकलसर्षपाः परिपूर्णशरीराः सन्तः पृथक्स्वस्वावगाहनयाऽवतिष्ठन्ते 'तथा' अनयैवोपमया प्रत्येकशरीराणां जीवानां शरीरसङ्घाताः पृथक्पृथक्स्वस्वावगाहना भवन्ति, इह श्लेषद्रव्यस्थानीयं रागद्वेषोपचितं तथाविधं कर्म सकलसर्षपस्थानीयाः प्रत्येकशरीराः, सकलसर्षपग्रहणं सर्षपवैविक्त्यप्रतिपत्त्या पृथक्स्वस्वावगाहकप्रत्येकशरीरवैविक्त्यप्रतिपत्त्यर्थं । अत्रैव दृष्टान्तान्तरमाह—'जह वे'त्यादि, वाशब्दो दृष्टान्तान्तरसूचने, यथा तिलशष्कुलिका—तिलप्रधाना पिष्टमयी अपूपिका बहुभिस्तिलैर्मिश्रिता सती यथा पृथक् २ स्वस्वावगाहतिलात्मिका भवति कथञ्चिदेकरूपा च 'तथा' अनयैवोपमया प्रत्येकशरीरिणां जीवानां शरीरसङ्घाताः कथञ्चिदेकरूपाः पृथक्स्वस्वावगाहनाश्च भवन्ति । उपसंहारमाह—सेत्तमित्यादि सुगमं ॥ 'से त्त'मित्यादि सुगमं । सम्प्रति साधारणवनस्पतिकायिकप्रतिपादनार्थमाह—

से किं तं साहारणसरीरबादरवणस्सइकाइया ?, साहारणसरीरबादरवणस्सइकाइया अणेगविहा पन्नत्ता, तं०—अवए पणए सेवाले लोहिणी मिहुत्थु हुत्थिभागा(य) । अस्सकन्नि सीहकन्नी सिंउढि तत्तो मुसुंढी य ॥ ४२ ॥ रुरु कुण्डरिया जीरु छीरं

विराली तहेव किट्टीया । हालिद्दा सिंगबेरे य आतूलगा भूलए इय ॥४४॥ कंबूयं कन्नुकड सुमत्तओ वलइ तहेव महुसिंगी । नीरुह सप्पसुयंधा छिन्नरुहा चेव बीयरुहा ॥४५॥ पाढामियवालुंकी महुररसा चेव रायवत्ती य । पउमा माढरि दंतीति चंडी किट्टीत्ति यावरा ॥४६॥ मासपण्णि मुग्गपण्णी जीवियरसहे य रेणुया चेव । काओली खीरकाओली तहा भंगी नही इय ॥४७॥ किमिरासि भद्द मुच्छा णंगलई पेलुगा इय । किण्ह पउले य हढे हरतणुया चेव लोयाणी ॥४८॥ कण्हे कंदे वज्जे सूरणकंदे तहेव खल्लूरे । एए अणंतजीवा जे यावन्ने तहाविहा ॥४९॥ तणमूल कंदमूले, वंसीमूलेत्ति आवरे । संखिज्जमसंखिज्जा, बोद्धव्वाणंतजीवा य ॥ ५० ॥ सिंघाडगस्स गुच्छो अणेगजीवो उ होइ नायव्वो । पत्ता पत्तेयजीया दोन्नि य जीवा फले भणिया ॥५१॥जस्स मूलस्स भग्गस्स, समो भंगो पदीसइ । अणंतजीवे उ से मूले, जे यावन्ने तहाविहा ॥५२॥ जस्स कंदस्स भग्गस्स, समो भंगो पदीसइ । अणंतजीवे उ से कंदे, जे यावन्ने तहाविहा ॥५३॥ जस्स खंधस्स भग्गस्स, समो भंगो पदीसइ । अणंतजीवे उ से खंधे, जे यावन्ने तहाविहा ॥५४॥ जीसे तयाए भग्गाए, समो भंगो पदीसए । अणंतजीवा तया सा उ, जे यावन्ने तहाविहा ॥५५॥ जस्स सालस्स भग्गस्स, समो भंगो पदीसए । अणंतजीवे य से साले, जे यावन्ने तहाविहा ॥५६॥ जस्स पवालस्स भग्गस्स, समो भंगो पदीसए । अणंतजीवे पवाले से, जे यावन्ने तहाविहा ॥५७॥ जस्स पत्तस्स भग्गस्स, समो भंगो पदीसए । अणंतजीवे उ से पत्ते, जे यावन्ने तहाविहा ॥५८॥ जस्स पुप्फस्स भग्गस्स, समो भंगो पदीसए । अणंतजीवे उ से पुप्फे, जे यावन्ने तहाविहा ॥ ५९ ॥ जस्स फलस्स भग्गस्स, समो भंगो पदीसए । अणंतजीवे फले से उ, जे यावन्ने तहाविहा ॥ ६० ॥ जस्स बीयस्स भग्गस्स, समो भंगो पदीसए । अणंतजीवे उ से बीए, जे यावन्ने तहाविहा ॥ ६१ ॥

जस्स मूलस्स भग्गस्स, हीरो भंगो(गे) पदीसए। परित्तजीवे उ से मूले, जे यावन्ने तहाविहा ॥६२॥ जस्स कंदस्स भग्गस्स, हीरो भंगो पदीसए। परित्तजीवे उ से कंदे, जे यावन्ने तहाविहा ॥६३॥ जस्स खंधस्स भग्गस्स, हीरो भंगो पदीसए। परित्त-जीवे उ से खंधे, जे यावन्ने तहाविहा ॥६४॥ जीसे तयाए भग्गाए, हीरो भंगो पदीसए। परित्तजीवा तया सा उ, जे यावन्ने तहाविहा ॥६५॥ जस्स सालस्स भग्गस्स, हीरो भंगो पदीसए। परित्तजीवे उ से साले, जे यावन्ने तहाविहा ॥६६॥ जस्स पवालस्स भग्गस्स, हीरो भंगो पदीसए। परित्तजीवे पवाले उ, जे यावन्ने तहाविहा ॥६७॥ जस्स पत्तस्स भग्गस्स, हीरो भंगो पदीसए। परित्तजीवे उ से पत्ते, जे यावन्ने तहाविहा ॥६८॥ जस्स पुप्फस्स भग्गस्स, हीरो भंगो पदीसए। परित्तजीवे उ से पुप्फे, जे यावन्ने तहाविहा ॥६९॥ जस्स फलस्स भग्गस्स, हीरो भंगो पदीसए। परित्तजीवे फले से उ, जे यावन्ने तहाविहा ॥७०॥ जस्स बीयस्स भग्गस्स, हीरो भंगो पदीसए। परित्तजीवे उ से बीए, जे यावन्ने तहाविहा ॥७१॥ जस्स मूलस्स कट्ठाओ, छल्ली बहुलतरी भवे। अणंतजीवा उ सा छल्ली, जे यावन्ने, तहाविहा ॥७२॥ जस्स कंदस्स कट्ठाओ, छल्ली बहल-तरी भवे। अणंतजीवा उ सा छल्ली, जे यावन्ने तहाविहा ॥७३॥ जस्स खंधस्स कट्ठाओ, छल्ली बहलतरी भवे। अणंतजीवा उ सा छल्ली, जे यावन्ना तहाविहा ॥७४॥ जीसे सालाए कट्ठाओ, छल्ली बहलतरी भवे। अणंतजीवा उ सा छल्ली, जे यावन्ना तहाविहा ॥७५॥ जस्स मूलस्स कट्ठाओ, छल्ली तणुययरी भवे। परित्तजीवा उ सा छल्ली, जे यावन्ना तहाविहा ॥७६॥ जस्स कंदस्स कट्ठाओ, छल्ली तणुययरी भवे। परित्तजीवा उ सा छल्ली, जे यावन्ना तहाविहा ॥७७॥ जस्स खंधस्स कट्ठाओ, छल्ली

तणुययरी भवे । परित्तजीवा उ सा छल्ली, जे यावन्ना तहाविहा ॥७८॥ जीसे सालाए कट्ठाओ, छल्ली तणुययरी भवे। परित्तजीवा उ सा छल्ली, जे यावन्ना तहाविहा ॥ ७९ ॥ ( सू० २४ )

'से किं त'मित्यादि, अथ के ते साधारणशरीरबादरवनस्पतिकायिकाः?, सूरिराह—साधारणशरीरबादरवनस्पतिकायिका अनेकविधाः प्रज्ञप्ताः, तद्यथा—'अवए'इत्यादि, एते च केचिदतिप्रसिद्धत्वात्केचिद्देशविशेषतः स्वयमवगन्तव्याः। 'जे यावन्ने तहाविहा' इति, येऽपि चान्ये—उक्तव्यतिरिक्तास्तथाप्रकारा उक्तप्रकारास्तेऽपि अनन्तजीवा ज्ञातव्याः। 'तणे'त्यादि, तृणमूलं कन्दमूलं यच्चापरं वंशीमूलं, एतेषां मध्ये क्वचिज्जातिभेदतो देशभेदतो वा सङ्ख्याता जीवाः क्वचिदसङ्ख्याता अनन्ताश्च ज्ञातव्याः। 'सिंघाडगस्से'त्यादि, शृङ्गाटकस्य यो गुच्छः सोऽनेकजीवो भवति ज्ञातव्यः, त्वक्शाखादीनामनेकजीवात्मकत्वात्, केवलं तत्रापि यानि पत्राणि तानि प्रत्येकजीवानि, फले पुनः प्रत्येकमेकैकस्मिन् द्वौ द्वौ जीवौ भणितौ। 'जस्स मूलस्से'त्यादि, यस्य मूलस्य भग्नस्य सतः—समः—एकान्तसदृशरूपः चक्राकारो भङ्गः प्रकर्षेण दृश्यते तन्मूलमनन्तजीवमवसेयं। 'जे यावन्ने तहाविहा' इति, यान्यपि चान्यानि अभग्नानि तथाप्रकाराणि अधिकृतमूलभग्नसमप्रकाराणि तान्यप्यनन्तजीवानि ज्ञातव्यानि। एवं कन्दस्कन्धत्वक्शाखाप्रवालपत्रपुष्पफलबीजविषया अपि नव गाथा व्याख्येयाः ॥ सम्प्रति प्रत्येकशरीरलक्षणाभिधानार्थं गाथादशकमाह—

१ प्रज्ञापनापदे साधारणवन. (सू. २४)

'जस्से'त्यादि, यस्य मूलस्य भग्नस्य सतो भङ्गे–भङ्गप्रदेशे तु हीरो–विषमच्छेदमुद्दन्तुरं वा प्रदृश्यते–प्रकर्षेण स्पष्ट-
रूपतया लक्ष्यते ततो मूलं 'परित्तजीवं' प्रत्येकशरीरजीवात्मकं ज्ञातव्यं, 'जे यावन्ने तहाविहा' इति, यान्यपि
चान्यानि भग्नानि तथाप्रकाराणि अधिकृतसहीरभग्नमूलसदृशानि मूलानि तान्यपि प्रत्येकशरीरजीवात्मकानि मन्त-
व्यानि । एवं कन्दादिविषया अपि नव गाथा भावनीयाः, यत्र कुत्रापि लिङ्गव्यत्ययः स प्राकृतलक्षणादवसेयः ।
अधुना मूलादिगतानां वल्कलरूपाणामनन्तजीवत्वपरिज्ञानार्थं लक्षणमाह–यस्य मूलस्य काष्ठात्–मध्यसारात् छल्ली–
वल्कलरूपा बहुलतरा भवति सा अनन्तजीवा ज्ञातव्या, 'जे यावन्ना तहाविह'त्ति याऽपि चान्या अधिकृतया अनन्तजी-
वत्वेन निश्चितया छल्या समानरूपा छल्ली सापि तथाविधा–अनन्तजीवात्मिका ज्ञातव्या, एवं कन्दस्कन्धशाखाविषया
अपि तिस्रो गाथाः परिभावनीयाः, अधुना तासामेव छल्लीनां प्रत्येकजीवत्वपरिज्ञानाय लक्षणमाह–'जस्स मूलस्से'-
त्यादि गाथाचतुष्टयं, यस्य मूलस्य काष्ठात्–मध्यसारात् छल्ली–वल्कलरूपा तनुतरा भवति सा 'परित्तजीवा' प्रत्येक-
शरीरजीवात्मिका द्रष्टव्या, 'जे यावन्ना तहाविहा' इति यापि चान्या अधिकृतया प्रत्येकशरीरजीवात्मकत्वेन नि-
श्चितया छल्या समानरूपा छल्ली सापि तथाविधा–प्रत्येकशरीरजीवात्मिका अवगन्तव्या, एवं कन्दादिविषया अपि
तिस्रो गाथा भावनीयाः ॥ यदुक्तम्—'जस्स मूलस्स भग्गस्स समो भङ्गो पदीसइ' इत्यादि, तदेव लक्षणं स्पष्टं प्रति-
पिपादयिषुरिदमाह—

चक्कागं भज्जमाणस्स, गंठी चुन्नघणो भवे । पुढविसरिसेण भेएण, अणंतजीवं वियाणाहि ॥८०॥ गूढसिरागं पत्तं सच्छीरं जं च होइ निच्छीरं । जंपिय पणट्ठसन्धि अणंतजीवं वियाणाहि ॥८१॥ पुप्फा जलया थलया य विंटबद्धा य नालबद्धा य । संखिज्जमसंखिज्जा बोद्धव्वाऽणंतजीवा य ॥८२॥ जे केइ नालियाबद्धा पुप्फा संखिज्जजीविया भणिया । निहुया अणंतजीवा जे यावन्ने तहाविहा ॥८३॥ पउमुप्पलिणीकंदे अंतरकंदे तहेव झिल्ली य । एए अणंतजीवा एगो जीवो भिसमुणाले ॥८४॥ पलंडूल्हसुणकंदे य, कंदली य कुसुंबए । एए परित्तजीवा, जे यावन्ने तहाविहा ॥८५॥ पउमुप्पलनलिणाणं, सुभगसोगंधियाण य । अरविंदकुंकणाणं, सयवत्तसहस्सपत्ताणं ॥८६॥ विंटं बाहिरपत्ता य, कन्निया चेव एगजीवस्स । अब्भितरगा पत्ता पत्तेयं केसरा मिंजा ॥८७॥ वेणुनल इक्खुवाडिय समासइक्खू य इक्कडे रंडे । करकर मुंठि विहंगू तणाण तह पव्वगाणं च ॥८८॥ अच्छि पव्वं बलिमोडओ य एगस्स होंति जीवस्स । पत्तेयं पत्ताइं पुप्फाइं अणेगजीवाइं ॥८९॥ पूसफलं कालिंगं तुंबं तउसेल एलवालुंकं । घोसाडय पंडोलं तिंदूयं चेव तेंदूसं ॥९०॥ विंटसमं सकडाहं एयाइं हवंति एगजीवस्स । पत्तेयं पत्ताइं सकेसरं केसरं मिंजा ॥ ९१ ॥ सप्फाए सज्झाए उव्वेहलिया य कुहणकंदुक्के । एए अणंतजीवा कंदुक्के होइ भयणा उ ॥९२॥ (सू० २५)

'चक्काग'मित्यादि, चक्कं—चक्राकारं एकान्तेन समं भङ्गस्थानं यस्य भज्यमानस्य मूलकन्दस्कन्धत्वक्शाखापत्रपुष्पादेर्भवति तन्मूलादिकमनन्तजीवं विजानीहि इति सम्बन्धः, तथा 'गंठी चुन्नघणो भवे' इति ग्रन्थिः पर्व सामान्यतो भङ्गस्थानं वा स यस्य भज्यमानस्य चूर्णेन—रजसा घनो—व्याप्तो भवति ॥ अथवा यस्य पत्रादेर्भज्यमानस्य

१ प्रज्ञापनापदे अनन्तप्रत्येकलक्षणं. (सू. २५)

चक्राकारं भङ्गं ग्रन्थिस्थाने रजसा व्याप्तिं च विना पृथिवीसदृशेन भेदेन भङ्गस्थानं भवति, सूर्यकरनिकरप्रतप्तकेदारतरिकाप्रतरखण्डस्येव समो भङ्गो भवतीतिभावः तमनन्तकायं विजानीहि ॥ ८० ॥ पुनरपि लक्षणान्तरमाह–यत्पत्रं सक्षीरं निःक्षीरं वा गूढशिराकं–अलक्ष्यमाणशिराविशेषं यदपि च प्रनष्टसन्धि–सर्वथाऽनुपलक्ष्यमाणपत्रार्द्धद्वयसन्धि तदनन्तजीवं विजानीहि ॥ ८१ ॥ सम्प्रति पुष्पादिगतं विशेषमभिधित्सुराह–पुष्पाणि चतुर्विधानि, तद्यथा–जलजानि–सहस्रपत्रादीनि स्थलजानि–कोरण्टकादीनि, एतान्यपि च प्रत्येकं द्विधा, तद्यथा–कानिचिद्वृन्तबद्धानि अतिमुक्तकप्रभृतीनि कानिचिन्नालबद्धानि जातिपुष्पप्रभृतीनि, अत्र एतेषां मध्ये कानिचित्पत्रादिगतजीवापेक्षया सङ्ख्येयजीवानि कानिचिदसङ्ख्येयजीवानि कानिचिदनन्तजीवानि यथाऽऽगमं बोद्धव्यानि ॥ ८२ ॥ अत्रैव कश्चिद्विशेषमाह–यानि कानिचित् नालिकाबद्धानि पुष्पाणि जात्यादिगतानि तानि सर्वाण्यपि सङ्ख्यातजीवकानि भणितानि तीर्थकरगणधरैः, स्निहुः–स्निहूपुष्पं ( थोहरपुष्पं ) पुनरनन्तजीवं, यान्यपि चान्यानि स्निहूपुष्पकल्पानि तान्यपि तथाविधानि–अनन्तजीवात्मकानि ज्ञातव्यानि ॥ ८३ ॥ पद्मिनीकन्दः–उत्पलिनीकन्दः, अन्तरकन्दो–जलजवनस्पतिविशेषकन्दः, झिल्लिका–वनस्पतिविशेषरूपा, एते सर्वेऽप्यनन्तजीवाः, नवरं पद्मिन्यादीनां विसे ( नाले ) मृणाले च किमिति ? ( एको जीवः ) एकजीवात्मके विसमृणाले इति भावः ॥८४॥ पलण्डुकन्दो लसुनकन्दः कन्दलीकन्दको वनस्पतिविशेषः, कुस्तुम्बकोऽप्येवमेव, एते सर्वेऽपि 'परित्तजीवा' प्रत्येकशरीरजीवात्मकाः प्रतिपत्तव्याः, येऽपि चान्ये

एवंप्रकारा अनन्तजीवात्मकलक्षणविरहितास्तेऽपि तथाविधाः—प्रत्येकशरीरजीवात्मका वेदितव्याः ॥ ८५ ॥ पद्मानाम्
उत्पलानां नलिनानां सुभगानां सौगन्धिकानां अरविन्दानां कोकनदाना शतपत्राणां सहस्रपत्राणां प्रत्येकं यत् वृन्तं—
प्रसववन्धनं यानि च वाह्यपत्राणि प्रायो हरितरूपाणि या च कर्णिका—पत्राधारभूता एतानि त्रीण्यपि एकजीवा-
त्मकानि, यानि पुनरभ्यन्तराणि पत्राणि यानि च केसराणि याश्च मिञ्जाः—फलानि एतानि प्रत्येकमेकैकजीवाधिष्ठि-
तानि ॥ ८६—८७ ॥ वेणुः—वंशो नडः—तृणविशेषः इक्षुवाटिकादयो लोकतः प्रत्येतव्याः, तृणानि दूर्वादीनि यानि च
पर्वगानि—पर्वोपेतानि एतेषां यदक्षि यच्च पर्व यच्च 'वलिमोडउ'त्ति पर्वपरिवेष्टनं चक्राकारं, एतानि एकजीवस्य सम्ब-
न्धीनि भवन्ति, एकजीवात्मकानि भवन्तीति भावः, पत्राणि एतेषां प्रत्येकमेकजीवाधिष्ठितानि पुष्पाण्यनेकजीवात्म-
कानि ॥ ८८—८९ ॥ पुष्पफलं एवं कालिङ्गं तुम्बं त्रपुषं 'एलवालु'त्ति चिर्भटविशेषरूपं, वालुकं—चिर्भटं, तथा
घोषातकं पटोलं तेन्दुकं तिन्दुसं च यत्फलं, एतेषु प्रत्येकं वृन्तसमं 'सकडाहं' ति समांसं सगिरं तथा कटाह एतानि
त्रीण्येकस्य जीवस्य भवन्ति, एकजीवात्मकान्येतानि त्रीणि भवन्तीत्यर्थः । तथा एतेषामेव पुष्पफलादीनां तिन्दुकप-
र्यन्तानां पत्राणि पृथक् 'प्रत्येक' मिति प्रत्येकशरीराधिष्ठितानि, एकैकजीवाधिष्ठितानीत्यर्थः । तथा सकेसरा अके-
सरा वा मिञ्जा—वीजानि प्रत्येकमेकैकजीवाधिष्ठितानि ॥९०—९१॥ एते कुहनादिवनस्पतिविशेषा लोकतः प्रत्येतव्याः,
एते चानन्तजीवात्मकाः, नवरं कंदुके भजना, स हि कोऽपि देशविशेषादनन्तः—अनन्तजीवात्मको भवति, कोऽप्य-

सङ्ख्येयजीवात्मक इति ॥ ९२ ॥ आह—किं बीजजीव एव मूलादिजीवो भवति उतान्यस्तस्मिन्नपक्रान्ते उत्पद्यते इति परप्रश्नमाशङ्क्याह—

बीए जोणिब्भूए जीवो वक्कमइ सो व अन्नो वा । जोऽविय मूले जीवो सोऽविय पत्ते पढमयाए ॥९३॥ सव्वोऽवि किसलओ खलु उग्गममाणो अणंतओ भणिओ । सो चेव विवड्ढंतो होइ परित्तो अणंतो वा ॥ ९४ ॥

बीजे योनिभूते—योन्यवस्थां प्राप्ते, योनिपरिणाममजहतीति भावः, बीजस्य हि द्विविधाऽवस्था, तद्यथा—योन्यवस्था अयोन्यवस्था च, तत्र यदा बीजं योन्यवस्थां न जहाति अथ च उज्झितं जन्तुना तदा तत् योनिभूतमित्यभिधीयते, उज्झितं च जन्तुना निश्चयतो नावगन्तुं शक्यते ततोऽनतिशायिना सम्प्रति सचेतनमचेतनं वा अविध्वस्तयोनि योनिभूतमिति व्यवह्रियते, विध्वस्तयोनि तु नियमादचेतनत्वादयोनिभूतमिति, अथ योनिरिति किमभिधीयते ?, उच्यते, जन्तोरुत्पत्तिस्थानं अविध्वस्तशक्तिकं—तत्रस्थजीवपरिणमनशक्तिसम्पन्नमिति भावः, तस्मिन् बीजे योनिभूते जीवो 'व्युत्क्रामति' उत्पद्यते 'स एव' पूर्वको बीजजीवः अन्यो वा आगत्य तत्रोत्पद्यते, किमुक्तं भवति ?—यदा बीजजीवनिर्वर्त्तकेन जीवेन स्वायुषः क्षयात् बीजपरित्यागः कृतो भवति, तस्य च बीजस्य पुनरम्बुकालावनिसंयोगरूपसामग्रीसंभवस्तदा कदाचित्स एव प्राक्तनो बीजजीवो मूलादिनामगोत्रे उपनिबध्य बीजे उत्पद्यते—तत्रागत्य परिणमति, कदाचिदन्यः पृथिवीकायिकादिजीवः, 'योऽपि च मूले जीव इति' य एव मूलतया परि-

णमते जीवः सोऽपि च पत्रे प्रथमतयेति–स एव प्रथमपत्रतयाऽपि परिणमते इत्येकजीवकर्तृके मूलप्रथमपत्रे इति, आह–यद्येवं 'सव्वोऽवि किसलओ खलु उग्गममाणो अणंतओ भणिओ' इत्यादि वक्ष्यमाणं कथं न विरुध्यते ?, उच्यते, इह बीजजीवोऽन्यो वा बीजमूलत्वेनोत्पद्य तदुत्सूनावस्थां करोति, ततस्तदनन्तरभाविनीं किसलयावस्थां नियमतोऽनन्ता जीवाः कुर्वन्ति, पुनश्च तेषु स्थितिक्षयात्परिणतेषु असावेव मूलजीवोऽनन्तजीवतनुं स्वशरीरतया परिणमय्य तावद्वर्द्धते यावत्प्रथमपत्रमिति न विरोधः, अन्ये तु व्याचक्षते–प्रथमपत्रमिह याऽसौ बीजस्य समुच्छूनावस्था, तेन एकजीवकर्तृके मूलप्रथमपत्रे इति, किमुक्तं भवति ?–मूलसमुच्छूनावस्थे एकजीवकर्तृके, एतच्च नियमप्रदर्शनार्थमुक्तं–मूलसमुच्छूनावस्थे एकजीवपरिणामिते एव, शेषं तु किसलयादि नावश्यं मूलजीवपरिणामाविर्भावितमिति, ततः 'सव्वोऽवि किसलओ खलु उग्गममाणो अणंतओ भणिओ' इत्याद्यपि वक्ष्यमाणमविरुद्धं, मूलसमुच्छूनावस्थानिर्वर्त्तनारम्भकाले किसलयत्वाभावादिति, आह–प्रत्येकशरीरवनस्पतिकायिकानां सर्वकालं शरीरावस्थामधिकृत्य किं प्रत्येकशरीरत्वमुत कस्मिंश्चिदवस्थाविशेषे अनन्तजीवत्वमपि सम्भवति ?, तथा साधारणवनस्पतिकायिकानामपि किं सर्वकालमनन्तजीवत्वमुत कदाचित् प्रत्येकशरीरत्वमपि भवति ?, तत आह—'सव्वोऽवी'त्यादि, इह सर्वशब्दोऽपरिशेषवाची, सर्वोऽपि वनस्पतिकायः प्रत्येकशरीरः साधारणो वा किसलयावस्थामुपगतः सन् अनन्तकायस्तीर्थकरगणधरैर्भणितः, स एव किसलयरूपोऽनन्तकायिकः प्रवृद्धिं गच्छन् अनन्तो वा भवति परीत्तो वा, कथम् ?,

१ प्रज्ञापनापदे वीजाद्यपत्रकिशलयस्वरूपं (सू. २५)

उच्यते, यदि साधारणं शरीरं निर्वर्त्यते तदा साधारण एव भवति, अथ प्रत्येकशरीरं ततः प्रत्येक इति, कियतः कालादूर्ध्वं प्रत्येको भवति इति चेत्, उच्यते, अन्तर्मुहूर्त्तात्, तथाहि—निगोदानामुत्कर्षतोऽप्यन्तर्मुहूर्त्तं कालं यावत्स्थितिरुक्ता ततोऽन्तर्मुहूर्त्तात्परतो विवर्द्धमानः प्रत्येको भवतीति ॥ ९३–९४ ॥ सम्प्रति साधारणलक्षणमाह—

समयं वक्कंताणं समयं तेसिं सरीरनिवत्ती । समयं आणुग्गहणं समयं ऊसासनीसासो ॥ ९५ ॥ इक्कस्स उ जं गहणं बहूण साहारणाण तं चेव । जं बहुयाणं गहणं समासओ तंपि इक्कस्स ॥ ९६ ॥ साहारणमाहारो साहारणमाणुपाणगहणं च । साहारणजीवाणं साहारणलक्खणं एयं ॥ ९७ ॥ जह अयगोलो धंतो जाओ तत्ततवणिज्जसंकासो । सव्वो अगणिपरिणओ निगोयजीवे तहा जाण ॥ ९८ ॥ एगस्स दोण्ह तिण्ह व संखिज्जाण व न पासिउं सक्का । दीसंति सरीराइं निगोयजीवाणऽणंताणं ॥ ९९ ॥ लोगागासपएसे निगोयजीवं ठवेहि इक्किक्कं । एवं मविज्जमाणा हवंति लोगा अणंता उ ॥ १०० ॥ लोगागासपएसे परित्तजीवं ठवेहि इक्किक्कं । एवं मविज्जमाणा हवंति लोगा असंखिज्जा ॥ १०१ ॥ पत्तेया पज्जत्ता पयरस्स असंखभागमित्ता उ । लोगाऽसंखा पज्जत्तयाण साहारणमणंता ॥ १०२ ॥ एएहिं सरीरेहिं पच्चक्खं ते परूविया जीवा । सुहुमा आणागिज्झा चक्खुप्फासं न ते इति (१ प्र०) जे यावन्ने तहप्पगारा, ते समासओ दुविहा पन्नत्ता, तं०—पज्जत्तगा य अपज्जत्तगा य, तत्थ णं जे ते अपज्जत्तगा ते णं असंपत्ता, तत्थ णं जे ते पज्जत्तगा तेसिणं वन्नाएसेणं गंधाएसेणं रसाएसेणं फासाएसेणं सहस्सग्गसो विहाणाइं, संखिज्जाइं जोणिप्पमुहसयसहस्साइं, पज्जत्तगनीसाए अपज्जत्तगा वक्कमंति, जत्थ एगो

तत्थ सिय संखिज्जा सिय असंखिज्जा सिय अणंता ॥ एएसिणं इमाओ गाहाओ अणुगंतव्वाओ, तंजहा–कंदा य कंदमूला य, रुक्खमूला इयावरे । गुच्छा य गुम्मवल्ली य, वेणुयाणि तणाणि य ॥ १०३ ॥ पउमुप्पल संघाडे हढे य सेवाल किन्नए पणए । अवए य कच्छभाणी कंदुकेगूणवीसइमे ॥ १०४ ॥ तय छल्लि पवालेसु य पत्तपुप्फफलेसु य । मूलग्गमज्झवीएसु, जोणी कस्सवि कित्तिया ॥ १०५ ॥ से त्तं साहारणसरीरबायरवणस्सइकाइया, [ से त्तं साहरणसरीरवणस्सइकाइया ] से त्तं बायरवणस्सइकाइया, से त्तं वणस्सइकाइया, से त्तं एगिंदिया ॥ ( सू० २६ )

'समयं' युगपद् व्युत्क्रान्तानां–उत्पन्नानां सतां 'तेषां' साधारणजीवानां समकम्–एककालं शरीरनिर्वृत्तिर्भवति, समकं च प्राणापानग्रहणं–प्राणापानयोग्यपुद्गलोपादानम् ततः समकम्–एककालं तदुत्तरकालभाविनावुच्छ्वासनिःश्वासौ ॥९५॥ तथा एकस्य यत् आहारादिपुद्गलानां ग्रहणं तदेव बहूनामपि साधारणजीवानामवसेयं, किमुक्तं भवति ?–यत् आहारादिकमेको गृह्णाति शेषा अपि तच्छरीराश्रिता बहवोऽपि तदेव गृह्णन्तीति, तथा च यद्बहूनां ग्रहणं तत्संक्षेपादेकत्र शरीरे समावेशात् एकस्यापि ग्रहणम् ॥ ९६ ॥ सम्प्रत्युक्तार्थोपसंहारमाह–सर्वेषामप्येकशरीराश्रितानां जीवानामुक्तप्रकारेण यत् साधारणं साधारणः, सूत्रे नपुंसकतानिर्देशः आर्षत्वात्, आहारः आहारयोग्यपुद्गलोपादानम् यच्च साधारणं प्राणापानयोग्यपुद्गलोपादानं उपलक्षणमेतत् यौ साधारणावुच्छ्वासनिःश्वासौ या च साधारणा शरीरनिर्वृत्तिः एतत्साधारणजीवानां लक्षणम् ॥ ९७ ॥ सम्प्रति यथैकस्मिन् निगोदशरीरे अनन्ता जीवाः परिणताः

प्रतीतिपथमवतरन्ति तथा प्रतिपादयन्नाह—यथा अयोगोलो ध्मातः सन् तप्ततपनीयसंकाशः सर्वोऽग्निपरिणतो भवति तथा निगोदजीवान् जानीहि, निगोदरूपेऽप्येकैकस्मिन् शरीरे तच्छरीरात्मकतया अनन्तान् जीवान् परिणतान् जानीहि ॥९८॥ एवं च सति—एकस्य द्वयोस्त्रयाणां यावत्संख्येयानां वाशब्दादसंख्येयानां वा निगोदजीवानां शरीराणि द्रष्टुं न शक्यानि, कुत इति चेत् ?, उच्यते—अभावात्, न हि एकादिजीवगृहीतानि अनन्तवनस्पतिशरीराणि सन्ति, अनन्तजीवपिण्डात्मकत्वात्तेषाम्, कथं तर्हि उपलभ्यानि ?, इत्यत आह—'दीसंती' त्यादि, दृश्यन्ते शरीराणि निगोदजीवानां—बादरनिगोदजीवानां अनन्तानां न तु सूक्ष्मनिगोदजीवानां, तेषां शरीराणामनन्तजीवसङ्घातात्मकत्वेऽप्यनुपलभ्यस्वभावत्वात्, तथासूक्ष्मपरिणामपरिणतत्वात्, अथ कथमेतदवसीयते—निगोदरूपशरीरं नियमादनन्तजीवपरिणामाविर्भावितं भवति ?, उच्यते—जिनवचनात्, तच्चेदम् 'गोला य असंखेज्जा होंति निगोया असंखया गोले । एक्केको य निगोओ अणंतजीवो मुणेयव्वो ॥ १ ॥' ॥ ९९ ॥ सम्प्रति एतेषामेव निगोदजीवानां प्रमाणमभिधित्सुराह—एकैकस्मिन् लोकाकाशप्रदेशे एकैकं निगोदजीवं स्थापय, एवमेकैकस्मिन् आकाशप्रदेशे एकैकजीवरचनया मीयमानाः 'अनन्तलोका' अनन्तलोकाकाशप्रमाणा निगोदजीवा भवन्ति ॥ १०० ॥ सम्प्रति प्रत्येकवनस्पतिजीवप्रमाणमाह—एकैकस्मिन् लोकाकाशप्रदेशे एकैकं प्रत्येकवनस्पतिजीवं स्थापय, एवमुक्तप्रकारेण मीयमानाः प्रत्ये-

१ गोलाश्चासंख्येया भवन्ति निगोदा असंख्येया गोलके । एकैकश्च निगोदोऽनन्तजीवो ज्ञातव्यः ॥ १ ॥

कृतरुजीवा असङ्ख्येयलोकाकाशप्रदेशप्रमाणा भवन्ति ॥ १०१ ॥ सम्प्रति पर्याप्तापर्याप्तभेदेन प्रत्येकसाधारणवनस्पतिजीवानां प्रमाणमाह—पर्याप्ताः प्रत्येकवनस्पतिजीवाः घनीकृतस्य सम्बन्धिनः प्रतरस्य असङ्ख्येयतमे भागे यावन्त आकाशप्रदेशास्तावत्प्रमाणा भवन्ति, अपर्याप्तानां पुनः प्रत्येकतरुजीवानामसङ्ख्येया लोकाः परिमाणं, पर्याप्तानां अपर्याप्तानां च साधारणजीवानां अनन्तलोकाः, किमुक्तं भवति ?—असङ्ख्येयलोकाकाशप्रदेशप्रमाणा अपर्याप्ताः प्रत्येकतरवः, अनन्तलोकाकाशप्रदेशप्रमाणाः पर्याप्ता अपर्याप्ताश्च साधारणजीवा इति ॥ १०२ ॥ 'जे यावन्ने तहप्पगारा' इति, येऽपि चान्ये—अनुक्तरूपास्तथाप्रकाराः—प्रत्येकतरुरूपा साधारणरूपाश्च, तेऽपि वनस्पतिकायत्वेन प्रतिपत्तव्याः, 'ते समासओ' इत्यादि प्राग्वत्, नवरं यत्रैको बादरपर्याप्तस्तत्र तन्निश्रया अपर्याप्ताः कदाचित् सङ्ख्येयाः, कदाचिदसङ्ख्येया कदाचिदनन्ताः, प्रत्येकतरवः सङ्ख्येया असङ्ख्येया वा, साधारणास्तु नियमादनन्ता इति भावः ॥ 'एतेषां' साधारणप्रत्येकतरुरूपाणां वनस्पतिविशेषाणां वक्ष्यमाणानामिमाः—विशेषप्रतिपादिका वक्ष्यमाणा गाथा अनुगन्तव्याः—प्रतिपत्तव्याः, ता एवाह—'तंजहा' तद्यथा—'कंदा ये'त्यादि गाथात्रयं 'कन्दाः' सूरणकन्दादयः कन्दमूलानि वृक्षमूलानि च साधारणवनस्पतिविशेषाः 'गुञ्छा' गुल्मा, वल्लयश्च प्रतीताः 'वेणुका' वंशास्तृणानि—अर्जुनादीनि ॥ १०३ ॥ पद्मोत्पलशृङ्गाटकानि प्रतीतानि 'हढो' जलजवनस्पतिविशेषः सेवालः—प्रसिद्धः कृष्णकपनकावककच्छभाणिकन्दुकाः—साधारणवनस्पतिविशेषाः ॥ १०४ ॥ एतेषामेकोनविंशतिसङ्ख्यानां त्वगादिषु मध्ये

कस्यापि कापि योनिः, किमुक्तं भवति ?—कस्यापि त्वक् योनिः कस्यापि छल्ली यावत्कस्यापि मूलं कस्याप्यग्रं कस्यापि मध्यं कस्यापि बीजमिति ॥ १०५ ॥ 'सेत्त' मित्यादि निगमनचतुष्टयं सुगमं ॥ तदेवमुक्ता एकेन्द्रियाः, सम्प्रति द्वीन्द्रियप्रतिपादनार्थमाह—

से किं तं बेइंदिया ?, बेइंदिया अणेगविहा पन्नत्ता, तंजहा—पुलाकिमिया कुच्छिकिमिया गंडूयलगा गोलोमा णेउरा सोमंगलगा वंसीमुहा सूइमुहा गोजलोया जलोया जालाउया संखा संखणगा घुल्ला खुल्ला गुलया खंधा वराडा सोत्तिया मुत्तिया कलुयावासा एगओवत्ता दुहओवत्ता नंदियावत्ता संबुका माइवाहा सिप्पिसंपुडा चंदणा समुद्दलिक्खा, जे यावन्ने तहप्पगारा, सव्वे ते संमुच्छिमा नपुंसगा, ते समासओ दुविहा पन्नत्ता, तंजहा—पज्जत्तगा य अपज्जत्तगा य, एएसिणं एवमाइयाणं बेइंदियाणं पज्जत्तापज्जत्ताणं सत्त जाइकुलकोडिजोणीपमुहसयसहस्सा भवंतीति मक्खायं । से त्तं बेइंदियसंसारसमावन्नजीवपन्नवणा । (सू० २७)

अथ के ते द्वीन्द्रियाः ?, सूरिराह—द्वीन्द्रिया अनेकविधाः प्रज्ञप्ताः, तद्यथा—"पुलाकिमिया' इत्यादि, पुलाकिमिया नाम पायुप्रदेशोत्पन्नाः कृमयः कुक्षिकृमयः—कुक्षिप्रदेशोत्पन्नाः शङ्खाः—समुद्रोद्भवाः प्रतीताः शङ्खनकाः त एव लघवः घुल्लाः—घुल्लिकाः खुल्ला—लघवः शङ्खाः—सामुद्रशङ्खाकाराः वराटाः—कपर्दकाः 'सिप्पिसंपुड'त्ति संपुटरूपाः शुक्तयः चन्दनका—अक्षाः, शेषास्तु यथासम्प्रदायं वाच्याः, 'जे यावन्ने तहप्पगारा' इति येऽपिचान्ये

तथाप्रकारा—एवंप्रकारा मृतककडेवरसम्भूतकृम्यादयस्ते सर्वे द्वीन्द्रिया ज्ञातव्याः, ते संमुर्छिमत्वादेव च नपुंसकाः, संमुर्छिमानामवश्यं नपुंसकत्वात् 'नारकसंमुर्छिमा नपुंसका' (० नि नपुंसकानि तत्त्वा—अ—२—५० ) इतिवचनात्, 'ते समासओ' इत्यादि, ते द्वीन्द्रियाः समासतः—संक्षेपेण द्विविधाः प्रज्ञप्ताः, तद्यथा—पर्याप्तकाश्च अपर्याप्तकाश्च, चशब्दौ योनिकुलभेदेन स्वगतानेकभेदसूचकौ, एतेषां द्वीन्द्रियाणामेवमादीनां पुलाकृम्यादीनां द्वीन्द्रियाणां पर्याप्तापर्याप्तादीनां सर्वसङ्ख्यया सर्वजातिकुलकोटीनां योनिप्रमुखाणि—योनिप्रवहाणि योनिशतसहस्राणि भवन्ति, सप्त जातिकुलकोटिलक्षा भवन्तीति भावः, इत्याख्यातं तीर्थकृद्भिः, मकारोऽलाक्षणिकः, इयमत्र भावना—इह जातिकुलयोनीनां परिज्ञानार्थमिदं परिस्थूरमुदाहरणं पूर्वाचार्यैरुपदर्शितम्, तद्यथा—जातिरिति किल तिर्यग्गतिः तस्याः कुलानि—कृमिकीटवृश्चिकादीनि, इमानि च कुलानि योनिप्रमुखाणि, तथाहि—एकस्यामेव योनौ अनेकानि कुलानि भवन्ति, यथा छगणयोनौ कृमिकुलं कीटकुलं वृश्चिककुलमित्यादि, अथवा जातिकुलमित्येकं पदम्, जातिकुलयोन्योश्च परस्परं विशेषः, एकस्यामपि योनौ अनेकजातिकुलसम्भवात्, यथा एकस्यामेव योनौ कृमिजातिकुलं कीटकजातिकुलं वृश्चिकजातिकुलमित्यादि, एवं च एकस्यामेव योनाववान्तरजातिभेदभावादनेकानि योनिप्रवहाणि जातिकुलानि सम्भवन्तीत्युपपद्यन्ते, द्वीन्द्रियाणां सप्त जातिकुलकोटीनां शतसहस्राणाम्, उपसंहारमाह—'सेत्त' मित्यादि, सैषा द्वीन्द्रियसंसारसमापन्नजीवप्रज्ञापना ॥ सम्प्रति त्रीन्द्रियसंसारसमापन्नजीवप्रज्ञापनार्थमाह—

१ प्रज्ञापनापदे द्वीन्द्रियप्रज्ञाप. (सू. २७)

से किं तं तेइंदियसंसारसमावन्नजीवपन्नवणा ?, तेइंदियसंसारसमावन्नजीवपन्नवणा अणेगविहा पन्नत्ता, तं–ओवइया रोहिणिया कुंथू पिपीलिया उद्दंसगा उद्देहिया उक्कलिया उप्पाया उप्पडा तणहारा कट्ठहारा मालुया पत्ताहारा तणवेंटिया पत्तवेंटिया पुप्फवेंटिया फलवेंटिया बीयवेंटिया तेबुरणमिंजिया तओसिमिंजिया कप्पासट्ठिमिंजिया हिल्लिया झिल्लिया झिंगिरा किंगिरिडा बाहुया लहुया सुभगा सोवत्थिया सुयवेंटा इंदकाइया इंदगोवया तुरुतुंवगा कुच्छलवाहगा जूया हालाहला पिसुया सयवाइया गोम्ही हत्थिसोंडा, जे यावन्ने तहप्पगारा, सव्वे ते संमुच्छिमा नपुंसगा, ते समासओ दुविहा पन्नत्ता, तं०–पज्जत्तगा य अपज्जत्तगा य, एएसिणं एवमाइयाणं तेइंदियाणं पज्जत्तापज्जत्ताणं अट्ठ जाइकुलकोडिजोणिप्पमुहसयसहस्सा भवंतीतिमक्खायं, सेत्तं तेइंदियसंसारसमावन्नजीवपन्नवणा । ( सू० २८ )

'अथ का सा त्रीन्द्रियसंसारसमापन्नजीवप्रज्ञापना ?, भगवानाह–त्रीन्द्रियसंसारसमापन्नजीवप्रज्ञापना अनेकविधा प्रज्ञप्ता, तामेव तद्यथेत्यादिनोपदर्शयति, एते च औपयिकप्रभृतयस्त्रीन्द्रिया देशविशेषतो लोकतश्चावगन्तव्याः, नवरं गोम्ही–कर्णसियालिया 'जे यावन्ने तहप्पगारा' येऽपि चान्ये तथाप्रकारास्ते सर्वे त्रीन्द्रिया ज्ञातव्या इति शेषः, सव्वे 'ते संमुच्छिमानपुंसका' इत्यादि पूर्ववत्, 'एतेसिण'मित्यादि, एतेषां–त्रीन्द्रियाणामेवमादिकानाम्–औपयिकप्रभृतीनां पर्याप्तापर्याप्तानां सर्वसङ्ख्यया अष्टौ जातिकुलकोटीनां योनिप्रमुखाणि–योनिप्रवाहाणि शतसहस्राणि भवन्ति, अष्टौ कुलकोटिलक्षा भवन्तीति भावः, इत्याख्यातं तीर्थकृद्भिः, उपसंहारमाह–'सेत्त'मित्यादि ॥ तदेवमुक्ता त्रीन्द्रिय-

संसारसमापन्नजीवप्रज्ञापना, सम्प्रति चतुरिन्द्रियसंसारसमापन्नजीवप्रज्ञापनामाह—

से किं तं चउरिंदियसंसारसमावन्नजीवपन्नवणा ?, २ अणेगविहा पं०, तं०—अंधिय पत्तिय मच्छिय मसगा कीडे तहा पयंगे य। ढंकुण कुक्कड कुक्कुह नंदावत्ते य सिंगिरडे ॥१०६॥ किण्हपत्ता नीलपत्ता लोहियपत्ता हालिद्दपत्ता सुक्किल्लपत्ता चित्तपक्खा विचित्तपक्खा ओहंजलिया जलचारिया गंभीरा णीणिया तंतवा अच्छिरोडा अच्छिवेहा सारंगा नेउरा दोला भमरा भरिली जरुला तोट्टा विंछुया पत्तविच्छुया छाणविच्छुया जलविच्छुया पियंगाला कणगा गोमयकीडा, जे यावन्ने तहप्पगारा, सव्वे ते संमुच्छिमा नपुंसगा, ते समासओ दुविहा पन्नत्ता, तं०—पज्जत्तगा य अपज्जत्तगा य, एएसिणं एवमाइयाणं चउरिंदियाणं पज्जत्तापज्जत्ताणं नव जाइकुलकोडिजोणिप्पमुहसयसहस्साइं भवंतीतिमक्खायं, से त्तं चउरिंदियसंसारसमावन्नजीवपन्नवणा ॥ ( सू० २९ )

एतेऽपि चतुरिन्द्रिया लोकतः प्रत्येतव्याः, एतेषां च पर्याप्तापर्याप्तानां सर्वसङ्ख्यया जातिकुलकोटीनां नव लक्षा भवन्ति, शेषा अक्षरगमनिका प्राग्वत्, उपसंहारमाह—'सेत्त' मित्यादि ॥ उक्ता चतुरिन्द्रियसंसारसमापन्नजीवप्रज्ञापना, सम्प्रति पञ्चेन्द्रियसंसारसमापन्नजीवप्रज्ञापनामाह—

से किं तं पंचेंदियसंसारसमावन्नजीवपन्नवणा ?, २ चउविहा पं०, तं०—नेरइयपंचिंदियसंसारसमावन्नजीवपन्नवणा, तिरिक्खजोणियपंचिंदियसंसारसमावन्नजीवपन्नवणा मणुस्सपंचिंदियसंसारसमावन्नजीवपन्नवणा देवपंचिंदियसंसारसमावन्नजीवपन्नवणा ( सू० ३० )

१ प्रज्ञापनापदे त्रीन्द्रियचतुरिन्द्रियपु. ( सू. २८-२९ )

अथ का सा पञ्चेन्द्रियसंसारसमापन्नजीवप्रज्ञापना ?, सूरिराह—पञ्चेन्द्रियसंसारसमापन्नजीवप्रज्ञापना चतुर्विधा प्रज्ञप्ता, तद्यथा—'नैरयिके' त्यादि, अयस्—इष्टफलं कर्म निर्गतमयं येभ्यस्ते निरया—नरकावासास्तेषु भवा नैरयिकास्ते च ते पञ्चेन्द्रियसंसारसमापन्नजीवाश्च नैरयिकपञ्चेन्द्रियसंसारसमापन्नजीवास्तेषां प्रज्ञापना, तथा 'अञ्च् गतौ' तिरोऽञ्चन्तीति तिर्यञ्चः, 'तिरसस्तिर्यतीति' तिरसस्तिर्यादेशः, तेषां योनिः—उत्पत्तिस्थानं तिर्यग्योनिस्तत्र भवास्तैर्यग्योनिकास्ते च ते पञ्चेन्द्रियसंसारसमापन्नजीवाश्च तेषां प्रज्ञापना तैर्यग्योनिकपञ्चेन्द्रियसंसारसमापन्नजीवप्रज्ञापना, तथा मनुशब्दो मनुष्यवाची यथा राजशब्दो राजन्याभिधायकः, मनोरपत्यानि मनुष्याः, 'मनोर्यञ्णौ यश्चेति' यः प्रत्ययः पकारश्चागमः, अयं च यः प्रत्ययो जाताविति मनुष्यशब्दो जातिवाची राजन्यशब्दवत्, ते च ते पञ्चेन्द्रियसंसारसमापन्नजीवाश्च तेषां प्रज्ञापना मनुष्यपञ्चेन्द्रियसंसारसमापन्नजीवप्रज्ञापना, तथा दीव्यन्ति—स्वेच्छया क्रीडन्तीति देवाः भवनपत्यादयः ते च ते पञ्चेन्द्रियसंसारसमापन्नजीवाश्च तेषां प्रज्ञापना देवपञ्चेन्द्रियसंसारसमापन्नजीवप्रज्ञापना ॥ तत्र नैरयिकप्रतिपादनार्थं प्रश्ननिर्वचनसूत्रे आह—

से किं तं नेरइया ?, नेरइया सत्तविहा पन्नत्ता, तं०—रयणप्पभापुढविनेरइया १ सक्करप्पभापुढविनेरइया २ वालुयप्पभापुढविनेरइया ३ पंकप्पभापुढविनेरइया ४ धूमप्पभापुढविनेरइया ५ तमप्पभापुढविनेरइया ६ तमतमप्पभापुढविनेरइया ७, ते समासओ दुविहा पन्नत्ता, तं०—पज्जत्तगा य अपज्जत्तगा य, से त्तं नेरइया ॥ (सू० ३१)

सप्तविधत्वं नैरयिकाणां पृथिवीभेदेन अन्यथा प्रभूतभेदत्वमपि घटते, ततः पृथिवीभेदत एव सप्तविधत्वं तद्यथेत्यादिनोपदर्शयति–रत्नानि–वज्रवैडूर्यादीनि, प्रभाशब्दोऽत्र सर्वत्रापि स्वभाववाची रत्नानि प्रभा–स्वरूपं यस्याः सा रत्नप्रभा–रत्नबहुला रत्नमयीति भावार्थः, सा चासौ पृथिवी च २ तस्यां नैरयिका रत्नप्रभापृथिवीनैरयिकाः, एवं 'सक्करप्पहापुढविनेरइया' इत्यादि भावनीयम्, उपसंहारमाह–'सेत्तं नेरइया' ॥ अधुनोद्देशक्रमप्रामाण्यानुसरणतस्तिर्यक्पञ्चेन्द्रियान् प्रतिपिपादयिषुराह—

से किं तं पंचिंदियतिरिक्खजोणिया ?, पंचिंदियतिरिक्खजोणिया तिविहा पन्नत्ता, तं०–१ जलयरपंचिंदियतिरिक्खजोणिया य १ थलयरपंचिंदियतिरिक्खजोणिया य २ खहयरपंचिंदियतिरिक्खजोणिया य ३ । (सू० ३२)

अथ के ते पञ्चेन्द्रियतिर्यग्योनिकाः ?, सूरिराह–पञ्चेन्द्रियतिर्यग्योनिकास्त्रिविधाः प्रज्ञप्ताः, तद्यथेत्यादि, 'जलयरे–' त्यादि, जले चरन्ति–पर्यटन्तीति जलचराः, 'आधारादिति' टप्रत्ययः, ते च ते पञ्चेन्द्रियतिर्यग्योनिकाश्च जलचरपञ्चेन्द्रियतिर्यग्योनिकाः, स्थले चरन्तीति स्थलचराः, खे–आकाशे चरन्तीति खचराः, प्राकृतत्वादार्षत्वाच्च 'खहचरा' इति सूत्रे पाठः, तत उभयत्रापि पञ्चेन्द्रियतिर्यग्योनिकशब्देन सह विशेषणसमासः ।

से किं तं जलयरपंचिंदियतिरिक्खजोणिया ?, जलयरपंचिंदियतिरिक्खजोणिया पंचविहा पन्नत्ता, तं०—१ मच्छा २ कच्छभा ३ गाहा ४ मगरा ५ सुसुमारा ॥ से किं तं मच्छा ?, मच्छा अणेगविहा पन्नत्ता, तं०—सण्हमच्छा खवल्लमच्छा

जुंगमच्छा विज्झडियमच्छा हलिमच्छा मगरिमच्छा रोहियमच्छा हलीसागरा गागरा वडा वडगरा गब्भया उसगारा तिमितिमिंगिला णक्का तंदुलमच्छा कणिकामच्छा सालिसत्थियामच्छा लंभणमच्छा पडागा पडागाइपडागा जे यावन्ने तहप्पगारा, सेत्तं मच्छा ॥ से किं तं कच्छभा ?, कच्छभा दुविहा पन्नत्ता, तं०—अट्ठिकच्छभा य मंसकच्छभा य, से त्तं कच्छभा ॥ से किं तं गाहा ?, गाहा पंचविहा पन्नत्ता, तं०—१ दिली २ वेढगा ३ मुद्धया ४ पुलया ५ सीमागारा, से त्तं गाहा ॥ से किं तं मगरा ?, मगरा दुविहा पन्नत्ता, तं—१ सोंडमगरा य २ मट्ठमगरा य, से त्तं मगरा ॥ से किं तं सुसुमारा ?, सुसुमारा एगागारा पन्नत्ता, से त्तं सुसुमारा । जे यावन्ने तहप्पगारा । ते समासओ दुविहा प० तं०—संमुच्छिमा य गब्भवक्कंतिया य, तत्थ णं जे ते संमुच्छिमा ते सव्वे नपुंसगा, तत्थ णं जे ते गब्भवक्कंतिया ते तिविहा प०, तं०—इत्थी पुरिसा नपुंसगा । एएसिणं एवमाइयाणं जलयरपंचिंदियतिरिक्खजोणियाणं पज्जत्तापज्जत्ताणं अद्धतेरसजाइकुलकोडिजोणिप्पमुहसयसहस्सा भवन्तीति मक्खायं । सेत्तं जलयरपंचिंदियतिरिक्खजोणिया ॥ (सू० ३३)

अथ के ते जलचरपञ्चेन्द्रियतिर्यग्योनिकाः ?, सूरिराह—जलचरपञ्चेन्द्रियतिर्यग्योनिकाः पञ्चविधाः प्रज्ञप्ताः, तदेव पञ्चविधत्वं तद्यथेत्यादिनोपदर्शयति १ मत्स्याः २ कच्छपाः, सूत्रे पकारस्य भकारः प्राकृतत्वात् ३ ग्राहा ४ मकराः ५ शिशुमाराः, प्राकृतत्वात्सूत्रे 'सुसुमारा' इति पाठः । मत्स्यादीनां च विशेषा लोकतो वेदितव्याः, नवरमस्थिकच्छपा मांसकच्छपा इति—ये अस्थिबहुलाः कच्छपास्ते अस्थिकच्छपाः ये मांसबहुलास्ते मांसकच्छपाः ।

'ते समासओ' इत्यादि, ते जलचरपञ्चेन्द्रियतैर्यग्योनिकाः समासतः—संक्षेपेण द्विविधाः प्रज्ञप्ताः, तद्यथा—संमूर्च्छिमाश्च गर्भव्युत्क्रान्तिकाश्च, "मूर्च्छा मोहसमुच्छ्राययोः" अस्मात् संपूर्वात् संमूर्च्छनं संमूर्च्छः, "अकर्तरि" इति भावे घञ्प्रत्ययः, गर्भोपपातव्यतिरेकेण एवमेव प्राणिनामुत्पाद इति भावः, तेन निर्वृत्ताः संमूर्च्छिमाः "भावादिम" इति इमप्रत्ययः। गर्भे व्युत्क्रान्तिः—उत्पत्तिर्येषां ते, व्युत्क्रान्तिशब्दोऽत्रोत्पत्तिवाची, तथा पूर्वाचार्यप्रसिद्धेः, यदिवा 'गर्भात्' गर्भावासाद् व्युत्क्रान्तिः—निष्क्रमणं येषां ते गर्भव्युत्क्रान्तिकाः "शेषाद् वा" इति कच्समासान्तः। चशब्दौ प्रत्येकं स्वगतानेकभेदसूचकौ। तत्र ये ते संमूर्च्छिमास्ते सर्वे नपुंसकाः, संमूर्च्छिमभावस्य नपुंसकत्वाविनाभावित्वात्। ये तु गर्भव्युत्क्रान्तिकास्ते त्रिविधाः प्रज्ञप्ताः, तद्यथा—स्त्रियः पुरुषा नपुंसकाः। एतेषां चोभयेषामपि शरीरावगाहनादिषु द्वारेषु यच्चिन्तनं यच्च गर्भव्युत्क्रान्तिकानां स्त्रीपुंसनपुंसकानां परस्परमल्पबहुत्वचिन्तनं तज्जीवाभिगमटीकायां कृतमिति ततोऽवधार्यम्। 'एएसिणं' इत्यादि, एतेषामेवमादिकानामुपदर्शितप्रकारादीनां जलचरपञ्चेन्द्रियतैर्यग्योनिकानां पर्याप्तापर्याप्तानां सर्वसंख्ययाऽर्धत्रयोदशजातिकुलकोटीनां योनिप्रमुखानि—योनिप्रवहाणि शतसहस्राणि भवन्तीत्याख्यातं भगवद्भिस्तीर्थकरैः। उपसंहारमाह—'सेत्तं' इत्यादि, तदेवमुक्ता जलचरपञ्चेन्द्रियतैर्यग्योनिकाः॥ सम्प्रति स्थलचरपञ्चेन्द्रियतैर्यग्योनिकानभिधित्सुराह—

से किं तं थलयरपंचिंदियतिरिक्खजोणिया ?, थलयरपंचिंदियतिरिक्खजोणिया दुविहा प०, तं०—चउप्पयथलयरपंचि-

दियतिरिक्खजोणिया य परिसप्पथलयरपंचिंदियतिरिक्खजोणिया य। से किं तं चउप्पयथलयरपंचिंदियतिरिक्खजोणिया ?, चउप्पयथलयरपंचिंदियतिरिक्खजोणिया चउव्विहा प०, तं०–एगखुरा विखुरा गंडीपदा सणप्फदा। से किं तं एगखुरा ?, एगखुरा अणेगविहा प०, तं०—अस्सा अस्सतरा घोडगा गद्दभा गोरक्खरा कंदलगा सिरिकंदलगा आवत्तगा जे यावन्ने तहप्पगारा, सेत्तं एगखुरा। से किं तं दुखुरा ?, दुखुरा अणेगविहा प०, तं०–उट्टा गोणा गवया रोज्झा पसुया महिसा मिया संवरा वराहा अया एलगरुरुसरभचमरकुरंगगोकन्नमादि जे यावन्ने तहप्पगारा, सेत्तं दुखुरा। से किं तं गंडीपया ?, गंडीपया अणेगविहा पं०, तं०–हत्थी हत्थीपूयणया मंकुणहत्थी खगा (ग्गा) गंडा जे यावन्ने०, सेत्तं गंडीपया। से किं तं सणप्फया ?, अणेगविहा पं०, तं०–सीहा वग्घा दीविया अच्छा मरच्छा परस्सरा सियाला विडाला सुणगा कोलसुणगा (ग्रं–५००) कोकंतिया ससगा चित्तगा चिल्लगा जे यावन्ने०; सेत्तं सणप्फया। ते समासओ दुविहा पं०, तं०–संमुच्छिमा य गब्भवक्कन्तिया य, तत्थ णं जे ते संमुच्छिमा ते सव्वे नपुंसगा, तत्थ णं जे ते गब्भवक्कंतिया ते तिविहा पं०, तं०—इत्थी पुरिसगा नपुंसगा। एएसिणं एवमाइयाणं थलयरपंचिंदियतिरिक्खजोणियाणं पज्जत्तापज्जताणं दस जाइकुलकोडि-जोणिप्पमुहसयसहस्सा भवन्तीतिमक्खायं। सेत्तं चउप्पयथलयरपंचिंदियतिरिक्खजोणिया। ( सू० ३४ )

चत्वारि पदानि येषां ते चतुष्पदाः–अश्वादयः ते च ते स्थलचरपञ्चेन्द्रियतैर्यग्योनिकाश्च चतुष्पदस्थलचरपञ्चेन्द्रिय-तैर्यग्योनिकाः, उरसा भुजाभ्यां वा परिसर्प्पन्तीति परिसर्प्पाः–अहिनकुलादयः, ततः पूर्ववत् स्थलचरपञ्चेन्द्रियतै-

र्यग्योनिकपदेन सह विशेषणसमासः, चशब्दौ प्रत्येकं स्वगतानेकभेदसूचकौ, तदेवानेकभेदत्वं क्रमेण प्रतिपिपादयिपुरिदमाह—'से किं तं' इत्यादि, अथ के ते चतुष्पदस्थलचरपञ्चेन्द्रियतैर्यग्योनिकाः ?, सूरिराह—चतुष्पदस्थलचरपञ्चेन्द्रियतैर्यग्योनिकाश्चतुर्विधाः प्रज्ञप्ताः, तद्यथा—'एगखुरा' इत्यादि, तत्र प्रतिपदमेकः खुरः—शफो येषां ते एकखुराः—अश्वादयः, द्वौ द्वौ खुरौ प्रतिपदं येषां ते द्विखुराः—उष्ट्रादयः, तथा चैकैकस्मिन् पदे द्वौ द्वौ शफौ दृश्येते, गण्डीव—सुवर्णकाराधिकरणीस्थानमिव पदं येषां ते गण्डीपदाः—हस्त्यादयः, तथा सनखानि—दीर्घनखपरिकलितानि पदानि येषां ते सनखपदाः—श्वादयः, प्राकृतत्वाच्च सणप्फया इति सूत्रे निर्देशः । अधुना एतानेव एकखुरादीन् भेदतः क्रमेण प्रतिपिपादयिपुरिदमाह—'से किं तं' इत्यादि, सुगमम्, नवरं ये केचिज्जीवभेदाः प्रतीतास्ते लोकतो वेदितव्याः । 'ते समासओ दुविहा पन्नत्ता' इत्यादि सूत्रं प्राग्वद् भावनीयम्, नवरमत्र जातिकुलकोटीनां योनिप्रमुखानि शतसहस्राणि दश भवन्तीति वेदितव्यम् । अत्रापि च संमूर्च्छिमानां गर्भव्युत्क्रान्तिकानां च प्रत्येकं यत् शरीरादिद्वारेषु चिन्तनं यच्च स्त्रीपुंनपुंसकानां परस्परमल्पबहुत्वं तज्जीवाभिगमटीकातो वेदितव्यम्, 'सेत्तं चउप्पया' इत्यादि ॥

से किं तं परिसप्पथलयरपंचिंदियतिरिक्खजोणिया ?, परिसप्पथलयरपंचिंदियतिरिक्खजोणिया दुविहा पं०, तं०—उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणिया य भुयपरिसप्पथलयरपंचिंदियतिरिक्खजोणिया य । से किं तं उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणिया ?, उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणिया चउव्विहा पं०, तं०—अही अयगरा आसालिया

महोरगा ॥ से किं तं अही ?, अही दुविहा पं०, तं०—दव्वीकरा य मउलिणो य, से किं तं दव्वीकरा ?, दव्वीकरा अणेगविहा पं०, तं०—आसीविसा दिट्ठीविसा उग्गविसा भोगविसा तयाविसा लालाविसा उस्सासविसा नीसासविसा कण्हसप्पा सेदसप्पा काओदरा दज्झपुप्फा कोलाहा मेलिमिंदा सेसिंदा जे यावन्ने तहप्पगारा, सेत्तं दव्वीकरा। से किं तं मउलिणो ?, मउलिणो अणेगविहा पं०, तं०—दिव्वागा गोणसा कसाहीया वइउला चित्तलिणो मंडलिणो मालिणो अही अहिसलागा वासपडागा जे यावन्ने तहप्पगारा, सेत्तं मउलिणो, सेत्तं अही। से किं तं अयगरा ?, अयगरा एगागारा प०, सेत्तं अयगरा। से किं तं आसालिया ?, कहि णं भंते! आसालिया संमुच्छति ?, गोयमा! अंतो मणुस्सखित्ते अड्ढाइज्जेसु दीवेसु निव्वाघाएणं पन्नरससु कम्मभूमिसु वाघायं पडुच्च पंचसु महाविदेहेसु चक्कवट्टिखंधावारेसु वासुदेवखंधावारेसु बलदेवखंधावारेसु मंडलियखंधावारेसु महामंडलियखंधावारेसु गामनिवेसेसु णगरनिवेसेसु णिगमनिवेसेसु खेडनिवेसेसु कब्बडनिवेसेसु मडंवनिवेसेसु दोणमुहनिवेसेसु पट्टणनिवेसेसु आगरनिवेसेसु आसमनिवेसेसु संवाहनिवेसेसु रायहाणीनिवेसेसु एएसिणं चेव विणासेसु एत्थ णं आसालिया संमुच्छति। जहन्नेणं अंगुलस्स असंखेज्जइभागमित्ताए ओगाहणाए उक्कोसेणं बारसजोयणाइं तयणुरूवं च णं विक्खंभबाहल्लेणं भूमीं दालित्ता णं समुट्ठेइ, असन्नी मिच्छदिट्ठी अण्णाणी अंतोमुहुत्तऽद्धाउया चेव कालं करेइ, सेत्तं आसालिया। से किं तं महोरगा ?, महोरगा अणेगविहा पं०, तं०—अत्थेगइआ अंगुलंपि अंगुलपुहुत्तियावि वियत्थिंपि वियत्थिपुहुत्तियावि रयणिंपि रयणिपुहुत्तियावि कुच्छिंपि कुच्छिपुहुत्तियावि धणुंपि धणुपुहुत्तयावि गाउयंपि गाउयपुहुत्तयावि जोयणंपि जोयणपुहुत्तयावि जोयणसयंपि जोयणसयपुहुत्तयावि जोयणसहस्संपि, ते णं थले जाता जलेऽवि

चरंति थलेऽवि चरन्ति, ते णत्थि इहं, बाहिरएसु दीवेसु समुद्दएसु हवन्ति, जे यावन्ने तहप्पगारा, सेत्तं महोरगा । ते समासओ दुविहा पं० तं०—संमुच्छिमा य गब्भवक्कंतिया य, तत्थ णं जे ते संमुच्छिमा ते सवे नपुंसगा, तत्थ णं जे ते गब्भवक्कंतिया ते णं तिविहा पं०, तं०—इत्थी पुरिसगा नपुंसगा । एएसिणं एवमाइयाणं पज्जत्तापज्जत्ताणं उरपरिसप्पाणं दस जाइकुलकोडिजोणिप्पमुहसयसहस्सा भवन्तीतिमक्खायं, सेत्तं उरपरिसप्पा । से किं तं भुयपरिसप्पा ?, भुयपरिसप्पा अणेगविहा प० तं०—नउला सेहा सरडा सल्ला सरंठा सारा खोरा घरोइला विस्संभरा मूसा मंगुसा पयलाइया छीरविरालिया जहा चउप्पाइया, जे यावन्ने तहप्पगारा, ते समासओ दुविहा प० तं०—संमुच्छिमा य गब्भवक्कंतिया य, तत्थ णं जे ते संमुच्छिमा ते सवे नपुंसगा, तत्थ णं जे ते गब्भवक्कंतिया ते णं तिविहा पं० तं०—इत्थी पुरिसा नपुंसगा । एएसिणं एवमाइयाणं पज्जत्तापज्जत्ताणं भुयपरिसप्पाणं नव जाइकुलकोडिजोणिपमुहसयसहस्सा भवन्तीति मक्खायं, सेत्तं भुयपरिसप्पथलयरपंचिंदियतिरिक्खजोणिया, सेत्तं परिसप्पथलयरपंचिदियतिरिक्खजोणिया । ( सू० ३५ )

१ प्रज्ञापनापदे परिसर्पपञ्चन्द्रि. (सू.३५)

अथ के ते परिसर्प्पस्थलचरपञ्चेन्द्रियतैर्यग्योनिकाः ?, सूरिराह—परिसर्पस्थलचरपञ्चेन्द्रियतैर्यग्योनिका द्विविधाः—द्विप्रकाराः प्रज्ञप्ताः, तद्यथा—'उरपरिसप्प' इत्यादि, उरसा परिसर्पन्तीति उरःपरिसर्पाः ते च ते स्थलचरपञ्चेन्द्रियतैर्यग्योनिकाः उरःपरिसर्पस्थलचरपञ्चेन्द्रियतैर्यग्योनिकाः, भुजाभ्यां परिसर्पन्तीति भुजपरिसर्पाः ते च ते स्थलचरपञ्चेन्द्रियतैर्यग्योनिकाश्च भुजपरिसर्पस्थलचरपञ्चेन्द्रियतिर्यग्योनिकाः,चशब्दौ प्रत्येकं स्वगतानेकभेदसूचकौ, तत्रोरःपरिसर्पस्थल-

चरपञ्चेन्द्रियतैर्यग्योनिकभेदानुपदिदर्शयिषुरिदमाह—'से किं तं उरपरिसप्प' इत्यादि, अथ के ते उरःपरिसर्पस्थलचरपञ्चेन्द्रियतैर्यग्योनिकाः?, सूरिराह—उरःपरिसर्पस्थलचरपञ्चेन्द्रियतैर्यग्योनिकाश्चतुर्विधाः प्रज्ञप्ताः, तद्यथा—अहयोऽजगरा आसालिगा महोरगाः ॥ एतेषामेव भेदानामवगमाय प्रश्ननिर्वचनसूत्राण्याह—'से किं तं' इत्यादि, अथ के तेऽहयः ?, गुरुराह—अहयो द्विविधाः प्रज्ञप्ताः, तद्यथा—दर्वीकराश्च मुकुलिनश्च, तत्र दर्वीव दर्वी—फणा तत्करणशीला दर्वीकराः, मुकुलं—फणाविरहयोग्या शरीरावयवविशेषाकृतिः सा विद्यते येषां ते मुकुलिनः, फणाकरणशक्तिविकला इत्यर्थः, अत्रापि चशब्दौ स्वगतानेकभेदसूचकौ । तत्र दर्वीकरभेदानभिधित्सुराह—'से किं तं' इत्यादि, आश्यो—दंष्ट्राः तासु विषं येषां ते आशीविषाः, उक्तं च—"आसी दाढा तग्गयविसा य आसीविसा मुणेयव्वा" इति, दृष्टौ विषं येषां ते दृष्टिविषाः उग्रं विषं येषां ते उग्रविषाः भोगः—शरीरं तत्र विषं येषां ते भोगविषाः त्वचि विषं येषां ते त्वग्विषाः प्राकृतत्वाच्च 'तयाविसा' इति पाठः लाला—मुखात् स्रावः तत्र विषं येषां ते लालाविषाः निःश्वासे विषं येषां ते निःश्वासविषाः कृष्णसर्पादयो जातिभेदा लोकतः प्रतिपत्तव्याः, उपसंहारमाह—'सेत्तं दव्वीकरा'। मुकुलिनः प्रतिपिपादयिषुरिदमाह—'से किं तं' इत्यादि, एतेऽपि लोकतोऽवसेयाः। अजगराणामवान्तरजातिभेदा न विद्यन्ते तत उक्तम्—एकाकारा अजगराः प्रज्ञप्ताः। आसालिगामभिधित्सुराह—'से किं तं आसालिया' अथ का सा आसालिगा ?, एवं शिष्येण प्रश्ने कृते सति भगवान् आर्यश्यामो यदेव ग्रन्थान्तरेषु आसालिगाप्रतिपादकं गौ-

तमप्रश्नभगवन्निर्वचनरूपं सूत्रमस्ति तदेवागमबहुमानतः पठति—'कहि णं भंते!' इत्यादि, क्व 'णं' इति वाक्यालङ्कारे भदन्त!—परमकल्याणयोगिन्! आसालिगा संमूर्च्छंति ?, एषा हि गर्भजा न भवति किन्तु संमूर्च्छिमैव तत उक्तं संमूर्च्छंति, भगवानाह—'गोयमा' इत्यादि, गौतम! अन्तः—मध्ये मनुष्यक्षेत्रे—मनुष्यक्षेत्रस्य न बहिः, एतावता मनुष्यक्षेत्राद् बहिरस्या उत्पादो न भवतीति प्रतिपादितं, तत्रापि मनुष्यक्षेत्रे सर्वत्र न भवति किन्त्वर्द्धतृतीयेषु द्वीपेषु अर्द्धं तृतीयं येषां तेऽर्द्धतृतीयाः, अवयवेन विग्रहः, समुदायः समासार्थः, तेषु, एतावता लवणसमुद्रे कालोदसमुद्रे वा न भवतीत्यावेदितमित्यर्थः 'निव्वाघाएणं' इत्यादि, निर्व्याघातेन—व्याघातस्याभावो निर्व्याघातं तेन यदि पञ्चसु भरतेषु पञ्चसु ऐरवतेषु सुषमसुषमादिरूपो दुष्षमदुष्षमादिरूपश्च कालो व्याघातहेतुत्वाद् व्याघातो न भवति तदा पञ्चदशसु कर्मभूमिषु संमूर्च्छंति, व्याघातं प्रतीत्य, किमुक्तं भवति ?—यदि पञ्चसु भरतेषु पञ्चस्वैरवतेषु यथोक्तरूपो व्याघातो भवति ततः पञ्चसु महाविदेहेषु संमूर्च्छंति, एतावता त्रिंशत्यप्यकर्मभूमिषु नोपजायते इति प्रतिपादितम्, पञ्चदशसु कर्मभूमिषु पञ्चसु वा महाविदेहेषु न सर्वत्र संमूर्च्छंति, किन्तु चक्रवर्तिस्कन्धावारेषु, वाशब्दः सर्वत्रापि विकल्पार्थो द्रष्टव्यः, बलदेवस्कन्धावारेषु वासुदेवस्कन्धावारेषु, माण्डलिकः—सामान्यराजाऽल्पर्द्धिकः, महामाण्डलिकः स एवानेकदेशाधिपतिः तत्स्कन्धावारेषु, 'गामनिवेसेसु' इत्यादि, ग्रसति बुद्ध्यादीन् गुणानिति ग्रामः, यदिवा गम्यः शास्त्रप्रसिद्धानामष्टादशकराणामिति ग्रामः, निगमः—प्रभूततरवणिग्वर्गावासः, पांसुप्राकारनिबद्धं खेटं, क्षुल्ल-

१ प्रज्ञापनापदे परिसर्प. (सू. ३५)

कप्राकारवेष्टितं कर्वटम्, अर्द्धतृतीयगव्यूतान्तर्ग्रामान्तररहितं मडम्बम्, 'पट्टणत्ति' पट्टनं पत्तनं वा, उभयत्रापि प्राकृतत्वेन निर्देशस्य समानत्वात्, तत्र यन्नौभिरेव गम्यं तत् पट्टनं, यत्पुनर्शकटैर्घोटकैर्नौभिर्वा गम्यं तत् पत्तनं, यथा भृगुकच्छं, उक्तं च—"पत्तनं शकटैर्गम्यं, घोटकैर्नौभिरेव च। नौभिरेव तु यद् गम्यं, पट्टनं तत्प्रचक्षते ॥ १ ॥" द्रोणमुखं—बाहुल्येन जलनिर्गमप्रवेशम्, आकरो हिरण्याकरादिः, आश्रमः—तापसावसथोपलक्षित आश्रयः, संबाधो-यात्रासमागतप्रभूतजननिवेशः, राजधानी—राजाधिष्ठानं नगरं। 'एएसिणं' इत्यादि, एतेषां चक्रवर्तिस्कन्धावारादीनामेव विनाशेपूपस्थितेषु 'एत्थ णंति' एतेषु चक्रवर्तिस्कन्धावारादिषु स्थानेषु आसालिका संमूर्च्छति, सा च जघन्यतोऽङ्गुलासंख्येयभागमात्रयाऽवगाहनया समुत्तिष्ठतीति योगः, एतच्चोत्पादप्रथमसमये वेदितव्यं, उत्कर्षतो द्वादश योजनानि, तदनुरूपं—द्वादशयोजनप्रमाणदैर्घ्यानुरूपं 'विक्खंभबाहल्लेणं' ति विष्कम्भश्च बाहल्यं च विष्कम्भबाहल्यं समाहारो द्वन्द्वः तेन, विष्कम्भो—विस्तारः बाहल्यं—स्थूलता, भूमीं 'दालित्ता णं' विदार्य समुपतिष्ठति, चक्रवर्तिस्कन्धावारादीनामधस्ताद् भूमेरन्तरुत्पद्यते इति भावः, सा चासंज्ञिनी—अमनस्का, संमूर्च्छिमत्वात्, मिथ्यादृष्टिः, सास्वादनसम्यक्त्वस्यापि तस्या(अ)संभवात्, अत एवाज्ञानिनी अन्तर्मुहूर्तायुरेव कालं करोति, तदेवं ग्रन्थान्तर्गतं सूत्रं पठित्वा सूत्रकृत् सम्प्रति उपसंहारमाह—'सेत्तं आसालिया'॥ सम्प्रति महोरगानभिधित्सुराह—'से किं तं' इत्यादि सुगमं, नवरं वितस्तिर्द्वादशाङ्गुलप्रमाणा, रत्निर्हस्तः, कुक्षिर्द्विहस्तमानः, धनुश्चतुर्हस्तं, गव्यूतं

द्विधनुःसहस्रप्रमाणं, चत्वारि गव्यूतानि योजनं, इदं च वितस्त्यादि उच्छ्रयाङ्गुलापेक्षया द्रष्टव्यं, शरीरप्रमाणस्य परिचिन्त्यमानत्वात्, तथा अस्तीति निपातोऽत्र बहुत्वाभिधायी प्रतिपदं च संबध्यते, ततोऽयमर्थः—सन्त्येके केचन महोरगा अङ्गुलमपि शरीरावगाहनया भवन्ति, तथा सन्त्येके केचन येऽङ्गुलपृथक्त्विका अपि, अङ्गुलपृथक्त्वं विद्यते येषां ते अङ्गुलपृथक्त्विकाः, "अतोऽनेकस्वरात्" इति इकप्रत्ययः, तेऽपि शरीरावगाहनया भवन्ति, अङ्गुलपृथक्त्वमानशरीरावगाहना अपि भवन्तीति भावः, एवं शेषसूत्राण्यपि भावनीयानि। 'ते णं' इत्यादि, ते अनन्तरोदितस्वरूपा महोरगाः स्थलचरविशेषत्वात् स्थले जायन्ते, स्थले च जाताः सन्तो जलेऽपि स्थल इव चरन्ति स्थलेऽपि चरन्ति, तथाभवस्वाभाव्यात्, यद्येवं ते कस्मादिह न दृश्यन्ते इत्याशङ्कायामाह—'ते नत्थि इहं' इत्यादि, 'ते' यथोक्तस्वरूपा महोरगा 'इह' मानुषे क्षेत्रे 'नत्थित्ति' न सन्ति, किन्तु बाह्येषु द्वीपसमुद्रेषु भवन्ति, समुद्रेष्वपि च पर्वतदेवनगर्यादिषु स्थलेषूत्पद्यन्ते न जलेषु, स्थूलतरत्वात्, तत इह न दृश्यन्ते। 'जे यावन्ने तहप्पगारा' इति, येऽपि चान्ये अङ्गुलदशकादिशरीरावगाहनमानास्तथाप्रकाराः सन्ति तेऽपि महोरगा ज्ञातव्याः। उपसंहारमाह—'सेत्तं' इत्यादि, 'ते समासओ' इत्यादि प्राग्वद् भावनीयम्। एतेषामपि दश जातिकुलकोटीनां योनिप्रमुखाणि शतसहस्राणि। एतेषामपि च यत् शरीरादिषु द्वारेषु चिन्तनं यच्च स्त्रीपुंनपुंसकानामल्पबहुत्वं तज्जीवाभिगमटीकातो भावनीयम्। उरःपरिसर्पवक्तव्यतोपसंहारमाह—'से त्तं उरपरिसप्पा'। अधुना भुजपरिसर्पानभिधित्सुराह—सुगमं, नवरं ये भुज-

परिसर्पविशेषा अप्रतीतास्ते लोकतोऽवसेयाः । अमीषां च नव जातिकुलकोटीनां योनिप्रमुखानि शतसहस्राणि भवन्ति, यत्पुनः शरीरादिषु द्वारेषु चिन्तनं यच्च स्त्रीपुंनपुंसकानामल्पबहुत्वं तज्जीवाभिगमटीकातो वेदितव्यं 'सेत्तं' इत्यादि । सम्प्रति खचरपञ्चेन्द्रियतिर्यग्योनिकानभिधित्सुराह—

से किं तं खहयरपंचिंदियतिरिक्खजोणिया ?, खहयरपंचिंदियतिरिक्खजोणिया चउविहा पं०, तं०—चम्मपक्खी लोमपक्खी समुग्गपक्खी विययपक्खी, से किं तं चम्मपक्खी ?, चम्मपक्खी अणेगविहा प०, तं०—वग्गुली जलोया अडिल्ला भारंडपक्खी जीवंजीवा समुद्दवायसा कण्णत्तिया पक्खिविरालिया, जे यावन्ने तहप्पगारा, सेत्तं चम्मपक्खी । से किं तं लोमपक्खी ?, लोमपक्खी अणेगविहा प०, तं—ढंका कंका कुरला वायसा चक्कागा हंसा कलहंसा रायहंसा पायहंसा आडा सेडी बगा बलागा पारिप्पवा कोंचा सारसा मेसरा मसूरा मयूरा सत्तहत्था गहरा पोंडरिया कागा कामिंजुया वंजुलगा तित्तिरा वट्टगा लावगा कवोया कविंजला पारेवया चिडगा चासा कुक्कुडा सुगा बरहिणा मयणसलागा कोइला सेहा वरिल्लगमाइ, सेत्तं लोमपक्खी । से किं तं समुग्गपक्खी ?, समुग्गपक्खी एगागारा पन्नत्ता, ते णं नत्थि इहं, बाहिरएसु दीवसमुद्देसु भवन्ति, सेत्तं समुग्गपक्खी । से किं तं विययपक्खी ?, विययपक्खी एगागारा पन्नत्ता, ते णं नत्थि इहं, बाहिरएसु दीवसमुद्देसु भवन्ति, सेत्तं विययपक्खी । ते समासओ दुविहा प०, तं०—संमुच्छिमा य गब्भवक्कंतिया य, तत्थ णं जे ते संमुच्छिमा ते सव्वे नपुंसगा, तत्थ णं जे ते गब्भवक्कंतिया ते णं तिविहा प०, तं०—इत्थी पुरिसा नपुंसगा । एएसिणं एवमाइ-

याणं खहयरपंचिंदियतिरिक्खजोणियाणं पज्जतापज्जत्ताणं बारस जाइकुलकोडिजोणिपमुहसयसहस्सा भवन्तीति मक्खायं। सत्तट्ठजाइकुलकोडिलक्ख नव अद्धतेरसाइं च। दस दस य होन्ति नवगा तह बारस चेव बोद्धव्वा ॥ १०७ ॥ सेत्तं खहयरपंचिंदियतिरिक्खजोणिया, सेत्तं पंचिंदियतिरिक्खजोणिया। (सू० ३५)

अथ के ते खचरपञ्चेन्द्रियतैर्यग्योनिकाः ?, सूरिराह—खचरपञ्चेन्द्रियतैर्यग्योनिकाश्चतुर्विधाः प्रज्ञप्ताः, तद्यथा—'चम्मपक्खी' इत्यादि, चर्मात्मकौ पक्षौ चर्मपक्षौ तौ विद्येते येषां ते चर्मपक्षिणः, लोमात्मकौ पक्षौ लोमपक्षौ तद्वन्तो लोमपक्षिणः, तथा गच्छतामपि समुद्गकवत् स्थितौ पक्षौ समुद्गकपक्षौ तद्वन्तः समुद्गकपक्षिणः, विततौ नित्यमनाकुञ्चितौ पक्षौ येषां (तौ) विततपक्षौ तद्वन्तो विततपक्षिणः। 'से किं तं' इत्यादि, अथ के ते चर्मपक्षिणः ?, चर्मपक्षिणोऽनेकविधाः प्रज्ञप्ताः, तद्यथा—वल्गुली इत्यादि, एते च भेदा लोकतोऽवसेयाः, 'जे यावन्ने तहप्पगारा' इति, येऽपि चान्ये तथाप्रकाराः—एवंरूपास्ते चर्मपक्षिणो द्रष्टव्याः, उपसंहारमाह—'सेत्तं चम्मपक्खी'। लोमपक्षिप्रतिपादनार्थमाह—'से किं तं' इत्यादि, एते च लोमपक्षिभेदा लोकतो वेदितव्याः। समुद्गकपक्षिप्रतिपादनार्थमाह—'से किं तं' इत्यादि पाठसिद्धं, एवं विततपक्षिसूत्रमपि। 'ते समासओ' इत्यादि प्रागवद् भावनीयं, एतेषां द्वादश जातिकुलकोटीनां योनिप्रमुखानि शतसहस्राणि। अमीषामपि शरीरादिषु द्वारेषु चिन्तनं स्त्रीपुंनपुंसकानामल्पबहुत्वं च जीवाभिगमटीकातः प्रतिपत्तव्यं, इह तु ग्रन्थगौरवभयान्न लिख्यते। अधुना विनेयजनानुग्रहाय द्वीन्द्रियप्रभृति-

जातिकुलकोटिशतसहस्रसंख्याप्रतिपादिका संग्रहिणीगाथामाह—अत्र द्वीन्द्रियेभ्य आरभ्य यथासंख्येन संख्यापदयोजना, सा चैवं–द्वीन्द्रियाणां सप्त जातिकुलकोटिलक्षाणि, त्रीन्द्रियाणामष्टौ, चतुरिन्द्रियाणां नव, जलचरपञ्चेन्द्रियाणामर्द्धत्रयोदशानि, चतुष्पदस्थलचरपञ्चेन्द्रियाणां दश, उरःपरिसर्पस्थलचरपञ्चेन्द्रियाणां दश, भुजपरिसर्पस्थलचरपञ्चेन्द्रियाणां नव, खचरपञ्चेन्द्रियाणां द्वादशेति । उपसंहारमाह–'सेत्तं' इत्यादि । तदेवमुक्ताः पञ्चेन्द्रियतैर्यग्योनिकाः । सम्प्रति मनुष्यानभिधित्सुराह—

से किं तं मणुस्सा ?, मणुस्सा दुविहा पं०, तं०–संमुच्छिममणुस्सा य गब्भवक्कंतियमणुस्सा य, से किं तं संमुच्छिममणुस्सा ?, कहि णं भन्ते ! संमुच्छिममणुस्सा संमुच्छंति ?, गोयमा ! अंतो मणुस्सखित्ते पणयालीसाए जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु तीसाए अकम्मभूमीसु छपन्नाए अंतरदीवएसु गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणएसु वा वंतेसु वा पित्तेसु वा पूएसु वा सोणिएसु वा सुक्केसु वा सुक्कपुग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंजोएसु वा णगरनिद्धमणेसु वा सव्वेसु चेव असुइट्ठाणेसु, एत्थ णं संमुच्छिममणुस्सा संमुच्छंति, अंगुलस्स असंखेज्जइभागमेत्ताए ओगाहणाए असन्नी मिच्छदिट्ठी अन्नाणी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतोमुहुत्ताउया चेव कालं करेंति। से त्तं संमुच्छिममणुस्सा ॥ से किं तं गब्भवक्कंतियमणुस्सा ?, गब्भवक्कंतियमणुस्सा तिविहा प०, तं०–कम्मभूमगा अकम्मभूमगा अन्तरदीवगा, से किं तं अन्तरदीवगा ?, अंतरदीवगा अट्ठावीसविहा प०,

तं–एगोरुया[1] आहासिया[2] वेसाणिया[3] णंगोली[4] हयकन्ना[5] गयकन्ना[6] गोकन्ना[7] सक्कुलिकन्ना[8] आयंसमुहा[9] मेंढमुहा[10] अयोमुहा[11] गोमुहा[12] आसमुहा[13] हत्थिमुहा[14] सीहमुहा[15] वग्घमुहा[16] आसकन्ना[17] हरिकन्ना[18] अकन्ना[19] कण्णपाउरणा[20] उक्कामुहा[21] मेहमुहा[22] विज्जुमुहा[23] विज्जुदंता[24] घणदंता[25] लट्ठदंता[26] गूढदंता[27] सुद्धदंता[28] । सेत्तं अन्तरदीवगा । से किं तं अकम्मभूमगा ?, अकम्मभूमगा तीसविहा प०, तं०—पंचहिं हेमवएहिं पंचहिं हिरण्णवएहिं पंचहिं हरिवासेहिं पंचहिं रम्मगवासेहिं पंचहिं देवकुरूहिं पंचहिं उत्तरकुरूहिं । सेत्तं अकम्मभूमगा ॥

अत्रापि संमूर्च्छिममनुष्यविषये प्रवचनबहुमानतः शिष्याणामपि च साक्षाद् भगवतेदमुक्तमिति बहुमानोत्पादनार्थमङ्गान्तर्गतमालापकं पठति–'कहि णं भन्ते' इत्यादि, सुगमं, नवरं 'सव्वेसु चेव असुइट्ठाणेसुत्ति' अन्यान्यपि यानि कानिचिद् मनुष्यसंसर्गवशादशुचिभूतानि स्थानानि तेषु सर्वेष्विति । उक्ताः संमूर्च्छिममनुष्याः, अधुना गर्भव्युत्क्रान्तिकमनुष्यप्रतिपादनार्थमाह—'कम्मभूमगा' इति कर्म–कृषिवाणिज्यादि मोक्षानुष्ठानं वा कर्मप्रधाना भूमिर्येषां ते कर्मभूमाः आर्षत्वात् समासान्तोऽत्प्रत्ययः कर्मभूमा एव कर्मभूमकाः, एवमकर्मा–यथोक्तकर्मविकला भूमिर्येषां ते अकर्मभूमाः ते एव अकर्मभूमकाः, अन्तरशब्दो मध्यवाची, अन्तरे–लवणसमुद्रस्य मध्ये द्वीपा अन्तरद्वीपाः तद्गता अन्तरद्वीपगाः, "अस्ति पश्चानुपूर्वी" इ(त्यपी)ति न्यायख्यापनार्थं प्रथमतोऽन्तरद्वीपगान् प्रतिपादयति–'से किं तं' इत्यादि सुगमं, नवरमष्टाविंशतिविधा इति यादृशा एव यावत्प्रमाणा यावदपान्तराला यन्नामानो हिमवत्पर्वतपूर्वाप-

रदिग्व्यवस्थिताः अष्टाविंशतिविधा अन्तरद्वीपास्तादृशा एव तावत्प्रमाणा तावदपान्तरालास्तन्नामान एव शिखरिपर्वतपूर्वापरदिग्व्यवस्थिता अपि, ततोऽत्यन्तसदृशतया व्यक्तिभेदमनपेक्ष्यान्तरद्वीपा अष्टाविंशतिविधा एव विवक्षिता इति तज्जातमनुष्या अप्यष्टाविंशतिविधा उक्ताः। तानेव नामग्राहमुपदर्शयति—'तंजहा एगोरुया' इत्यादि, एते सप्त चतुष्काः, अष्टाविंशतिसंख्यत्वात्, एते च प्रत्येकं हिमवति शिखरिणि च, तत्र हिमवद्गतास्तावद् भाव्यन्ते—इह जम्बूद्वीपे भरतस्य हैमवतस्य च क्षेत्रस्य सीमाकारी भूमिनिमग्नपञ्चविंशतियोजनो योजनशतोच्छ्रयपरिमाणो भरतक्षेत्रापेक्षया द्विगुणविष्कम्भो हेममयश्चीनपट्टवर्णो नानावर्णविशिष्टद्युतिमणिनिकरपरिमण्डितोभयपार्श्वः सर्वत्र तुल्यविस्तारो गगनमण्डलोल्लेखिरत्नमयैकादशकूटोपशोभितो वज्रमयतलविविधमणिकनकमण्डिततटभागदशयोजनावगाढपूर्वपश्चिमयोजनसहस्रायामदक्षिणोत्तरपञ्चयोजनशतविस्तारः पद्मह्रदशोभितशिरोमध्यभागः सर्वतः कल्पपादपश्रेणिरमणीयः पूर्वापरपर्यन्ताभ्यां लवणोदार्णवजलसंस्पर्शी हिमवन्नामा पर्वतः, तस्य लवणोदार्णवजलसंस्पर्शादारभ्य पूर्वस्यां पश्चिमायाञ्च दिशि प्रत्येकं द्वे द्वे गजदन्ताकारे दंष्ट्रे विनिर्गते, तत्र ऐशान्यां दिशि या विनिर्गता दंष्ट्रा तस्यां हिमवतः पर्यन्तादारभ्य त्रीणि योजनशतानि लवणसमुद्रमवगाह्यात्रान्तरे योजनशतत्रयायामविष्कम्भः किञ्चिन्न्यूनैकोनपञ्चाशदधिकनवयोजनशतपरिरय एकोरुकनामा द्वीपो वर्तते, अयं च पञ्चधनुःशतप्रमाणविष्कम्भया द्विगव्यूतोच्छ्रितया पद्मवरवेदिकया सर्वतः परिमण्डितः, तस्याश्च पद्मवरवेदिकाया वर्णको जीवाभिगमटीकायामिव वेदितव्यः, साऽपि च

पद्मवरवेदिका सर्वतः सामस्त्येन वनखण्डपरिक्षिप्ता, वनाच्च वनखण्डस्यायं विशेषः–प्रायो बहूनां समानजातीयानामुत्तमानां महीरुहाणां समुदायो वनं, यथा अशोकवनं चम्पकवनमिति, अनेकजातीयानामुत्तमानां महीरुहाणां समूहो वनखण्डः, उक्तं च जीवाभिगममूलटीकायाम्–"एगजाइएहिं खण्डेहिं वणं, अणेगजाइएहिं उत्तमेहिं वणसंडे" इति, तस्य च वनखण्डस्य चक्रवालतया विष्कम्भो देशोने द्वे योजने, परिक्षेपः पद्मवरवेदिकाप्रमाणः, अस्य च वनखण्डस्य वर्णकः प्रतिपादितोऽस्ति, स चातीव गरीयानिति नोपदर्शितः, केवलं जीवाभिगमटीकातोऽवसेयः, तस्यैव हिमवतः पर्यन्तादारभ्य दक्षिणपूर्वस्यां दिशि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य द्वितीयदंष्ट्राया उपरि एकोरुकद्वीपप्रमाण आभासिकनामा द्वीपो वर्तते, तथा तस्यैव हिमवतः पश्चिमायां दिशि पर्यन्तादारभ्य दक्षिणपश्चिमायां–नैर्ऋतकोण इत्यर्थः, त्रीणि योजनशतानि लवणसमुद्रमवगाह्य दंष्ट्राया उपरि यथोक्तप्रमाणो वैषाणिकनामा द्वीपः, तथा तस्यैव हिमवतः पश्चिमायां दिशि पर्यन्तादारभ्य पश्चिमोत्तरस्यां दिशि–वायव्यकोणे इत्यर्थः, त्रीणि योजनशतानि लवणसमुद्रमध्ये दंष्ट्रामतिक्रम्यात्रान्तरे पूर्वोक्तप्रमाणो नाङ्गोलिकनामा द्वीपः, एवमेते चत्वारो द्वीपा हिमवतश्चतसृष्वपि विदिक्षु तुल्यप्रमाणा अवतिष्ठन्ते, उक्तं च–"चुलहिमवंतपुव्वावरेण विदिसासु सागरं तिसए। गंतूणंतरदीवा तिण्णि सए हुन्ति विच्छिन्ना ॥ १॥ अउणापन्ननवसए किंचूणं परिहि तेसिमे नामा। एगोरुयगाभासिय वेसाणिय चेव नंगूली ॥ २॥" तत एषामेकोरुकादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु

प्रत्येकं चत्वारि चत्वारि योजनशतान्यतिक्रम्य चतुर्योजनशतायामविष्कम्भाः किञ्चिंन्यूनपञ्चषष्टिसहितद्वादशयोजनशतपरिक्षेपाः यथोक्तपद्मवरवेदिकावनखण्डमण्डितपरिसराः जम्बूद्वीपवेदिकातश्चतुर्योजनशतप्रमाणान्तरा हयकर्णगजकर्णगोकर्णशष्कुलीकर्णनामानश्चत्वारो द्वीपाः,तद्यथा—एकोरुकस्य परतो हयकर्णः आभासिकस्य परतो गजकर्णः वैपाणिकस्य परतो गोकर्णः नाङ्गोलिकस्य परतो शष्कुलीकर्ण इति। तत एतेषामपि हयकर्णादीनां चतुर्णां द्वीपानां परतः पुनरपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं पञ्च पञ्च योजनशतानि व्यतिक्रम्य पञ्चयोजनशतायामविष्कम्भा एकाशीत्यधिकपञ्चदशयोजनशतपरिक्षेपाः पूर्वोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितबाह्यप्रदेशा जम्बूद्वीपवेदिकातः पञ्चयोजनशतप्रमाणान्तरा आदर्शमुख १ मेण्ढमुख २ अयोमुख ३ गोमुख ४ नामानश्चत्वारो द्वीपाः, तद्यथा—हयकर्णस्य परत आदर्शमुखः गजकर्णस्य परतो मेण्ढमुखः गोकर्णस्य परतोऽयोमुखः शष्कुलीकर्णस्य परतो गोमुख इति । एवमग्रेऽपि भावना कार्या, एतेषामप्यादर्शमुखादीनां चतुर्णां द्वीपानां परतो भूयोऽपि यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं षट् षड् योजनशतान्यतिक्रम्य षड्योजनशतायामविष्कम्भाः सप्तनवत्यधिकाष्टादशयोजनशतपरिक्षेपा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितपरिसरा जम्बूद्वीपवेदिकातः षड्योजनशतप्रमाणान्तरा अश्वमुखहस्तिमुखसिंहमुखव्याघ्रमुखनामानश्चत्वारो द्वीपाः । एतेषामप्यश्वमुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं सप्त
२ योजनशतान्यतिक्रम्य सप्तयोजनशतायामविष्कम्भास्त्रयोदशाधिकद्वाविंशतियोजनशतपरिरयाः पूर्वोक्तप्रमाणपद्म-

वरवेदिकावनखण्डसमवगूढा जम्बूद्वीपवेदिकातः सप्तयोजनशतप्रमाणान्तरा अश्वकर्णहरिकर्णाकर्णकर्णप्रावरणनामानश्चत्वारो द्वीपाः । तत एतेषामश्वकर्णादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकमष्टावष्टौ योजनशतान्यतिक्रम्याष्टयोजनशतायामविष्कम्भा एकोनत्रिंशदधिकपञ्चविंशतियोजनशतपरिक्षेपा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितपरिसरा जम्बूद्वीपवेदिकातोऽष्टयोजनशतप्रमाणान्तरा उल्कामुखमेघमुखविद्युन्मुखविद्युद्दन्ताभिधानाश्चत्वारो द्वीपाः । ततोऽमीषामपि उल्कामुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिविदिक्षु प्रत्येकं नव नव योजनशतान्यतिक्रम्य नवयोजनशतायामविष्कम्भाः पञ्चचत्वारिंशदधिकाष्टाविंशतियोजनशतपरिक्षेपा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डसमवगूढा जम्बूद्वीपवेदिकातो नवयोजनशतप्रमाणान्तरा घनदन्तलष्टदन्तगूढदन्तशुद्धदन्तनामानश्चत्वारो द्वीपाः । एवमेते हिमवति पर्वते चतसृषु विदिक्षु व्यवस्थिताः सर्वसंख्ययाऽष्टाविंशतिः, एवं हिमवत्तुल्यवर्णप्रमाणे पद्महृदप्रमाणायामविष्कम्भावगाहपुण्डरीकहृदोपशोभिते शिखरिण्यपि पर्वते लवणोदार्णवजलसंस्पर्शादारभ्य यथोक्तप्रमाणान्तरासु चतसृषु विदिक्षु व्यवस्थिता एकोरुकादिनामानोऽक्षूणापान्तरालायामविष्कम्भा अष्टाविंशतिसंख्या द्वीपा वक्तव्याः, सर्वसंख्यया षट्पञ्चाशदन्तरद्वीपाः, एतद्गता मनुष्या अप्येतन्नामानः उपचारात्, भवति च तात्स्थ्यात् तद्व्यपदेशः, यथा पञ्चालदेशनिवासिनः पुरुषाः पञ्चाला इति, ते च मनुष्या वज्रर्षभनाराचसंहननिनः कङ्कपक्षिपरिणामा अनुलोमवायुवेगा समचतुरस्रसंस्थानाः, तद्यथा—सुप्रतिष्ठितकूर्मचारुचरणाः

सुकुमारश्लक्ष्णप्रविरलरोमकुरुविन्दवृत्तजङ्घायुगला निगूढसुबद्धसंधिजानुप्रदेशाः करिकरसमवृत्तोरवः कण्ठीरवसदृश-कटीप्रदेशाः शक्रायुधसममध्यभागाः प्रदक्षिणावर्तनाभिमण्डलाः श्रीवत्सलाञ्छितविशालमांसलवक्षःस्थलाः पुरपरि-घाऽनुकारिदीर्घबाहवः सुश्लिष्टमणिबन्धा रक्तोत्पलपत्रानुकारिशोणपाणिपादतलाः चतुरङ्गुलप्रमाणसमवृत्तकम्बुग्रीवाः शारदशशाङ्कसौम्यवदनाः छत्राकारशिरसोऽस्फुटितस्निग्धकान्तिश्लक्ष्णमूर्द्धजाः [1]कमण्डलु [2]कलश [3]यूप[4]स्तूप [5]वापी [6]ध्वज [7]पताका [8]सौवस्तिक [9]यव [10]मत्स्य [11]मकर [12]कूर्म [13]रथवर [14]स्थाला[15]ंशुका[16]ष्टापदा[17]ङ्कुश [18]सुप्रतिष्ठक [19]मयूर [20]श्रीदामा[21]भिषेक [22]तोरण [23]मे-दिनी [24]जलधि [25]वरभवना[26]दर्श[27]पर्वत[28]गज[29]वृषभ[30]सिंह[31]च्छत्र[32]चामररूपप्रशस्तोत्तमद्वात्रिंशल्लक्षणधराः । स्त्रियोऽपि सुजातसर्वाङ्ग-सुन्दर्यः समस्तमहेलागुणसमन्विताः संहताङ्गुलिपद्मदलवत्सुकुमारकूर्मसंस्थानमनोहारिचरणा रोमरहितप्रशस्तलक्षणोपे-तजङ्घायुगला निगूढमांसलजानुप्रदेशाः कदलीस्तम्भनिभसंहतसुकुमारपीवरोरुका वदनायामप्रमाणत्रिगुणमांसलविशा-लजघनधारिण्यः स्निग्धकान्तिसुविभक्तश्लक्ष्णरोमराजयः प्रदक्षिणावर्ततरङ्गभङ्गुरनाभिमण्डलाः प्रशस्तलक्षणोपेतकुक्षयः संगतपार्श्वाः कनककलशोपमसंहितात्युन्नतवृत्ताकृतिपीवरपयोधराः सुकुमारबाहुलतिकाः सौवस्तिकशङ्खचक्राद्याकृतिले-खालङ्कृतपाणिपादतलाः वदनत्रिभागोच्छ्रितमांसलकम्बुग्रीवाः प्रशस्तलक्षणोपेतमांसलहनुविभागा दाडिमपुष्पानुका-रिशोणिमाधरौष्ठा रक्तोत्पलताल्लुजिह्वा विकसितकुवलयपत्रायतकान्तलोचना आरोपितचापपृष्ठाकृतिसुसंगतभ्रूलतिकाः प्रमाणोपपन्नललाटफलकाः सुस्निग्धकान्तश्लक्ष्णशिरोरुहाः पुरुषेभ्यः किञ्चिदूनोच्छ्रायाः स्वभावत उदारशृङ्गारचारुवेषाः

प्रकृत्यैव हसितभणितविलासविषयपरमनैपुण्योपेताः। तथा मनुष्या मानुष्यश्च स्वभावत एव सुरभिवदनाः प्रतनुक्रोधमानमायालोभाः संतोषिणो निरौत्सुक्या मार्दवार्जवसंपन्नाः सत्यपि मनोहारिणि मणिकनकमौक्तिकादौ ममत्वकारणे ममत्वाभिनिवेशरहिताः सर्वथाऽपगतवैरानुबन्धा हस्त्यश्वकरभगोमहिष्यादिसद्भावेऽपि तत्परिभोगपराङ्मुखाः पादविहारिणो ज्वरादिरोगयक्षभूतपिशाचादिग्रहमारिव्यसनोपनिपातविकलाः परस्परप्रेष्यप्रेषकभावरहितत्वादहमिन्द्राः, तेषां पृष्ठकरण्डकानि चतुःषष्टिसंख्याकानि चतुर्थातिक्रमे चाहारग्रहणं, आहारोऽपि च न शाल्यादिधान्यनिष्पन्नः किन्तु पृथ्वीमृत्तिका कल्पद्रुमाणां पुष्पफलानि च, तथाहि—जायन्ते खलु तत्रापि विस्रसात एव शालिगोधूममाषमुद्गादीनि धान्यानि, परं न तानि मनुष्याणामुपभोगं गच्छन्ति, या तु पृथ्वी सा शर्करातोऽप्यनन्तगुणमाधुर्या, यश्च कल्पद्रुमपुष्पफलानामास्वादः स चक्रवर्तिभोजनादप्यधिकगुणः, तथा चोक्तम्—"तेसिणं भंते! पुप्फफलाणं केरिसए आसाए पन्नत्ते ?, गोयमा ! से जहानामए रन्नो चाउरंतस्स चक्कवट्टिस्स कल्लाणे भोयणजाए सयसहस्सनिप्फन्ने वन्नोवए रसोवए फासोवए आसायणिज्जे दप्पणिज्जे मयणिज्जे बिंहणिज्जे सव्वेंदियगायपल्हायणिज्जे आसाएणं पन्नत्ते, एत्तोवि इट्ठतराए चेव पन्नत्ते"। ततः पृथ्वी कल्पद्रुमपुष्पफलानि च तेषामाहारः, तथाभूतं चाहारमाहार्य प्रासादादिसंस्थाना

१ तेषां भदन्त ! पुष्पफलानां कीदृश आस्वादः प्रज्ञप्तः ?, गौतम ! स यथानामकः राज्ञश्चातुरन्तस्य चक्रवर्तिनः कल्याणं भोजनजातं शतसहस्रनिष्पन्नं वर्णोपगं रसोपगं स्पर्शोपगं आस्वादनीयं दर्पणीयं मदनीयं बृंहणीयं सर्वेन्द्रियगात्रप्रह्लादनीयमास्वादेन प्रज्ञप्तं, इतोऽपीष्टतरक एव प्रज्ञप्तः।

ये गृहाकाराः कल्पवृक्षास्तेषु यथासुखमवतिष्ठन्ते, न च तत्र क्षेत्रे दंशमशकयूकामत्कुणमक्षिकादयः शरीरोपद्रवकारिणो जन्तव उपजायन्ते, येऽपि च जायन्ते भुजगव्याघ्रसिंहादयस्तेऽपि मनुष्याणां न बाधायै प्रभवन्ति, नापि ते परस्परं हिंस्यहिंसकभावे वर्तन्ते, क्षेत्रानुभावतो रौद्रानुभावरहितत्वात्, मनुष्ययुगलानि च पर्यवसानसमये युगलं प्रसुवते, तच्च युगलमेकोनाशीतिदिनानि पालयन्ति, तेषां शरीरोच्छ्रयोऽष्टौ धनुःशतानि, पल्योपमासंख्येयभागप्रमाणमायुः, उक्तं च—"अन्तरदीवेसु नरा धणुसयमट्ठुसिया सया मुइया। पालंति मिहुणधम्मं पल्लस्स असंखभागाऊ ॥ ॥ १ ॥ चउसट्ठि पिट्ठकरंडयाणि मणुयाण तेसिमाहारो। भत्तस्स चउत्थस्स य गुणसीइदिणाणि पालणया ॥ २ ॥" स्तोककषायतया स्तोकप्रेमानुबन्धतया च ते मृत्वा दिवमुपसर्पन्ति, मरणं च तेषां जृम्भिकाकासक्षुतादिमात्रव्यापारपुरस्सरं भवति, न शरीरपीडारम्भपुरस्सरमिति। तदेवमुक्ता अन्तरद्वीपगाः ॥ साम्प्रतमकर्मभूमकप्रतिपादनार्थमाह—अथ के तेऽकर्मभूमकाः ?, सूरिराह—अकर्मभूमकास्त्रिंशद्विधाः प्रज्ञप्ताः, तच्च त्रिंशद्विधत्वं क्षेत्रभेदात्, तथा चाह—'तंजहा—पंचहिं हेमवएहिं' इत्यादि, पञ्चभिर्हैमवतैः पञ्चभिर्हैरण्यवतैः पञ्चभिर्हरिवर्षैः पञ्चभी रम्यकवर्षैः पञ्चभिर्देवकुरुभिः पञ्चभिरुत्तरकुरुभिर्भिद्यमाना त्रिंशद्विधा भवन्ति, षण्णां पञ्चानां त्रिंशत्संख्यात्मकत्वात्। तत्र पञ्चसु हैमवतेषु पंचसु हैरण्यवतेषु मनुष्या गव्यूतप्रमाणशरीरोच्छ्रयाः पल्योपमायुषो वज्रर्षभनाराचसंहननाः समचतुरस्रसंस्थानाः चतुःषष्टिपृष्ठकरण्डकाश्चतुर्थातिक्रमभोजिन एकोनाशीतिदिनान्यपत्यपालकाः, उक्तं च—"गाउअमुच्चा पलि-

ओवमाउणो वज्जरिसहसंघयणा । हेमवएरन्नवए अहमिंदनरा मिहुणवासी ॥ १ ॥ चउसट्ठी पिट्ठकरंडयाण मणुयाण तेसिमाहारो । भत्तस्स चउत्थस्स य गुणसीदिणऽवच्चपालणया ॥ २ ॥" पञ्चसु हरिवर्षेषु पञ्चसु रम्यकेषु द्विपल्योपमायुषो द्विगव्यूतप्रमाणशरीरोच्छ्रया वज्रर्षभनाराचसंहननाः समचतुरस्रसंस्थानाः षष्ठभक्तातिक्रमे आहारग्राहिणो अष्टाविंशत्यधिकशतसंख्यपृष्ठकरण्डकाश्चतुःषष्टिदिनान्यपत्यपालकाः, आह च–"हरिवासरम्मएसुं आउपमाणं सरीरमुस्सेहो । पलिओवमाणि दोन्नि उ दोन्नि उ कोसुस्सिया भणिया ॥ १ ॥ छट्ठस्स य आहारो चउसट्ठिदिणाणि पालणा तेसिं । पिट्ठकरंडाण सयं अट्ठावीसं मुणेयव्वं ॥ २ ॥" पञ्चसु देवकुरुषु पञ्चसूत्तरकुरुषु त्रिपल्योपमायुषो गव्यूतत्रयप्रमाणशरीरोच्छ्रयाः समचतुरस्रसंस्थाना वज्रर्षभनाराचसंहनिनः षट्पञ्चाशदधिकशतद्वयप्रमाणपृष्ठकरण्डका अष्टमभक्तातिक्रमाहारिण एकोनपञ्चाशद्दिनान्यपत्यपालकाः, तथा चोक्तम्–"दोसुवि कुरूसु मणुया तिपल्लपरमाउणो तिकोसुच्चा । पिट्ठिकरंडसयाइं दो छप्पन्नाइं मणुयाणं ॥१॥ सुसमसुसमाणुभावं अणुभवमाणाणऽवच्चगोवणया । अउणापण्णदिणाइं अट्ठमभत्तस्समाहारो ॥ २ ॥" एतेषु सर्वेष्वपि क्षेत्रेष्वन्तरद्वीपेष्विव मनुष्याणामुपभोगाः कल्पद्रुमसंपादिताः, नवरमन्तरद्वीपापेक्षया पञ्चसु हैमवतेषु पञ्चसु हैरण्यवतेषु मनुष्याणामुत्थानबलवीर्यादिकं कल्पपादपफलानामास्वादो भूमेर्माधुर्यमित्येवमादिका भावाः पर्यायानधिकृत्यानन्तगुणा द्रष्टव्याः, तेभ्योऽपि पञ्चसु हरिवर्षेषु पञ्चसु

रम्यकवर्षेषु अनन्तगुणाः, तेभ्योऽपि पञ्चसु देवकुरुषु पञ्चसूत्तरकुरुषु अनन्तगुणाः, तदेवमुक्ता अकर्मभूमकाः ॥ संप्रति कर्मभूमकप्रतिपादनार्थमाह—

से किं तं कम्मभूमगा ?, कम्मभूमगा पन्नरसविहा पं०, तं०—पंचहिं भरहेहिं पंचहिं एरवएहिं पंचहिं महाविदेहेहिं, ते समासओ दुविहा पं०, तं०—आ [य]रिया य मिलिक्खू य, से किं तं मिलिक्खू ?, मिलिक्खू अणेगविहा प०, तं०—सगा जवणा चिलाया सबरबब्बरमुरुंडोड्डभडगनिण्णगपक्कणिया कुलक्खगोंडसिंहलपारसगोधा कोंचअंबडइदमिलचिल्ललपुलिंदहारोसदोबवोकाणगन्धा हारवा पहलियअज्झलरोमपासपउसा मलया य बंधुया य सूयलिकोंकणगमेयपल्हवमालव मग्गर आभासिआ कणवीर ल्हसिय खसा खासिय णेदूर मोंढ डोंबिल गलओस पओस कक्केय अक्खाग हणरोमग हूणरोमग भरु मरुय चिलाय वियवासी य एवमाइ, सेत्तं मिलिक्खू ।

अथ के ते कर्मभूमकाः ?, सूरिराह कर्मभूमकाः पञ्चदशविधाः प्रज्ञप्ताः, तच्च पञ्चदशविधत्वं क्षेत्रभेदात्, तथा चाह–'पञ्चहिं भरहेहिं' इत्यादि, पञ्चभिर्भरतैः पञ्चभिरैरवतैः पञ्चभिर्महाविदेहैर्भिद्यमानाः पञ्चदशविधा भवन्ति, ते च पञ्चदशविधा अपि समासतो द्विविधाः प्रज्ञप्ताः, तद्यथा–आर्या म्लेच्छाश्च, तत्र आराद् हेयधर्मेभ्यो याताः–प्राप्ता उपादेयधर्मैरित्यार्याः, "पृषोदरादयः" इति रूपनिष्पत्तिः, म्लेच्छाः–अव्यक्तभाषासमाचाराः, "म्लेच्छ अव्यक्तायां वाचि" इति वचनात्, भाषाग्रहणं चोपलक्षणं, तेन शिष्टाऽसंमतसकलव्यवहारा म्लेच्छा इति प्रतिपत्तव्यं ।

तत्राल्पवक्तव्यत्वात् प्रथमतो म्लेच्छवक्तव्यतामाह—'से किं तं' इत्यादि, अथ के ते म्लेच्छाः ?, 'मिलिक्खू' इति निर्देशः प्राकृतत्वाद् आर्षत्वाच्च, सूरिराह—म्लेच्छा अनेकविधाः प्रज्ञप्ताः, तच्चानेकविधत्वं शक–यवन–चिलात–शवर–बर्बरादिदेशभेदात्, तथा चाह—'तंजहा सगा' इत्यादि, शकदेशनिवासिनः शकाः, यवनदेशनिवासिनो यवनाः, एवं सर्वत्र, नवरममी नानादेशा लोकतो विज्ञेयाः ॥ आर्यप्रतिपादनार्थमाह—

से किं तं आ[य]रिया ?, आ[य]रिया दुविहा पं०, तं०–इड्डिपत्ता[य]रिया य अणिड्डिपत्ता[य]रिया य, से किं तं इड्डिपत्ता[य]रिया ?, इड्डिपत्ता[य]रिया छव्विहा पं०, तं०–अरहंता चक्कवट्टी बलदेवा वासुदेवा चारणा विज्ञाहरा, सेत्तं इड्डिपत्ता[य]रिया । से किं तं अणिड्डिपत्ता[य]रिया ?, अणिड्डिपत्ता[य]रिया नवविहा प०, तं०–खेत्ता[य]रियाँ जातिआ[य]रियाँ कुलारिआँ कम्मारियाँ सिप्पारिआँ भासारियाँ नाणारियाँ दंसणारियाँ चारित्तारियो । से किं तं खेत्तारिया ?, खेत्तारिया अद्धछव्वीसतिविहाणा पं०, तं०–रायगिह मगह चंपा अंगा तह तामलित्ति वंगा य । कंचणपुरं कलिंगा वाणारसी चेव कासी य ॥१०८॥ साएय कोसला गयपुरं च कुरु सोरियं कुसट्टा य । कंपिल्लं पंचाला अहिछत्ता जंगला चेव ॥१०९॥ बारवई सोरट्ठा मिहिलै विदेहा य वच्छ कोसंबी । नंदिपुरं संडिल्ला भद्दिलपुरमेव मलया य ॥११०॥ वइराड वच्छ वरणा अच्छा तह मत्तियावइ दसण्णा । सोत्तियवई य चेदी वीयभयं सिंधुसोवीरा ॥१११॥ महुरा य सूरसेणा पावा भंगी य मास पुरिवट्टा । सावत्थी य कुणाला कोडीवरिसं च लाटा य ॥ ११२ ॥ सेयवियाविय णयरी केकयअद्धं च आरियं भणियं । इत्थुप्पत्ती

जिणाणं चक्कीणं रामकण्हाणं ॥ ११३ ॥ से त्तं खेत्तारिया ॥ से किं तं जाइआरिया ?, जाइआरिया छव्विहा पं०, तं०— अंबट्ठा य कलिंदा य, विदेहा वेदगाइया । हरिया चुंचुणा चेव, छ एया इब्भजाईओ ॥११४॥ सेत्तं जाइआरिया । से किं तं कुलारिया ?, कुलारिया छव्विहा पं०, तं०—उग्गा भोगा राइन्ना इक्खागा णाया कोरवा, सेत्तं कुलारिया । से किं तं कम्मारिया ?, कम्मारिया अणेगविहा प०, तं०—दोसिया सुत्तिया कप्पासिया सुत्तवेयालिया भंडवेयालिया कोलालिया नरवाहणिया जे यावन्ने तहप्पगारा, से त्तं कम्मारिया । से किं तं सिप्पारिया ?, सिप्पारिया अणेगविहा प०, तं०—तुण्णागा तंतुवाया पट्टागा देयडा वरुट्टा छविया कट्ठपाउयारा मुंजपाउयारा छत्तारा वज्झारा पुच्छारा लेप्पारा चित्तारा संखारा दंतारा भंडारा जिज्झगारा सेल्लारा कोडिगारा, जे यावन्ने तहप्पगारा, से त्तं सिप्पारिया ॥ से किं तं भासारिया ?, भासारिया जे णं अद्धमागहाए भासाए भासेंति, तत्थऽवि य णं जत्थ बंभी लिवी पवत्तइ, बंभीए णं लिवीए अट्ठारसविहे लेक्खविहाणे प०, तं०—बंभी जवणाणिया[2] दोसापुरिया[3] खरोट्टी[4] पुक्खरसारिया[5] भोगवइया[6] पहराइया[7] अंतक्खरिया[8] अक्खरपुट्ठिया[9] वेणइया[10] निण्हइया[11] अंकलिवी[12] गणियलिवी[13] गंधव्वलिवी[14] आयंसलिवी[15] माहेसरी[16] दोमिलिवी[17] पोलिन्दी, से त्तं भासारिया । से किं तं नाणारिया ?, नाणारिया पंचविहा प०, तं०—आभिणिबोहियनाणारिया सुयनाणारिया ओहिनाणारिया मणपज्जवनाणारिया केवलनाणारिया, सेत्तं नाणारिया । से किं तं दंसणारिया ?, दंसणारिया दुविहा पं०, तं०—सरागदंसणारिया य वीयरायदंसणारिया य, से किं तं सरागदंसणारिया ?, सरागदंसणारिया दसविहा प०, तं—निसग्गुवएसरुई[2] आणरुई[3] सुत्तबीयरुइमेव । अभिगमवित्थाररुई किरियासंखेवधम्मरुई ॥११५॥ भूयत्थेणाहिगया जीवाजीवे य पुण्णपावं च ।

सहसंमुइया आसवसंवरे य रोएइ उ निसग्गो ॥११६॥ जो जिणदिट्ठे भावे चउविहे सद्दहाइ सयमेव । एमेव नन्नहत्तिय निसग्गरुइत्ति नायवो ॥११७॥ एए चेव उ भावे उवदिट्ठे जो परेण सद्दहइ । छउमत्थेण जिणेण व उवएसरुइत्ति नायवो ॥ ॥११८॥ जो हेउमयाणंतो आणाए रोयए पवयणं तु । एमेव नन्नहत्ति य एसो आणारुई नाम ॥११९॥ जो सुत्तमहिज्जन्तो सुएण ओगाहई उ सम्मत्तं । अंगेण बाहिरेण व सो सुत्तरुइत्ति णायवो॥१२०॥ एगपएणेगाई पदाइं जो पसरई उ सम्मत्तं । उदएव तिल्लबिंदू सो बीयरुइत्ति नायवो ॥१२१॥ सो होइ अभिगमरुई सुयनाणं जस्स अत्थओ दिट्ठं । इक्कारस अंगाइं पइन्नगा दिट्ठिवाओ य ॥१२२॥ दवाण सवभावा सवपमाणेहिं जस्स उवलद्धा । सवाहिं नयविहीहिं वित्थाररुइत्ति नायवो ॥१२३॥दंसणनाणचरित्ते तवविणए सवसमिइगुत्तीसु । जो किरियाभावरुई सो खलु किरियारुई नाम ॥१२४॥ अणभिग्गहियकुदिट्ठी संखेवरुइत्ति होइ नायवो । अविसारओ पवयणे अणभिग्गहिओ य सेसेसु॥१२५॥जो अत्थिकायधम्मं सुयधम्मं खलु चरित्तधम्मं च । सद्दहइ जिणाभिहियं सो धम्मरुइत्ति नायवो ॥१२६॥ परमत्थसंथवो वा सुदिट्ठपरमत्थसेवणा वावि । वावन्नकुदंसणवज्जणा य सम्मत्तसद्दहणा ॥ १२७ ॥ निस्संकिय निकंखिय निवितिगिच्छा अमूढदिट्ठी य । उववूहथिरीकरणे वच्छल्लपभावणे अट्ठ ॥१२८॥ से त्तं सरागदंसणारिया । से किं तं वीयरायदंसणा [य] रिया?, वीयरायदंसणा [य] रिया दुविहा प०, तं०—उवसंतकसायवीयरायदंसणा [य] रिया य खीणकसायवीयरायदंसणा [य] रिया य । से किं तं उवसंतकसायवीयरायदंसणा [य] रिया ?, उवसंतकसायवीयरायदंसणा [य] रिया दुविहा प०, तं०—पढमसमयउवसंतकसायवीयरायदंसणा [य] रियाय अपढमसमयउवसंतकसायवीयरायदंसणा [य] रिया य, अहवा चरिमसमयउवसंतकसायवी-

यरायदंसणा [य] रियाय अचरिमसमयउवसंतकसायवीयरायदंसणा [य] रिया य। से किं तं खीणकसायवीयरायदंसणा-[य] रिया ?, खीणकसायवीयरायदंसणा [य] रिया दुविहा प०, तं०—छउमत्थखीणकसायवीयरायदंसणा [ य ] रिया य केवलिखीणकसायवीयरायदंसणा [ य ] रिया य। से किं तं छउमत्थखीणकसायवीयरायदंसणा [ य ] रिया ?, छउमत्थखीणकसायवीयरायदंसणायरिया दुविहा प०, तं०—सयंबुद्धछउमत्थखीणकसायवीयरायदंसणा [ य ] रिया य बुद्धबोहियछउमत्थखीणकसायवीयरायदंसणा [ य ] रिया य, से किं तं सयंबुद्धछउमत्थखीणकसायवीयरायदंसणा-[ य ] रिया ?, सयंबुद्धछउमत्थखीणकसायवीयरायदंसणा [ य ] रिया दुविहा प०, तं०—पढमसमयसयंबुद्धछउमत्थ-खीणकसायवीयरायदंसणा [ य ] रिया य अपढमसमयसयंबुद्धछउमत्थखीणकसायवीयरायदंसणा [ य ] रिया य, अहवा चरिमसमयसयंबुद्धछउमत्थखीणकसायवीयरायदंसणा [ य ] रिया य अचरिमसमयसयंबुद्धछउमत्थखीणकसायवीयराय-दंसणा [य] रियाय, से त्तं सयंबुद्धछउमत्थखीणकसायवीयरायदंसणा [य] रिया। से किं तं बुद्धबोहियछउमत्थखीणकसाय-वीयरायदंसणा [य] रिया ?, बुद्धबोहियछउमत्थखीणकसायवीयरायदंसणा [य] रिया दुविहा प०, तं—पढमसमयबुद्धबो-हियखीणकसायवीयरायदंसणारिया य अपढमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायदंसणा [य] रिया य, अहवा चरि-मसमयबुद्धबोहियछउमत्थखीणकसायवीयरायदंसणा [य] रिया य अचरिमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायदंस-णा [य] रिया य, सेत्तं बुद्धबोहियछउमत्थखीणकसायवीयरायदंसणा [य] रिया, सेत्तं छउमत्थखीणकसायवीयरायदंसणा [य]-रिया। से किं तं केवलिखीणकसायवीयरायदंसणा [य] रिया ?, केवलिखीणकसायवीयरायदंसणा [य] रिया दुविहा प०,

तं०—सजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया य अजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया य। से किं तं सजोगिकेवलिखीणकसायवीयरायदंसणा [य]रिया ?, सजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया दुविहा प०, तं०—पढमसमयसजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया य अपढमसमयसजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया य, अहवा चरिमसमयसजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया य अचरिमसमयसजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया य। सेत्तं सजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया। से किं तं अजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया ?, अजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया दुविहा प०, तं०—पढमसमयअजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया य अपढमसमयअजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया य, अहवा चरिमसमयअजोगिकेवलिखीणकसायवीयरायदंसणा [य]रिया य अचरिमसमयअजोगिकेवलिखीणकसायवीयरायदंसणा [य]-रिया य, सेत्तं अजोगिकेवलिखीणकसायवीयरायदंसणा [य] रिया, सेत्तं केवलिखीणकसायवीयरायदंसणा [य] रिया, सेत्तं खीणकसायवीयरायदंसणा [य] रिया, सेत्तं दंसणा [य] रिया ॥

सुगमं, नवरं 'रायगिहमगह' इत्यादि, राजगृहं नगरम्, मगधो जनपदः, एवं सर्वत्रापि अक्षरसंस्कारो विधेयः, भावार्थस्त्वयम्—१ मगधेषु जनपदेषु राजगृहं नगरम्, २ अङ्गेषु चम्पा ३ वङ्गेषु तामलिप्ती ४ कलिङ्गेषु काञ्चनपुरं ५ काशिषु वाराणसी ६ कोसलासु साकेतं ७ कुरुषु गजपुरं ८ कुशावर्तेषु सौरिकं ९ पाञ्चालेषु काम्पिल्यं, १० जङ्गलेषु

अहिच्छत्रा ११ सुराष्ट्रेषु द्वारावती १२ विदेहेषु मिथिला १३ वत्सेषु कौशाम्बी १४ शाण्डिल्येषु नन्दिपुरं, १५ मलयेषु भद्दिलपुरं १६ वत्सेषु वैराटपुरं १७ वरणेषु अच्छापुरी १८ दशार्णेषु मृत्तिकावती १९ चेदिषु शौक्तिकावती २० वीतभयं सिन्धुषु सौवीरेषु २१ मथुरा शूरसेनेषु २२ पापा भङ्गेषु २३ मास(सा)पुरिवट्टा(र्त्तायां) २४ कुणालेषु श्रावस्ती २५ लाटासु कोटिवर्षं २६ श्वेताम्बिकानगरी केकयजनपदार्द्धं एतावदर्द्धषड्विंशतिजनपदात्मकं क्षेत्रमार्यं भणितं, कुतः ? इत्याह—'इत्थुप्पत्ती' इत्यादि, यस्मादत्र–एषु अर्द्धषड्विंशतिसंख्येषु जनपदेषु उत्पत्तिर्जिनानां–तीर्थकराणां चक्रवर्तिनां रामाणां–बलदेवानां कृष्णानां–वासुदेवानां तत आर्यं, एतेन क्षेत्रार्यानार्यव्यवस्था दर्शिता–यत्र तीर्थकरादीनामुत्पत्तिस्तदार्यं शेषमनार्यमिति । उक्ताः क्षेत्रार्याः, सम्प्रति जात्यार्यप्रतिपादनार्थमाह—सुगमं, नवरं यद्यपि शास्त्रान्तरेष्वनेका जातय उपवर्ण्यन्ते तथाऽपि लोके एता एव अम्बष्ठ–कलिन्द–वैदेह–वेदंग–हरित–चुंचुणरूपा इभ्यजातयोऽभ्यर्चनीया जातयः प्रसिद्धाः, तत एताभिर्जातिभिरुपेता जात्यार्या न शेषजातिभिः । 'तुण्णागा' इत्यादि, तुन्नाकाः–सूच्याजीविनः तन्तुवायाः–कुविन्दाः पट्टकाराः–पट्टकूलकुविन्दाः, देयडा–दृतिकाराः वरुट्टाः–पिच्छिकाः छर्विकाः–कटादिकाराः कट्ठपाउरा–काष्ठपादुकाकाराः, एवं मुंजपाउयारा, 'छत्तारा' छत्रकाराः, एवं शेषाण्यपि पदानि भावनीयानि । ब्राह्मी यवनानीत्यादयो लिपिभेदास्तु संप्रदायादवसेयाः । उक्ता भाषार्याः, सम्प्रति ज्ञानार्यानाह—'से किं तं' इत्यादि सुगमम् । दर्शनार्यानाह–अथ के ते दर्शनार्याः ?, सूरिराह–दर्शनार्या द्विविधाः प्रज्ञप्ताः,

तद्यथा—सरागदर्शनार्या वीतरागदर्शनार्याश्च, तत्र सरागं—सकपायं यद्दर्शनं तेनार्याः सरागदर्शनार्याः वीतरागं—उपशान्तकपायं क्षीणकषायं वा यद्दर्शनं तेनार्या वीतरागदर्शनार्याः । तत्र सरागदर्शनार्यप्रतिपादनार्थमाह—'से किं तं' इत्यादि, अथ के ते सरागदर्शनार्याः ?, सूरिराह—सरागदर्शनार्या दशविधाः प्रज्ञप्ताः, तद्यथा—'निसग्गुवएस'- इत्यादि, अत्र रुचिशब्दः प्रत्येकमभिसंबध्यते, ततो निसर्गरुचिरिति द्रष्टव्यं, तत्र निसर्गः—स्वभावः तेन रुचिः—जिनप्रणीततत्त्वाभिलापरूपा यस्य स निसर्गरुचिः, उपदेशो—गुर्वादिना वस्तुतत्त्वकथनं तेन रुचिः—उक्तस्वरूपा यस्य स उपदेशरुचिः, आज्ञा—सर्वज्ञवचनात्मिका तस्यां रुचिः—अभिलापो यस्य स आज्ञारुचिः, जिनाज्ञैव मे तत्त्वं न शेषं युक्तिजातमिति योऽभिमन्यते स आज्ञारुचिरिति भावार्थः, 'सुत्तवीयरुइमेवत्ति' अत्रापि रुचिशब्दः प्रत्येकमभिसंबध्यते, सूत्रम्—आचाराङ्गाद्यङ्गप्रविष्टं अङ्गबाह्यम्—आवश्यकदशवैकालिकादि तेन रुचिर्यस्य स तथा, सूत्रमाचारादिकमङ्गप्रविष्टमङ्गबाह्यमावश्यकादिकमधीयानो यः सम्यक्त्वमवगाहते प्रसन्नप्रसन्नतराध्यवसायश्च भवति स सूत्ररुचिरिति भावार्थः, बीजमिव बीजं—यदेकमप्यनेकार्थप्रबोधोत्पादकं वचः तेन रुचिर्यस्य स बीजरुचिः, अनयोश्च पदयोः समाहारद्वन्द्वः तेन नपुंसकनिर्देशः, एवेति समुच्चये, 'अहिगमवित्थाररुइत्ति' अत्रापि रुचिशब्दस्य प्रत्येकमभिसंबन्धः, अधिगमरुचिर्विस्ताररुचिश्च, तत्राधिगमो—विशिष्टं परिज्ञानं तेन रुचिर्यस्यासावधिगमरुचिः, विस्तारो—व्यासः सकलद्वादशाङ्गस्य नयैः पर्यालोचनमिति भावः, तेनोपबृंहिता रुचिर्यस्य स विस्ताररुचिः, 'किरियासंखेव-

धम्मरुइत्ति' रुचिशब्दस्यात्रापि प्रत्येकं संबन्धात् क्रियारुचिः संक्षेपरुचिर्धर्मरुचिरिति द्रष्टव्यं, तत्र क्रिया—सम्यक्संयमानुष्ठानं तत्र रुचिर्यस्य स क्रियारुचिः, संक्षेपः—संग्रहः तत्र रुचिर्यस्य विस्तरार्थापरिज्ञानात् स संक्षेपरुचिः धर्मे-अस्तिकायधर्मे श्रुतधर्मादौ वा रुचिर्यस्य स धर्मरुचिरिति गाथासंक्षेपार्थः ॥ व्यासार्थं तु सूत्रकृदेव स्वत आह—'भूयत्थेण' इत्यादि, 'भूयत्थेण' इति भावप्रधानो निर्देशः, ततोऽयमर्थः—भूतार्थत्वेन—सद्भूता अमी पदार्था इत्येवंरूपेण यस्याधिगताः—परिज्ञाता जीवाजीवाः पुण्यं पापमाश्रवं संवरः चशब्दाद् बन्धादयश्च, कथमधिगताः ? इत्याह—'सहसम्मुइआ' इति आर्षत्वाद् विभक्तिलोपाच्च सहसंमत्या सह—आत्मना या संगता मतिः सा सहसंमतिः तया, किमुक्तं भवति ?—परोपदेशनिरपेक्षया जातिस्मरणप्रतिभादिरूपया मत्या, न केवलमधिगताः, किन्तु तान् जीवादीन् पदार्थान् वेदयतेऽनुरोचयति च तत्त्वरूपतयाऽऽत्मसात्परिणामयति चेति भावः, एष निसर्गरुचिर्विज्ञेय इति शेषः। अमुमेवार्थं स्पष्टतरमभिधित्सुराह—'जो जिणदिट्ठे भावे' इत्यादि, यो जिनदृष्टान् भावान् द्रव्यक्षेत्रकालभावभेदतो नामादिभेदतो वा चतुर्विधान् स्वयमेव—उपदेशनिरपेक्षः श्रद्धाति, केनोल्लेखेन श्रद्धाति ?, तत आह—'एवमेव एतत्—जीवादि यथा जिनैर्दृष्टं नान्यथा इति, चः समुच्चये, एष निसर्गरुचिरिति ज्ञातव्यः ॥ उपदेशरुचिमाह—'एए चेव' इत्यादि, एतानेव जीवादिभावान् परेण छद्मस्थेन जिनेन वोपदिष्टान् श्रद्धाति एष उपदेशरुचिरिति ज्ञातव्यः। आज्ञारुचिमाह—'जो हेउमयाणंतो' इत्यादि, यो हेतुं—विवक्षितार्थगमकमजानानः प्रवचनमाज्ञयैव तुशब्द एवकारार्थः

केवलया रोचते, कथम् ? इत्याह–एवमेतत् प्रवचनोक्तमर्थजातं नान्यथेति एष आज्ञारुचिर्नाम । सूत्ररुचिमाह–'जो सुत्तं' इत्यादि, यः सूत्रम्—अङ्गप्रविष्टमङ्गबाह्यं वा अधीयानस्तेन श्रुतेनाङ्गप्रविष्टेनाङ्गबाह्येन वा सम्यक्त्वमवगाहते स सूत्ररुचिरिति ज्ञातव्यः । वीजरुचिमाह—'एगपएणेगाइं' इत्यादि, एकेन पदेन प्रक्रमाज्जीवादीनामनेकानि पदानि-प्राकृतत्वेन विभक्तिव्यत्ययादनेकेषु जीवादिषु पदेषु यः सम्यक्त्वमिति धर्मधर्मिणोरभेदोपचारात् सम्यक्त्ववान् आत्मा प्रसरति तुशब्दोऽवधारणार्थः प्रसरत्येव, कथम् ? इत्याह–उदक इव तैलविन्दुः, किमुक्तं भवति ?–यथा उदकैकदेशगतोऽपि तैलविन्दुः समस्तमुदकमाक्रामति तथैकदेशोत्पन्नरुचिरप्यात्मा तथाविधक्षयोपशमभावादशेषेषु तत्त्वेषु रुचिमान् भवति स एवंविधो वीजरुचिरिति ज्ञातव्यः । अधिगमरुचिमाह–'सो होइ' इत्यादि, यस्य श्रुतज्ञानमर्थतो दृष्टमेकादशाङ्गानि, प्रकीर्णकमित्यत्र जातावेकवचनं, ततोऽयमर्थः–प्रकीर्णकानि उत्तराध्ययनादीनि दृष्टिवादः चशब्दादुपाङ्गानि च स भवत्यधिगमरुचिः । विस्ताररुचिमाह–'दव्वाण' इत्यादि, द्रव्याणां–धर्मास्तिकायादीनामशेषाणामपि सर्वे भावाः–पर्याया यथायोगं सर्वप्रमाणैः–प्रत्यक्षादिभिः सर्वैश्च नयविधिभिः–नैगमादिनयप्रकारैः उपलब्धाः स विस्ताररुचिरिति ज्ञातव्यः, सर्ववस्तुपर्यायप्रपञ्चावगमेन तस्या रुचेरतिनिर्मलरूपतया भावात् । क्रियारुचिमाह—'दंसण' इत्यादि, दर्शनं च ज्ञानं च चारित्रं च दर्शनज्ञानचारित्रं समाहारो द्वन्द्वः तस्मिन् तथा तपसि विनये च तथा सर्वासु समितिषु–ईर्यासमित्यादिषु सर्वासु च गुप्तिषु–मनोगुप्तिप्रभृतिषु यः क्रियाभावः स क्रियारु-

चिः, किमुक्तं भवति ?—यस्य भावतो दर्शनाद्याचारानुष्ठाने रुचिरस्ति स खलु क्रियारुचिर्नाम । संक्षेपरुचिमाह—'अणभिग्गहिय' इत्यादि, नाभिगृहीता कुत्सिता दृष्टिर्येनासावनभिगृहीतकुदृष्टिः, अविशारदः प्रवचने जिनप्रणीते शेषेषु च कपिलादिप्रणीतेषु प्रवचनेषु अनभिगृहीतो—न विद्यते आभिमुख्येनोपादेयतया गृहीतं—ग्रहणमस्य इत्यनभिगृहीतः, पूर्वमनभिगृहीतकुदृष्टिरित्यनेन दर्शनान्तरपरिग्रहः प्रतिषिद्धः अनेन परदर्शनपरिज्ञानमात्रमपि निषिद्धमिति विशेषः, स इत्थंभूतः संक्षेपरुचिरिति ज्ञातव्यः ॥ धर्मरुचिमाह—'जो अत्थिकाय' इत्यादि, यः खलु जीवोऽस्तिकायानां—धर्मास्तिकायादीनां धर्मं—गत्युपष्टम्भकत्वादिरूपं स्वभावं श्रुतधर्मं चारित्रधर्मं च जिनाभिहितं श्रद्धाति स धर्मरुचिरिति ज्ञातव्यः ॥ तदेवं निसर्गाद्युपाधिभेदाद् दशधा रुचिरूपं दर्शनमुक्तं, सम्प्रति यैर्लिङ्गैरिदमुत्पन्नमस्ति इति निश्चीयते तानि लिङ्गान्युपदर्शयन्नाह—'परमत्थसंथवो वा' इत्यादि, परमाश्च—तात्त्विकाश्च तेऽर्थाश्च—जीवादयस्ते परमार्थाः तेषु संस्तवः—परिचयः, तात्पर्येण बहुमानपुरस्सरं जीवादिपदार्थावगमायाभ्यास इतियावत्, वाशब्दः समुच्चये, सुष्ठु—सम्यग्रीत्या दृष्टाः परमार्था—जीवादयो यैस्ते सुदृष्टपरमार्थाः तेषां सेवना—पर्युपास्तिः सुदृष्टपरमार्थसेवनं, स्त्रीत्वं प्राकृतत्वात्, वाशब्दोऽनुक्तसमुच्चये, यथाशक्ति तद्वैयावृत्यप्रवृत्तिश्च, अपिः समुच्चये, तथा 'वावन्नकुदंसणत्ति' दर्शनशब्दः प्रत्येकमभिसंबध्यते, व्यापन्नं—विनष्टं दर्शनं येषां ते व्यापन्नदर्शनाः—निह्नवादयः तथा कुत्सितं दर्शनं येषां ते कुदर्शनाः—शाक्यादयस्तेषां वर्जनं व्यापन्नकुदर्शनवर्जनम्, अत्रापि स्त्रीत्वं प्राकृतत्वात्, 'सम्मत्त-

सद्दहणा' इति सम्यक्त्वश्रद्धानं, एतैः परमार्थसंस्तवादिभिः सम्यक्त्वमस्तीति श्रद्धीयते इत्यर्थः । अस्य च दर्शनस्याचारा अष्टौ, ते च सम्यक् परिपालनीयाः, तदतिक्रमेण दर्शनस्याप्यतिक्रमभावात्, अतस्तानुपदर्शयितुमाह–'निस्संकिय' इत्यादि, शङ्कनं शङ्कितं, देशशङ्का सर्वशङ्का चेत्यर्थः, निर्गतं शङ्कितं यस्मादसौ निःशङ्कितः, देशसर्वशङ्कारहित इति भावार्थः, तत्र देशशङ्का—समाने जीवत्वे कथमेको भव्यः अपरस्त्वभव्य इति ?, सर्वशङ्का–प्राकृतनिवन्धत्वात्सकलमेवेदं प्रवचनं परिकल्पितं भविष्यतीति, न चेयं देशशङ्का सर्वशङ्का वा युक्ता, यत इह द्विविधा भावाः, तद्यथा–हेतुग्राह्या अहेतुग्राह्याश्च, तत्र हेतुग्राह्या जीवास्तित्वादयः, तत्साधकप्रमाणसद्भावात्, अहेतुग्राह्या अभव्यत्वादयः, अस्मदाद्यपेक्षया तत्साधकहेतूनामसंभवात्, प्रकृष्टज्ञानगोचरत्वात् तद्धेतूनामिति, प्राकृतोऽपि च निवन्धः प्रवचनस्य वालाद्यनुग्रहार्थः, उक्तं च–"वालस्त्रीमूढमूर्खाणां, नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः, सिद्धान्तः प्राकृतः स्मृतः ॥ १ ॥" अपि च—प्राकृतोऽपि निवन्धः प्रवचनस्य दृष्टेष्टाविरोधी अतः कथमवान्तरपरिकल्पनाशंङ्का ?, सर्वज्ञमन्तरेणान्यस्य दृष्टेष्टाविरोधिवचनासंभवात्, निःशङ्कित इति जीव एवार्हच्छासनप्रतिपन्नो दर्शनाचरणात् तत्प्राधान्यविवक्षायां दर्शनाचार उच्यते, एतेन दर्शनदर्शनिनोः कथंचिदभेदमाह, एकान्तभेदे तु अदर्शनिन इव तत्फलायोगतो मोक्षाभावप्रसङ्गः, एवमुत्तरेष्वपि त्रिषु पदेषु भावना कार्या, तथा 'निष्काङ्क्षित' इति, काङ्क्षणं काङ्क्षितं निर्गतं काङ्क्षितं यस्मादसौ निष्काङ्क्षितः, देशसर्वकाङ्क्षारहित इत्यर्थः, तत्र देशकाङ्क्षा–एकं दिगम्बरादिदर्शनम-

१ प्रज्ञापनापदे मनुष्यप्रज्ञा॰ (सू.३७)

भिकाङ्क्षते सर्वकाङ्क्षा—सर्वाण्येव दर्शनानि शोभनानीत्येवमनुचिन्तनं, इयं च द्विधाऽप्ययुक्ता, शेषदर्शनेषु षड्जीवनिकायपीडाया असत्प्ररूपणायाश्च भावात् । तथा विचिकित्सा—मतिविभ्रमः फलं प्रति संशय इतियावत् निर्गता विचिकित्सा यस्मादसौ निर्विचिकित्सः, 'साध्वेवं जिनशासनं, किन्तु प्रवृत्तस्य सतो ममास्मात् फलं भविष्यति न वा ?, क्रियायाः कृषिबलादिषु उभयथाऽप्युपलब्धेः' इतिविकल्परहितः, न ह्यविकल उपाय उपेयवस्तुप्रापको न भवतीति संजातनिश्चयो निर्विचिकित्स इति भावः, एतावताऽंशेन निःशङ्कितादु भिन्नः, यद्वा 'निविदुगुंछो' इति निर्विद्वज्जुगुप्सः साधुजुगुप्सारहित इत्यर्थः, उदाहरणं च विद्वज्जुगुप्सायां श्रावकदुहिता । तथा 'अमूढदिट्ठी यत्ति' बालतपस्वितपोविद्यातिशयदर्शनैर्न मूढा—स्वभावाच्चलिता दृष्टिः—सम्यग्दर्शनरूपा यस्यासावमूढदृष्टिः, अत्रोदाहरणं सुलसाश्राविका, सा ह्यम्बडपरिव्राजकसमृद्धीरुपलभ्यापि न संमोहं गता । तदेवं गुणिप्रधान आचार उक्तः, सम्प्रति गुणप्रधानमाह—'उववूह' इत्यादि, उपबृंहणं च स्थिरीकरणं च उपबृंहणस्थिरीकरणे, तत्रोपबृंहणं नाम समानधार्मिकाणां सद्गुणप्रशंसनेन तद्वृद्धिकरणं, स्थिरीकरणं धर्माद् विषीदतां तत्रैव स्थापनं । वात्सल्यं च प्रभावना च वात्सल्यप्रभावने, तत्र वात्सल्यं समानधार्मिकाणां प्रीत्योपकारकरणं, प्रभावना धर्मकथादिभिस्तीर्थप्रख्यापना । अयं च गुणप्रधाननिर्देशो गुणगुणिनोः कथञ्चिदभेदख्यापनार्थः, अन्यथा एकान्ताभेदे गुणनिवृत्तौ गुणिनोऽपि निवृत्तेः

शून्यतापत्तिः। एतेऽष्टौ दर्शनाचाराः॥ तदेवमुक्ताः सरागदर्शनभेदाः, तदभिधानाच्चाभिहिताः सरागदर्शनार्यभेदाः॥ सम्प्रति वीतरागदर्शनार्यादिभेदानाह–( से किं तमित्यादि, तदेवं दर्शनार्यभेदानुक्त्वा चारित्रार्यभेदानाह— )

से किं तं चरित्ता[य]रिया ?, चरित्तारिया दुविहा प०, तं०—सरागचरित्तारिया य वीयरागचरित्तारिया य, से किं तं सरागचरित्तारिया ?, सरागचरित्तारिया दुविहा प०, तं०—सुहुमसंपरायसरागचरित्तारिया य बायरसंपरायसरागचरित्तारिया य। से किं तं सुहुमसंपरायसरागचरित्तारिया ?, सुहुमसंपरायसरागचरित्तारिया दुविहा प०, तं०—पढमसमयसुहुमसंपरायसरागचरित्तारिया य अपढमसमयसुहुमसंपरायसरागचरित्तारिया य, अहवा चरिमसमयसुहुमसंपरायसरागचरित्तारिया य अचरिमसमयसुहुमसंपरायसरागचरित्तारिया य, अहवा सुहुमसंपरायसरागचरित्तारिया दुविहा प०, तं०—संकिलिस्समाणा य विसुज्झमाणा य, सेत्तं सुहुमसंपरायसरागचरित्तारिया। से किं तं बादरसंपरायसरागचरित्तारिया ?, बादरसंपरायसरागचरित्तारिया दुविहा प०, तं०—पढमसमयबादरसंपरायसरागचरित्तारिया अपढमसमयबादरसंपरायसरागचरित्तारिया य, अहवा चरिमसमयबादरसंपरायसरागचरित्तारिया य अचरिमसमयबादरसंपरायसरागचरित्तारिया य, अहवा बादरसंपरायसरागचरित्तारिया दुविहा प०, तं०—पडिवाई य अपडिवाई य, सेत्तं बादरसंपरायसरागचरित्तारिया, सेत्तं सरागचरित्तारिया। से किं तं वीयरायचरित्तारिया ?, वीयरायचरित्तारिया दुविहा प०, तं०—उवसंतकसायवीयरायचरित्तारिया य खीणकसायवीयरायचरित्तारिया य। से किं तं उवसंतकसायवीयरायचरित्तारिया ?, उवसंतकसायवीयरायचरित्तारिया दुविहा प०,तं ०—पढमसमयउवसंतकसायवीयरायचरित्तारिया य अपढमसम-

यउवसंतकसायवीयरायचरित्तारिया य,अहवा चरिमसमयउवसंतकसायवीयरायचरित्तारिया य अचरिमसमयउवसंतकसायवीयरायचरित्तारिया य, सेत्तं उवसंतकसायवीयरायचरित्तारिया । से किं तं खीणकसायवीयरायचरित्तारिया ?, खीणकसायवीयरायचरित्तारिया दुविहा प०, तं०—छउमत्थखीणकसायवीयरायचरित्तारिया य केवलिखीणकसायवीयरायचरित्तारिया य । से किं तं छउमत्थखीणकसायवीयरायचरित्तारिया ?, छउमत्थखीणकसायवीयरायचरित्तारिया दुविहा प०, तं०—सयंबुद्धछउमत्थखीणकसायवीयरायचरित्तारिया य बुद्धबोहियछउमत्थखीणकसायवीयरायचरित्तारिया य । से किं तं सयंबुद्धछउमत्थखीणकसायवीयरायचरित्तारिया ?, सयंबुद्धछउमत्थखीणकसायवीयरायचरित्तारिया दुविहा प०, तं०—पढमसमयसयंबुद्धछउमत्थखीणकसायवीयरायचरित्तारिया य अपढमसमयसयंबुद्धछउमत्थखीणकसायवीयरायचरित्तारिया य, अहवा चरिमसमयसयंबुद्धछउमत्थखीणकसायवीयरायचरित्तारिया य अचरिमसमयसयंबुद्धछउमत्थखीणकसायवीयरायचरित्तारिया य । सेत्तं सयंबुद्धखीणकसायवीयरायचरित्तारिया । से किं तं बुद्धबोहियछउमत्थखीणकसायवीयरायचरित्तारिया ?, बुद्धबोहियछउमत्थखीणकसायवीयरायचरित्तारिया दुविहा प०, तं०—पढमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायचरित्तारिया य अपढमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायचरित्तारिया य, अहवा चरिमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायचरित्तारिया य अचरिमसमयबुद्धबोहियछउमत्थखीणकसायवीयरायचरित्तारिया य, सेत्तं बुद्धबोहियछउमत्थखीणकसायवीयरायचरित्तारिया, सेत्तं छउमत्थखीणकसायवीयरायचरित्तारिया । से किं तं केवलिखीणकसायवीयरायचरित्तारिया ?, केवलिखीणकसायवीयरायचरित्तारिया दुविहा प०, तं० सजोगिकेवलिखीणक-

सायवीयरायचरित्तारिया य अजोगिकेवलिखीणकसायवीयरायचरित्तारिया य । से किं तं सजोगिकेवलिखीणकसायवी-
यरायचरित्तारिया ?, सजोगिकेवलिखीणकसायवीयरायचरित्तारिया दुविहा प०, तं०—पढमसमयसजोगिकेवलिखीणक-
सायवीयरायचरित्तारिया य अपढमसमयसजोगिकेवलिखीणकसायवीयरायचरित्तारिया य, अहवा चरिमसमयसजोगिकेव-
लिखीणकसायवीयरायचरित्तारिया य अचरिमसमयसजोगिकेवलिखीणकसायवीयरायचरित्तारिया य, सेत्तं सजोगिकेवलि-
खीणकसायवीयरायचरित्तारिया । से किं तं अजोगिकेवलिखीणकसायवीयरायचरित्तारिया ?, अजोगिकेवलिखीणकसाय-
वीयरायचरित्तारिया दुविहा प०, तं०—पढमसमयअजोगिकेवलिखीणकसायवीयरायचरित्तारिया य अपढमसमयअजोगि-
केवलिखीणकसायवीयरायचरित्तारिया य, अहवा चरिमसमयअजोगिकेवलिखीणकसायवीयरायचरित्तारिया य अचरिमस-
मयअजोगिकेवलिखीणकसायवीयरायचरित्तारिया य, सेत्तं अजोगिकेवलिखीणकसायवीयरायचरित्तारिया, सेत्तं केवलिखी-
णकसायवीयरायचरित्तारिया, सेत्तं खीणकसायवीयरायचरित्तारिया सेत्तं वीयरायचरित्तारिया । अहवा चरित्तारिया
पंचविहा प०, तं०—सामाइअचरित्तारिया छेदोवट्ठावणीयचरित्तारिया परिहारविसुद्धिचरित्तारिया सुहुमसंपरायचरित्ता-
रिया अहक्खायचरित्तारिया य । से किं तं सामाइयचरित्तारिया ?, सामाइयचरित्तारिया दुविहा प०, तं०—इत्तरिय-
सामाइयचरित्तारिया य आवकहियसामाइयचरित्तारिया य, सेत्तं सामाइयचरित्तारिया । से किं तं छेदोवट्ठावणियचरित्ता-
रिया ?, छेदोवट्ठावणियचरित्तारिया दुविहा प०, तं०—साइयारछेदोवट्ठावणियचरित्तारिया य निरइयारछेदोवट्ठावणियच-
रित्तारिया य, सेत्तं छेदोवट्ठावणियचरित्तारिया । से किं तं परिहारविसुद्धियचरित्तारिया ?, परिहारविसुद्धियचरित्तारिया

दुविहा प०, तं०—निव्विस्समाणपरिहारविसुद्धियचरित्तारिया य निविट्ठकाइयपरिहारविसुद्धियचरित्तारिया य, से त्तं परिहारविसुद्धियचरित्तारिया । से किं तं सुहुमसंपरायचरित्तारिया ?, सुहुमसंपरायचरित्तारिया दुविहा प०, तं०—संकिलिस्समाणसुहुमसंपरायचरित्तारिया य विसुज्झमाणसुहुमसंपरायचरित्तारिया य, सेत्तं सुहुमसंपरायचरित्तारिया । से किं तं अहक्खायचरित्तारिया ?, अहक्खायचरित्तारिया दुविहा प०, तं०—छउमत्थअहक्खायचरित्तारिया य केवलिअहक्खायचरित्तारिया य, सेत्तं अहक्खायचरित्तारिया, सेत्तं चरित्तारिया, सेत्तं अणिड्ढिपत्तारिया, सेत्तं कम्मभूमगा, सेत्तं गब्भवक्कंतिया, सेत्तं मणुस्सा । ( सू० ३७ )

'से किं तं' इत्यादि सुगमं, यावद् 'अहवा चरित्तारिया पंचविहा पन्नत्ता तंजहा—सामाइअचरित्तारिया' इत्यादि, नवरं पढमसमय० अपढमसमय० इति, ये तेषामेवोपशान्तकषायत्वादीनां विशेषाणां प्रथमे समये वर्तन्ते ते प्रथमसमयाः, ततो द्वितीयादिषु समयेषु वर्तमाना अप्रथमसमयाः, तथा 'चरिमसमय० अचरिमसमय०' इति ये तेषामेवोपशान्तकषायत्वादीनां विशेषाणामन्त्यसमये वर्तन्ते ते चरमसमयाः, ये ततोऽर्वाग् द्विचरमत्रिचरमादिषु समयेषु वर्तन्ते ते अचरमाः। सामायिकादिचारित्राणां स्वरूपमिदम्—समो रागद्वेषरहितत्वाद् आयो गमनं समायः एष चान्यासामपि साधुक्रियाणामुपलक्षणं, सर्वासामपि साधुक्रियाणां रागद्वेषरहितत्वात्, समायेन निर्वृत्तं समाये भवं वा सामायिकं, यद्वा समानां—ज्ञानदर्शनचारित्राणामायो—लाभः समायः समाय एव सामायिकं विनयादेराकृतिगणतया "विन-

यादिभ्यः'' (पा०५-४-३४) इत्यनेन स्वार्थिक इकण्, तच्च सर्वसावद्यविरतिरूपं, यद्यपि च सर्वमपि चारित्रमविशेषतः सामायिकं तथाऽपि छेदादिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते, प्रथमं पुनरविशेषणात् सामान्यशब्द एवावतिष्ठते सामायिकमिति, तच्च द्विधा—इत्वरं यावत्कथिकं च, तत्रेत्वरं भरतैरावतेषु प्रथमपश्चिमतीर्थकरतीर्थेष्वनारोपितमहाव्रतस्य शैक्षकस्य विज्ञेयं, यावत्कथिकं प्रव्रज्याप्रतिपत्तिकालादारभ्याप्राणोपरमात्, तच्च भरतैरावतभाविमध्यद्वाविंशतितीर्थकरतीर्थान्तरगतानां विदेहतीर्थकरतीर्थान्तरगतानां च साधूनामवसेयं, तेषामुपस्थापनाया अभावात्, उक्तं च—''सव्वमिणं सामाइय छेयाइविसेसियं पुण विभिन्नं। अविसेसं सामाइय चियमिह सामन्नसन्नाए ॥१॥ सावज्जजोगविरइत्ति तत्थ सामाइयं दुहा तं च। इत्तरमावकहंति य पढमं पढमंतिमजिणाणं ॥२॥ तित्थेसु अणारोवियवयस्स सेहस्स थोवकालीयं। सेसाणमावकहियं तित्थेसु विदेहयाणं च ॥३॥'' ननु च इत्वरमपि सामायिकं करोमि भदन्त! सामायिकं यावज्जीवमित्येवं यावदायुरागृहीतं, तत उपस्थापनाकाले तत्परित्यजतः कथं न प्रतिज्ञाभङ्गः?, उच्यते, ननु प्रागेवोक्तं—सर्वमेवेदं चारित्रमविशेषतः सामायिकं, सर्वत्रापि सावद्ययोगविरतिसद्भावात्, केवलं छेदादिविशुद्धिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते, ततो यथा यावत्कथिकं सामायिकं छेदोपस्थापनं च परमविशुद्धिविशेषरूपसूक्ष्मसंपरायादिचारित्रावाप्तौ न भङ्गमास्कन्दति तथेत्वरमपि सामायिकं विशुद्धिविशेषरूपच्छेदोपस्थापनावाप्तौ, यदि हि प्रव्रज्या परित्यज्यते तर्हि तद् भङ्गमापद्यते, न तस्यैव विशुद्धिविशेषावाप्तौ, उक्तं च—''उन्निक्ख-

१ प्रज्ञापनापदे कर्माकर्मानार्यजात्याचार्यमनुष्यसूत्रं ३७

मओ भंगो जो पुण तं चिय करेइ सुद्धयरं । सन्नामेत्तविसिट्ठं सुहुमंपिव तस्स को भंगो ? ॥१॥” तथा छेदः पूर्वपर्यायस्य उपस्थापना च महाव्रतेषु यस्मिन् चारित्रे तच्छेदोपस्थापनं, तच्च द्विधा—सातिचारं निरतिचारं च, तत्र निरतिचारं यदित्वरसामायिकवतः शैक्षकस्यारोप्यते तीर्थान्तरसंक्रान्तौ वा, यथा पार्श्वनाथतीर्थाद् वर्द्धमानतीर्थं संक्रामतः पञ्चयामप्रतिपत्तौ, सातिचारं यन्मूलगुणघातिनः पुनर्व्रतोच्चारणं, उक्तं च—‘सेहस्स निरइयारं तित्थन्तरसंकमे व तं होज्जा । मूलगुणघाइणो साइयारमुभयं च ठियकप्पे ॥ १ ॥” ‘उभयं चेति’ सातिचारं निरतिचारं च ‘स्थितकल्पे’ इति प्रथमपश्चिमतीर्थकरतीर्थकाले । तथा परिहरणं परिहारः—तपोविशेषः तेन विशुद्धिर्यस्मिन् चारित्रे तत्परिहारविशुद्धिकं, तच्च द्विधा—निर्विशमानकं निर्विष्टकायिकं च, तत्र निर्विशमानका विवक्षितचारित्रासेवकाः, निर्विष्टकायिका आसेवितविवक्षितचारित्रकायाः, तदव्यतिरेकाच्चारित्रमप्येवमुच्यते । इह नवको गणः—चत्वारो निर्विशमानकाश्चत्वारश्चानुचारिणः एकः कल्पस्थितो वाचनाचार्यः, यद्यपि च सर्वेऽपि श्रुतातिशयसंपन्नाः तथाऽपि कल्पत्वात् तेषामेकः कश्चित् कल्पस्थितोऽवस्थाप्यते । निर्विशमानकानां चायं परिहारः—[1]परिहारियाण उ तवो जहन्न मज्झो तहेव उक्कोसो । सीउण्हवासकाले भणिओ धीरेहि पत्तेयं ॥ १ ॥ तत्थ जहन्नो गिम्हे चउत्थ छट्ठं तु होइ मज्झिमओ ।

---

१ परिहारिकाणां तु तपः जघन्यं मध्यमं तथैवोत्कृष्टं । शीतोष्णवर्षाकाले भणितं धीरैः प्रत्येकम् ॥ १ ॥ तत्र जघन्यं ग्रीष्मे चतुर्थं षष्ठं तु भवति मध्यमं ।

अट्ठममिह उक्कोसो एत्तो सिसिरे पवक्खामि ॥२॥ सिसिरे उ जहन्नाई छट्ठाई दसमचरिमगो होइ। वासासु अट्ठमाई
बारसपज्जन्तगो नेओ ॥ ३ ॥ पारणगे आयामं पंचसु अगहो दोसुऽभिग्गहो भिक्खे । कप्पट्ठिया पइदिणं करेन्ति
एमेव आयामं ॥ ४ ॥ एवं छम्मासतवं चरिउं परिहारगा अणुचरन्ति । अणुचरगे परिहारियपयट्ठिए जाव छम्मा-
सा ॥ ५ ॥ कप्पट्ठिएवि एवं छम्मासतवं करेइ सेसा उ। अणुपरिहारिगभावं वयंति कप्पट्ठियत्तं च ॥ ६ ॥ एवेसो
अट्ठारसमासपमाणो उ वण्णिओ कप्पो। संखेवओ विसेसो विसेससुत्ताउ नायव्वो ॥ ७ ॥ कप्पसमत्तीएँ तयं जिणक-
प्पं वा उविंति गच्छं वा। पडिवज्जमाणगा पुण जिणस्सगासे पवज्जंति ॥ ८ ॥ तित्थयरसमीवासेवगस्स पासे व नो उ
अन्नस्स। एएसिं जं चरणं परिहारविसुद्धियं तं तु ॥ ९ ॥ अथ एते परिहारविशुद्धिकाः कस्मिन् क्षेत्रे काले वा भव-

---

अष्टमं तु उत्कृष्टमितः शिशिरे प्रवक्ष्यामि ॥ २ ॥ शिशिरे तु जघन्यादि षष्ठादि दशमचरमकं भवति। वर्षासु अष्टमादि
द्वादशपर्यंतकं ज्ञेयं ॥ ३ ॥ पारणके आचाम्लं भिक्षायां च पञ्चानां ग्रहः द्वयोरभिग्रहः। कल्पस्थिता अपि प्रतिदिनं कुर्वन्ति एवमेवाचा-
म्लं ॥ ४ ॥ एवं षण्मासान् तपश्चरित्वा परिहारिका अनुचरन्ति । अनुचरकाः परिहारिकपदस्थिता यावत्षण्मासान् ॥ ५ ॥ कल्पस्थि-
तोऽप्येवं षण्मासांस्तपः करोति शेषाश्च। अनुपरिहारिकभावं व्रजन्ति कल्पस्थितत्वं च ॥ ६ ॥ एवं एषोऽष्टादशमासप्रमाणस्तु वर्णितः
कल्पः। सङ्क्षेपतो विशेषो विशेषसूत्रात् ज्ञातव्यः ॥ ७॥ कल्पसमाप्तौ तं ( परिहारं ) जिनकल्पं वोपयन्ति गच्छं वा। प्रतिपद्यमानकाः पुन-
र्जिनसकाशात्प्रपद्यन्ते ॥ ८ ॥ तीर्थकरसमीपासेवकस्य पार्श्वे न पुनरन्यस्य। एतेषां यच्चरणं परिहारविशुद्धिकं तत्तु ॥ ९ ॥

न्ति ?, उच्यते, इह क्षेत्रादिनिरूपणार्थं विंशतिद्वाराणि, तद्यथा—१ क्षेत्रद्वारं २ कालद्वारं ३ चारित्रद्वारं ४ तीर्थद्वारं ५ पर्यायद्वारं ६ आगमद्वारं ७ वेदद्वारं ८ कल्पद्वारं ९ लिङ्गद्वारं १० लेश्याद्वारं ११ ध्यानद्वारं १२ गणद्वारं १३ अभिग्रहद्वारं १४ प्रव्रज्याद्वारं १५ मुण्डापनद्वारं १६ प्रायश्चित्तविधिद्वारं १७ कारणद्वारं १८ निष्प्रतिकर्मताद्वारं १९ भिक्षाद्वारं २० वन्धद्वारम् । तत्र क्षेत्रे द्विधा मार्गणा—जन्मतः सद्भावतश्च, यत्र क्षेत्रे जातस्तत्र जन्मतः मार्गणा, यत्र च कल्पे स्थितो वर्तते तत्र सद्भावतः, उक्तं च—"[1]खेत्ते दुहेह मग्गण जम्मणओ चेव संतिभावे य । जम्मणओ जहिँ जातो संतीभावो य जहि कप्पो ॥ १ ॥" तत्र जन्मतः सद्भावतश्च पञ्चसु भरतेषु पञ्चस्वैरावतेषु, न तु महाविदेहेषु, न चैतेषां संहरणमस्ति, येन जिनकल्पिक इव संहरणतः सर्वासु कर्मभूमिषु अकर्मभूमिषु वा प्राप्येरन्, उक्तं च—"[2]खेत्ते भरहेरवएसु होन्ति संहरणवज्जिया नियमा" १। कालद्वारे—अवसर्पिण्यां तृतीये चतुर्थे वाऽरके जन्म, सद्भावः पञ्चमेऽपि, उत्सर्पिण्यां द्वितीये तृतीये चतुर्थे वा जन्म, सद्भावः पुनः तृतीये चतुर्थे वा, उक्तं च—"[3]ओसप्पिणीए दोसुं जम्मणओ तीसु संतीभावेण । उस्सप्पिणि विवरीओ जम्मणओ संतिभावेण ॥ १ ॥" नोत्सर्प्पिण्यवसर्प्पिणीरूपे तु चतुर्थारकप्रतिभागकाले न संभवन्ति, महाविदेहक्षेत्रे तेषामसंभवात् २। चारित्रद्वारे—संयमस्था-

१ क्षेत्रे द्विधेह मार्गणा जन्मतश्चैव सद्भावे च । जन्मतो यत्र जातः सद्भावतश्च यत्र कल्पः ॥ १ ॥ २ क्षेत्रे भरतैरावतेषु भवन्ति संहरणवर्जिता नियमात् । ३ अवसर्पिण्यां द्वयोर्जन्मतः तिसृषु सद्भावतः । उत्सर्पिण्यां विपरीतो जन्मतः सद्भावेन ॥ १ ॥

नद्वारेण मार्गणा, तत्र सामायिकस्य छेदोपस्थापनस्य च चारित्रस्य यानि जघन्यानि संयमस्थानानि तानि परस्परं तुल्यानि, समानपरिणामत्वात्, ततोऽसंख्येयलोकाकाशप्रदेशप्रमाणानि संयमस्थानान्यतिक्रम्योर्द्ध्वं यानि संयमस्थानानि तानि परिहारविशुद्धिकयोग्यानि, तान्यपि च केवलिप्रज्ञया परिभाव्यमानानि असंख्येयलोकाकाशप्रदेशप्रमाणानि, तानि प्रथमद्वितीयचारित्राविरोधीनि, तेष्वपि संभवात्, तत ऊर्ध्वं यानि संख्यातीतानि संयमस्थानानि तानि सूक्ष्मसंपराययथाख्यातचारित्रयोग्यानि, उक्तं च—"[1]तुल्ला जहन्नठाणे संजमठाणाणि पढमविइयाणं। तत्तो असंखलोए गंतुं परिहारियट्ठाणा ॥ १ ॥ तेऽवि असंखा लोगा अविरुद्धा चेव पढमविइयाणं। उवरिंपि तउ असंखा संजमठाणा उ दोण्हंपि ॥ २ ॥" तत्र परिहारविशुद्धिककल्पप्रतिपत्तिः स्वकीयेष्वेव संयमस्थानेषु वर्तमानस्य भवति न शेषेषु, यदा त्वतीतनयमधिकृत्य पूर्वप्रतिपन्नो विवक्ष्यते तदा शेषेष्वपि संयमस्थानेषु भवति, परिहारविशुद्धिकल्पसमाप्त्यनन्तरमन्येष्वपि चारित्रेषु संभवात्, तेष्वपि च वर्तमानस्यातीतनयमपेक्ष्य पूर्वप्रतिपन्नत्वाविरोधात्, उक्तं च—"[2]सट्ठाणे पडिवत्ती अन्नेसुवि होज्ज पुव्वपडिवन्नो। तेसुवि वट्टन्तो सो तीतनयं पप्प वुच्चति उ ॥१॥ ३।"

१ तुल्यानि जघन्यस्थाने संयमस्थानानि प्रथमद्वितीययोः। ततोऽसंख्यलोकान् गत्वा परिहारिकस्थानानि॥ १ ॥ तान्यपि असंख्या लोका अविरुद्धा एव प्रथमद्वितीययोः। उपर्यपि ततोऽसंख्येयानि संयमस्थानानि द्वयोस्तु ॥ २ ॥ २ स्वस्थाने प्रतिपत्तिरन्येष्वपि भवेत् पूर्वप्रतिपन्नः। तेष्वपि वर्त्तमानः सोऽतीतनयं प्राप्योच्यते तु ॥ १ ॥

तीर्थद्वारे परिहारविशुद्धिको नियमतस्तीर्थे प्रवर्तमाने एव सति भवति, न तच्छेदे नानुत्पत्त्यां वा तदभावे जातिस्मरणादिना, उक्तं च—"तित्थंत्ति नियमतोच्चिय होइ स तित्थंमि न उण तदभावे । विगएऽणुप्पन्ने वा जाइसरणाइएहिंतो ॥१॥ ४।" पर्यायद्वारे—पर्यायो द्विधा–गृहस्थपर्यायो यतिपर्यायश्च, एकैकोऽपि द्विधा–जघन्यत उत्कृष्टतश्च, तत्र गृहस्थपर्यायो जघन्यत एकोनत्रिंशद् वर्षाणि,यतिपर्यायो विंशतिः, द्वावपि च उत्कर्षतो देशोनपूर्वकोटिप्रमाणौ, उक्तं च—"एयस्स एस नेओ गिहिपज्जाओ जहन्निगुणतीसा । जइपज्जाओ वीसा दोसुवि उक्कोस देसूणा ॥१॥ ५।" आगमद्वारे–अपूर्वमागमं स नाधीते,यस्मात् तं कल्पमधिकृत्य प्रगृहीतोचितयोगाराधनत एव स कृतकृत्यतां भजते, पूर्वाधीतं तु विस्रोतसिकाक्षयनिमित्तं नित्यमेवैकाग्रमनाः सम्यक् प्रायेणानुस्मरति, आह च–"अप्पुव्वं नाहिज्जइ आगममेसो पडुच्च तं कप्पं । जमुचियपगहिअजोगाराहणओ चेव कयकिच्चो ॥ १ ॥ पुव्वाहीयं तु तयं पायमणुसरइ निच्चमेवेस । एगग्गमणो सम्मं विस्सोयसिगाइखयहेऊ ॥२॥ ६।" वेदद्वारे—प्रवृत्तिकाले वेदतः पुरुष-

---

१ तीर्थमिति नियमत एव भवति स तीर्थे न पुनस्तदभावे । विगतेऽनुत्पन्ने वा जातिस्मरणादिभिः ॥ १ ॥ २ एतस्यैष ज्ञातव्यो गृहिपर्यायो जघन्यत एकोनत्रिंशत् । यतिपर्यायो विंशतिः द्वयोरप्युत्कर्षतो देशोना (पूर्वकोटी) ॥ १ ॥ ३ अपूर्व नाधीते आगममेष प्रतीत्य तं कल्पम् । यदुचितप्रगृहीतयोगाराधनतश्चैव कृतकृत्यः ॥ १ ॥ पूर्वाधीतं तु तत् प्रायोऽनुसरति नित्यमेवैषः । एकाग्रमनाः सम्यक् विस्रोतसिकादिक्षयहेतोः ॥ २ ॥

वेदो वा भवेत् नपुंसकवेदो वा, न स्त्रीवेदः, स्त्रियाः परिहारविशुद्धिकल्पप्रतिपत्त्यसंभवात्, अतीतनयमधिकृत्य पुनः पूर्वप्रतिपन्नश्चिन्त्यमानः सवेदो वा भवेत् अवेदो वा, तत्र सवेदः श्रेणिप्रतिपत्त्यभावे उपशमश्रेणिप्रतिपत्तौ वा, क्षपकश्रेणिप्रतिपत्तौ त्ववेद इति, उक्तं च—"वेदो पवित्तिकाले इत्थीवज्जो उ होइ एगयरो । पुव्वपडिवन्नगो पुण होज्ज सवेदो अवेदो वा ॥१॥ ७।" कल्पद्वारे—स्थितकल्पे एवायं नास्थितकल्पे, "ठियकप्पंमि य नियमा" इति वचनात्, तत्राचेलक्यादिषु दशस्वपि स्थानेषु ये स्थिताः साधवः तत्कल्पः स्थितकल्प उच्यते, ये पुनश्चतुर्षु शय्यातरपिण्डादिष्वस्थितेषु कल्पेषु स्थिताः शेषेषु चाचेलक्यादिषु षट्स्वस्थिताः तत्कल्पोऽस्थितकल्पः, उक्तं च—"ठियअठियओ य कप्पो आचेलकाइएसु ठाणेसु । सवेसु ठिया पढमो चउ ठिय छसु अट्ठिया बीओ ॥ १ ॥" आचेलक्यादीनि च दश स्थानान्यमूनि—"आचेलकुद्देसियसेज्जायररायपिंडकिइकम्मे । वयजेट्ठपडिक्कमणे मासं पज्जोसवणकप्पो ॥ १ ॥ चत्वारश्चावस्थिताः कल्पा इमे—"सेज्जायरपिडम्मी चाउज्जामे य पुरिसजेट्ठे य । किइकम्मस्स य करणे चत्तारि अवट्ठिया कप्पा ॥१॥ ८।" लिङ्गद्वारे—नियमतो द्विविधेऽपि लिङ्गे भवति, तद्यथा—द्रव्यलिङ्गे भावलिङ्गे च, एकेनापि विना

१ वेदः प्रवृत्तिकाले स्त्रीवर्जस्तु भवत्येकतरः । पूर्वप्रतिपन्नकः पुनर्भवेत् सवेदोऽवेदो वा ॥ १ ॥ २ स्थितास्थितश्च कल्प आचेलक्यादिकेषु स्थानेषु । सर्वेषु स्थिताः प्रथमः चतुर्षु स्थिताः षट्स्वस्थिता द्वितीयः ॥ १ ॥ ३ आचेलक्यमाधाकर्मिकं शय्यातरः राजपिण्डः कृतिकर्म । व्रतानि ज्येष्ठः प्रतिक्रमणं मासः पर्युषणाकल्पः ॥ १ ॥

विवक्षितकल्पोचितसामाचार्ययोगात् ९ । लेश्याद्वारे—तेजःप्रभृतिकासूत्तरासु तिसृषु विशुद्धासु लेश्यासु परिहारविशुद्धिकं कल्पं प्रतिपद्यते, पूर्वप्रतिपन्नः पुनः सर्वास्वपि कथञ्चिद् भवति, तत्रापीतरास्वविशुद्धलेश्यासु नात्यन्तसंक्लिष्टासु वर्तते, तथाभूतासु वर्तमानो(ऽपि)न प्रभूतकालमवतिष्ठते, किंतु स्तोकं, यतः स्ववीर्यवशात् झटित्येव ताभ्यो व्यावर्तते, अथ प्रथमत एव कस्मात् प्रवर्तते ?, उच्यते, कर्मवशात्, उक्तं च—"लेसासु विसुद्धासुं पडिवज्जइ तीसु न उण सेसासु । पुव्वपडिवन्नओ पुण होज्जा सव्वासुवि कहंचि ॥ १ ॥ णऽच्चंतसंकिलिट्ठासु थोवं कालं स हंदि इयरासु । चित्ता कम्माण गई तहा विवरीयं (वि विरियं) फलं देइ ॥ २ ॥" १० । ध्यानद्वारे—धर्मध्यानेन प्रवर्धमानेन परिहारविशुद्धिकं कल्पं प्रतिपद्यते, पूर्वप्रतिपन्नः पुनरार्त्तरौद्रयोरपि भवति, केवलं प्रायेण निरनुबन्धः, आह च—"झाणंमिवि धम्मेणं पडिवज्जइ सो पवड्ढमाणेणं । इयरेसुवि झाणेसुं पुव्वपवन्नो न पडिसिद्धो ॥ १ ॥ एवं च झाणजोगे उद्दामे तिव्वकम्मपरिणामा । रोद्दऽट्टेसुवि भावो इमस्स पायं निरणुबन्धो ॥२॥" ११ । गणनाद्वारे—जघन्यतः त्रयो गणाः प्रतिपद्यन्ते, उत्कर्षतस्तु शतसंख्याः, पूर्वप्रतिपन्ना जघन्यत उत्कृष्टतो वा शतशः, पुरुषगणनया जघन्यतः प्रतिपद्यमानाः सप्तविंशतिः उत्कर्षतः सहस्रं, पूर्वप्रतिपन्नकाः पुनर्जघन्यतः शतशः उत्कर्षतः सहस्रशः, आह च—"गणओ तिन्नेव गणा जहन्न पडिवत्ति सहस उक्कोसा । उक्कोस जहन्नेणं सयसोच्चिय पुव्वपडिवन्ना ॥ १ ॥ सत्तावीस जहन्ना सहस्समुक्कोसओ य पडिवत्ती । सयसो सहस्ससो वा पडिवन्न जहन्नउक्कोसा ॥ २ ॥" अन्यच्च—

यदा पूर्वप्रतिपन्नः कल्पमध्यादेको निर्गच्छति अन्यः प्रविशति तदोनप्रक्षेपे प्रतिपत्तौ कदाचिदेकोऽपि भवति पृथक्त्वं वा, पूर्वप्रतिपन्नोऽप्येवं भजनया कदाचिदेकः प्राप्यते पृथक्त्वं वा, उक्तं च—"पडिवज्जमाण भयणाएँ होज्ज एक्कोऽवि ऊणपक्खेवे । पुव्वपडिवन्नयावि य भइआ एको पुहुत्तं वा ॥१॥" १२ । अभिग्रहद्वारे—अभिग्रहाश्चतुर्विधाः, तद्यथा—द्रव्याभिग्रहाः क्षेत्राभिग्रहाः कालाभिग्रहाः भावाभिग्रहाश्च, एते चान्यत्र चर्चिता इति न भूयश्चर्च्यन्ते, तत्र परिहारविशुद्धिकस्यैतेऽभिग्रहा न भवन्ति, यस्मादेतस्य कल्प एव यथोदितरूपोऽभिग्रहो वर्तते, उक्तं च—"दव्वाईअभिग्गह विचित्तरूवा न होन्ति पुण केइ । एअस्स जीअकप्पो कप्पोग्गियऽभिग्गहो जेणं ॥ १ ॥ एयंमि गोयराई नियया नियमेण निरववादा य । तप्पालणं चिय परं एअस्स विसुद्धिठाणं तु ॥२॥" १३ । प्रव्रज्याद्वारे—नासावन्यं प्रव्राजयति, कल्पस्थितिरेपेतिकृत्वा, आह च—"पव्वावेइ न एसो अन्नं कप्पट्ठिइत्ति काउणं" इति, उपदेशं पुनर्यथाशक्ति प्रयच्छति १४ । मुण्डापनद्वारेऽपि नासावन्यं मुण्डयति, अथ प्रव्रज्यानन्तरं नियमतो मुण्डनमिति प्रव्रज्याग्रहणेनैव तद् गृहीतमिति किमर्थं पृथग्द्वारं?, तदयुक्तं, प्रव्रज्याद्वारे नियमतो मुण्डनस्यासंभवात्, अयोग्यस्य कथञ्चिद्दत्तायामपि प्रव्रज्यायां पुनरयोग्यतापरिज्ञाने मुण्डनायोगात्, अतः पृथगिदं द्वारमिति १५ । प्रायश्चित्तविधिद्वारे—मनसाऽपि सूक्ष्ममप्यतिचारमापन्नस्य नियमतश्चतुर्गुरुकं प्रायश्चित्तमस्य, यत एष कल्प एकाग्रताप्रधानः, ततस्तद्भङ्गे गुरुतरो दोष इति १६ । कारणद्वारे—तथा कारणं नामालम्बनं तत्पुनः सुपरिशुद्धं ज्ञानादिकं तस्यास्य न

विद्यते येन तदाश्रित्यापवादसेविता स्यात्, एष हि सर्वत्र निरपेक्षः क्लिष्टकर्मक्षयनिमित्तं प्रारब्धमेव स्वं कल्पं यथोक्तविधिना समापयन् महात्मा वर्तते, उक्तं च—"कारणमालंवणमो तं पुण नाणाइअं सुपरिसुद्धं। एअस्स तं न विज्जइ उचियं तवसाहणो पायं ॥ १ ॥ सव्वत्थ निरवयक्खो आढत्तं चिय दढं समाणंतो। वट्टइ एस महप्पा किलिट्ठकम्मक्खयनिमित्तं ॥ २ ॥" १७। निष्प्रतिकर्मताद्वारे—एष महात्मा निष्प्रतिकर्मशरीरः अक्षिमलादिकमपि कदाचिन्नापनयति, न च प्राणान्तिकेऽपि समापतिते व्यसने द्वितीयं पदं सेवते, उक्तं च—"निप्पडिकम्मसरीरो अच्छिमलाईवि नावणेइ सया। पाणन्तिएऽविय महावसणंमि न वट्टए वीए ॥१॥ अप्पवहुत्तालोयणविसयातीओ उ होइ एसत्ति। अहवा सुहभावाओ बहुगं एयं चिय इमस्स ॥ २ ॥" १८। भिक्षाद्वारे—भिक्षा विहारक्रमश्च तृतीयस्यां पौरुष्यां भवति, शेषासु च पौरुषीषु कायोत्सर्गः, निद्राऽपि चास्याल्पा द्रष्टव्या, यदि पुनः कथमपि जङ्घाबलमस्य परिक्षीणं भवति तथाऽप्येषोऽविहरन्नपि महाभागो न द्वितीयपदमापद्यते, किन्तु तत्रैव यथाकल्पमात्मीयं योगं विदधातीति, उक्तं च—"तइयाए पोरसीए भिक्खाकालो विहारकालो उ। सेसासुं उस्सग्गो पायं अप्पा य निद्दत्ति ॥१॥ जंघाबलंमि खीणे अविहरमाणोऽवि न परमावज्जे। तत्थेव अहाकप्पं कुणइ उ जोगं महाभागो ॥२॥" १९। (वन्धेऽष्ट सप्त वा २०) एते च परिहारविशुद्धिका द्विविधाः, तद्यथा—इत्वरा यावत्कथिकाश्च, तत्र ये कल्पसमाप्त्यनन्तरं तमेव कल्पं गच्छं वा समुपयास्यन्ति ते इत्वराः, ये पुनः कल्पसमाप्त्यनन्तरमव्यवधानेन जिनकल्पं प्रतिपत्स्यन्ते ते

यावत्कथिकाः, उक्तं च—"इत्तरिय थेरकप्पे जिणकप्पे आवकहियत्ति" अत्र स्थविरकल्पग्रहणमुपलक्षणं, स्वकल्पे चेति द्रष्टव्यं, तत्रेत्वराणां कल्पप्रभावाद् देवमनुष्यतैर्यग्योनिकृता उपसर्गाः सद्योघातिन आतङ्का अतीवाविपह्याश्च वेदना न प्रादुष्यन्ति, यावत्कथिकानां संभवेयुरपि, ते हि जिनकल्पं प्रतिपत्स्यमाना जिनकल्पभावमनुविदधति, जिनकल्पिकानां चोपसर्गादयः संभवन्तीति, उक्तं च—"इत्तरियाणुवसग्गा आतंका वेयणा य न हवन्ति । आवकहियाण भइआ०" इति । तथा सूक्ष्मो लोभांशावशेषः संपरायः—कषायोदयो यत्र तत् सूक्ष्मसंपरायं, तच्च द्विधा—विशुध्यमानकं संक्लिश्यमानकं च, तत्र विशुध्यमानकं क्षपकश्रेणिमुपशमश्रेणिं वा समारोहतः, संक्लिश्यमानकं तूपशमश्रेणितः प्रच्यवमानस्य । 'अथाख्यात'मिति अथशब्दो यथार्थे आङ् अभिविधौ याथातथ्येनाभिविधिना वा यत्ख्यातं—कथितं अकषायं चारित्रमिति तदथाख्यातं, उक्तं च—"अहसद्दो(उ) जहत्थे आङोऽभिविहीएँ कहियमक्खायं । चरणमकसायमुइयं तमहक्खायं जहक्खायं ॥ १ ॥" 'यथाख्यात'मिति द्वितीयं नाम, तस्यायमन्वर्थः—यथा सर्वस्मिन् लोके ख्यातं—प्रसिद्धं अकषायं भवति चारित्रमिति तथैव यद् तद् यथाख्यातं, तच्च द्विधा—छाद्मस्थिकं कैवलिकं च, तत्र छाद्मस्थिकमुपशान्तमोहगुणस्थानके क्षीणमोहगुणस्थानके वा कैवलिकं सयोगिकेवलिभवमयोगिकेवलिभवं च । 'सेत्तं' इत्यादि उपसंहारकदम्बसूत्रं सुगमं ॥ तदेवमुक्ता मनुष्याः, सम्प्रति देवप्रतिपादनार्थमाह—

से किं तं देवा ?, देवा चउविहा प०, तं०—भवणवासी वाणमंतरा जोइसिआ वेमाणिआ। से किं तं भवणवासी ?, भवणवासी दसविहा प०, तं०—असुरकुमारा नागकुमारा सुवन्नकुमारा विज्जुकुमारा अग्गिकुमारा दीवकुमारा उदहिकुमारा दिसाकुमारा वाउकुमारा थणियकुमारा, ते समासओ दुविहा प०, तं०—पज्जत्तगा य अपज्जत्तगा य, सेत्तं भवणवासी। से किं तं वाणमंतरा ?, वाणमंतरा अट्ठविहा प०, तं०—किन्नरा किंपुरिसा महोरगा गंधव्वा जक्खा रक्खसा भूया पिसाचा, ते समासओ दुविहा प०, तं०—पज्जत्तगा य अपज्जत्तया य, सेत्तं वाणमन्तरा। से किं तं जोइसिया ?, जोइसिया पंचविहा प०, तं०—चंदा सूरा गहा नक्खत्ता तारा, ते समासओ दुविहा प०, तं०—पज्जत्तगा य अपज्जत्तगा य, सेत्तं जोइसिया॥ से किं तं वेमाणिया ?, वेमाणिआ दुविहा प०, तं०—कप्पोवगा य कप्पाईया य, से किं तं कप्पोवगा ?, कप्पोवगा बारसविहा प०, तं०—सोहम्मा ईसाणा सणंकुमारा माहिंदा बंभलोया लंतया महासुक्का सहस्सारा आणया पाणया आरणा अच्चुया, ते समासओ दुविहा प०, तं०—पज्जत्तगा य अपज्जत्तगा य, से त्तं कप्पोवगा। से किं तं कप्पाईया ?, कप्पाईया दुविहा प०, तं०—गेविज्जगा य अणुत्तरोववाइया य, से किं तं गेविज्जगा ?, गेविज्जगा नवविहा प०, तं०—हिट्ठिमहिट्ठिमगेविज्जगा हिट्ठिममज्झिमगेविज्जगा हिट्ठिमउवरिमगेविज्जगा मज्झिमहेट्ठिमगेविज्जगा मज्झिममज्झिमगेविज्जगा मज्झिमउवरिमगेविज्जगा उवरिमहेट्ठिमगेविज्जगा उवरिममज्झिमगेविज्जगा उवरिमउवरिमगेविज्जगा, ते समासओ दुविहा प०, तं०—पज्जत्तगा य अपज्जत्तगा य, सेत्तं गेविज्जगा। से किं तं अणुत्तरोववाइया ?, अणुत्तरोववाइया पंचविहा प०, तं०—विजया वेजयन्ता जयन्ता अपराजिता सव्वट्ठसिद्धा, ते समासओ दुविहा प०, तं०—पज्जत्तगा य अपज्जत्तगा य, सेत्तं

अणुत्तरोववाइआ, सेत्तं कप्पाईया, सेत्तं वेमाणिआ, सेत्तं देवा, सेत्तं पंचिंदिया, सेत्तं संसारसमावन्नजीवपन्नवणा, से त्तं जीवपन्नवणा, सेत्तं पन्नवणा ॥ (सू० ३८) पन्नवणाए भगवईए पढमपयं सम्मत्तं ।

'से किं तं' इत्यादि, अथ के ते देवाः ?, सूरिराह—देवाश्चतुर्विधाः प्रज्ञप्ताः, तद्यथा—भवनवासिनो व्यन्तरा ज्योतिष्का वैमानिकाः, तत्र भवनेषु वसन्तीत्येवंशीला भवनवासिनः, एतद् बाहुल्यतो नागकुमाराद्यपेक्षया द्रष्टव्यं, ते हि प्रायो भवनेषु वसन्ति कदाचिदावासेषु, असुरकुमारास्तु प्राचुर्येणावासेषु कदाचिद् भवनेषु, अथ भवनानामावासानां च कः प्रतिविशेषः ?, उच्यते, भवनानि बहिर्वृत्तान्यन्तः समचतुरस्राणि अधः पुष्करकर्णिकासंस्थानानि, आवासाः कायमानस्थानीया महामण्डपा विविधमणिरत्नप्रदीपप्रभासितसकलदिक्चक्रवाला इति । अन्तरं नामावकाशः, तच्चेहाश्रयरूपं द्रष्टव्यं, विविधं भवननगरावासरूपमन्तरं येषां ते व्यन्तराः । [ तत्र भवनानि रत्नप्रभायाः प्रथमे रत्नकाण्डे उपर्यधश्च प्रत्येकं योजनशतमपहाय शेषे अष्टयोजनशतप्रमाणे मध्यभागे भवन्ति, नगराण्यपि तिर्यग्लोके, तत्र तिर्यग्लोके यथा जम्बूद्वीपद्वाराधिपतेर्विजयदेवस्यान्यस्मिन् जम्बूद्वीपे द्वादशयोजनसहस्रप्रमाणा नगरी, आवासाः त्रिष्वपि लोकेषु, तत्रोर्द्ध्वलोके पण्डकवनादाविति ] अथवा विगतमन्तरं मनुष्येभ्यो येषां ते व्यन्तराः तथाहि—मनुष्यानपि चक्रवर्तिवासुदेवप्रभृतीन् भृत्यवदुपचरन्ति केचिद् व्यन्तरा इति मनुष्येभ्यो विगतान्तराः, यदि वा विविधमन्तरं—शैलान्तरं कन्दरान्तरं वनान्तरं वा आश्रयरूपं येषां ते व्यन्तराः, प्राकृतत्वाच्च सूत्रे 'वाणमन्तरा'

इति पाठः, यदिवा 'वानमन्तराः' इति पदसंस्कारः, तत्रेयं व्युत्पत्तिः—वनानामन्तराणि वनान्तराणि तेषु भवाः वानमन्तराः, पृषोदरादित्वाद् उभयपदान्तरालवर्तिमकारागमः, तथा द्योतयन्ति—प्रकाशयन्ति जगदिति ज्योतींषि-विमानानि, औणादिकी शब्दव्युत्पत्तिः, तेषु भवा ज्योतिष्काः "अध्यात्मादिभ्यः" इति इकण्, तत "इवर्णोवर्ण-दोसिसुसः" इति इकण आदेरिकारस्य लोपः, अनभिधानाच्च वृद्ध्यभावः, यदिवा द्योतयन्ति—शिरोमुकुटोपगूहिभिः प्रभामण्डलकल्पैः सूर्यादिमण्डलैः प्रकाशयन्तीति ज्योतिषो—देवाः सूर्यादयः, तथाहि—सूर्यस्य सूर्याकारं मुकुटाग्रभागे चिह्नं चन्द्रस्य चन्द्राकारं नक्षत्रस्य नक्षत्राकारं ग्रहस्य ग्रहाकारं तारकस्य तारकाकारं तैः प्रकाशयन्तीति, आह च तत्त्वार्थभाष्यकृत्—"द्योतयन्तीति ज्योतींषि—विमानानि तेषु भवा ज्योतिष्काः, यदिवा ज्योतिषो—देवाः ज्योतिष एव ज्योतिष्काः, मुकुटैः शिरोमुकुटोपगूहिभिः प्रभामण्डलैरुज्ज्वलैः सूर्यचन्द्रग्रहनक्षत्रतारकाणां मण्डलैर्यथास्वं चिह्नैर्विराजमाना द्युतिमन्तो ज्योतिष्का भवन्ती"ति। तथा विविधं मान्यन्ते—उपभुज्यन्ते पुण्यवद्भिर्जीवैरिति विमानानि तेषु भवा वैमानिकाः ॥ सम्प्रति एतेषामेव क्रमेण भेदानभिधित्सुराह—'से किं तं भवणवासी' इत्यादि, असुराश्च ते कुमाराश्च असुरकुमाराः, एवं नागकुमारा इत्याद्यपि भावनीयम्, अथ कस्मादेते कुमारा इति व्यपदिश्यन्ते ?, उच्यते, कुमारवच्चेष्टनात्, तथाहि—कुमारा इवैते सुकुमारा मृदुमधुरललितगतयः श्रृङ्गाराभिप्रायकृतविशिष्टविशिष्टतरोत्तररूपक्रियाः कुमारवच्चोद्धतरूपवेषभाषाभरणप्रहरणावरणयानवाहनाः कुमारवच्चोल्व-

णरागाः क्रीडनपराश्च ततः कुमारा इव कुमारा इति ॥ 'किंनरा' इत्यादि किन्नरा दशविधाः, तद्यथा—किन्नराः किंपुरुषाः किंपुरुषोत्तमाः किंनरोत्तमाः हृदयङ्गमा रूपशालिनः अनिन्दिताः मनोरमा रतिप्रिया रतिश्रेष्ठाः । किंपुरुषा दशविधाः, तद्यथा—पुरुषाः सत्पुरुषा महापुरुषाः पुरुषवृषभाः पुरुषोत्तमा अतिपुरुषा महादेवा मरुतः मेरुप्रभाः यशस्वन्तः । महोरगा दशविधाः, तद्यथा—भुजगा भोगशालिनः महाकाया अतिकायाः स्कन्धशालिनो मनोरमा महावेगा महे(हा)यक्षा मेरुकान्ता भास्वन्तः । गन्धर्वा द्वादशविधाः, हाहाः हूहूः तुम्बरवः नारदाः ऋषिवादिका भूतिवादिकाः कादम्बा महाकादम्बा रैवताः विश्वावसवः गीतरतयः गीतयशसः । यक्षास्त्रयोदशविधाः, तद्यथा—पूर्णभद्रा माणिभद्रा श्वेतभद्रा हरितभद्राः सुमनोभद्रा व्यतिपातिकभद्राः सुभद्राः सर्वतोभद्रा मनुष्यपक्षा वनाधिपतयः वनाहारा रूपयक्षा यक्षोत्तमाः । राक्षसाः सप्तविधाः, तद्यथा—भीमा महाभीमा विघ्ना विनायका जलराक्षसा राक्षसराक्षसा ब्रह्मराक्षसाः । भूता नवविधाः, तद्यथा—सुरूपाः प्रतिरूपा अतिरूपा भूतोत्तमाः स्कन्दा महास्कन्दा महावेगाः प्रतिच्छन्ना आकाशगाः । पिशाचाः षोडशविधाः, तद्यथा—कूष्माण्डाः पटकाः सुजा(जो)षा आह्निकाः काला महाकालाः चोक्षा अचोक्षाः तालपिशाचा मुखरपिशाचा अधस्तारका देहा विदेहा महादेहाः तूष्णीका वनपिशाचा इति । 'कप्पोवगा कप्पाईय'त्ति कल्पः—आचारः स चेह इन्द्रसामानिकत्रायस्त्रिंशादिव्यवहाररूपः तमुपगाः—प्राप्ताः कल्पोपगाः सौधर्मेशानादिदेवलोकनिवासिनः, यथोक्तरूपं कल्पमतीताः—अतिक्रा-

न्ताः कल्पातीताः—अधस्तनाधस्तनग्रैवेयकादिनिवासिनः, ते हि सर्वेऽप्यहमिन्द्राः, ततो भवन्ति कल्पातीताः। कल्पोपगान् दर्शयति—'सोहम्मा ईसाणा' इत्यादि, सौधर्मदेवलोकनिवासिनः सौधर्माः ईशानदेवलोकनिवासिन ईशानाः एवं सर्वत्रापि भावनीयं, भवति च तात्स्थ्यात् तद्व्यपदेशः, यथा 'पञ्चालदेशनिवासिनः पञ्चाला इति ॥'

इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां प्रथमं प्रज्ञापनाख्यं पदं समर्थितमिति ॥ (ग्रन्थाग्रं१८८७)

———→o←———

तदेवं व्याख्यातं प्रथमपदं, सम्प्रति द्वितीयं पदमारभ्यते, तस्य चायमभिसंबन्धः—प्रथमपदे पृथ्वीकायादयः प्ररूपिताः, इह तु तेषामेव स्थानानि प्ररूप्यन्ते, तत्र चेदमादिसूत्रम्—

कहि णं भंते ! बादरपुढवीकाइयाणं पज्जत्तगाणं ठाणा प० ?, गोयमा ! सट्ठाणेणं अट्ठसु पुढवीसु, तं०—रयणप्पभाए सक्करप्पभाए वालुयप्पभाए पंकप्पभाए धूमप्पभाए तमप्पभाए तमतमप्पभाए ईसीप्पब्भाराए, अहोलोए पायालेसु भवणेसु भवणपत्थडेसु निरएसु निरयावलियासु निरयपत्थडेसु, उड्ढलोए कप्पेसु विमाणेसु विमाणावलियासु विमाणपत्थडेसु, तिरियलोए टंकेसु कूडेसु सेलेसु सिहरीसु पब्भारेसु विजएसु वक्खारेसु वासेसु वासहरपव्वएसु वेलासु वेइयासु दारेसु तोरणेसु दीवेसु समुद्देसु, एत्थ णं बायरपुढवीकाइयाणं पज्जत्तगाणं ठाणा प०, उववाएणं लोयस्स असंखेज्जभागे समुग्घायेणं लोयस्स असंखेज्जभागे सट्ठाणेणं लोगस्स असंखेज्जभागे । कहि णं भंते ! बादरपुढवीकाइयाणं अपज्जत्तगाणं ठाणा प० ?, गोयमा ! जत्थेव बादरपुढवीकाइयाणं पज्जत्तगाणं ठाणा पन्नत्ता तत्थेव बादरपुढवीकाइयाणं अपज्जत्तगाणं ठाणा प०, उववाएणं सव्वलोए समुग्घाएणं सव्वलोए सट्ठाणेणं लोयस्स असंखेज्जइभागे । कहि णं भंते ! सुहुमपुढवीकाइयाणं पज्जत्तगाणं अपज्जत्तगाण य ठाणा प० ?, गोयमा ! सुहुमपुढवीकाइया जे पज्जत्तगा जे अपज्जत्तगा ते सव्वे एगविहा अविसेसा अणाणत्ता सव्वलोयपरियावन्नगा प० समणाउसो ! । कहि णं भन्ते ! बादरआउकाइयाणं पज्जत्तगाणं ठाणा प० ?, गोयमा ! सट्ठाणेणं सत्तसु घणोदहीसु सत्तसु घणोदहिवलयेसु अहोलोए पायालेसु भवणेसु भवणपत्थडेसु उड्ढलोए कप्पेसु विमा-

णेसु विमाणावलियासु विमाणपत्थडेसु तिरियलोए अगडेसु तलायेसु नदीसु दहेसु वावीसु पुक्खरिणीसु दीहियासु गुंजालियासु सरेसु सरपंतियासु सरसरपंतियासु बिलेसु बिलपंतियासु उज्झरेसु निज्झरेसु चिल्ललएसु पल्ललएसु वप्पणेसु दीवेसु समुद्देसु सव्वेसु चेव जलासएसु जलट्ठाणेसु एत्थ णं बादरआउकाइयाणं पज्जत्तगाणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे समुग्घायेणं लोयस्स असंखेज्जइभागे सट्ठाणेणं लोयस्स असंखेज्जइभागे। कहि णं भंते! बादरआउकाइयाणं अपज्जत्तगाणं ठाणा प० ?, गोयमा! जत्थेव बादरआउकाइयाणं पज्जत्तगाणं ठाणा प० तत्थेव बादरआउकाइयाणं अपज्जत्तगाणं ठाणा प० उववाएणं सव्वलोए समुग्घायेणं सव्वलोए सट्ठाणेणं लोयस्स असंखेज्जइभागे। कहि णं भंते! सुहुमआउकाइयाणं पज्जत्तगाणं अपज्जत्तगाणं ठाणा प० ?, गोयमा! सुहुमआउकाइया जे पज्जत्तगा जे अपज्जत्तगा ते सव्वे एगविहा अविसेसा अणाणत्ता सव्वलोयपरियावन्नगा प० समणाउसो!। कहि णं भंते! बायरतेउकाइयाणं पज्जत्तगाणं ठाणा प०, गोयमा! सट्ठाणेणं अंतोमणुस्सखेत्ते अड्ढाइज्जेसु दीवसमुद्देसु निव्वाघायेणं पन्नरससु कम्मभूमीसु वाघायं पडुच्च पंचसु महाविदेहेसु एत्थ णं बादरतेउकाइयाणं पज्जत्तगाणं ठाणा प० उववाएणं लोयस्स असंखेज्जइभागे समुग्घाएणं लोगस्स असंखेज्जइभागे सट्ठाणेणं लोयस्स असंखेज्जइभागे। कहि णं भन्ते! बायरतेउकाइयाणं अपज्जत्तगाणं ठाणा प०, गोयमा! जत्थेव बायरतेउकाइयाणं पज्जत्तगाणं ठाणा तत्थेव बायरतेउकाइयाणं अपज्जत्तगाणं ठाणा प०, उववाएणं लोयस्स दोसु उड्ढकवाडेसु तिरियलोयतट्टे य समुग्घाएणं सव्वलोए सट्ठाणेणं लोयस्स असंखेज्जइभागे। कहि णं भंते! सुहुमतेउकाइयाणं

पज्जत्तगाण य अपज्जत्तगाण य ठाणा प० ?, गोयमा ! सुहुमतेउकाइआ जे पज्जत्तगा जे अपज्जत्तगा ते सव्वे एगविहा अविसेसा अणाणत्ता सव्वलोयपरियावन्नगा प० समणाउसो ! । (सू० ३९)

'कहिं'ति कस्मिन्, णंशब्दो वाक्यालङ्कारे, भदन्तेति परमगुर्वामन्त्रणे, बादरपृथ्वीकायिकानां पर्याप्तानां स्थानानि—स्वस्थानादीनि 'प्रज्ञप्तानि ?' प्ररूपितानि, एवं गौतमस्वामिना प्रश्ने कृते भगवानाह वर्धमानस्वामी—'गोयमा ! सट्ठाणेणं' इत्यादि, ननु गौतमोऽपि भगवानुपचितकुशलमूलो गणधरः तीर्थकरभाषितमातृकापदश्रवणमात्रावाप्तप्रकृष्टश्रुतज्ञानावरणक्षयोपशमश्चतुर्दशपूर्ववित् सर्वाक्षरसन्निपातीति विवक्षितार्थप्रतिज्ञानसमन्वित एव ततः किमर्थं पृच्छति ?, न हि चतुर्दशपूर्वविदः सर्वोत्कृष्टश्रुतलब्धिसमन्वितस्य किञ्चित्प्रज्ञापनीयमविदितमस्ति, यत उक्तम्—"संखाईए वि भवे साहइ जं वा परो उ पुच्छेज्जा । न य णं अणाइसेसी वियाणई एस छउमत्थो ॥ १ ॥" सत्यमेतत्, केवलं जानन्नेव गौतमस्वामी भगवानन्यत्र विनेयेभ्यः प्रतिपाद्य तत्संप्रत्ययनिमित्तं विवक्षितमर्थं पृच्छति, यदिवा प्रायः सर्वत्र गणधरप्रश्नतीर्थकरनिर्वचनरूपं सूत्रमतो भगवानार्यश्यामोऽपि इत्थमेव सूत्रं रचयति, अथवा संभवति तस्यापि गणभृतो गौतमस्वामिनोऽनाभोगः, छद्मस्थत्वात्, उक्तं च—"न हि नामानाभोगश्छद्मस्थस्येह कस्यचिद् नास्ति । ज्ञानावरणीयं हि ज्ञानावरणप्रकृति कर्म ॥ १ ॥" ततो जातसंशयः सन् पृच्छतीति न कश्चिद्

१ संख्यातीतानपि भवान् कथयति यं वा परः पृच्छेत् । नैवैनं अनतिशायी विजानात्येष छद्मस्थः ॥ १ ॥

दोपः, 'गोयमा' इति लोकप्रथितमहाविशिष्टगोत्राभिधायकोऽयमामन्त्रणध्वनिः, हे गौतमगोत्रेति भावार्थः । 'सट्ठाणेणं' इति स्वस्थानं यत्रासते वादरपृथ्वीकायिकाः पर्याप्ताः आसीनाश्च वर्णादिविभागेनादेष्टुं शक्यन्ते तत्स्वस्थानमिति भावः, स्वस्थानग्रहणमुपपातसमुद्घातस्थाननिवृत्त्यर्थं, तेन स्वस्थानेन स्वस्थानमङ्गीकृत्येति भावः । अष्टासु पृथ्वीपु सर्वत्र वादरपृथ्वीकायिकानां पर्याप्तानां स्थानानीति योगः, ता एव अष्टौ पृथ्वीर्नामग्राहमाह—'तंजहा' इत्यादि, रत्नप्रभायां यावदष्टम्यामीषत्प्राग्भारायाम्, तथाऽधोलोके पातालेपु पातालकलशेपु—वलयामुखप्रभृतिपु भवनेपु—भवनपतिनिकायावासरूपेपु, भवनप्रस्तटेपु–भवनभूमिकारूपेपु, इह भवनग्रहणेन भवनानामेव केवलानां ग्रहणं, भवनप्रस्तटग्रहणेन तु भवनानामपान्तरालस्यापि । तथा नरकेपु–प्रकीर्णकरूपेपु नरकावासेपु, नरकावलिकासु–आवलिकाव्यवस्थितेपु नरकावासेपु, नरकप्रस्तटेपु—नरकभूमिरूपेपु, अत्रापि नरकनरकावलिकाग्रहणेन केवला एव नरकावासाः परिगृह्यन्ते, नरकप्रस्तटग्रहणेन तु नरकापान्तरालमपि । ऊर्द्धलोके कल्पेपु—सौधर्मिकादिकल्पेपु, अनेन द्वादशदेवलोकपरिग्रहः, विमानेपु–ग्रैवेयकसंवन्धिपु प्रकीर्णकरूपेपु, विमानावलिकासु–आवलिकाप्रविष्टेपु ग्रैवेयकादिविमानेपु, विमानप्रस्तटेपु विमानभूमिकारूपेपु, अत्रापि प्रस्तटग्रहणं विमानापान्तरालभाविनामपि यथासंभवभाविनां वादरपर्याप्तपृथ्वीकायिकानां स्थानपरिग्रहार्थं, तथा तिर्यग्लोके टङ्केपु–छिन्नटङ्केपु कूटेपु–सिद्धायतनकूटप्रभृतिपु शैलेपु–शिखरहीनपर्वतेपु शिखरिपु–शिखरयुक्तेपु पर्वतेपु प्राग्भारेपु–ईपत्कुब्जेपु विजयेपु—कच्छादिपु

वक्षस्कारेषु–विद्युत्प्रभादिषु पर्वतेषु वर्षेषु–भरतादिषु वर्षधरेषु–हिमवदादिपर्वतेषु वेलासु–समुद्रादिपानीयरमणभूमिषु वेदिकासु—जम्बूद्वीपजगत्यादिसंबन्धिनीषु द्वारेषु–विजयादिषु तोरणेषु—द्वारादिसंबन्धिषु, किं बहुना ?, सामस्त्येन सर्वेषु द्वीपेषु सर्वेषु समुद्रेषु, 'एत्थ णं' इत्यादि, अत्रैतेषु स्थानेषु बादरपृथ्वीकायिकानां पर्याप्तानां स्थानानि प्रज्ञप्तानि मया अन्यैश्च तीर्थकृद्भिः, 'उववाएणं' इत्यादि, उपपतनमुपपातः, बादरपृथ्वीकायिकानां पर्याप्तानां यदनन्तरमुक्तं स्थानं तत्प्राप्त्याभिमुख्यमिति भावः, तेनोपपातेन, उपपातमङ्गीकृत्येति भावः, लोकस्य–चतुर्दशरज्ज्वात्मकस्यासंख्येये भागे, अत्रैके व्याचक्षते—ऋजुसूत्रनयो विचित्रः ततो यदा परिस्थूरऋजुसूत्रनयदर्शनेन बादरपृथ्वीकायिकाः पर्याप्ताश्चिन्त्यन्ते तदा ये स्वस्थानप्राप्ता आहारादिपर्याप्तिपरिसमाप्त्या विशिष्टविपाकतो बादरपर्याप्तपृथ्वीकायिकायुर्वेदयन्ते ते एव द्रष्टव्याः, नापान्तरालगतावपि, तदानीं विपाकायुर्वेदनासंभवात्, स्वस्थानं च तेषां रत्नप्रभादिकं समुदितमपि लोकस्यासंख्येयभागे वर्तते, तत उपपातेनापि लोकस्यासंख्येयभागता वेदितव्या, अन्ये त्वभिदधति–पर्याप्ता हि नाम बादरपृथ्वीकायिकाः सर्वस्तोकाः, ततस्तेऽपान्तरालगतावपि परिगृह्यमाणा लोकस्यासंख्येयभागे एवेति न कश्चिद्दोषः, तथा च समुद्घातेनापि लोकस्यासंख्येयभागे एव वक्ष्यन्ते, अन्यथा समुद्घातावस्थायामपि स्वस्थानातिरेकेण क्षेत्रान्तरवर्तित्वसंभवादसंख्येयभागवर्तिता नोपपद्यते इति, तत्त्वं पुनः केवलिनो विदन्ति विशिष्टश्रुतविदो वा । तथा 'समुग्घाएणं लोगस्स असंखेज्जभागे' इति समुद्घातेन—समुद्घातमधिकृत्य

सतीति भावः पञ्चसु महाविदेहेषु, इयमत्र भावना—व्याघातो नाम अतिस्निग्धोऽतिरूक्षो वा कालः, तस्मिन् सत्यग्निव्यवच्छेदात्, ततो यदा पञ्चसु भरतेषु पञ्चस्वैरावतेषु सुषमसुषमासुषमासुषमदुष्षमा वा वर्तते तदाऽतिस्निग्धः कालः दुष्षमदुष्षमायां चातिरूक्ष इत्यस्ति व्यवच्छेदः तस्मिन् सति पञ्चसु महाविदेहेषु, शेषकालं पञ्चदशस्वपि कर्मभूमिषु, 'एत्थ णं' इत्यादि, अत्र—एतेषु स्थानेषु बादरतेजःकायिकानां स्थानानि प्रज्ञप्तानि, 'उववाएणं' इत्यादि, 'उपपातेन' यथोक्तस्थानप्राप्त्याऽऽभिमुख्येन, अपान्तरालगतावपीति भावः, चिन्त्यमाना लोकस्यासंख्येये भागे, स्तोकत्वात्, समुद्घातेनापि चिन्त्यमाना लोकस्यासंख्येये भागे, मारणान्तिकसमुद्घातवशतो विक्षिप्तात्मप्रदेशदण्डानामपि स्तोकतया लोकासंख्येयभागमात्रव्यापित्वात्, स्वस्थानेन लोकस्यासंख्येयभागे, मनुष्यक्षेत्रस्य पञ्चचत्वारिंशद्योजनलक्षप्रमाणायामविष्कम्भतया लोकासंख्येयभागमात्रत्वात् । अपर्याप्तबादरतेजःकायिकस्थानानि पृच्छति—'कहि णं भंते !' इत्यादि प्रश्नसूत्रं गतार्थं, भगवानाह—'गोयमा !' इत्यादि, गौतम ! यत्रैव बादरतेजःकायिकानां पर्याप्तानां स्थानानि तत्रैव बादरतेजःकायिकानामपर्याप्तानामपि स्थानानि प्रज्ञप्तानि, पर्याप्तनिश्रयैवापर्याप्तानामवस्थानात्, 'उववाएणं लोगस्स दोसु उड्ढकवाडेसु तिरियलोयतट्टे य' इति, इहार्धतृतीयद्वीपसमुद्रनिःसृते अर्द्धतृतीयद्वीपसमुद्रप्रमाणबाहल्ये पूर्वापरदक्षिणोत्तरस्वयम्भूरमणपर्यन्ते ये कपाटे केवलिसमुद्घातकपाटवत् ऊर्ध्वमपि लोकान्तं स्पृष्टे ते अधोऽपि च लोकान्तं स्पृष्टे ते ऊर्द्धकपाटे तयोः ऊर्द्धकपाटयोः, तथा 'तिरियलोयतट्टे

य' इति, तट्टं—स्थालं तिर्यग्लोके तट्टमिव तिर्यग्लोकतट्टं तस्मिंश्च स्वयम्भूरमणसमुद्रवेदिकापर्यन्ते अष्टादशयोजनशतबाहल्ये, समस्ततिर्यग्लोके चेत्यर्थः, उपपातेन बादरतेजःकायिकानामपर्याप्तानां स्थानानि प्रज्ञप्तानि, केचित् 'तिरियलोयतट्टे य' इत्येवं व्याचक्षते—तयोः—कपाटयोः स्थितः तत्स्थः तिर्यग्लोकश्चासौ तत्स्थः, तयोरूर्द्ध्वकपाटयोरन्तर्वर्तितिर्यग्लोक इत्यर्थः तस्मिंश्च, किमुक्तं भवति ?—द्वयोरूर्द्ध्वकपाटयोर्यथोक्तस्वरूपयोस्तिर्यग्लोकेऽपि च तयोरेव कपाटयोरन्तर्गते नान्यत्र, शेषतिर्यग्लोकव्यवच्छेदपरमेतद् वाक्यं, न विधानपरं, विधानस्य कपाटग्रहणेनैव सिद्धत्वात्, तत्त्वं पुनः केवलिना विशिष्टश्रुतविदा वा गम्यं, इयमत्र भावना—इह त्रिविधा बादरपर्याप्ततेजःकायिकाः, तद्यथा—एकभविका बद्धायुषोऽभिमुखनामगोत्राश्च, तत्र ये एकस्माद् विवक्षिताद् भवादनन्तरं बादरापर्याप्ततेजःकायिकत्वेनोत्पत्स्यन्ते ते एकभविकाः, ये तु पूर्वभवत्रिभागादिसमयैर्बद्धबादरापर्याप्ततेजःकायिकायुषस्ते बद्धायुषः, ये पुनर्बादरापर्याप्ततेजःकायिकायुर्नामगोत्राणि पूर्वभवमोचनानन्तरं साक्षाद् वेदयन्ते तेऽभिमुखनामगोत्राः, तत्रैकभविका बद्धायुषश्च द्रव्यतो बादरापर्याप्ततेजःकायिका न भावतः, तदाऽऽयुर्नामगोत्रवेदनाभावात्, ततो न तैरिहाधिकारः, किन्तु अभिमुखनामगोत्रैः, तेषामेवोपपातस्य स्वस्थानप्राप्त्याभिमुख्यलक्षणस्य लभ्यमानत्वात्, तत्र यद्यपि ऋजुसूत्रनयदर्शनेन बादरापर्याप्ततेजःकायिकायुर्नामगोत्रवेदनाद् यथोक्तकपाटद्वयतिर्यग्लोकबाह्यव्यवस्थिता अपि बादरापर्याप्ततेजःकायिकव्यपदेशं लभन्ते तथाप्यत्र व्यवहारनयदर्शनाभ्युपगमाद् ये स्वस्थानसमश्रेणिकपाटद्वयव्यव-

स्थिताः ये च स्वस्थानानुगते तिर्यग्लोके प्रविष्टास्ते एव बादरापर्याप्ततेजःकायिका व्यपदिश्यन्ते न शेषाः कपाटापान्तरालव्यवस्थिताः, विषमस्थानवर्तित्वात्, तेन येऽद्यापि कपाटद्वयं न प्रविशन्ति नापि तिर्यग्लोकं ते किल पूर्वभवावस्था एवेति न गण्यन्ते, उक्तं च—"पणयाललक्खपिहुला दुन्नि कवाडा य छद्दिसिं पुट्ठा । लोगन्ते तेसिऽंतो जे तेऊ ते उ घिप्पन्ति ॥ १ ॥" तत उक्तं—'उववाएणं दोसु उड्ढकवाडेसु तिरियलोयतट्टे य' इति, स्थापना— तदेवमिदं सूत्रं व्यवहारनयप्रदर्शनेन व्याख्यातं, तथासंप्रदायात्, युक्तं चैतत् "विचित्रा सूत्राणां गतिः" इति वचनादिति । 'समुग्घाएणं सव्वलोए' इति, इह द्वयोः कपाटयोर्यथोक्तस्वरूपयोर्यान्यपान्तरालानि तेषु ये सूक्ष्मपृथिवीकायिकादयो बादरापर्याप्ततेजःकायिकेषूत्पद्यमाना मारणान्तिकसमुद्घातेन समवहताः ते किल विष्कम्भबाहल्याभ्यां शरीरप्रमाणमात्रानायामत उत्कर्षतो लोकान्तं यावदात्मप्रदेशान् विक्षिपन्ति, तथा चावगाहनासंस्थानपदे वक्ष्यते—"पुढवीकाइअस्स णं भंते ! मारणंतियसमुग्घाएणं समोहयस्स तेयासरीरस्स के महालिया सरीरोगाहणा प० ?, गोयमा ! सरीरपमाणमेत्तविक्खंभबाहल्लेणं आयामेणं जहन्नेणं अंगुलस्स असंखेज्जइभागे उक्कोसेणं लोगंतो" इति, ततस्ते सूक्ष्मपृथिवीकायिकादय उत्पत्तिदेशं यावद् विक्षिप्तात्मप्रदेशदण्डा अपान्तरालगतौ वर्तमाना बादरापर्याप्ततेजःकायिकायुर्वेदनाद् लब्धबादरापर्याप्ततेजःकायिकव्यपदेशाः समुद्घातगता एवापान्तराल-

१ पञ्चचत्वारिंशल्लक्षपृथू द्वौ कपाटौ च षट्सु दिक्षु स्पृष्टौ । लोकान्तान् तयोरन्तर्ये तेजःकायिकास्ते तु गृह्यन्ते ॥ १ ॥

गतौ वर्तमाना इति, समुद्घातगताश्च सकललोकमापूरयन्ति, उक्तं च—'समुद्घातेन सर्वलोके' इति, अन्ये त्वभिदधति—अतिवहवः खलु बादरापर्याप्ततेजःकायिकाः, एकैकपर्याप्तनिश्रया असंख्येयानामपर्याप्तानामुत्पादात्, ते च सूक्ष्मेष्वपि समुत्पद्यन्ते, सूक्ष्माश्च सर्वत्र विद्यन्ते इति, बादरापर्याप्ततेजःकायिकाः स्वस्वभवपर्यन्ते कृतमारणान्तिकसमुद्घाताः सन्तः सकलमपि लोकमापूरयन्ति इति न कश्चिद्दोषः, अपि तु निरुपचरिततेजःकायिकसमुद्घातप्ररूपणागुणः, स्थापना—। स्वस्थानेन लोकस्यासंख्येये भागे इति, पर्याप्तनिश्रयाऽपर्याप्तानामुत्पादात्, पर्याप्तानां च स्थानं मनुष्यक्षेत्रं, तच्च लोकासंख्येयतमभागमात्रमिति । सूक्ष्मपर्याप्तापर्याप्ततेजःकायिकसूत्रं सूक्ष्मपर्याप्तापर्याप्तपृथिवीकायिकसूत्रवद् भावनीयमिति ।

कहि णं भंते ! बादरवाउकाइयाणं ठाणा प० ?, गोयमा ! सट्ठाणेणं सत्तसु घणवाएसु सत्तसु घणवायवलएसु सत्तसु तणुवाएसु सत्तसु तणुवायवलयेसु अहोलोए पायालेसु भवणेसु भवणपत्थडेसु भवणछिद्देसु भवणनिक्खुडेसु निरएसु निरयावलियासु निरयपत्थडेसु निरयछिद्देसु निरयनिक्खुडेसु उड्ढलोए कप्पेसु विमाणेसु विमाणावलियासु विमाणपत्थडेसु विमाणछिद्देसु विमाणनिक्खुडेसु तिरियलोए पाईणपडीणदाहिणउदीण सव्वेसु चेव लोगागासछिद्देसु लोगनिक्खुडेसु य, एत्थ णं बादरवाउकाइआणं पज्जत्तगाणं ठाणा प०, उववाएणं लोयस्स असंखेज्जेसु भागेसु, समुग्घाएणं लोयस्स असंखेज्जेसु भागेसु, सट्ठाणेणं लोयस्स असंखेज्जेसु भागेसु । कहि णं भंते ! अपज्जत्तबादरवाउकाइयाणं ठाणा प० ?, गोयमा ! जत्थेव

बादरवाउकाइयाणं पज्जत्तगाणं ठाणा तत्थेव बादरवाउकाइयाणं अपज्जत्तगाणं ठाणा प०, उववाएणं सवलोए समुग्घाएणं सवलोए, सट्ठाणेणं लोयस्स असंखेज्जेसु भागेसु । कहि णं भंते ! सुहुमवाउकाइयाणं पज्जत्तगाणं अपज्जत्तगाणं ठाणा प० ?, गोयमा ! सुहुमवाउकाइया जे पज्जत्तगा जे य अपज्जत्तगा ते सवे एगविहा अविसेसा अणाणत्ता सवलोयपरियावन्नगा प० समणाउसो ! । कहि णं भंते ! बादरवणस्सइकाइयाणं पज्जत्तगाणं ठाणा प० ?, गोयमा ! सट्ठाणेणं सत्तसु घणोदहिसु सत्तसु घणोदहिवलयेसु अहोलोए पायालेसु भवणेसु भवणपत्थडेसु, उड्ढलोए कप्पेसु विमाणेसु विमाणावलियासु विमाणपत्थडेसु, तिरियलोए अगडेसु तडागेसु नदीसु दहेसु वावीसु पुक्खरिणीसु दीहियासु गुंजालियासु सरेसु सरपंतियासु सरसरपंतियासु बिलेसु बिलपंतियासु उज्झरेसु निज्झरेसु चिल्ललेसु पल्ललेसु वप्पिणेसु दीवेसु समुद्देसु सवेसु चेव जलासएसु जलठाणेसु, एत्थ णं बादरवणस्सइकाइयाणं पज्जत्तगाणं ठाणा प०, उववाएणं सवलोए समुग्घाएणं सवलोए सट्ठाणेणं लोयस्स असंखेज्जइभागे । कहि णं भंते ! बादरवणस्सइकाइयाणं अपज्जत्तगाणं ठाणा प० ?, गोयमा ! जत्थेव बादरवणस्सइकाइयाणं पज्जत्तगाणं ठाणा तत्थेव बादरवणस्सइकाइयाणं अपज्जत्तगाणं ठाणा प०, उववाणं सवलोए समुग्घाएणं सवलोए सट्ठाणेणं लोयस्स असंखेज्जइभागे । कहि णं भंते ! सुहुमवणस्सइकाइयाणं पज्जत्तगाणं अपज्जत्तगाण य ठाणा प० ?, गोयमा ! सुहुमवणस्सइकाइया जे य पज्जत्तगा जे य अपज्जत्तगा ते सवे एगविहा अविसेसा अणाणत्ता सवलोयपरियावन्नगा प० समणाउसो ! ॥ ( सू० ४० )

एवं बादरवायुकायिकवनस्पतिकायिकसूत्राण्यपि प्रत्येकं त्रीणि त्रीणि भावनीयानि, नवरं बादरपर्याप्तवायुकायिकसूत्रे भवनच्छिद्राणि—भवनानामवकाशान्तराणि भवननिष्कुटा—गवाक्षादिकल्पाः केचन भवनप्रदेशाः नरकच्छिद्राणि नरकनिष्कुटा—गवाक्षादिकल्पा नरकावासप्रदेशाः, एवं विमानच्छिद्राणि विमाननिष्कुटाश्च प्रतिपत्तव्याः, 'उववाएणं लोगस्स असंखेज्जेसु भागेसु' इत्यादि, वायवो हि पर्याप्ता अतिबहवः, यतो यत्र सुषिरं तत्र वायुः, सुषिरबहुलश्च लोक इति त्रिष्वप्युपपातादिषु लोकस्यासंख्येयेषु भागेष्वित्युक्तं । अपर्याप्तबादरवायुकायिकसूत्रे 'उववाएणं समुग्घाएण य सव्वलोए' इति, इह देवनारकवर्जेभ्यः शेषकायेभ्यः सर्वेभ्यो बादरापर्याप्तवायुकायेषु समुत्पद्यन्ते, बादरापर्याप्ताश्चापान्तरालगतावपि लभ्यन्ते, बहूनि च स्वस्थानानि बादरपर्याप्तापर्याप्तवायुकायिकानां, ततो व्यवहारनयमतेनाप्युपपातमधिकृत्य सकललोकव्यापिता घटते इति न काचित् क्षतिः, समुद्घातेन च सकललोकव्यापिता सुप्रतीतैव, सर्वेषु सूक्ष्मेषु सर्वत्र च लोके तेषां समुत्पादसंभवात् । बादरपर्याप्तवनस्पतिकायिकसूत्रे 'उववाएणं सव्वलोए' इह पर्याप्तबादरवनस्पतिकायिकानां स्वस्थानं घनोदध्यादि, तत्र बादरनिगोदानां शैवालादीनां संभवात्, सूक्ष्मनिगोदानां भवस्थितिरन्तर्मुहूर्तं ततस्ते बादरनिगोदेषु पर्याप्तेषु समुत्पद्यमाना बादरनिगोदपर्याप्तायुरनुभवन्तः सुविशुद्धऋजुसूत्रनयदर्शनाभ्युपगमेन लब्धबादरपर्याप्तवनस्पतिकायिकव्यपदेशा उपपातेन सकलकालं सर्वलोकं व्याप्नुवन्ति, तत उक्तम्—'उपपातेन सर्वलोके' इति । 'समुग्घाएणं सव्वलोए' इति, यदा बादरनिगोदाः

सूक्ष्मनिगोदेषु आयुर्वद्धा पर्यन्ते मारणान्तिकसमुद्घातेन समवहता आत्मप्रदेशानुत्पत्तिदेशं यावद् विक्षिपन्ति तदा वादरनिगोदपर्याप्तायुरद्याप्यक्षीणमिति वादरपर्याप्तनिगोदा एव समुद्घातगताश्च सकललोकव्यापिनश्चेति समुद्घातेन सर्वलोके, स्वस्थानेन लोकस्यासंख्येयतमे भागे, घनोदध्यादीनां सर्वेषामपि समुदितानां लोकस्यासंख्येयभागमात्रवर्तित्वात्, शेषं सुगमं ॥ ( ग्रन्थाग्रं २००० )

कहि णं भंते ! बेइंदियाणं पज्जत्तापज्जत्तगाणं ठाणा प० ?, गोयमा ! उड्ढलोए तदेक्कदेसभागे अहोलोए तदेक्कदेसभागे तिरियलोए अगडेसु तलाएसु नदीसु दहेसु वावीसु पुक्खरिणीसु दीहियासु गुंजालियासु सरेसु सरपंतियासु सरसरपंतियासु बिलेसु बिलपंतियासु उज्झरेसु निज्झरेसु चिल्ललेसु पल्ललेसु वप्पिणेसु दीवेसु समुद्देसु सवेसु चेव जलासयेसु जलठाणेसु एत्थ णं बेइंदियाणं पज्जतापज्जत्तगाणं ठाणा प०, उववाएणं लोगस्स असंखेज्जइभागे, समुग्घाएणं लोगस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे। कहि णं भंते ! तेइंदियाणं पज्जतापज्जत्तगाणं ठाणा प० ?, गोयमा ! उड्ढलोए तदेक्कदेसभाए अहोलोए तदेक्कदेसभाए तिरियलोए अगडेसु तलाएसु नदीसु दहेसु वावीसु पुक्खरिणीसु दीहियासु गुंजालियासु सरेसु सरपंतियासु सरसरपंतियासु बिलेसु बिलपंतियासु उज्झरेसु निज्झरेसु चिल्ललेसु पल्ललेसु वप्पिणेसु दीवेसु समुद्देसु सवेसु चेव जलासएसु जलठाणेसु एत्थ णं तेइंदियाणं पज्जत्तापज्जत्तगाणं ठाणा प० उववाएणं लोयस्स असंखेज्जइभागे समुग्घाएणं लोयस्स असंखेज्जइभागे सट्ठाणेणं लोयस्स असंखेज्जइभागे ॥ कहि णं भंते ! चउरिंदियाणं पज्जत्ता-

पज्जत्तगाणं ठाणा प० ?, गोयमा ! उड्ढलोए तदेक्कदेसभागे अहोलोए तदेक्कदेसभागे तिरियलोए अगडेसु तलाएसु नदीसु दहेसु वावीसु पुक्खरिणीसु दीहियासु गुंजालियासु सरेसु सरपंतियासु सरसरपंतियासु बिलेसु बिलपंतियासु उज्झरेसु निज्झरेसु चिल्ललेसु पल्ललेसु वप्पिणेसु दीवेसु समुद्देसु सव्वेसु चेव जलासएसु जलठाणेसु एत्थ णं चउरिंदियाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे ॥ कहि णं भंते ! पंचिंदियाणं पज्जत्तापज्जत्तगाणं ठाणा प० ?, गोयमा ! उड्ढलोयस्स तदेक्कदेसभाए अहोलोयस्स तदेक्कदेसभाए तिरियलोए अगडेसु तलाएसु नदीसु दहेसु वावीसु पुक्खरिणीसु दीहियासु गुंजालियासु सरेसु सरपंतियासु सरसरपंतियासु बिलेसु बिलपंतियासु उज्झरेसु निज्झरेसु चिल्ललेसु पल्ललेसु वप्पिणेसु दीवेसु समुद्देसु सव्वेसु चेव जलासएसु जलठाणेसु एत्थ णं पंचिंदियाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएण लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे ॥ ( सू० ४१ )

एवं द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियसामान्यपञ्चेन्द्रियसूत्राण्यपि भावनीयानि, नवरं द्वीन्द्रियादयो बहवो जलसंभूताः शङ्खप्रभृतय इति सर्वेष्वपि सूत्रेषु स्थानान्यवटादीन्युक्तानि, तथा ऊर्द्धलोके तदेकदेशभागे—मन्दरादिवाप्यादिषु, अधोलोके तदेकदेशे(शभागे)—अधोलौकिकग्रामकूपतडागादिषु, शेषमुपयुज्य स्वयं परिभावनीयम् ॥ अधुना पर्याप्तापर्याप्तनैरयिकस्थानप्ररूपणार्थमाह—

कहि णं भंते ! नेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! नेरइया परिवसन्ति ?, गोयमा ! सट्ठाणेणं सत्तसु पुढवीसु, तं०—रयणप्पभाए सक्करप्पभाए वालुयप्पभाए पंकप्पभाए धूमप्पभाए तमप्पभाए तमतमप्पभाए, एत्थ णं नेरइयाणं चउरासीइ निरयावाससयसहस्सा भवन्तीति मक्खायं, ते णं नरगा अंतो वट्टा बाहिं चउरंसा अहे खुरप्पसंठाणसंठिया निच्चंधयारतमसा ववगयगहचंदसूरनक्खत्तजोइसियपहा मेदवसापूयपडलरुहिरमांसचिक्खिल्ललित्ताणुलेवणतला असुइवीसा परमदुब्भिगंधा काउयअगणिवन्नाभा कक्खडफासा दुरहियासा असुभा नरगा असुभा नरगेसु वेयणाओ एत्थ णं नेरइयाणं पज्जत्तापज्जत्तगाणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे, एत्थ णं बहवे नेरइया परिवसंति, काला कालोभासा गंभीरलोमहरिसा भीमा उत्तासणगा परमकण्हा वन्नेणं प० समणाउसो !, ते णं तत्थ निच्चं भीता निच्चं तत्था निच्चं तसिया निच्चं उव्विग्गा निच्चं परममसुहसंबद्धं णरगभयं पच्चणुभवमाणा विहरन्ति ( सू० ४२ )

'कहि णं भंते ! नेरइयाणं' इत्यादि, कस्मिन् प्रदेशे भदन्त ! नैरयिकानां पर्याप्तापर्याप्तानां स्थानानि प्रज्ञप्तानि ?, एतदेव व्यक्तं पृच्छति यथा अन्येऽप्यवबुध्यन्ते—'कहि णं' इति कस्मिन् प्रदेशे 'णं' इति वाक्यालंकृतौ नैरयिकाः परिवसन्ति ?, भगवानाह—'गोयमा' इत्यादि, गौतम ! स्वस्थानेन सप्तसु पृथिवीषु, ता एव नामग्राहमाह—'तं०—रयणप्पभाए' इत्यादि, गतार्थं, 'एत्थ णं' इत्यादि, अत्र—एतासु सप्तसु पृथिवीषु नैरयिकाणां सर्वसंख्यया चतु-

रशीतिर्नरकावासशतसहस्राणि भवन्ति, तथाहि—रत्नप्रभायां त्रिंशन्नरकावासशतसहस्राणि भवन्ति; शर्कराप्रभायां पञ्चविंशतिः शतसहस्राणि, वालुकाप्रभायां पञ्चदश लक्षाः, पङ्कप्रभायां दश लक्षाः, धूमप्रभायां त्रीणि लक्षाः, तमःप्रभायामेकं शतसहस्रं पञ्चोनं, तमस्तमःप्रभायां पञ्चेति, सर्वसंख्यया चतुरशीतिर्लक्षा नरकावासानामित्याख्यातं मया शेषैस्तीर्थकृद्भिः (श्च), 'ते णं नरकावासा' इत्यादि, ते नरकावासाश्चतुरशीतिर्लक्षप्रमाणाः सर्वेऽपि प्रत्येकमन्तः—मध्यभागे (वृत्ता) वृत्ताकारा वहिर्भागे चतुरस्राः—चतुरस्राकाराः, इदं च पीठोपरिवर्तिनं मध्यभागमधिकृत्य प्रोच्यते, सकलपीठाद्यपेक्षया त्वावलिकाप्रविष्टा वृत्तत्र्यस्रचतुरस्रसंस्थानाः, पुष्पावकीर्णास्तु नानासंस्थानाः प्रतिपत्तव्याः, 'अहे खुरप्पसंठाणसंठिया' इति अधो—भूमीतले क्षुरप्रस्येव—प्रहरणविशेषस्य यत्संस्थानम्—आकारविशेषस्तीक्ष्णतालक्षणस्तेन संस्थिताः, तथाहि—तेषु नरकावासेषु भूमितले मसृणत्वाभावतः शर्करिले पादेषु न्यस्यमानेषु शर्करामात्रसंस्पर्शेऽपि क्षुरप्रेणेव पादाः कृत्यन्ते, 'निच्चंधयारतमसा' इति तमसा नित्यान्धकाराः—उद्योताभावतो यत्तमः तदिह तम उच्यते तेन तमसा नित्यं—सर्वकालमन्धकाराः, त(अ)त्रापवरकादिष्वपि तमोऽन्धकारोऽस्ति केवलं वहिः सूर्यप्रकाशे मन्दतमो भवति, नरकेषु तु तीर्थकरजन्मदीक्षादिकालव्यतिरेकेणान्यदा सर्वकालमप्युद्योतलेशस्याप्यभावतो जात्यन्धस्येव मेघच्छन्नकालार्धरात्र इवातीव बहलतरो वर्तते तत उक्तं—तमसा नित्यान्धकाराः, तमश्च तत्र सदाऽवस्थितं, उद्योतकारिणामसंभवात्, तथा चाह—'ववगयगहचंदसूरनक्खत्तजोइसियपहा' व्यपगतः—परिभ्रष्टो

ग्रहचन्द्रसूर्यनक्षत्ररूपाणा उपलक्षणमेतत् ताराख्पाणां च ज्योतिष्काणा पन्था—मार्गो येभ्यस्ते व्यपगतग्रहचन्द्रसूर्यनक्षत्रज्योतिष्कपथाः, तथा 'मेयवसापूयरुधिरमांसचिक्खिल्ललित्ताणुलेवणतला' इति स्वभावसंपन्नैर्मेदोवसापूतिरुधिरमांसैर्यश्चिक्खिल्लः—कर्दमः तेन लिप्तं—उपदिग्धमनुलेपनेन—सकृद्लिप्तस्य पुनः पुनरुपलेपनेन तलं—भूमिका येषां ते मेदोवसापूतिरुधिरमांसचिक्खिल्ललिप्तानुलेपनतलाः, अत एवाशुचयः—अपवित्रा वीभत्साः दर्शनेऽप्यतिजुगुप्सोत्पत्तेः, क्वचिद् 'वीसा' इति पाठः, तत्र विस्रा—आमगन्धिकाः परमदुरभिगन्धा मृतगवादिकडेवरेभ्योऽप्यतीवानिष्टदुरभिगन्धाः । 'काउयअगणिवन्नाभा' इति, लोहे धम्यमाने यादृक् कपोतो वहुकृष्णरूपोऽग्निवर्णः, किमुक्तं भवति ?—यादृशी वहुकृष्णवर्णभूता अग्निज्वाला विनिर्गच्छतीति तादृश्याभा—आकारो येषां ते कपोताग्निवर्णाभाः, धम्यमानलोहाग्निज्वालाकल्पा इति भावः, नारकोत्पत्तिस्थानव्यतिरेकेणान्यत्र सर्वत्राप्युष्णरूपत्वात्, एतच्च षष्ठसप्तमपृथ्वीवर्जमवसेयं, तथा च वक्ष्यति—'नवरं छट्ठसत्तमीसु णं काउअगणिवन्नाभा न भवन्ति' तथा कर्कशः—अतिदुःसहोऽसिपत्रस्येव स्पर्शो येषु ते कर्कशस्पर्शाः, अत एव 'दुरहियासा' इति, दुःखेनाध्यास्यन्ते—सह्यन्ते दुरध्यासा अशुभा दर्शनतो नरकाः, तथा गन्धरसस्पर्शशब्दैरशुभा—अतीवासातरूपा नरकेषु वेदना, 'एत्थ णं' इत्यादि, यावत् तत्थ णं वहवे निरया परिवसन्ति' 'काला' इत्यादि, कालाः—कृष्णाः, तत्र कोऽपि निष्प्रभतया मन्दकृष्णोऽपि भवति ततस्तदाशङ्काव्यवच्छेदार्थं विशेषणान्तरमाह—कालावभासाः—कालः—कृष्णोऽवभासः—प्रभाविनिर्गमो

येभ्यस्ते कालावभासाः, कृष्णप्रभापटलोपचिता इति भावः, अत एव गम्भीरलोमहर्षाः—गम्भीरः—अतीवोत्कटो लोमहर्षो—लोमोद्धर्षो भयवशाद् येभ्यस्ते गम्भीरलोमहर्षाः, किमुक्तं भवति ?—एवं नाम कृष्णाः कृष्णावभासा यद् दर्शनमात्रेऽपि शेषनारकजन्तूनां भयसंपादनेन मात्रातिगं लोमहर्षमुत्पादयन्तीति, अत एव 'भीमाः' भयानकाः, भीमत्वादेव उत्त्रासनकाः—उत्त्रास्यन्ते शेषनारकजन्तव एभिरित्युत्त्रासनाः उत्त्रासना एवोत्त्रासनकाः, किं बहुना ?—'वर्णेन' वर्णमधिकृत्य परमकृष्णाः, यत ऊर्ध्वं न किमपि कृष्णमस्ति भयानकं वा, बहूत्कर्षप्रासकृष्णवर्णाः प्रज्ञप्ता मया शेषैश्च तीर्थकरैः हे श्रमण ! हे आयुष्मन् ! 'ते णं निच्चं भीया' इत्यादि, ते नैरयिकाः 'णं' इति वाक्यालङ्कारे 'नित्यं' सर्वकालं क्षेत्रस्वभावजनितमहानिबिडान्धकारदर्शनतो भीताः 'नित्यं' सर्वकालं त्रस्ताः परमाधार्मिकपरस्परोदीरितदुःखसंपातभयादग्रेऽपि त्रास(स)मुपपन्नाः 'नित्यं' सर्वकालं परमाधार्मिकैः परस्परं वा त्रासिताः—त्रासं ग्राहिताः तथा 'नित्यं' सर्वकालं यथायोगं परमदुःसहशीतोष्णवेदनानुभवतः परमाधार्मिकपरस्परोदीरितदुःखानुभवतश्चोद्विग्नाः—तद्गतवासपराङ्मुखचित्ताः एवं 'नित्यं' सर्वकालं परममशुभं—एकान्तेनाशुभं संबद्धम्—अनुबद्धं न तु जातुचिदपि मनागप्यपान्तराले व्यवच्छिन्नसंतानं 'नरकभयं' नरकदुःखं 'प्रत्यनुभवन्तः' प्रत्येकं वेदयमाना 'विहरन्ति' अवतिष्ठन्ते ।

कहि णं भंते ! रयणप्पभापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! रयणप्पभापुढवीनेरइआ परिव-

सन्ति ?, गोयमा ! इमीसे रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्समोगाहित्ता
हेट्ठा चेगं जोयणसहस्सं वज्जित्ता मज्झे अट्ठहुत्तरे जोयणसयसहस्से एत्थ णं रयणप्पभापुढवीनेरइयाणं तीसं निरयावासस-
यसहस्सा भवन्तीति मक्खायं, ते णं णरगा अंतो वट्टा बाहिं चउरंसा अहे खुरप्पसंठाणसंठिया निच्चंधयारतमसा ववगय-
गहचंदसूरणक्खत्तजोइसप्पहा मेदवसापूयपडलरुहिरमांसचिक्खिल्ललित्ताणुलेवणतला असुइवीसा परमदुब्भिगंधा काउअग-
णिवन्नाभा कक्खडफासा दुरहियासा असुभा णरगा असुभा णरगेसु वेयणाओ, एत्थ णं रयणप्पभापुढवीनेरइयाणं पज्ज-
त्तापज्जत्ताणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स
असंखेज्जइभागे, तत्थ णं बहवे रयणप्पभापुढवीनेरइया परिवसन्ति, काला कालोभासा गंभीरलोमहरिसा भीमा उत्ता-
सणगा परमकिण्हा वन्नेणं प० समणाउसो !, ते णं निच्चं भीता निच्चं तत्था निच्चं तसिया निच्चं उव्विग्गा निच्चं परममसुह-
संबद्धं णरगभयं पच्चणुभवमाणा विहरन्ति । कहि णं भंते ! सक्करप्पभापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि
णं भंते ! सक्करप्पभापुढवीनेरइया परिवसन्ति ?, गोयमा ! सक्करप्पभापुढवीए बत्तीसुत्तरजोयणसयसहस्सबाहल्लाए उवरिं
एगं जोयणसहस्सं ओगाहित्ता हेट्ठा चेगं जोयणसहस्सं वज्जित्ता मज्झे तीसुत्तरे जोयणसयसहस्से एत्थ णं सक्करप्पभापुढ-
वीनेरइयाणं पणवीसं निरयावाससयसहस्सा हवन्तीति मक्खायं, ते णं णरगा अंतो वट्टा बाहिं चउरंसा अहे खुरप्पसंठा-
णसंठिया निच्चंधयारतमसा ववगयगहचंदसूरनक्खत्तजोइसियप्पहा मेदवसापूयपडलरुहिरमांसचिक्खिल्ललित्ताणुलेवणतला
असुइवीसा परमदुब्भिगंधा काउअगणिवन्नाभा कक्खडफासा दुरहियासा असुभा णरगा असुभा णरगेसु वेयणाओ, एत्थ

णं सक्करप्पभापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएणं समुग्घाएणं सट्ठाणेणं लोगस्स असंखेज्जइभागे, तत्थ णं बहवे सक्करप्पभापुढवीनेरइआ परिवसन्ति, काला कालोभासा गंभीरलोमहरिसा भीमा उत्तासणगा परमकिण्हा वन्नेणं प० समणाउसो ! ते णं निच्चं भीता निच्चं तत्था निच्चं तसिया निच्चं उविग्गा निच्चं परममसुहसंबद्धं नरगभयं पच्चणुभवमाणा विहरन्ति । कहि णं भंते ! वालुयप्पभापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! वालुयप्पभापुढवीनेरइया परिवसंति ?, गोयमा ! वालुयप्पभापुढवीए अट्ठावीसुत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहित्ता हेट्ठा चेगं जोयणसहस्सं वज्जित्ता मज्झे छव्वीसुत्तरजोयणसयसहस्से एत्थ णं वालुयप्पभापुढवीनेरइयाणं पन्नरसनरयावाससयसहस्सा भवन्तीति मक्खायं, ते णं णरगा अंतो वट्टा बाहिं चउरंसा अहे खुरप्पसंठाणसंठिया निच्चंधयारतमसा ववगयगहचंदसूरनक्खत्तजोइसप्पहा मेदवसापूयपडलरुहिरमंसचिक्खिल्ललित्ताणुलेवणतला असुइवीसा परमदुब्भिगंधा काउअगणिवन्नाभा कक्खडफासा दुरहियासा असुभा नरगा असुभा नरगेसु वेयणाओ एत्थ णं वालुयप्पभापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे, तत्थ णं बहवे वालुयप्पभापुढवीनेरइया परिवसंति, काला कालोभासा गंभीरलोमहरिसा भीमा उत्तासणगा परमकिण्हा वन्नेणं प० समणाउसो !, ते णं निच्चं भीता निच्चं तत्था निच्चं तसिंआ निच्चं उविग्गा निच्चं परममसुहं संबद्धं णरगभयं पच्चणुभवमाणा विहरन्ति । कहि णं भंते ! पंकप्पभापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! पंकप्पभापुढवीनेरइया परिवसंति ?, गोयमा ! पंकप्पभापुढवीए वीसुत्तरजोय-

णसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहित्ता हिट्ठा चेगं जोयणसहस्सं वज्जित्ता मज्झे अट्ठारसुत्तरे जोयणसयसहस्से एत्थ णं पंकप्पभापुढवीनेरइयाणं दस निरयावाससयसहस्सा भवन्तीति मक्खायं, ते णं णरगा अंतो वट्टा बाहिं चउरंसा अहे खुरप्पसंठाणसंठिया निच्चंधयारतमसा ववगयगहचंदसूरनक्खत्तजोइसियपहा मेदवसापूयपडलरुहिरमंसचिक्खिल्ललित्ताणुलेवणतला असुइवीसा परमदुब्भिगंधा काउअगणिवन्नाभा कक्खडफासा दुरहियासा असुभा नरगा असुभा नरगेसु वेयणाओ एत्थ णं पंकप्पभापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे, तत्थ णं बहवे पंकप्पभापुढवीनेरइआ परिवसंति, काला कालोभासा गंभीरलोमहरिसा भीमा उत्तासणगा परमकिण्हा वन्नेणं प० समणाउसो !, ते णं निच्चं भीया णिच्चं तत्था णिच्चं तसिया णिच्चं परममसुहसंबद्धं णरगभयं पच्चणुभवमाणा विहरन्ति । कहि णं भन्ते ! धूमप्पभापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! धूमप्पभापुढवीनेरइआ परिवसन्ति ?, गोयमा ! धूमप्पभापुढवीए अट्ठारसुत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहित्ता हेट्ठा चेगं जोयणसहस्सं वज्जित्ता मज्झे सोलसुत्तरजोयणसयसहस्से एत्थ णं धूमप्पभापुढवीनेरइयाणं तिन्नि निरयावाससयसहस्सा भवन्तीति मक्खायं, ते णं णरगा अंतो वट्टा बाहिं चउरंसा अहे खुरप्पसंठाणसंठिया निच्चंधयारतमसा ववगयगहचंदसूरनक्खत्तजोइसियपहा मेदवसापूयपडलरुहिरमंसचिक्खिल्ललित्ताणुलेवणतला असुइवीसा परमदुब्भिगंधा काउअगणिवन्नाभा कक्खडफासा दुरहियासा असुभा नरगा असुभा नरगेसु वेयणाओ एत्थ णं धूमप्पभापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएणं

लोयस्स असंखेज्जइभागे समुग्घाएणं लोयस्स असंखेज्जइभागे सट्ठाणेणं लोयस्स असंखेज्जइभागे, तत्थ णं बहवे धूमप्पभापुढवीनेरइया परिवसन्ति, काला कालोभासा गंभीरलोमहरिसा भीमा उत्तासणगा परमकिण्हा वन्नेणं प०समणाउसो !, ते णं णरगा निच्चं भीता निच्चं तत्था निच्चं तसिया निच्चं उव्विग्गा निच्चं परममसुहसंबद्धं नरगभयं पच्चणुभवमाणा विहरन्ति । कहि णं भंते ! तमापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! तमापुढवीनेरइया परिवसंति ?, गोयमा ! तमाए पुढवीए सोलसुत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहित्ता हिट्ठा चेगं जोयणसहस्सं वज्जित्ता मज्झे चउदसुत्तरजोयणसयसहस्से एत्थ णं तमप्पभापुढवीनेरइयाणं एगे पंचूणे णरगावाससयसहस्से हवन्तीति मक्खायं, ते णं णरगा अंतो वट्टा बाहिं चउरंसा अहे खुरप्पसंठाणसंठिया निच्चंधयारतमसा ववगयगहचंदसूरनक्खत्तजोइसियपहा मेदवसापूयपडलरुहिरमंसचिक्खिल्ललित्ताणुलेवणतला असुइवीसा परमदुब्भिगंधा कक्खडफासा दुरहियासा असुभा नरगा असुभा नरगेसु वेयणाओ, एत्थ णं तमापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे समुग्घाएणं लोयस्स असंखेज्जइभागे सट्ठाणेणं लोयस्स असंखेज्जइभागे, तत्थ णं बहवे तमप्पभापुढवीनेरइया परिवसंति, काला कालोभासा गंभीरलोमहरिसा भीमा उत्तासणगा परमकिण्हा वन्नेणं प० समणाउसो !, ते णं निच्चं भीता निच्चं तत्था निच्चं तसिया निच्चं उव्विग्गा निच्चं परममसुहसंबद्धं नरगभयं पच्चणुभवमाणा विहरन्ति । कहि णं भंते ! तमतमापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! तमतमापुढवीनेरइया परिवसंति ?, गोयमा ! तमतमाए पुढवीए अट्ठोत्तर-जोयणसयसहस्सबाहल्लाए उवरिं अद्धतेवन्नं जोयणसहस्साइं ओगाहित्ता हेट्ठावि अद्धतेवन्नं जोयणसहस्साइं वज्जित्ता मज्झे

तीसु जोयणसहस्सेसु एत्थ णं तमतमापुढवीनेरइयाणं पज्जत्तापज्जत्ताणं पंचदिसि पंच अणुत्तरा महइमहालया महानिरया प०, तं०—काले महाकाले रोरुए महारोरुए अपइट्ठाणे, ते णं णरगा अंतो वट्टा बाहिं चउरंसा अहे खुरप्पसंठाणसंठिआ निच्चंधयारतमसा ववगयगहचंदसूरनक्खत्तजोइसियपहा मेदवसापूयपडलरुहिरमंसचिक्खिल्ललित्ताणुलेवणतला असुइवीसा परमदुब्भिगंधा कक्खडफासा दुरहियासा असुभा नरगा असुभा नरगेसु वेयणाओ, एत्थ णं तमतमापुढवीनेरइयाणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे समुग्घाएणं लोयस्स असंखेज्जइभागे सट्ठाणेणं लोयस्स असंखेज्जइभागे तत्थ णं बहवे तमतमापुढवीनेरइआ परिवसंति, काला कालोभासा गंभीरलोमहरिसा भीमा उत्तासणगा परमकिण्हा वन्नेणं प० समणाउसो !, ते णं निच्चं भीता निच्चं तत्था निच्चं तासिया निच्चं उव्विग्गा निच्चं परममसुहसंबद्धं णरगभयं पच्चणुभवमाणा विहरन्ति ॥ आसीयं बत्तीसं अट्ठावीसं च हुंति वीसं च । अट्ठारससोलसगं अट्ठुत्तरमेव हिट्ठिमिया ॥ १ ॥ अट्ठुत्तरं च तीसं छव्वीसं चेव सयसहस्सं तु । अट्ठारस सोलसगं चउद्दसमहियं तु छट्ठीए ॥ २ ॥ अद्धतिवन्नसहस्सा उवरिमहे वज्जिऊण तो भणियं । मज्झे तिसहस्सेसुं होन्ति उ नरगा तमतमाए ॥ ३ ॥ तीसा य पन्नवीसा पन्नरस दसेव सयसहस्साइं । तिन्नि य पंचूणेगं पंचेव अणुत्तरा नरगा ॥ ४ ॥ ( सू० ४३ )

तदेवं सामान्यतो नैरयिकसूत्रं व्याख्यातं, एवं रत्नप्रभादिविषयाण्यपि सूत्राणि यथायोगं परिभावनीयानि, प्राय उक्तव्याख्यानुसारेण सुगमत्वात्, केवलं षष्ठपृथिव्यां सप्तमपृथिव्यां च नरकावासाः कपोताग्निवर्णाभा न वक्तव्याः,

नारकोत्पत्तिस्थानव्यतिरेकेणान्यत्र सर्वत्रापि तेषां शीतपरिणामत्वात्, तथा चाह—"नवरं छट्ठसत्तमीसु णं काउअ-अगणिवन्नाभा न भवन्ति"। सम्प्रति यथोक्तपृथिवीबाहल्यपरिमाणप्रतिपादिकां संग्रहणीगाथामाह—'आसीयं बत्तीसं' इत्यादि, आशीतं—अशीतिसहस्राधिकं शतसहस्रं रत्नप्रभाया बाहल्यं द्वात्रिंशं—द्वात्रिंशत्सहस्राधिकं शर्कराप्रभायाः 'अष्टाविंशं' अष्टाविंशतिसहस्राधिकं वालुकाप्रभायाः विंशतिसहस्राधिकं पङ्कप्रभायाः अष्टादशसहस्राधिकं धूमप्रभायाः षोडशसहस्राधिकं तमःप्रभायाः अष्टोत्तरम्—अष्टसहस्राधिकं लक्षं 'हेट्ठिमिया' सर्वाधस्तन्यास्तमस्तमःप्रभाया इति। संप्रति उपर्यधश्चैकैकं योजनसहस्रं मुक्त्वा यावत्प्रमाणं नरकावासयोग्यं पृथिवीबाहल्यं तावत्संग्रहीतुकाम आह—'अट्ठुत्तरं च' इत्यादिगाथाद्वयं, रत्नप्रभाया हि अशीतिसहस्राधिकं लक्षं बाहल्यपरिमाणं तस्योपरितनमेकं योजनसहस्रमेकं चाधो योजनसहस्रं वर्जयित्वा शेषं नरकावासाधारभूतं, अतो रत्नप्रभाया नरकावासयोग्यं बाहल्यपरिमाणमष्टसप्ततिसहस्राधिकं लक्षं भवति, एवं सर्वत्राप्युपयुज्य भावनीयं। साम्प्रतं नरकावाससंख्याप्रतिपादनाय संग्रहणीगाथामाह—'तीसा य' इत्यादि, गतार्था॥

कहि णं भंते! पंचिंदियतिरिक्खजोणियाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, गोयमा! उड्ढलोए तदेक्कदेसभाए अहोलोए तदेक्कदेसभाए तिरियलोए अगडेसु तलायेसु नदीसु दहेसु वावीसु पुक्खरिणीसु दीहियासु गुंजालियासु सरेसु सरपंतियासु सरसरपंतियासु बिलेसु बिलपंतियासु उज्झरेसु निज्झरेसु चिल्ललेसु पल्ललेसु वप्पिणेसु दीवेसु समुद्देसु सव्वेसु चेव जलासएसु

जलठाणेसु एत्थ णं पंचिंदियतिरिक्खजोणियाणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं सव्वलोयस्स असंखेज्जइभागे सट्ठाणेणं सव्वलोयस्स असंखेज्जइभागे ॥ ( सू० ४४ )

तिर्यक्पञ्चेन्द्रियसूत्रं प्राग्वत्, नवरमूर्ध्वलोके तदेकदेशे–तिर्यक्पञ्चेन्द्रिया मत्स्यादयो मन्दराद्रिवाप्यादिषु, अधोलोके तदेकदेशे–अधोलौकिकग्रामादिष्वित्यर्थः ।

कहि णं भंते ! मणुस्साणं पज्जत्तापज्जत्ताणं ठाणा प० ?, गोयमा ! अंतो मणुस्सखेत्ते पणयालीसाए जोयणसयसहस्सेसु अड्डाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु तीसाए अकम्मभूमीसु छप्पन्नाए अंतरदीवेसु एत्थ णं मणुस्साणं पज्जत्तापज्जत्ताणं ठाणा प०, उववाएण लोयस्स असंखेज्जइभागे, समुग्घाएणं सव्वलोए, सट्ठाणेणं लोयस्स असंखेज्जइभागे ॥ (सू०४५)

मनुष्यसूत्रमपि सुगमं, नवरं 'समुग्घाएणं सव्वलोए' इति केवलिसमुद्घातमधिकृत्य ॥ सम्प्रति भवनपतिस्थानप्रतिपादनार्थमाह—

कहि णं भंते ! भवणवासीणं देवाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! भवणवासी देवा परिवसंति ?, गोयमा ! इमीसे रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहित्ता हेट्ठा चेगं जोयणसहस्सं वज्जित्ता मज्झे अट्ठहुत्तरे जोयणसयसहस्से एत्थ णं भवणवासीणं देवाणं सत्त भवणकोडीओ बावत्तरि भवणावाससयसहस्सा भवन्तीति मक्खायं, ते णं भवणा बाहिं वट्टा अंतो चउरंसा अहे पुक्खरकण्णियासंठाणसंठिया उक्किण्णंतर-

विउलगंभीरखातफलिहा पागारट्टालयकवाडतोरणपडिदुवारदेसभागा जंतसयग्घिमुसंढिपरियारिया अउज्झा सदाजया सदागुत्ता अडयालकोट्ठगरइया अडयालकयवणमाला खेमा सिवा किंकरामरदंडोवरक्खिया लाउल्लोइयमहिया गोसीससरसरत्तचंदणदद्दरदिन्नपंचंगुलितला उवचियचंदणकलसा चंदणघडसुकयतोरणपडिदुवारदेसभागा आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावा पंचवन्नसरससुरभिमुक्कपुप्फपुंजोवयारकलिया ( ग्रंथाग्रं १००० ) कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामा सुगंधवरगंधिया गंधवट्टिभूया अच्छरगणसंघसंविगिन्ना दिव्वतुडियसद्दसंपणातिया सव्वरयणामया अच्छा सण्हा लण्हा घट्ठा मट्ठा णीरया निम्मला निप्पंका निक्कंकडच्छाया सप्पहा ससिरिया समिरिया सउज्जोया पासादीया दरिसणिज्जा अभिरूवा पडिरूवा, एत्थ णं भवणवासिदेवाणं पज्जत्तापज्जत्ताणं ठाणा पं०, उववाएणं लोयस्स असंखेज्जइभागे, समुग्घाएणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे, तत्थ णं बहवे भवणवासी देवा परिवसंति, तं०—असुरा नाग सुवन्ना विज्जू अग्गी य दीव उदही य। दिसिपवणथणियनामा दसहा एए भवणवासी ॥ १२९ ॥ चूडामणिमउडरयणभूसणणागफडगरुलवइरपुन्नकलसंकउप्फेसा सीहमगरगयंकअस्सवरवद्धमाणनिज्जुत्तचित्तचिंधगता सुरूवा महड्ढिया महज्जुइआ महब्बला महायसा महाणुभावा महासोक्खा हारविराइअवच्छा कडगतुडियथंभियभुआ अंगदकुंडलमट्ठगंडतलकन्नपीढधारी विचित्तहत्थाभरणा विचित्तमालामउलिमउडा कल्लाणगपवरवत्थपरिहिया कल्लाणगपवरमल्लाणुलेवणधरा भासुरबोंदिपलंबवणमालधरा दिव्वेणं वन्नेणं दिव्वेणं गंधेणं दिव्वेणं फासेणं दिव्वेणं संघयणेणं दिव्वेणं संठाणेणं दिव्वाए इड्ढीए दिव्वाए जुईए दिव्वाए पभाए दिव्वाए छायाए दिव्वाए अच्चीए दिव्वेणं तेएणं दिव्वाए लेसाए दस दिसाओ

उज्जोवेमाणा पभासेमाणा ते णं तत्थ साणं साणं भवणावाससयसहस्साणं साणं साणं सामाणियसाहस्सीणं साणं साणं तायत्तीसाणं साणं साणं लोगपालाणं साणं साणं अग्गमहिसीणं साणं साणं परिसाणं साणं साणं अणिआणं साणं साणं अणिआहिवईणं साणं साणं आयरक्खदेवसाहस्सीणं अन्नेसिं च बहूणं भवणवासीणं देवाण य देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणा पालेमाणा महताहतनट्टगीयवाइयतंतितलतालतुडियघणमुइंगपडुप्पवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणा विहरंति ।

'कहि णं भंते ! भवणवासीणं देवाणं' इत्यादि, 'असीउत्तरजोयणसयसहस्सबाहल्लाए' इति अशीत्युत्तरं—अशीतिसहस्राधिकयोजनशतसहस्रं बाहल्यं यस्याः सा तथा तस्याः 'सत्त भवणकोडीओ बावत्तरिं भवणावाससयसहस्सा भवन्तीति मक्खायं' इति असुरकुमाराणां हि चतुःषष्टिशतसहस्राणि भवनानां, ततः सर्वसंख्यया यथोक्तं भवनसंख्यानं भवति, 'ते णं भवणा' इत्यादि, तानि 'णं' इति वाक्यालङ्कारे, पुंस्त्वं प्राकृतत्वात्, भवनानि बहिर्वृत्तानि—वृत्ताकाराणि अन्तः समचतुरस्राणि अधस्तनभागे पुष्करकर्णिकासंस्थानसंस्थितानि कर्णिका नाम उन्नतसमचित्रविन्दुकिनी 'उक्किन्नंतरविउलगंभीरखातफलिहा' इति उत्कीर्णमिवोत्कीर्णमतीव व्यक्तमित्यर्थः, उत्कीर्णमन्तरं यासां खातपरिखाणां ता उत्कीर्णान्तराः, किमुक्तं भवति ?—खातानां च परिखाणां च स्पष्टवैविक्त्योन्मीलनार्थमपान्तराले महती पाली समस्तीति, खातानि च परिखाश्च खातपरिखाः उत्कीर्णान्तरा विपुला—विस्तीर्णा

गम्भीरा—अलब्धमध्यभागा खातपरिखा येषा भवनाना परितस्तानि उत्कीर्णान्तरविपुलगम्भीरखातपरिखानि, खातपरिखानां चायं प्रतिविशेषः—परिखा उपरि विशाला अधः संकुचिता, खातं तु उभयत्रापि सममिति, 'पागारट्टालयकवाडतोरणपडिदुवारदेसभागा' इति, प्रतिभवनं प्राकारेषु—सालेषु अट्टालककपाटतोरणप्रतिद्वाराणि—अट्टालककपाटतोरणप्रतिद्वाररूपा देशभागा—देशविशेषा येषु तानि प्राकाराट्टालककपाटतोरणप्रतिद्वारदेशभागानि, तत्राट्टालकाः—प्राकारस्योपरि भृत्याश्रयविशेषाः कपाटानि—प्रतोलीद्वारसत्कानि, एतेन प्रतोल्यः सर्वत्र सूचिताः, अन्यथा कपाटानामसंभवात्, तोरणानि प्रतोलीद्वारेषु प्रतिद्वाराणि—स्थूलद्वारापान्तरालवर्तीनि लघुद्वाराणि, तथा 'जंतसयग्घिमुसलमुसंढिपरिवारिया' इति यन्त्राणि—नानाप्रकाराणि शतघ्न्यो—महायष्टयो महाशिला वा याः पातिताः सत्यः पुरुषाणां शतानि घ्नन्ति मुशलानि—प्रतीतानि मुसण्ढ्यः—प्रहरणविशेषाः तैः परिवारितानि—समन्ततो वेष्टितानि, अत एवायोध्यानि—परैर्योद्धुमशक्यानि, अयोध्यत्वादेव च 'सदाजयानि' सदा—सर्वकालं जयो येषु तानि सदाजयानि, सर्वकालं जयवन्तीत्यर्थः, तथा सदा—सर्वकालं गुप्तानि प्रहरणैः पुरुषैश्च योद्धृभिः सर्वतः—समन्ततो निरन्तरं परिवारिततया परेषामसहमानानां मनागपि प्रवेशासंभवात्, 'अडयालकोट्ठगरइया' इति अष्टचत्वारिंशद्भेदभिन्नविच्छित्तिकलिताः कोष्ठका—अपवरका रचिताः—स्वयमेव रचनां प्राप्ता येषु तानि अष्टचत्वारिंशत्कोष्ठकरचितानि, सुखादिदर्शनात् पाक्षिको निष्ठान्तस्य परनिपातः, तथा अष्टचत्वारिंशद्भेदभिन्नविच्छित्तयः कृता वनमाला येषु

तानि अष्टचत्वारिंशत्कृतवनमालानि, अन्ये त्वभिदधति—अडयालशब्दो देशीवचनत्वात् प्रशंसावाची, ततोऽयमर्थः—प्रशस्तकोष्ठकरचितानि प्रशस्तकृतवनमालानीति, तथा क्षेमाणि—परकृतोपद्रवरहितानि, शिवानि—सदा मङ्गलोपेतानि, तथा किङ्कराः—किङ्करभूता येऽमरास्तैर्दण्डैः कृत्वोपरक्षितानि सर्वतः—समन्ततो रक्षितानि किङ्करामरदण्डोपरक्षितानि, 'लाउल्लोइयमहिया' इति लाइयं नाम—यद् भूमेर्गोमयादिनोपलेपनं उल्लोइयं—कुड्यानां मालस्य च सेटिकादिभिः संमृष्टीकरणं, लाउल्लोइयाभ्यां महितानि—पूजितानि लाउल्लोइयमहितानि, तथा गोशीर्षेण—गोशीर्षनामकचन्दनेन सरसरक्तचन्दनेन च दर्दरेण—बहलेन चपेटाप्रकारेण वा दत्ताः पञ्चाङ्गुलयस्तला—हस्तका येषु तानि गोशीर्षसरसरक्तचन्दनदर्दरदत्तपञ्चाङ्गुलितलानि, तथा उपचिता—निवेशिताः चन्दनकलशा—माङ्गल्यकलशा येषु तानि उपचितचन्दनकलशानि, 'चन्दनघडसुकयतोरणपडिदुवारदेसभागा' इति चन्दनघटैः—चन्दनकलशैः सुकृतानि—सुष्ठुकृतानि शोभितानीति तात्पर्यार्थः यानि तोरणानि तानि चन्दनघटसुकृततोरणानि प्रतिद्वारदेशभागे येषु तानि चन्दनघटसुकृततोरणप्रतिद्वारदेशभागानि तथा 'आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावा' इति आ—अवाङ् अधोभूमौ सक्त आसक्तो भूमौ लग्न इत्यर्थः ऊर्ध्वं सक्त उत्सक्तः उल्लोचतले उपरि संबद्ध इत्यर्थः विपुला—विस्तीर्णः वृत्तो—वर्तुलः 'वग्घारिय' इति प्रलम्बितो माल्यदामकलापः—पुष्पमालासमूहो येषु तान्यासक्तोत्सक्तविपुलवृत्तप्रलम्बितमाल्यदामकलापानि, तथा पञ्चवर्णेन सुरभिणा मुक्तेन—क्षिप्तेन पुष्पपुञ्जलक्षणेन उपचारेण—पूजया कलितानि

पञ्चवर्णसुरभिमुक्तपुष्पपुञ्जोपचारकलितानि, 'कालागुरुपवरकुन्दुरुक्कतुरुक्कधूवमघमघंतगन्धुद्धूयाभिरामे' इति कालागुरुः प्रसिद्धः प्रवरः—प्रधानः कुन्दुरुक्कः—चीडा तुरुष्कं—सिल्हकं कालागुरुश्च प्रवरकुन्दुरुक्कतुरुष्के च कालागुरुप्रवरकुन्दुरुक्कतुरुष्काणि तेषां धूपस्य यो मघमघायमानो गन्ध उद्धूत—इतस्ततो विप्रसृतस्तेनाभिरामाणि—रमणीयानि कालागुरुप्रवरकुन्दुरुक्कतुरुष्कधूपमघमघायमानगन्धोद्धूताभिरामाणि, तथा शोभनो गन्धो येषां ते सुगन्धाः ते च ते वरगन्धाश्च—वासाः सुगन्धवरगन्धास्तेषां गन्धः स एष्वस्तीति सुगन्धवरगन्धगन्धिकानि, "अतोऽनेकस्वरात्" इति इकप्रत्ययः, अत एव गन्धवर्तिभूतानि—सौरभ्यातिशयाद् गन्धद्रव्यगुटिकाकल्पानीति भावः, तथा अप्सरोगणानां संघः—समुदायः तेन सम्यक्—रमणीयतया विकीर्णानि—व्याप्तानि अप्सरोगणसङ्घविकीर्णानि, तथा दिव्यानां त्रुटितानाम्—आतोद्यानां वेणुवीणामृदङ्गादीनां ये शब्दास्तैः संप्रणदितानि—सम्यक्—श्रोतृमनोहारितया प्रकर्षेण सर्वकालं नदितानि—शब्दवन्ति, 'सर्वरत्नमयानि' सर्वात्मना—सामस्त्येन न त्वेकदेशेन रत्नमयानि समस्तरत्नमयानि वा, अच्छानि—आकाशस्फटिकवदतिस्वच्छानि, श्लक्ष्णानि—श्लक्ष्णपुद्गलस्कन्धनिष्पन्नानि श्लक्ष्णदलनिष्पन्नपटवत्, 'लण्हानि' मसृणानि घुण्टितपटवत्, 'घट्ठा' इति घृष्टानीव घृष्टानि खरशाणया पाषाणप्रतिमावत्, 'मट्ठा' इति, मृष्टानि, सुकुमारशाणया पाषाणप्रतिमेव, अत एव नीरजांसि स्वाभाविकरजोरहितत्वाद् निर्मलानि आगन्तुकमलाभावात् निष्पङ्कानि—कलङ्कविकलानि कर्दमरहितानि वा 'निक्कंकडच्छाया' इति निष्कङ्कटा—निष्कवचा निरावरणा

निरुपघातेति भावार्थः छाया—दीप्तिर्येषां तानि निष्कङ्कटच्छायानि, सप्रभाणि—स्वरूपतः प्रभावन्ति, समरीचीनि—बहिर्विनिर्गतकिरणजालानि, सोद्योतानि—बहिर्व्यवस्थितवस्तुस्तोमप्रकाशनकराणि, 'प्रसादीयानि' प्रसादाय—मनःप्रसत्तये हितानि प्रसादीयानि—मनःप्रसत्तिकारीणीति भावः, तथा दर्शनीयानि—दर्शनयोग्यानि यानि पश्यतः चक्षुषी न श्रमं गच्छत इति तात्पर्यार्थः 'अभिरूपा' इति अभि—सर्वेषां द्रष्टॄणां मनःप्रसादानुकूलतया अभिमुखं रूपं येषां तानि अभिरूपाणि अत्यन्तकमनीयानीत्यर्थः, अत एव 'पडिरूवा' इति प्रतिविशिष्टं रूपं येषां तानि प्रतिरूपाणि, अथवा प्रतिक्षणं नवं नवं रूपं येषां तानि प्रतिरूपाणि। 'एते भवणवासी' इत्यादि, एते अनन्तरोक्ता असुरकुमारादयो भवनवासिनो यथाक्रमं चूडामणिमुकुटरत्नभूषणनियुक्तनागस्फटादिचित्रचिह्नधराश्च, तथाहि—असुरकुमारभवनवासिनश्च चूडामणिमुकुटरत्नाः, चूडामणिर्नाम मुकुटे रत्नं चिह्नभूतं येषां ते तथा, नागकुमारा भूषणनियुक्तनागस्फटारूपचिह्नधराः, सुवर्णकुमारा भूषणनियुक्तगरुडरूपचिह्नधराः, विद्युत्कुमारा भूषणनियुक्तवज्ररूपचिह्नधराः, वज्रं नाम शक्रस्यायुधं, अग्निकुमारा मुकुटनियुक्तपूर्णकलशरूपचिह्नधराः, द्वीपकुमारा भूषणनियुक्तसिंहरूप(चिह्न)धराः, उदधिकुमारा भूषणनियुक्तहयवररूपचिह्नधराः दिक्कुमारा भूषणनियुक्तगजरूपचिह्नधराः, वायुकुमारा भूषणनियुक्तमकररूपचिह्नधराः, स्तनितकुमारा भूषणनियुक्तवरवर्द्धमानरूपचिह्नधराः, वर्द्धमानकं—शरावसंपुटं। अक्षरगमनिका त्वेवम्—भूषणेषु नागस्फटागरुडवज्राणि येषां ते भूषणनागस्फटागरुडवज्राः, पूर्णकलशेनाङ्कित उप्फे-

सो—मुकुटो येषां ते पूर्णकलशाङ्कितोप्फेसाः, तथा सिंहहयवरगजा अङ्का अर्थाद् भूषणेषु येषां ते सिंहहयवरगजाङ्काः, तथा मकरवर्द्धमानके नियुक्ते—भूषणेषु नियोजिते चित्रे—आश्चर्यभूते चिह्ने गते—स्थिते येषां ते मकरवर्द्धमानकनियुक्तचित्रचिह्नगतास्ततः पूर्वपदैर्द्वन्द्वसमासः। पुनः सर्वे कथंभूताः? इत्याह—'सुरूपाः' शोभनं रूपं येषां ते तथा, अत्यन्तकमनीयरूपा इत्यर्थः, तथा 'महिड्डिया' इति महती ऋद्धिः—भवनपरिवारादिका येषां ते महर्द्धिकाः, तथा महती द्युतिः—शरीरगता आभरणगता च येषामिति महाद्युतयः, तथा महद् बलं—शारीरः प्राणो येषां ते महाबलाः, तथा महद् यशः—ख्यातिर्येषां ते महायशसः, तथा महाननुभागः—सामर्थ्यं शापानुग्रहविषयं येषां ते महानुभागाः, तथा 'महेसक्खा' इति महान् ईश—ईश्वर इत्याख्या—प्रसिद्धिर्येषां ते महेशाख्याः, अथवा ईशनमीशो भावे घञ्प्रत्ययः ऐश्वर्यमित्यर्थः 'ईश ऐश्वर्ये' इति वचनात् तमीशम्—ऐश्वर्यमात्मानं ख्यान्ति—अन्तर्भूतण्यर्थतया ख्यापयन्ति-प्रथयन्ति इति ईशाख्याः महान्तश्च ते ईशाख्याश्च महेशाख्याः, क्वचिद् 'महासोक्खा' इति पाठः तत्र महत् सौख्यं प्रभूतसद्वेद्योदयवशाद् येषां ते महासौख्याः, अन्ये पठन्ति—'महासक्खा' इति, तत्रायं शब्दसंस्कारो—महाश्वाक्षाः, इयं चात्र पूर्वसूरिप्रदर्शिता व्युत्पत्तिः—आशुगमनादश्वो—मनः अक्षाणि—इन्द्रियाणि स्वस्वविषयव्यापकत्वात् अश्वश्च अक्षाणि चेत्यश्वाक्षाणि महान्त्यश्वाक्षाणि येषां ते महाश्वाक्षाः, 'हारविराइयवच्छा' इति हारैर्विराजितं वक्षो येषां ते हारविराजितवक्षसः, 'कडगतुडियथंभियभुया' इति कटकानि—कलाचिकाऽऽभरणानि त्रुटितानि—बाहुरक्षकास्तैः

स्तम्भितौ इव स्तम्भितौ भुजौ येषां ते कटकत्रुटितस्तम्भितभुजाः, तथा अङ्गदानि—बाहुशीर्षाऽऽभरणविशेषरूपाणि कुण्डले—कर्णाभरणविशेषरूपे तथा मृष्टौ—मृष्टीकृतौ गण्डौ—कपोलौ यैस्तानि मृष्टगण्डानि, कर्णपीठानि—कर्णाभरणविशेषरूपाणि धारयन्तीत्येवंशीला अङ्गदकुण्डलमृष्टगण्डकर्णपीठधारिणः, तथा विचित्राणि—नानारूपाणि हस्ताभरणानि येषां ते विचित्रहस्ताभरणाः, तथा 'विचित्तमालामउलिमउडा' विचित्रा माला—कुसुमस्रग् मौलौ—मस्तके मुकुटं च येषां ते विचित्रमालामौलिमुकुटाः, तथा कल्याणकं—कल्याणकारि प्रवरं वस्त्रं परिहितं यैस्ते कल्याणकप्रवरवस्त्रपरिहिताः, सुखादिदर्शनाद् निष्ठान्तस्यात्र पाक्षिकः परनिपातः, तथा कल्याणकं—कल्याणकारि यत् प्रवरं माल्यं—पुष्पदाम यच्चानुलेपनं तद् धरन्तीति कल्याणकप्रवरमाल्यानुलेपनधराः, तथा भास्वरा—देदीप्यमाना बोन्दिः—शरीरं येषां ते भास्वरबोन्दयः, तथा प्रलम्ब इति—प्रलम्बा या वनमाला ता धरन्तीति प्रलम्बवनमालाधराः, 'दिव्वेणं संघयणेणं'ति शक्तिविशेषमपेक्ष्य संहननेनेव संहननेन न तु साक्षात् संहननेन, देवानां संहननासंभवात्, संहननं हि अस्थिरचनात्मकं, न च देवानां अस्थीनि सन्ति, तथा चोक्तं जीवाभिगमे—"देवा असंघयणी, जम्हा तेसिं नेवट्ठी नेव सिरा" इत्यादि, 'दिव्वाए इड्ढीए' दिव्यया—प्रधानया ऋद्ध्या—परिवारादिकया दिव्यया द्युत्या—इष्टार्थसंप्रयोगलक्षणया 'द्यु अभिगमने' इति वचनात्, दिव्यया प्रभया—भवनावासगतया, दिव्यया छायया—समुदायशोभया, दिव्येनार्चिषा—शरीरस्थरत्नादितेजोज्वालया, दिव्येन तेजसा शरीरप्रभवेन, दिव्यया लेश्यया—देहवर्णसुन्दर-

तया दश दिश उद्योतयन्तः—प्रकाशयन्तः 'पभासेमाणा' शोभमानास्ते भवनवासिनो देवा 'णं' इति वाक्यालङ्कारे, तत्र स्वस्थाने 'साणं साणं' इति स्वेषां स्वेषामात्मीयात्मीयानामित्यर्थः 'आहेवच्चं पोरेवच्चं' इत्यादि अधिपतेः कर्म आधिपत्यं रक्षा इत्यर्थः, सा च रक्षा सामान्येनाप्यारक्षकेणेव क्रियते तत आह—पुरस्य पतिः पुरपतिः तस्य कर्म पौरपत्यं सर्वेषामात्मीयानामग्रेसरत्वमिति भावः, तच्चाग्रेसरत्वं नायकत्वमन्तरेणापि स्वनायकनियुक्ततथाविधगृहचिन्तकसामान्यपुरुषस्येव भवति ततो नायकत्वप्रतिपत्त्यर्थमाह—स्वामित्वं—स्वमस्यास्तीति स्वामी तद्भावः स्वामित्वं नायकत्वमित्यर्थः, तदपि च नायकत्वं कस्यचित् पोषकत्वमन्तरेणापि भवति यथा हरिणाधिपतेर्हरिणस्य तत आह—भर्तृत्वं—पोषकत्वं, अत एव महत्तरकत्वं, तदपि महत्तरकत्वं कस्यचिदाज्ञाविकलस्यापि भवति यथा कस्यचिद् वणिजः स्वदासवर्गं प्रति तत आह—'आणाईसरसेणावच्चं' आज्ञया ईश्वर आज्ञेश्वरः सेनायाः पतिः सेनापतिः आज्ञेश्वरश्चासौ सेनापतिश्च आज्ञेश्वरसेनापतिस्तस्य कर्म आज्ञेश्वरसेनापत्यं स्वस्वसैन्यं प्रत्यद्भुतमाज्ञाप्राधान्यमिति भावः, कारयन्तोऽन्यैर्नियुक्तकैः पुरुषैः पालयन्तः स्वयमेव महता रवेणेति योगः, 'अहयत्ति' आख्यानकप्रतिबद्धानि यदिवा अहतानि—अव्याहतानि नित्यानुबन्धीनीति भावः ये नाट्यगीते—नाट्यं—नृत्यं गीतं—गानं यानि च वादितानि—तन्त्रीतलतालत्रुटितानि तत्र तन्त्री—वीणा तलौ—हस्ततलौ तालः—कंसिका त्रुटितानि—वादित्राणि तथा यश्च घनमृदङ्गः पटुना पुरुषेण प्रवादितः, तत्र घनमृदङ्गो नाम घनसमानध्वनिर्यो मृदङ्गः, तत एतेषां

द्वन्द्वः, तेषां रवेण दिव्यान्—दिवि भवान् प्रधानानिति भावः, भोगार्हाः भोगाः—शब्दादयो भोगभोगास्तान् भुञ्जमाना 'विहरन्ति' आसते ॥

कहि णं भंते ! असुरकुमाराणं देवाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! असुरकुमारा देवा परिवसंति ?, गोयमा ! इमीसे रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहित्ता हेट्ठा चेगं जोयणसहस्सं वज्जित्ता मज्झे अट्ठहुत्तरे जोयणसयसहस्से एत्थ णं असुरकुमाराणं देवाणं चउसट्ठिं भवणावाससयसहस्सा भवन्तीति मक्खायं । ते णं भवणा बाहिं वट्टा अंतो चउरंसा अहे पुक्खरकन्नियासंठाणसंठिया उक्किन्नंतरविउलगंभीरखायफलिहा पागारट्टालयकवाडतोरणपडिदुवारदेसभागा जंतसयग्घिमुसलमुसंढिपरियारिया अउज्झा सदाजया सदागुत्ता अडयालकोट्ठगरइया अडयालकयवणमाला खेमा सिवा किंकरामरदंडोवरक्खिया लाउल्लोइयमहिया गोसीससरसरत्तचंदणदद्दरदिन्नपंचंगुलितला उवचितचंदणकलसा चंदणघडसुकयतोरणपडिदुवारदेसभागा आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावा पंचवन्नसरसुरभिमुक्कपुप्फपुंजोवयारकलिया कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धुयाभिरामा सुगंधवरगंधिया गंधवट्टिभूया अच्छरगणसंघसंविगिन्ना दिव्वतुडियसद्दसंपणादिया सव्वरयणामया अच्छा सण्हा लण्हा घट्ठा मट्ठा णीरया निम्मला निप्पंका निक्कंकडच्छाया सप्पभा सस्सिरीया समिरीया सउज्जोया पासादीया दरिसणिज्जा अभिरूवा पडिरूवा एत्थ णं असुरकुमाराणं देवाणं पज्जत्तापज्जत्ताणं ठाणा पन्नत्ता, उववाएणं लोयस्स असंखेज्जइभागे, समु-

ग्घायेणं लोयस्स असंखेज्जइभागे, सट्ठाणेणं लोयस्स असंखेज्जइभागे, तत्थ णं बहवे असुरकुमारा देवा परिवसंति, काला लोहियक्खबिंबोट्ठा धवलपुप्फदंता असियकेसा वामे एगकुंडलधरा अद्दचंदणाणुलित्तगत्ता ईसीसिलिंधपुप्फपगासाइं असंकिलिट्ठाइं सुहुमाइं वत्थाइं पवरपरिहिया वयं च पढमं समइक्कंता बिइयं च वयं असंपत्ता भद्दे जोव्वणे वट्टमाणा तलभंगयतुडियपवरभूसणनिम्मलमणिरयणमंडितभुया दसमुद्दामंडियग्गहत्था चूडामणिविचित्तचिंधगया सुरूवा महिड्ढिया महज्जुइया महायसा महब्बला महाणुभागा महासोक्खा हारविराइयवच्छा कडयतुडियथंभियभुया अंगयकुंडलमट्ठगंडयलकन्नपीढधारी विचित्तहत्थाभरणा विचित्तमालामउली कल्लाणगपवरवत्थपरिहिया कल्लाणगमल्लाणुलेवणधरा भासुरबोंदी पलंबवणमालधरा दिव्वेणं वन्नेणं दिव्वेणं गंधेणं दिव्वेणं फासेणं दिव्वेणं संघयणेणं दिव्वेणं संठाणेणं दिव्वाए इड्ढीए दिव्वाए जुईए दिव्वाए पभाए दिव्वाए छायाए दिव्वाए अच्चीए दिव्वेणं तेएणं दिव्वाए लेसाए दस दिसाओ उज्जोवेमाणा पभासेमाणा ते णं तत्थ साणं साणं भवणावाससयसहस्साणं साणं साणं सामाणियसाहस्सीणं साणं साणं तायत्तीसाणं साणं साणं लोगपालाणं साणं साणं अग्गमहिसीणं साणं साणं परिसाणं साणं साणं अणियाणं साणं साणं अणियाहिवईणं साणं साणं आयरक्खदेवसाहस्सीणं अन्नेसिं च बहूणं भवणवासीणं देवाण य देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणा पालेमाणा महताहतनट्टगीतवाइयतंतीतलतालतुडियघणमुइंगपडुप्पवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणा विहरंति ॥ चमरबलिणो इत्थ दुवे असुरकुमारिंदा असुरकुमाररायाणो परिवसंति, काला महानीलसरिसा णीलगुलिअगवलअयसिकुसुमप्पगासा वियसियसयवत्तणिम्मलईसिसितरत्ततंबणयणा गरुलाययउज्जुतुंगनासा उव-

चियसियप्पवालबिंबफलसंनिहाहरोट्ठा पंडुरससिसगलविमलनिम्मलदहिघणसंखगोक्खीरकुंददगरयमुणालियाधवलदंतसेढी हुयवहनिद्धंतधोयतत्ततवणिज्जरत्ततलतालुजीहा अंजणघणकसिणगरुयगरमणिज्जणिद्धकेसा वामेयकुंडलधरा अद्दचंदणाणुलित्तगत्ता ईसिसिलिंधपुप्फपगासाइं असंकिलिट्ठाइं सुहुमाइं वत्थाइं पवरपरिहिया वयं च पढमं समइक्कंता विइयं तु असंपत्ता भद्दे जोव्वणे वट्टमाणा तलभंगयतुडियपवरभूसणणिम्मलमणिरयणमंडियभुया दसमुद्दामंडियग्गहत्था चूडामणिचित्तचिंधगया सुरूवा महड्ढिया महज्जुईआ महायसा महाबला महाणुभागा महासोक्खा हारविराइयवच्छा कडयतुडियथंभियभुया अंगदकुंडलमट्ठगंडतलकन्नपीढधारी विचित्तहत्थाभरणा विचित्तमालामउली कल्लाणगपवरवत्थपरिहिया कल्लाणगपवरमल्लाणुलेवणधरा भासुरबोंदी पलंबवणमालधरा दिव्वेणं वन्नेणं दिव्वेणं गंधेणं दिव्वेणं फासेणं दिव्वेणं संघयणेणं दिव्वेणं संठाणेणं दिव्वाए इड्ढीए दिव्वाए जुईए दिव्वाए पभाए दिव्वाए छायाए दिव्वाए अच्चीए दिव्वेणं तेएणं दिव्वाए लेसाए दस दिसाओ उज्जोवेमाणा पभासेमाणा ते णं तत्थ साणं साणं भवणावाससयसहस्साणं साणं साणं सामाणियसाहस्सीणं साणं साणं तायत्तीसाणं साणं साणं लोगपालाणं साणं साणं अग्गमहिसीणं साणं साणं परिसाणं साणं साणं अणियाणं साणं साणं अणियाहिवईणं साणं साणं आयरक्खदेवसाहस्सीणं अन्नेसिं च बहूणं भवणवासीणं देवाण य देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणा पालेमाणा महयाहयनट्टगीयवाइयतंतीतलतालतुडियघणमुइंगपडुप्पवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणा विहरंति ।

असुरकुमारसूत्रे कालाः—कृष्णवर्णाः 'लोहियक्खाबिम्बोट्ठा' लोहिताक्षरत्नवद् बिम्बीफलवच्च ओष्ठौ येषा ते लोहिताक्षबिम्बोष्ठाः, आरक्तोष्ठा इति भावः, धवलपुष्पवत्सामर्थ्यात् कुन्दकलिका इव दन्ता येषां ते धवलपुष्पदन्ताः, असिताः—कृष्णाः केशा येषां ते असितकेशाः, दन्ताः केशाश्चामीषां वैक्रिया द्रष्टव्याः, न स्वाभाविकाः, वैक्रियशरीरत्वात् 'वामेय (एग) कुंडलधरा' एककर्णावसक्तकुण्डलधारिणः, तथा आर्द्रेण—सरसेन चन्दनेनानुलिप्तं गात्रं यैस्ते आर्द्रचन्दनानुलिप्तगात्राः, तथा ईषद्—मनाक् शिलिन्ध्रपुष्पप्रकाशानि—शिलिन्ध्रपुष्पसदृशवर्णानि ईषद्रक्तानीत्यर्थः असंक्लिष्टानि—अत्यन्तसुखजनकतया मनागपि संक्लेशानुत्पादकानि सूक्ष्माणि—मृदुलघुस्पर्शानि अच्छानि चेति भावः वस्त्राणि प्रवराणि अत्र सूत्रे विभक्तिलोपः प्राकृतत्वात् 'परिहिताः' परिहितवन्तः, तथा वयः प्रथमं—कुमारत्वलक्षणमतिक्रान्तास्तत्पर्यन्तवर्तिन इति भावः द्वितीयं च—मध्यमलक्षणं वयोऽसंप्राप्ताः, एतदेव व्यक्तीकरोति—भद्रे—अतिप्रशस्ये यौवने वर्तमानाः 'तलभंगयतुडियवरभूसणनिम्मलमणिरयणमंडियभुजा' इति तलभङ्गका—बाह्वाभरणविशेषाः तुटितानि—बाहुरक्षिकाः अन्यानि च यानि वराणि भूषणानि बाह्वाभरणानि तेषु ये निर्मला मणयः—चन्द्रकान्ताद्या यानि रत्नानि च—इन्द्रनीलादीनि तैर्मण्डितौ भुजौ—हस्ताग्रौ येषां ते तथा, तथा दशभिर्मुद्राभिर्मण्डितौ अग्रहस्तौ येषां ते दशमुद्रामण्डिताग्रहस्ताः, 'चूडामणिविचित्तचिंधगया' इति चूडामणिनामकं चित्रम्—अद्भुतं चिह्नं गतं-स्थितं येषां ते चूडामणिचित्रचिह्नगताः ॥ चमरबलिसामान्यसूत्रे कालाः—कृष्णवर्णाः, एतदेवोपमानतः प्रतिपाद-

यति–'महानीलसरिसा' महानीलं यत् किमपि वस्तुजातं लोके प्रसिद्धं तेन सदृशाः, एतदेव व्याचष्टे—नीलगुटिका—नीलया गुटिका गवलं–माहिषं शृङ्गं अतसीकुसुमं प्रतीतं तेषामिव प्रकाशः–प्रभा येषां ते नीलगुटिकागवलातसीकुसुमप्रकाशाः, तथा विकसितशतपत्रमिव निर्मले ईषद्–देशविभागेन मनाक् सिते रक्ते ताम्रे च नयने येषां ते विकसितशतपत्रनिर्मलेपत्सितरक्तताम्रनयनाः, गरुडस्येवायता–दीर्घा ऋज्वी–अकुटिला तुङ्गा–उन्नता नासा–नासिका येषां ते गरुडायतर्जुतुङ्गनासाः, तथा उवचियं–तेजितं यत् शिलाप्रवालं–विद्रुमरत्नं यच्च बिम्बफलं–बिम्ब्याः सत्कं फलं तत्सन्निभोऽधरोष्ठो येषां ते तथा, तथा पाण्डुरं न तु सन्ध्याकालभाव्यारक्तं शशिशकलं–चन्द्रखण्डं तदपि च कथंभूतमित्याह–विमलं–रजसा रहितं कलङ्कविकलं वा तथा निर्मलो यो दधिघनः शङ्खो गोक्षीरं यानि कुन्दानि–कुन्दकुसुमानि दकरजः–पानीयकणाः मृणालिका च तद्वद् धवला दन्तश्रेणिर्येषां ते तथा, विमलशब्दस्य विशेष्यात् परनिपातः प्राकृतत्वात्, तथा हुतवहेन–वैश्वानरेण निर्ध्मातं सद् यज्जायते धौतं–निर्मलं तप्तम्–उत्तप्तं तपनीयमारक्तं सुवर्णं तद्वद् रक्तानि हस्तपादतलानि तालुजिह्वे च येषां ते हुतवहनिर्ध्मातधौततप्ततपनीयरक्ततलतालुजिह्वाः, तथा अञ्जनं–सौवीराञ्जनं घनः–प्रावृट्कालभावी मेघस्तद्वत्कृष्णा रुचकरत्नवद् रमणीया स्निग्धाश्च केशा येषां ते अञ्जनघनकृष्णरुचकरमणीयस्निग्धकेशाः ॥ ॥ ९१ ॥

कहिं णं भंते ! दाहिणिल्लाणं असुरकुमाराणं देवाणं पज्जत्तापज्जत्ताणं ठाणा प० ?, कहि णं भंते ! दाहिणिल्ला असुरकु-

'चत्तारि रयणीओ' इत्यादि, चतस्रो रत्नयो रत्निश्च त्रिभागोना च सा वोद्धव्या एपा खलु सिद्धानामवगाहना भणिता मध्यमा। आह—जघन्यपदे सप्तहस्तोच्छ्रितानामागमे सिद्धिरुक्ता, तत एपा जघन्या प्राप्नोति, कथं मध्यमा ?, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात्, जघन्यपदे हि सप्तहस्तानां सिद्धिरुक्ता तीर्थकरापेक्षया, सामान्यकेवलिनां तु हीनप्रमाणानामपि भवति, इदमपि चावगाहनामानं चिन्त्यते सामान्यसिद्धापेक्षया, ततो न कश्चिद्दोपः। 'एगा य होइ' इत्यादि, एका रत्निः परिपूर्णा अष्टौ चाङ्गुलान्यधिकानि एपा भवति सिद्धानामवगाहना जघन्या, सा च कूर्मापुत्रादीनां द्विहस्तानामवसेया, यदिवा सप्तहस्तोच्छ्रितानामपि यन्त्रपीलनादिना संवर्तितशरीराणां, आह च भाष्यकृत्—"जेट्ठा उ पंचधणुसयतणुस्स मज्झा य सत्तहत्थस्स। देहत्तिभागहीणा जहन्निया जा विहत्थस्स ॥१॥ सत्तूसियएसु सिद्धी जहन्नओ कहमिहं विहत्थेसु ?। सा किर तित्थयरेसुं सेसाणं सिज्झमाणाणं ॥ २ ॥ ते पुण होज्ज विहत्था कुम्मापुत्तादयो जहन्नेणं। अन्ने संवट्टियसत्तहत्थसिद्धस्स हीणत्ति ॥ ३ ॥" साम्प्रतमुक्तानुवादेनैव संस्थानलक्षणं सिद्धानामभिधित्सुराह—'ओगाहणाओ' इत्यादि, सुगमं, नवरं 'अनित्थंथं' इति इदंप्रकारमापन्नमित्थं इत्थं तिष्ठतीति इत्थंस्थं न इत्थंस्थं अनित्थंस्थं—वदनादिशुपिरप्रतिपूरणेन पूर्वाकारान्यथाभावतोऽनियताकारमिति भावः, योऽपि च सिद्धादिगुणेपु 'सिद्धे न दीहे न हस्से' इत्यादिना दीर्घत्वादीनां प्रतिपेधः कृतः सोऽपि पूर्वाकारापेक्षया संस्थानस्यानित्थंस्थत्वात् प्रतिपत्तव्यो, न पुनः सर्वथा संस्थानस्याभावतः, आह च भाष्यकृत्—

सुसिरपरिपूरणाओ पुव्वागारन्नहावत्थाओ । संठाणमणित्थंत्थं जं भणियमणिययागारं ॥ १ ॥ एत्तोच्चिय पडिसेहो सिद्धाइगुणेसु दीहयाईणं । जमणित्थंथं पुव्वागाराविक्खाए नाभावो ॥ २ ॥" नन्वेते सिद्धाः परस्परं देशभेदेन व्यवस्थिता उत नेति ?, नेति तद् ब्रूमः, कस्मादिति चेत्, 'जत्थ य' इत्यादि, यत्रैव देशे चशब्दस्य एवकारार्थत्वात् एकः सिद्धो—निर्वृतस्तत्रानन्ता भवक्षयविमुक्ताः, अत्र भवक्षयग्रहणेन स्वेच्छया भवावतरणशक्तिमत्सिद्धव्यवच्छेदमाह, अन्योऽन्यसमवगाढाः, तथाविधाचिन्त्यपरिणामत्वात्, धर्मास्तिकायादिवत्, तथा स्पृष्टा—लग्नाः सर्वेऽपि लोकान्ते । 'फुसइ' इत्यादि, स्पृशत्यनन्तान् सिद्धान् सर्वप्रदेशैरात्मसंबन्धिभिर्नियमशः सिद्धः, तथा तेऽपि सिद्धाः सर्वप्रदेशस्पृष्टेभ्योऽसंख्येयगुणा वर्तन्ते ये देशप्रदेशैः स्पृष्टाः, कथमिति चेत्, उच्यते, इहैकस्य सिद्धस्य यदवगाहनक्षेत्रं तत्रैकस्मिन्नपि परिपूर्णेऽवगाढा अन्येऽप्यनन्ताः सिद्धाः प्राप्यन्ते, अपरे तु ये तस्य क्षेत्रस्यैकैकं प्रदेशमाक्रम्यावगाढास्तेऽपि प्रत्येकमनन्ताः, एवं द्वित्रिचतुःपञ्चादिप्रदेशवृद्ध्या येऽवगाढास्तेऽपि प्रत्येकमनन्ताः, तथा तस्य मूलक्षेत्रस्यैकैकं प्रदेशं परित्यज्य येऽवगाढास्तेऽपि प्रत्येकमनन्ताः, एवं द्वित्रिचतुःपञ्चादिप्रदेशहान्या येऽवगाढास्तेऽपि प्रत्येकमनन्ताः, एवं सति प्रदेशपरिवृद्धिहानिभ्यां ये समवगाढास्ते परिपूर्णैकक्षेत्रावगाढेभ्योऽसंख्येयगुणा

१ शुषिरपरिपूरणात् पूर्वाकारान्यथाव्यवस्थातः । संस्थानमनित्थंस्थं यद्भणितमनियताकारात् ॥ १ ॥ इत एव प्रतिषेधः सिद्धादिगुणेषु दीर्घत्वादीनाम् । यदनित्थंस्थं पूर्वाकारापेक्षया नाभावः ॥ २ ॥

भवन्ति, अवगाढप्रदेशानामसंख्यातत्वात्, आह च—"एगक्खेत्तेऽणंता पएसपरिवुड्ढिहाणिओ तत्तो। हुंति असंखेज्जगुणाऽसंखपएसो जमवगाढो ॥ १ ॥" सम्प्रति सिद्धानेव लक्षणतः प्रतिपादयति—'असरीरा' इत्यादि, अविद्यमानशरीरा अशरीरा औदारिकादिपञ्चविधशरीररहिता इत्यर्थः, जीवाश्च ते घनाश्च वदनोदरादिशुपिरपूरणात् जीवघना उपयुक्ता दर्शने—केवलदर्शने ज्ञाने च—केवलज्ञाने यद्यपि सिद्धत्वप्रादुर्भावसमये केवलज्ञानमिति ज्ञानं प्रधानं तथाऽपि सामान्यसिद्धलक्षणमेतदिति ज्ञापनार्थमादौ सामान्यावलम्बनं दर्शनमुक्तं, तथा च सामान्यविपयं दर्शनं विशेषविपयं ज्ञानमिति, ततः साकारानाकारं सामान्यविशेपोपयोगरूपमित्यर्थः, सूत्रे मकारोऽलाक्षणिको, लक्षणं—तदन्यव्यावृत्तिस्वरूपमेतत्—अनन्तरोक्तं, तुशब्दो वक्ष्यमाणनिरुपमसुखविशेपणार्थं, सिद्धानां—निष्ठितार्थानामिति। सम्प्रति केवलज्ञानकेवलदर्शनयोरशेपविपयतामुपदर्शयति—'केवलनाणुवउत्ता' इत्यादि, केवलज्ञानेनोपयुक्ता न त्वन्तःकरणेन तदभावादिति केवलज्ञानोपयुक्ता जानन्ति—अवगच्छन्ति सर्वभावगुणभावान्—सर्वपदार्थगुणपर्यायान्, प्रथमो भावशब्दः पदार्थवचनः द्वितीयः पर्यायवचनः, गुणपर्याययोस्त्वयं विशेपः—सहवर्तिनो गुणाः क्रमवर्तिनः पर्याया इति, तथा पश्यन्ति सर्वतः खलु—खलुशब्दस्यावधारणार्थत्वात् सर्वत एव, केवलदृष्टिभिरनन्ताभिः, अनन्तैः केवलदर्शनैरित्यर्थः, केवलदर्शनानां चानन्तता सिद्धानामनन्तत्वात्, इहादौ ज्ञानग्रहणं प्रथम-

१ एकक्षेत्रेऽनन्ताः प्रदेशपरिवृद्धिहानितस्तस्मात्। भवन्त्यसंख्येयगुणाः असंख्यप्रदेशो यदवगाढः ॥ १ ॥

तया तदुपयोगस्थाः सिध्यन्तीति ज्ञापनार्थं ॥ सम्प्रति निरुपमसुखभाजस्ते इति दर्शयति—'नवि अत्थि' इत्यादि, नैवास्ति मनुष्याणां चक्रवर्त्यादीनामपि तत्सौख्यं, नैवास्ति सर्वदेवानामनुत्तरपर्यन्तानामपि यत् सिद्धानां सौख्यमव्याबाधामुपगतानां—न विविधाऽऽबाधा अव्याबाधा तां उप—सामीप्येन गतानां—प्राप्तानां ॥ यथा नास्ति तथा भङ्ग्योपदर्शयति—'सुरगणसुहं' इत्यादि, 'सुरगणसुखं' देवसंघातसुखं 'समस्तं' संपूर्णमतीतानागतवर्तमानकालोद्भवमित्यर्थः, पुनः 'सर्वाद्धापिण्डितं' सर्वकालसमयगुणितं तथाऽनन्तगुणमिति, तदेवंप्रमाणं किलासत्कल्पनया एकैकाकाशप्रदेशे स्थाप्यते इत्येवं सकलाकाशप्रदेशपूरणेन यद्यप्यनन्तं भवति तदनन्तमप्यनन्तैर्वर्गैर्वर्गितं तथाऽप्येवं प्रकर्षगतमपि मुक्तिसुखं—सिद्धिसुखं न प्राप्नोति ॥ एतदेव स्पष्टतरं भङ्ग्यन्तरेण प्रतिपादयति—'सिद्धस्स सुहो रासी' इत्यादि, सुखानां राशिः सुखराशिः—सुखसंघातः सिद्धस्य सुखराशिः सिद्धसुखराशिः 'सर्वाद्धापिण्डितः' सर्वयासाद्यपर्यवसितया अद्धया, यत्सुखं सिद्धः प्रतिसमयमनुभवति तदेकत्र पिण्डीकृतमिति भावः, सोऽनन्तवर्गभक्तः—अनन्तैर्वर्गमूलैरपवर्तितः, अनन्तैर्वर्गमूलैः तावदपवर्तितो यावत् सर्वाद्धालक्षणेन गुणकारेण गुणने यदधिकं जातं तस्य सर्वस्याप्यपवर्तनैः सिद्धत्वाद्यसमयभाविसुखमात्रतां प्राप्त इति भावः, सर्वाकाशे न माति—एतावन्मात्रोऽपि सर्वाकाशे न माति सर्वस्तु दूरापास्तप्रसर एवेति ज्ञापनार्थं पिण्डयित्वा पुनरपवर्तनं सुखराशेः, इयमत्र भावना—इह किल विशिष्टाह्लादरूपं सुखं परिगृह्यते, ततश्च यत आरभ्य शिष्टानां सुखशब्दप्रवृत्तिस्तमाह्लादमवधिकृत्य एकैकगुण-

वृद्धितारतम्येन तावदसावाह्लादो विशिष्यते यावदनन्तगुणवृद्ध्या निरतिशयनिष्ठामुपगतः, सोऽयमत्यन्तोपमातीतैकान्तौत्सुक्यविनिवृत्तिरूपस्तिमिततमकल्पः चरमाह्लादः सदा सिद्धानां, तस्माच्चारतः प्रथमाच्चोर्ध्वमपान्तरालवर्तिनो ये गुणास्तारतम्येनाह्लादविशेषरूपास्ते सर्वाकाशप्रदेशेभ्योऽप्यतिभूयांसः, ततः किलोक्तं—'सव्वागासे न माइज्जा' इति, अन्यथा यत् सर्वाकाशे न माति तत् कथमेकस्मिन् सिद्धे मायाद्? इति पूर्वसूरिसंप्रदायः ॥ साम्प्रतमस्य निरुपमतां प्रतिपादयति—'जह नाम' इत्यादि, यथा नाम कश्चिद् म्लेच्छो नगरगुणान्—गृहनिवासादीन् बहुविधान्—अनेकप्रकारान् विजानन् अरण्यगतः सन् अन्यम्लेच्छेभ्यो न शक्नोति परिकथयितुं, कस्मान्न शक्नोति? इत्यत आह—उपमायां तत्रासत्यां "निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शनम्" इति न्यायाद् हेतौ सप्तमी, तत उपमाया अभावादिति द्रष्टव्यं, एष गाथाऽक्षरार्थः, भावार्थः कथानकादवसेयः, तच्चेदं—एगो[1] महारन्नवासी मिच्छो रन्ने चिट्ठति, इत्तो य एगो राया आसेण अवहरितो तं अडविं पवेसिओ तेण दिट्ठो, सक्कारिऊण जणवयं नीतो, रन्नावि सो नगरं नीओ, पच्छा उवगारित्ति गाढमुपचरितो, जहा राया तहा चिट्ठइ, धवलघराइभोगेण विभासा, कालेण रन्नं

1 एको महारण्यवासी म्लेच्छोऽरण्ये तिष्ठति, इतश्च एको राजा अश्वेनापहृतस्तामटवीं प्रवेशितः तेन दृष्टः, सत्कार्य जनपदं नीतः, राज्ञाऽपि स नगरं नीतः, पश्चादुपकारीति गाढमुपचरितो, यथा राजा तथा तिष्ठति, धवलगृहादिभोगेन विभाषा, कालेन अरण्यं

संरिउमारद्धो, रन्ना विसज्जिओ, तत्तो रन्निगा पुच्छंति—'केरिसं नयरंति' ?, सो वियाणंतोऽवि तत्थोवमाभावा न सक्कइ नयरगुणे परिकहेउं । एस दिट्ठंतो, अयमर्थोपनयः—'इय सिद्धाणं' इत्यादि, इत्येवं सिद्धानां सौख्यमनुपमं वर्तते, किमिति ?, तत आह—यतो नास्ति तस्यौपम्यं, तथाऽपि बालजनप्रतिपत्तये किञ्चिद् विशेषेण 'इतो' इति आर्षत्वाद् अस्येत्यर्थः, सादृश्यमिदं—वक्ष्यमाणं शृणुत—'जह सव्व' इत्यादि, यथेत्युदाहरणोपदर्शनार्थः, भुज्यते इति भोजनं 'सर्वकामगुणितं' सकलसौन्दर्यसंस्कृतं कोऽपि पुरुषो भुक्त्वा क्षुत्तृड्विप्रमुक्तः सन् यथा अमृततृप्तस्तथा तिष्ठति, 'इय' इत्यादि, एवं निर्वाणं—मोक्षमुपगताः सिद्धाः सर्वकालं—साद्यपर्यवसितं कालं तृप्ताः—सर्वथौत्सुक्यविनिवृत्तिभावतः परमसंतोषमधिगता अतुलम्—अनन्यसदृशमुपमाऽतीतत्वात् शाश्वतं प्रतिपाताभावात् अव्याबाधं लेशतोऽपि व्याबाधाया असंभवात् सुखं प्राप्ता अत एव सुखिनः तिष्ठन्तीति ॥ एतदेव सविशेषतरं भावयति—'सिद्धत्ति य' इत्यादि, सितं—बद्धमष्टप्रकारं कर्म ध्मातं—भस्मीकृतं यैस्ते सिद्धाः "पृषोदरादयः" इति रूपनिष्पत्तिः, निर्दग्धानेकभवकर्मेन्धना इत्यर्थः, ते च सामान्यतः कर्मादिसिद्धा अपि भवन्ति, यत उक्तम्—'कम्मे[2] सिप्पे य विज्जाए; मंते जोगे य आगमे । अत्थजत्ताअभिप्पाए, तवे कम्मक्खए इय ॥ १ ॥" ततः कर्मादिसिद्धव्यपोहाय

१ स्मर्तुमारब्धः, राज्ञा विसृष्टः, तत आरण्यकाः पृच्छन्ति—कीदृशं नगरमिति ?, स विजानन्नपि तत्रोपमाभावाद् न शक्नोति नगरगुणान् परिकथयितुं एप दृष्टान्तः ॥ २ कर्मणि शिल्पे च विद्यायां मन्त्रे योगे चागमे । अर्थे यात्रायामभिप्राये तपसि कर्मक्षये इति ॥ १ ॥

आह—'बुद्धा' इति, अज्ञाननिद्राप्रसुप्ते जगत्यपरोपदेशेन जीवादिरूपं तत्त्वं बुद्धवन्तो बुद्धाः, सर्वज्ञसर्वदर्शिस्वभाववोधरूपा इति भावः, एतेऽपि च संसारनिर्वाणोभयपरित्यागेन स्थितवन्तः कैश्चिदिष्यन्ते—"संसारे न च निर्वाणे, स्थितो भुवनभूतये । अचिन्त्यः सर्वलोकानां, चिन्तारत्नाधिको महान् ॥ १ ॥" इति वचनात्, ततस्तन्निरासार्थमाह—'पारगता' इति, पारं—पर्यन्तं संसारस्य प्रयोजनव्रातस्य वा गताः पारगताः, तथाभव्यत्वाक्षिप्तसकलप्रयोजनसमाप्त्या निरवशेषकर्तव्यशक्तिविप्रमुक्ता इति भावः, इत्थंभूता अपि कैश्चिद् यदृच्छावादिभिरक्रमसिद्धत्वेनापि गीयन्ते, तथोक्तम्—"नैकादिसंख्याक्रमतो, वित्तप्राप्तिर्नियोगतः । दरिद्रराज्याप्तिसमा, तद्वन्मुक्तिः क्वचिन्न किम् ? ॥१॥" ततस्तन्मतव्यपोहाय 'परम्परागता' इति परम्परया—ज्ञानदर्शनचारित्ररूपया मिथ्यादृष्टिसासादन—सम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्टिदेशविरतिप्रमत्ताप्रमत्तनिवृत्त्यनिवृत्तिबादरसंपरायसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहसयोगिकेवल्ययोगिकेवलिगुणस्थानभेदभिन्नया गताः परम्परागताः, एते च कैश्चित् तत्त्वतोऽनुन्मुक्तकर्मकवचा अभ्युपगम्यन्ते 'तीर्थनिकारदर्शनादिहागच्छन्ति' इति वचनतः पुनः संसारावतरणाभ्युपगमात्, अतस्तन्मतापाकरणार्थमाह—'उन्मुक्तकर्मकवचाः' उत्—प्राबल्येनापुनर्भवरूपतया मुक्तं—परित्यक्तं कर्म कवचमिव कर्मकवचं यैस्ते उन्मुक्तकर्मकवचाः, अत एवाजराः शरीराभावतो जरसोऽभावात् अमरा अशरीरत्वादेव प्राणत्यागासंभवात्,

उक्तं च—"वयसो हाणीह जरा, पाणचाओ य मरणमादिट्ठं । सइ देहंमि तदुभयं तदभावे तं न कस्सेव ॥१॥" असङ्गा बाह्याभ्यन्तरसङ्गरहितत्वात् 'निच्छिन्न' इत्यादि, निस्तीर्णं—लङ्घितं सर्वदुःखं यैस्ते निस्तीर्णसर्वदुःखाः, कुतः ? इत्याह—'जातिजरामरणबंधणविमुक्का' जातिः—जन्म जरा—वयोहानिलक्षणा मरणं—प्राणत्यागरूपं बन्धनानि—तन्निबन्धनरूपाणि कर्माणि तैर्विशेषतो—निःशेषापगमनेन मुक्ता जातिजरामरणबन्धनविमुक्ताः, हेताविथं प्रथमा, यतो जातिजरामरणबन्धनविप्रमुक्तास्ततो निस्तीर्णसर्वदुःखाः, कारणाभावात्, ततोऽव्याबाधं सौख्यं शाश्वतं सिद्धा अनुभवन्ति ॥

इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां द्वितीयं स्थानपदं समासम् ॥



---

१ वयसो हानिरिह जरा प्राणत्यागश्च मरणमादिष्टम् । सति देहे तदुभयं तदभावे तन्न कस्यैव ॥ १ ॥

# अथ तृतीयमल्पबहुत्वपदम् ।

व्याख्यातं द्वितीयं पदं, अधुना तृतीयपदमारभ्यते, तस्य चायमभिसम्बन्धः—इह प्रथमे पदे पृथिवीकायिकादयः प्रज्ञप्ताः द्वितीये ते एव स्वस्थानादिना चिन्तिताः अस्मिंस्तु तेषां दिग्विभागादिनाऽल्पबहुत्वादि निरूप्यते, तत्रेदमादौ द्वारसङ्ग्रहगाथाद्वयम्—

दिसि गई इंदिय काए जोए वेए कसाय लेसा य। सम्मत्त नाणदंसण संजयउवओगआहारे ॥१७१॥ भासगपरित्तपज्जत्त सुहुमसन्नी भवऽत्थिए चरिमे । जीवे य खित्तबन्धे पुग्गलमहदंडए चेव ॥ १७२ ॥



प्रथमं दिग्द्वारं १, तदनन्तरं गतिद्वारं, २, तत इन्द्रियद्वारं ३, ततः कायद्वारं ४, ततो योगद्वारं ५, तदनन्तरं वेदद्वारं ६, ततः कषायद्वारं, ७, ततो लेश्याद्वारं ८, ततः सम्यक्त्वद्वारं ९, तदनन्तरं ज्ञानद्वारं १०, ततो दर्शनद्वारं ११, ततः संयतद्वारं १२, तत उपयोगद्वारं १३, तत आहारद्वारं १४, ततो भाषकद्वारं १५, ततः 'परित्त' इति परित्ताः—प्रत्येकशरीरिणः शुक्लपाक्षिकाश्च तद्द्वारं १६, तदनन्तरं पर्याप्तद्वारं १७, ततः सूक्ष्मद्वारं १८, तदनन्तरं सञ्ज्ञिद्वारं १९, ततो 'भव'त्ति भवसिद्धिकद्वारं २०, ततोऽस्तीति अस्तिकायद्वारं २१, ततश्चरमद्वारं २२, तद-

नन्तरं जीवद्वारं, २३, ततः क्षेत्रद्वारं २४, ततो बन्धद्वारं २५, ततः पुद्गलद्वारं २६, ततो महादण्डकः २७, इति सर्वसङ्ख्यया सप्तविंशतिः द्वाराणि । तत्र प्रथमं द्वारमभिधित्सुराह—

दिसाणुवाएणं सव्वत्थोवा जीवा पच्छिमे णं, पुरच्छिमे णं विसेसाहिया, दाहिणेणं विसेसाहिया, उत्तरेणं विसेसाहिया। (सू०५५)

इह दिशः प्रथमे आचाराख्ये अङ्गे अनेकप्रकारा व्यावर्णिताः, तत्रेह क्षेत्रदिशः प्रतिपत्तव्याः, तासां नियतत्वात्, इतरासां च प्रायोऽनवस्थितत्वात् अनुपयोगित्वाच्च, क्षेत्रदिशां च प्रभवस्तिर्यग्लोकमध्यगतादष्टप्रदेशकाद्रुचकात्, यत उक्तम्—"[1]अट्ठपएसो रुयगो तिरियलोयस्स मज्झयारम्मि । एस पभवो दिसाणं एसेव भवे अणुदिसाणं ॥ १ ॥" इति, दिशामनुपातो दिगनुपातो—दिगनुसरणं तेन दिशोऽधिकृत्येति तात्पर्यार्थः, सर्वस्तोका जीवाः पश्चिमेन—पश्चिमायां दिशि, कथमिति चेत् ?, उच्यते, इदं ह्यल्पबहुत्वं बादरानधिकृत्य द्रष्टव्यं, न सूक्ष्मान्, सूक्ष्माणां सर्वलोकापन्नानां प्रायः सर्वत्रापि समत्वात्, बादरेष्वपि मध्ये सर्वबहवो वनस्पतिकायिकाः, अनन्तसङ्ख्याकतया तेषां प्राप्यमाणत्वात्, ततो यत्र ते बहवस्तत्र बहुत्वं जीवानां, यत्र त्वल्पे तत्राल्पत्वं, वनस्पतयश्च तत्र बहवो यत्र प्रभूता आपः, 'जत्थ जलं तत्थ वणं' इति वचनात् तत्रावश्यं पनकसेवालादीनां भावात्, ते च पनकसेवालादयो बादरनामकर्मोदये वर्त्तमाना अपि अत्यन्तसूक्ष्मावगाहनत्वात् अतिप्रभूतपिण्डीभावाच्च सर्वत्र सन्तोऽपि

१ अष्टप्रदेशो रुचकस्तिर्यग्लोकस्य मध्ये । एष प्रभवो दिशामेष एव भवेद्विदिशाम् ॥ १ ॥

न चक्षुषा ग्राह्याः, तथा चोक्तमनुयोगद्वारेषु—"ते णं वालग्गा सुहुमपणगजीवस्स सरीरोगाहणाहिंतो असंखेज्जगुणा" इति, ततो यत्रापि नैते दृश्यन्ते तत्रापि ते सन्तीति प्रतिपत्तव्याः, आह च मूलटीकाकारः—"इह सर्ववहवो वनस्पतय इतिकृत्वा यत्र ते सन्ति तत्र वहुत्वं जीवानां, तेषां च वहुत्वं "जत्थ आउकाओ तत्थ नियमा वणस्सइकाइया इति पणगसेवालहढाई वायरावि होंति सुहुमा आणागेज्झा न चक्खुणा" इति, उदकं च प्रभूतं समुद्रादिषु, द्वीपात् द्विगुणविष्कम्भत्वात्, तेष्वपि च समुद्रेषु प्रत्येकं प्राचीप्रतीच्योर्दिशोर्यथाक्रमं चन्द्रसूर्यद्वीपाः, यावति च प्रदेशे चन्द्रसूर्यद्वीपा अवगाढास्तावत्युदकाभावः, उदकाभावाच्च वनस्पतिकायिकाभावः, केवलं प्रतीच्यां दिशि लवणसमुद्राधिपसुस्थितनामदेवावासभूतो गौतमद्वीपो लवणसमुद्रेऽभ्यधिको वर्त्तते, तत्र चोदकाभावाद्वनस्पतिकायिकानामभावात् सर्वस्तोका जीवाः पश्चिमायां दिशि, तेभ्यो विशेषाधिकाः पूर्वस्यां दिशि, तत्र हि गौतमद्वीपो न विद्यते, ततस्तावता विशेषेणातिरिच्यते इति, तेभ्योऽपि दक्षिणस्यां दिशि विशेषाधिकाः, यतस्तत्र चन्द्रसूर्यद्वीपा न विद्यन्ते, तदभावात्तत्रोदकं प्रभूतं, तत्प्राभूत्याच्च वनस्पतिकायिका अपि प्रभूता इति विशेषाधिकाः, तेभ्योऽप्युदीच्यां दिशि विशेषाधिकाः, किं कारणमिति चेत् ?, उच्यते, उदीच्यां हि दिशि सङ्ख्येययोजनेषु द्वीपेषु मध्ये कस्मि-

१ ते वालाग्राः सूक्ष्मपनकजीवस्य शरीरावगाहनाभ्योऽसङ्ख्येयगुणाः । २ यत्राप्कायस्तत्र नियमाद्वनस्पतिकायिका इति पनकशैवालहठादयो वादरा अपि भवन्ति सूक्ष्मा आज्ञाग्राह्याः । न चक्षुषा ।

श्रित् द्वीपे आयामविष्कम्भाभ्यां सङ्ख्येययोजनकोटीप्रमाणं मानसं नाम सरः समस्ति, ततो दक्षिणदिगपेक्षया अस्यां प्रभूतमुदकम्, उदकबाहुल्याच्च प्रभूता वनस्पतयः, प्रभूता द्वीन्द्रियाः शङ्खादयः प्रभूतास्तटलग्नशङ्खादिकलेवराश्रिता-स्त्रीन्द्रियाः पिपीलिकादयः प्रभूताः पद्मादिषु चतुरिन्द्रियाः भ्रमरादयः प्रभूताः पञ्चेन्द्रिया मत्स्यादय इति विशेषा-धिकाः ॥ तदेवं सामान्यतो दिगनुपातेन जीवानामल्पबहुत्वमुक्तम् ॥ इदानीं विशेषेण तदाह—

दिसाणुवाएणं सव्वत्थोवा पुढविकाइया दाहिणेणं उत्तरेणं विसेसाहिया पुरच्छिमेणं विसेसाहिया पच्छिमेणं विसेसा-हिया । दिसाणुवाएणं सव्वत्थोवा आउकाइया पच्छिमेणं, पुरच्छिमेणं विसेसाहिया, दाहिणेणं विसेसाहिया, उत्तरेणं विसेसाहिया ॥ दिसाणुवाएणं सव्वत्थोवा तेउकाइया दाहिणुत्तरेणं, पुरच्छिमेणं संखेज्जगुणा, पच्छिमेणं विसेसाहिया ॥ दिसाणुवाएणं सव्वत्थोवा वाउकाइया पुरच्छिमेणं, पच्छिमेणं विसेसाहिया, उत्तरेणं विसेसाहिया, दाहिणेणं विसेसा-हिया ॥ दिसाणुवाएणं सव्वत्थोवा वणस्सइकाइया पच्छिमेणं पुरच्छिमेणं विसेसाहिया दाहिणेणं विसेसाहिया उत्तरेणं विसेसाहिया ॥ दिसाणुवाएणं सव्वत्थोवा बेइंदिया पच्छिमेणं पुरच्छिमेणं विसेसाहिया दक्खिणेणं विसेसाहिया उत्तरेणं विसेसाहिया । दिसाणुवाएणं सव्वत्थोवा तेइंदिया पच्चत्थिमेणं, पुरच्छिमेणं विसेसाहिया, दाहिणेणं विसेसाहिया, उत्तरेणं विसेसाहिया । दिसाणुवाएणं सव्वत्थोवा चउरिंदिया पच्चत्थिमेणं, पुरच्छिमेणं विसेसाहिया, दाहिणेणं विसेसाहिया, उत्त-रेणं विसेसाहिया । दिसाणुवाएणं सव्वत्थोवा नेरइया पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा । दिसाणुवाएणं

सव्वत्थोवा रयणप्पभापुढवीनेरइया पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेण असंखेज्जगुणा । दिसाणुवाएणं सव्वत्थोवा सक्करप्पभापुढवीनेरइया पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा । दिसाणुवाएणं सव्वत्थोवा वालुयप्पभापुढवीनेरइया पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा । दिसाणुवाएणं सव्वत्थोवा पंकप्पभापुढवीनेरइया पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा । दिसाणुवाएणं सव्वत्थोवा धूमप्पभापुढवीनेरइया पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा । दिसाणुवाएणं सव्वत्थोवा तमप्पहापुढवीनेरइया पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा । दिसाणुवाएणं सव्वत्थोवा अहे सत्तमापुढवीनेरइया पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा । दाहिणेहिंतो अहेसत्तमापुढवीनेरइएहिंतो छट्ठाए तमाए पुढवीए नेरइया पुरच्छिमपच्चत्थिमउत्तरेणं असंखेज्जगुणा, दाहिणेणं असंखेज्जगुणा, दाहिणिल्लेहिंतो तमाए पुढवीनेरइएहिंतो पंचमाए धूमप्पभाए पुढवीए नेरइया पुरच्छिमपच्चत्थिमउत्तरेणं असंखेज्जगुणा, दाहिणेणं असंखेज्जगुणा, दाहिणिल्लेहिंतो धूमप्पभापुढवीनेरइएहिंतो चउत्थीए पंकप्पभाए पुढवीए नेरइया पुरच्छिमपच्चत्थिमउत्तरेणं असंखेज्जगुणा, दाहिणेणं असंखेज्जगुणा, दाहिणिल्लेहिंतो पंकप्पभापुढवीनेरइएहिंतो तइयाए वालुयप्पभाए पुढवीए नेरइया पुरच्छिमपच्चत्थिमउत्तरेणं असंखेज्जगुणा, दाहिणेणं असंखेज्जगुणा, दाहिणिल्लेहिंतो वालुयप्पभापुढवीनेरइएहिंतो दुइयाए सक्करप्पभाए पुढवीए नेरइया पुरच्छिमपच्चच्छिमउत्तरेणं असंखेज्जगुणा, दाहिणेणं असंखेज्जगुणा, दाहिणिल्लेहिंतो सक्करप्पभापुढवीनेरइएहिंतो इमीसे रयणप्पभाए पुढवीए नेरइया पुरच्छिमपच्चत्थिमउत्तरेणं असंखेज्जगुणा, दाहिणेणं असंखेज्जगुणा । दिसाणुवाएणं सव्वत्थोवा पंचिंदिया तिरिक्खजोणिया पच्छिमेणं, पुरच्छिमेणं

विसेसाहिया, दाहिणेणं विसेसाहिया, उत्तरेणं विसेसाहिया। दिसाणुवाएणं सव्वत्थोवा मणुस्सा दाहिणउत्तरेणं, पुरच्छिमेणं संखेज्जगुणा पच्चत्थिमेणं विसेसाहिया। दिसाणुवाएणं सव्वत्थोवा भवणवासी देवा पुरच्छिमेणं पच्चत्थिमेणं, उत्तरेणं असंखेज्जगुणा, दाहिणेणं असंखेज्जगुणा। दिसाणुवाएणं सव्वत्थोवा वाणमंतरा देवा पुरच्छिमेणं, पच्चत्थिमेणं विसेसाहिया, उत्तरेणं विसेसाहिया, दाहिणेणं विसेसाहिया। दिसाणुवाएणं सव्वत्थोवा जोइसिया देवा पुरच्छिमपच्चत्थिमेणं, दाहिणेणं विसेसाहिया, उत्तरेणं विसेसाहिया। दिसाणुवाएणं सव्वत्थोवा देवा सोहम्मे कप्पे पुरच्छिमपच्चत्थिमेणं, उत्तरेणं असंखेज्जगुणा, दाहिणेणं विसेसाहिया। दिसाणुवाएणं सव्वत्थोवा देवा ईसाणे कप्पे पुरच्छिमपच्चत्थिमेणं, उत्तरेणं असंखेज्जगुणा, दाहिणेणं विसेसाहिया। दिसाणुवाएणं सव्वत्थोवा देवा सणंकुमारे कप्पे पुरच्छिमपच्चत्थिमेणं, उत्तरेणं असंखेज्जगुणा, दाहिणेणं विसेसाहिया। दिसाणुवाएणं सव्वत्थोवा देवा माहिंदे कप्पे पुरच्छिमपच्चत्थिमेणं, उत्तरेणं असंखेज्जगुणा, दाहिणेणं विसेसाहिया। दिसाणुवाएणं सव्वत्थोवा देवा बंभलोए कप्पे पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा। दिसाणुवाएणं सव्वत्थोवा देवा लंतए कप्पे पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा। दिसाणुवाएणं सव्वत्थोवा देवा महासुक्के कप्पे पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा। दिसाणुवाएणं सव्वत्थोवा देवा सहस्सारे कप्पे पुरच्छिमपच्चत्थिमउत्तरेणं, दाहिणेणं असंखेज्जगुणा। तेण परं बहुसमोववन्नगा समणाउसो ! ॥ दिसाणुवाएणं सव्वत्थोवा सिद्धा दाहिणेणं उत्तरेणं, पुरच्छिमेणं संखेज्जगुणा, पच्चत्थिमेणं विसेसाहिया ॥ दारं ॥ ( सू० ५६ )

दिगनुपातेन—दिगनुसारेण दिशोऽधिकृत्येतिभावः, पृथिवीकायिकाश्चिन्त्यमानाः सर्वस्तोका दक्षिणस्यां दिशि,

कथमिति चेद् ?, उच्यते, इह यत्र घनं तत्र बहवः पृथिवीकायिकाः यत्र सुपिरं तत्र स्तोकाः, दक्षिणस्यां दिशि बहूनि भवनपतीनां भवनानि बहवो नरकावासास्ततः सुपिरप्राभूत्यसंभवात् सर्वस्तोका दक्षिणस्यां दिशि पृथिवीकायिकाः, तेभ्य उत्तरस्यां दिशि विशेषाधिकाः, यत उत्तरस्यां दिशि दक्षिणदिगपेक्षया स्तोकानि भवनानि स्तोका नरकावासाः, ततो घनप्राभूत्यसंभवात् बहवः पृथिवीकायिका इति विशेषाधिकाः, तेभ्योऽपि पूर्वस्यां दिशि विशेषाधिकाः, रविशशिद्वीपानां तत्र भावात्, तेभ्योऽपि पश्चिमायां दिशि विशेषाधिकाः, किं कारणमिति चेत् ?, उच्यते, यावन्तो रविशशिद्वीपाः पूर्वस्यां दिशि तावन्तः पश्चिमायामपि, न तु एतावता साम्यं, परं लवणसमुद्रे गौतमनामा द्वीपः पश्चिमायामधिकोऽस्ति, तेन विशेषाधिकाः, अत्र पर आह—ननु यथा पश्चिमायां दिशि गौतमद्वीपोऽभ्यधिकः समस्ति, तथा तस्यां पश्चिमायां दिशि अधोलौकिकग्रामा अपि योजनसहस्रावगाहाः सन्ति, ततः खातपूरितन्यायेन तत्र तुल्या एव पृथिवीकायिकाः प्राप्नुवन्ति न विशेषाधिकाः, नैतदेवं, यतोऽधोलौकिकग्रामावगाहो योजनसहस्रं, गौतमद्वीपस्य पुनः षट्सप्तत्यधिकं योजनसहस्रमुच्चैस्त्वं, विष्कम्भस्तस्य द्वादश योजनसहस्राणि, यच्च मेरोरारभ्याधोलौकिकग्रामेभ्योऽर्वाक् हीनत्वं हीनतरत्वं तत् पूर्वस्यामपि दिशि प्रभूतगर्त्तादिसंभवात् समानं, ततो यद्यधोलौकिकग्रामच्छिद्रेषु बुद्ध्या गौतमद्वीपः प्रक्षिप्यते तथापि स समधिक एव प्राप्यते न तुल्य इति तेन समधिकेन विशेषाधिकाः पश्चिमायां दिशि पृथिवीकायिकाः ॥ उक्तं दिगनुपातेन पृथिवीकायि-

कानामल्पबहुत्वं, इदानीमप्कायिकानामल्पबहुत्वमाह—सर्वस्तोका अप्कायिकाः पश्चिमायां दिशि, गौतमद्वीपस्थाने तेषामभावात्, तेभ्योऽपि विशेषाधिकाः पूर्वस्यां दिशि, गौतमद्वीपाभावात्, तेभ्योऽपि विशेषाधिका दक्षिणस्यां दिशि, चन्द्रसूर्यद्वीपाभावात्, तेभ्योऽप्युत्तरस्यां दिशि विशेषाधिकाः, मानससरःसद्भावात् ॥ तथा दक्षिणस्यामुत्तरस्यां च दिशि सर्वस्तोकास्तेजःकायिकाः, यतो मनुष्यक्षेत्रे एव बादरास्तेजःकायिका नान्यत्र, तत्रापि यत्र बहवो मनुष्यास्तत्रैते बहवः, बाहुल्येन पाकारम्भसम्भवात्, यत्र त्वल्पे तत्र स्तोकाः, तत्र दक्षिणस्यां दिशि पञ्चसु भरतेषु उत्तरस्यां दिशि पञ्चस्वैरावतेषु क्षेत्रस्याल्पत्वात् स्तोका मनुष्याः, तेषां स्तोकत्वेन तेजःकायिका अपि स्तोकाः, अल्पपाकारम्भसम्भवात्, ततः सर्वस्तोका दक्षिणोत्तरयोर्दिशोस्तेजःकायिकाः, स्वस्थाने तु प्रायः समानाः, तेभ्यः पूर्वस्यां दिशि सङ्ख्येयगुणाः, क्षेत्रस्य सङ्ख्येयगुणत्वात्, ततोऽपि पश्चिमायां दिशि विशेषाधिकाः, अधोलौकिकग्रामेषु मनुष्यबाहुल्यात् ॥ इह यत्र सुषिरं तत्र वायुः यत्र घनं तत्र वाय्वभावः, तत्र पूर्वस्यां दिशि प्रभूतं घनमित्यल्पा वायवः, पश्चिमायां दिशि विशेषाधिकाः, अधोलौकिकग्रामसम्भवात्, उत्तरस्यां दिशि विशेषाधिकाः, भवननरकावासबाहुल्येन सुषिरबाहुल्यात्, ततोऽपि दक्षिणस्यां दिशि विशेषाधिकाः, उत्तरदिगपेक्षया दक्षिणस्यां दिशि भवनानां नरकावासानां चातिप्रभूतत्वात् ॥ तथा यत्र प्रभूता आपस्तत्र प्रभूताः पनकादयोऽनन्तकायिका वनस्पतयः प्रभूताः शङ्खादयो द्वीन्द्रियाः प्रभूताः पिण्डीभूतसेवालाद्याश्रिताः कुन्थ्वादयस्त्रीन्द्रियाः प्रभूताः पद्माद्याश्रिता

भ्रमरादयश्चतुरिन्द्रिया इति हेतोर्वनस्पत्यादिसूत्राणि चतुरिन्द्रियसूत्रपर्यन्तानि अप्कायिकसूत्रवद् भावनीयानि। नैरयिकसूत्रे सर्वस्तोकाः पूर्वोत्तरपश्चिमदिग्विभागभाविनो नैरयिकाः, पुष्पावकीर्णनरकावासानां तत्राल्पत्वात्, बहूनां प्रायः सङ्ख्येययोजनविस्तृतत्वाच्च, तेभ्यो दक्षिणदिग्विभागभाविनोऽसङ्ख्येयगुणाः, पुष्पावकीर्णनरकावासानां तत्र बाहुल्यात्, तेषां च प्रायोऽसङ्ख्येययोजनविस्तृतत्वात्, कृष्णपाक्षिकाणां तस्यां दिशि प्राचुर्येणोत्पादाच्च, तथाहि—द्विविधा जन्तवः, शुक्लपाक्षिकाः कृष्णपाक्षिकाश्च, तेषां लक्षणमिदं—येषां किञ्चिदूनपुद्गलपरावर्त्तार्धमात्रसंसारस्ते शुक्लपाक्षिकाः, अधिकतरसंसारभाजिनस्तु कृष्णपाक्षिकाः, उक्तं च—"[1]जेसिमवड्ढो पुग्गलपरियट्टो सेसओ य संसारो। ते सुक्कपक्खिया खलु अहिए पुण कण्हपक्खी उ ॥ १ ॥" अत एव च स्तोकाः शुक्लपाक्षिकाः, अल्पसंसारिणां स्तोकत्वात्, बहवः कृष्णपाक्षिकाः, प्रभूतसंसारिणामतिप्रचुरत्वात्, कृष्णपाक्षिकाश्च प्राचुर्येण दक्षिणस्यां दिशि समुत्पद्यन्ते, न शेषासु दिक्षु, तथास्वाभाव्यात्, तच्च तथास्वाभाव्यं पूर्वाचार्यैरेवं युक्तिभिरुपबृंह्यते, तद्यथा—कृष्णपाक्षिका दीर्घतरसंसारभाजिन उच्यन्ते, दीर्घतरसंसारभाजिनश्च बहुपापोदयाद् भवन्ति, बहुपापोदयाश्च क्रूरकर्म्माणः, क्रूरकर्म्माणश्च प्रायस्तथास्वाभाव्यात् तद्भवसिद्धिका अपि दक्षिणस्यां दिशि समुत्पद्यन्ते, न

१ येषामपार्धः पुद्गलपरावर्त्तः शेषकश्च संसारः। ते शुक्लपाक्षिकाः खलु अधिके पुनः कृष्णपक्षास्तु ॥ १ ॥.

शेपासु दिक्षु, यत उक्तं—"पांयमिह कूरकम्मा भवसिद्धियावि दाहिणिल्लेसुं । नेरइयतिरियमणुयासुराइठाणेसु गच्छन्ति ॥ १ ॥" ततो दक्षिणस्यां दिशि वहूनां कृष्णपाक्षिकाणामुत्पादसम्भवात् पूर्वोक्तकारणद्वयाच्च सम्भवन्ति पूर्वोत्तरपश्चिमदिग्विभागभाविभ्यो दाक्षिणात्या असङ्ख्येयगुणाः । यथा च सामान्यतो नैरयिकाणां दिग्विभागेनाल्पवहुत्वमुक्तं, एवं प्रतिपृथिव्यपि वक्तव्यं, युक्तेः सर्वत्रापि समानत्वात् । तदेवं प्रतिपृथिव्यपि दिग्विभागेनाल्पवहुत्वमभिहितं, इदानीं सप्तापि पृथिवीरधिकृत्य दिग्विभागेनाल्पवहुत्वमाह—सप्तमपृथिव्यां पूर्वोत्तरपश्चिमदिग्भाविभ्यो नैरयिकेभ्यो ये सप्तमपृथिव्यामेव दाक्षिणात्यास्तेऽसङ्ख्येयगुणाः, तेभ्यः पष्ठपृथिव्यां तमःप्रभाभिधानायां पूर्वोत्तरपश्चिमदिग्भाविनोऽसङ्ख्येयगुणाः, कथमिति चेद् ?, उच्यते, इह सर्वोत्कृष्टपापकारिणः सञ्ज्ञिपञ्चेन्द्रियतिर्यग्मनुष्याः सप्तमनरकपृथिव्यामुत्पद्यन्ते, किञ्चिद्हीनहीनतरपापकर्मकारिणश्च पष्ठ्यादिपु पृथिवीपु, सर्वोत्कृष्टपापकर्मकारिणश्च सर्वस्तोकाः वहवश्च यथोत्तरं किञ्चिद्धीनहीनतरादिपापकर्मकारिणः ततो युक्तमसङ्ख्येयगुणत्वं सप्तमपृथिवीदाक्षिणात्यनारकापेक्षया पष्ठपृथिव्यां पूर्वोत्तरपश्चिमनारकाणां, एवमुत्तरोत्तरपृथिवीरप्यधिकृत्य भावयितव्यम्, तेभ्योऽपि तस्यामेव पष्ठपृथिव्यां दक्षिणस्यां दिशि नारका असङ्ख्येयगुणाः, युक्तिरत्र प्रागेवोक्ता, तेभ्योऽपि पञ्चमपृथिव्यां धूमप्रभाभिधानायां पूर्वोत्तरपश्चिमदिग्भाविनोऽसङ्ख्येयगुणाः, तेभ्योऽपि तस्यामेव पञ्चमपृथिव्यां दाक्षिणात्या असङ्ख्ये-

१ प्राय इह क्रूरकर्माणो भवसिद्धिका अपि दाक्षिणात्येपु । नैरयिकतिर्यग्मनुष्यासुरादिस्थानेपु गच्छन्ति ॥ १ ॥

यगुणाः, एवं सर्वास्वपि क्रमेण वाच्यम् ॥ तिर्यक्पञ्चेन्द्रियसूत्रं त्वप्कायसूत्रवद् भावनीयम् ॥ सर्वस्तोका मनुष्या दक्षिणस्यामुत्तरस्यां च, पञ्चानां भरतक्षेत्राणां पञ्चानामैरावतक्षेत्राणामल्पत्वात्, तेभ्यः पूर्वस्यां दिशि सङ्ख्येयगुणाः, क्षेत्रस्य सङ्ख्येयगुणत्वात्, तेभ्योऽपि पश्चिमायां दिशि विशेषाधिकाः, स्वभावत एवाधोलौकिकग्रामेषु मनुष्यबाहुल्यभावात् ॥ 'दिसाणुवाएणं सव्वत्थोवा भवणवासी' इत्यादि, सर्वस्तोका भवनवासिनो देवाः पूर्वस्यां पश्चिमायां च दिशि, तत्र भवनानामल्पत्वात्, तेभ्य उत्तरदिग्भाविनोऽसङ्ख्येयगुणाः, स्वस्थानतया तत्र भवनानां बाहुल्यात्, तेभ्योऽपि दक्षिणदिग्भाविनोऽसङ्ख्येयगुणाः, तत्र भवनानामतीव बाहुल्यात्, तथाहि—निकाये निकाये चत्वारि चत्वारि भवनशतसहस्राण्यतिरिच्यन्ते, कृष्णपाक्षिकाश्च बहवस्तत्रोत्पद्यन्ते, ततो भवन्त्यसङ्ख्येयगुणाः । व्यन्तरसूत्रे भावना—यत्र सुषिरं तत्र व्यन्तराः प्रचलन्ति, यत्र घनं तत्र न, ततः पूर्वस्यां दिशि घनत्वात् स्तोका व्यन्तराः, तेभ्योऽपरस्यां दिशि विशेषाधिकाः, अधोलौकिकग्रामेषु सुषिरसंभवात्, तेभ्योऽप्युत्तरस्यां दिशि विशेषाधिकाः, स्वस्थानतया नगरावासबाहुल्यात्, तेभ्योऽपि दक्षिणस्यां दिशि विशेषाधिकाः, अतिप्रभूतनगरावासबाहुल्यात् । तथा सर्वस्तोका ज्योतिष्काः पूर्वस्यां पश्चिमायां च दिशि, चन्द्रादित्यद्वीपेषूद्यानकल्पेषु कतिपयानामेव तेषां भावात्, तेभ्योऽपि दक्षिणस्यां दिशि विशेषाधिकाः, विमानबाहुल्यात् कृष्णपाक्षिकाणां दक्षिणदिग्भावित्वाच्च, तेभ्योऽप्युत्तरस्यां दिशि विशेषाधिकाः, यतो मानसे सरसि बहवो ज्योतिष्काः क्रीडास्थानमिति क्रीडनव्यापृता नित्यमासते, मानससरसि च ये मत्स्यादयो जलचरास्ते आस-

न्नविमानदर्शनतः समुत्पन्नजातिस्मरणाः किञ्चिद् व्रतं प्रतिपद्यानशनादि च कृत्वा कृतनिदानास्तत्रोत्पद्यन्ते ततो भवन्ति उत्तराहा दाक्षिणात्येभ्यो विशेषाधिकाः ॥ तथा सौधर्मे कल्पे सर्वस्तोकाः पूर्वस्यां पश्चिमायां च दिशि वैमानिका देवाः, यतो यान्यावलिकाप्रविष्टानि विमानानि तानि चतसृष्वपि दिक्षु तुल्यानि, यानि पुनः पुष्पावकीर्णानि तानि प्रभूतानि असङ्ख्येययोजनविस्तृतानि, तानि च दक्षिणस्यामुत्तरस्यां दिशि नान्यत्र, ततः सर्वस्तोकाः पूर्वस्यां पश्चिमायां च दिशि, तेभ्य उत्तरस्यां दिशि असङ्ख्येयगुणाः, पुष्पावकीर्णकविमानानां बाहुल्यात् असङ्ख्येययोजनविस्तृतत्वाच्च, तेभ्योऽपि दक्षिणस्यां दिशि विशेषाधिकाः, कृष्णपाक्षिकाणां प्राचुर्येण तत्र गमनात् । एवमीशानसनत्कुमारमाहेन्द्रकल्पसूत्राण्यपि भावनीयानि । ब्रह्मलोककल्पे सर्वस्तोकाः पूर्वोत्तरपश्चिमदिग्भाविनो देवाः, यतो बहवः कृष्णपाक्षिकास्तिर्यग्योनयो दक्षिणस्यां दिशि समुत्पद्यन्ते शुक्लपाक्षिकाश्च स्तोका इति पूर्वोत्तरपश्चिमदिग्भाविनः सर्वस्तोकाः, तेभ्यो दक्षिणस्यां दिशि असङ्ख्येयगुणाः, कृष्णपाक्षिकाणां बहूनां तत्रोत्पादात् । एवं लान्तकशुक्रसहस्रारसूत्राण्यपि भावनीयानि । आनतादिषु पुनर्मनुष्या एवोत्पद्यन्ते, तेन प्रतिकल्पं प्रतिग्रैवेयकं प्रत्यनुत्तरविमानं चतसृषु दिक्षु प्रायो बहुसमा वेदितव्याः, तथा चाह—'तेण परं बहुसमोववन्नगा समणाउसो !' इति ॥ सर्वस्तोकाः सिद्धा दक्षिणस्यामुत्तरस्यां च दिशि, कथमिति चेत् ?, उच्यते, इह मनुष्या एव सिद्ध्यन्ति, नान्ये, मनुष्या अपि सिद्ध्यन्तो येष्वाकाशप्रदेशेष्विह चरमसमयेऽवगाढास्तेष्वेवाकाशप्रदेशेषूर्ध्वमपि गच्छन्ति तेष्वेव चोप-

र्यवतिष्ठन्ते न मनागपि वक्रं गच्छन्ति, सिद्ध्यन्ति च तत्र दक्षिणस्यां दिशि पञ्चसु भरतेषु उत्तरस्यां दिशि पञ्चस्वैरावतेषु मनुष्या अल्पाः, क्षेत्रस्याल्पत्वात् सुषमसुषमादौ च सिद्ध्यभावादिति तत्क्षेत्रसिद्धाः सर्वस्तोकाः, तेभ्यः पूर्वस्यां दिशि सङ्ख्येयगुणाः, पूर्वविदेहाना भरतैरावतक्षेत्रेभ्यः सङ्ख्येयगुणतया तद्गतमनुष्याणामपि सङ्ख्येयगुणत्वात् तेषां च सर्वकालं सिद्धिभावात्, तेभ्यः पश्चिमायां दिशि विशेषाधिकाः, अधोलौकिकग्रामेषु मनुष्यबाहुल्यात् । गतं दिग्द्वारं ॥ इदानीं गतिद्वारम्, तत्रेदमादिसूत्रम्—

एएसि णं भंते ! नेरइयाणं तिरिक्खजोणियाणं मणुस्साणं देवाणं सिद्धाण य पंचगति॰समासेणं कतरे कतरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा सवत्थोवा मणुस्सा नेरइया असंखेज्जगुणा देवा असंखेज्जगुणा सिद्धा अणंतगुणा तिरिक्खजोणिया अणंतगुणा ॥ एएसि णं भंते ! नेरइयाणं तिरिक्खजोणियाणं तिरिक्खजोणीणीणं मणुस्साणं मणुस्सीणं देवाणं देवीणं सिद्धाण य अट्ठगति॰समासेणं कतरे कतरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवाओ मणुस्सीओ, मणुस्सा असंखेज्जगुणा, नेरइया असंखेज्जगुणा, तिरिक्खजोणिणीओ असंखेज्जगुणाओ, देवा असंखेज्जगुणा, देवीओ संखेज्जगुणाओ, सिद्धा अणंतगुणा, तिरिक्खजोणिया अणंतगुणा ॥ दारं २ ॥ ( सू० ५७ )

सर्वस्तोका मनुष्याः, षण्णवतिच्छेदनकच्छेद्यराशिप्रमाणत्वात्, स च षण्णवतिच्छेदनकदायी राशिरग्रे दर्शयिष्यते, तेभ्यो नैरयिका असङ्ख्येयगुणाः, अङ्गुलमात्रक्षेत्रप्रदेशराशेः सम्बन्धिनि प्रथमवर्गमूले द्वितीयवर्गमूलेन गुणिते यावान्

प्रदेशराशिर्भवति तावत्प्रमाणासु घनीकृतस्य लोकस्यैकप्रादेशिकीषु श्रेणिषु यावन्तो नभःप्रदेशास्तावत्प्रमाणत्वात्, तेभ्यो देवा असङ्ख्येयगुणाः, व्यन्तराणां ज्योतिष्काणां च प्रत्येकं प्रतरासङ्ख्येयभागवर्तिश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्, तेभ्यः सिद्धा अनन्तगुणाः, अभव्येभ्योऽनन्तगुणत्वात्, तेभ्यस्तिर्यग्योनिका अनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणत्वात्। तदेवं नैरयिकतिर्यग्योनिकमनुष्यदेवसिद्धरूपाणां पञ्चानामल्पबहुत्वमुक्तम्, इदानीं नैरयिकतिर्यग्योनिकतैर्यग्योनिकीमनुष्यमानुषीदेवदेवीसिद्धलक्षणानामष्टानामल्पबहुत्वमभिधित्सुरिदमाह—सर्वस्तोका मानुष्यो—मनुष्यस्त्रियः, सङ्ख्येयकोटीकोटीप्रमाणत्वात्, ताभ्यो मनुष्या असङ्ख्येयगुणाः, इह मनुष्या इति संमूर्च्छनजा अपि गृह्यन्ते, वेदस्याविवक्षणात्, ते च संमूर्च्छनजा वान्तादिषु नगरनिर्द्धमनान्तेषु जायमाना असङ्ख्येयाः प्राप्यन्ते, तेभ्यो नैरयिका असङ्ख्येयगुणाः, मनुष्या हि उत्कृष्टपदेऽपि श्रेण्यसङ्ख्येयभागगतप्रदेशराशिप्रमाणा लभ्यन्ते नैरयिकास्त्वङ्गुलमात्रक्षेत्रप्रदेशराशिसत्कतृतीयवर्गमूलगुणितप्रथमवर्गमूलप्रमाणश्रेणिगताकाशप्रदेशराशिप्रमाणाः ततो भवन्त्यसङ्ख्येयगुणाः, तेभ्यस्तिर्यग्योनिकाः स्त्रियोऽसङ्ख्येयगुणाः, प्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिनभःप्रदेशराशिप्रमाणत्वात्, ताभ्योऽपि देवा असङ्ख्येयगुणाः, असङ्ख्येयगुणप्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगतप्रदेशराशिमानत्वात्, तेभ्योऽपि देव्यः सङ्ख्येयगुणाः, द्वात्रिंशद्गुणत्वात्, ताभ्योऽपि सिद्धा अनन्तगुणाः, तेभ्योऽपि तिर्यग्योनिका अनन्तगुणाः, अत्र युक्तिः प्रागेवोक्ता ॥ गतं गतिद्वारम् ॥ इदानीं इन्द्रियद्वारमधिकृत्याह—

एएसि णं भंते ! सइंदियाणं एगिंदियाणं बेइंदियाणं तेइंदियाणं चउरिंदियाणं पंचिंदियाणं अणिंदियाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा पंचिंदिया चउरिंदिया विसेसाहिया तेइंदिया विसेसाहिया बेइंदिया विसेसाहिया अणिंदिया अणंतगुणा एगिंदिया अणंतगुणा सइंदिया विसेसाहिया ॥ एएसि णं भंते ! सइंदियाणं एगिंदियाणं बेइंदियाणं तेइंदियाणं चउरिंदियाणं पंचिंदियाणं अपज्जत्तगाणं कतरे कतरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा पंचिंदिया अपज्जत्तगा चउरिंदिया अपज्जत्तगा विसेसाहिया तेइंदिया अपज्जत्तगा विसेसाहिया बेइंदिया अपज्जत्तगा विसेसाहिया एगिंदिया अपज्जत्तगा अणंतगुणा सइंदिया अपज्जत्तगा विसेसाहिया ॥ एएसि णं भंते ! सइंदियाणं एगिंदियाणं बेइंदियाणं तेइंदियाणं चउरिंदियाणं पंचिंदियाणं पज्जत्ताणं कतरे कतरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा चउरिंदिया पज्जत्तगा पंचिंदिया पज्जत्तगा विसेसाहिया बेइंदिया पज्जत्तया विसेसाहिया तेइंदिया पज्जत्तगा विसेसाहिया एगिंदिया पज्जत्तगा अनंतगुणा सइंदिया पज्जत्तगा विसेसाहिया ॥ एएसि णं भंते ! सइंदियाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा सइंदिया अपज्जत्तगा सइंदिया पज्जत्तगा संखेज्जगुणा ॥ एएसिणं भंते ! एगिंदियाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सव्वत्थोवा एगिंदिया अपज्जत्तगा एगिंदिया पज्जत्तगा संखेज्जगुणा ॥ एएसि णं भंते ! बेइंदियाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सव्वत्थोवा बेइंदिया पज्जत्तगा बेइंदिया अपज्ज-

त्तगा असंखेज्जगुणा ॥ एएसि णं भंते ! तेइंदियाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सव्वत्थोवा तेइंदिया पज्जत्तगा तेइंदिया अपज्जत्तगा असंखेज्जगुणा ॥ एएसि णं भंते ! चउरिंदियाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिता वा ?, गोयमा ! सव्वत्थोवा चउरिंदिया पज्जत्तगा चउरिंदिया अपज्जत्तगा असंखेज्जगुणा ॥ एएसि णं भंते ! पंचिंदियाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सव्वत्थोवा पंचेंदिया पज्जत्तगा पंचेंदिया अपज्जत्तगा असंखेज्जगुणा ॥ एएसि णं भंते सइंदियाणं एगिंदियाणं बेइंदियाणं तेइंदियाणं चउरिंदियाणं पंचिंदियाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सव्वत्थोवा चउरिंदिया पज्जत्तगा पंचिंदिया पज्जत्तगा विसेसाहिआ बेइंदिया पज्जत्तगा विसेसाहिआ तेइंदिया पज्जत्तगा विसेसाहिआ पंचिंदिया अपज्जत्तगा असंखेज्जगुणा चउरिंदिया अपज्जत्तगा विसेसाहिआ तेइंदिया अपज्जत्तगा विसेसाहिआ बेइंदिया अपज्जत्तगा विसेसाहिआ एगिंदिया अपज्जत्तगा अणंतगुणा सइंदिआ अपज्जत्तगा विसेसाहिआ एगिंदिया पज्जत्तगा संखेज्जगुणा सइंदिआ पज्जत्तगा विसेसाहिआ सइंदिया विसेसाहिआ । दारं ३ ॥ ( सूत्रं ५८ )

सर्वस्तोकाः पञ्चेन्द्रियाः सङ्ख्येययोजनकोटीकोटीप्रमाणविष्कम्भसूचीप्रमितप्रतरासङ्ख्येयभागवर्त्यसङ्ख्येयश्रेणिगताकाशप्रदेशराशिप्रमाणत्वात्, तेभ्यश्चतुरिन्द्रिया विशेषाधिकाः, विष्कम्भसूच्यास्तेषां प्रभूतसङ्ख्येययोजनकोटीको-

टीप्रमाणत्वात्, तेभ्योऽपि त्रीन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्या प्रभूततरसङ्ख्येययोजनकोटीकोटीप्रमाणत्वात्, तेभ्योऽपि द्वीन्द्रिया विशेषाधिकाः, तेषां विष्कम्भसूच्या प्रभूततमसङ्ख्येययोजनकोटीकोटीप्रमाणत्वात्, तेभ्योऽपि अनिन्द्रिया अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽपि एकेन्द्रिया अनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेभ्योऽपि सेन्द्रिया विशेषाधिकाः, द्वीन्द्रियादीनामपि तत्र प्रक्षेपात् । तदेवमुक्तमेकमौघिकानामल्पबहुत्वम्, इदानीं तेषामेवापर्याप्तानां द्वितीयमल्पबहुत्वमाह—सर्वस्तोकाः पञ्चेन्द्रिया अपर्याप्ताः, एकस्मिन् प्रतरे यावन्त्यङ्गुलासङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणत्वात् तेषां, तेभ्यश्चतुरिन्द्रिया अपर्याप्ता विशेषाधिकाः, प्रभूताङ्गुलासङ्ख्येयभागखण्डप्रमाणत्वात्, तेभ्यस्त्रीन्द्रिया अपर्याप्ता विशेषाधिकाः, प्रभूततरप्रतराङ्गुलासङ्ख्येयभागखण्डमानत्वात्, तेभ्योऽपि द्वीन्द्रिया अपर्याप्ता विशेषाधिकाः, प्रभूततमप्रतराङ्गुलासङ्ख्येयभागखण्डप्रमाणत्वात्, तेभ्य एकेन्द्रिया अपर्याप्ता अनन्तगुणाः, वनस्पतिकायिकानामपर्याप्तानामनन्ततया सदा प्राप्यमाणत्वात्, तेभ्योऽपि सेन्द्रिया अपर्याप्ता विशेषाधिकाः, द्वीन्द्रियाद्यपर्याप्तानामपि तत्र प्रक्षेपात् । गतं द्वितीयमल्पबहुत्वम्, अधुना एतेषामेव पर्याप्तानामल्पबहुत्वमाह—सर्वस्तोकाश्चतुरिन्द्रियाः पर्याप्ताः, यतोऽल्पायुषश्चतुरिन्द्रियास्ततः प्रभूतकालमवस्थानाभावात् पृच्छासमये स्तोका अवाप्यन्ते, ते च स्तोका अपि प्रतरे यावन्त्यङ्गुलसङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणा वेदितव्याः, तेभ्यः पञ्चेन्द्रियाः पर्याप्ता विशेषाधिकाः, प्रभूतप्रतराङ्गुलसङ्ख्येयभा-

गखण्डमानत्वात्, तेभ्योऽपि द्वीन्द्रियाः पर्याप्ता विशेषाधिकाः, प्रभूततरप्रतराङ्गुलसङ्ख्येयभागखण्डमानत्वात्, तेभ्योऽपि त्रीन्द्रियाः पर्याप्ता विशेषाधिकाः, स्वभावत एव तेषां प्रभूततमप्रतराङ्गुलसङ्ख्येयभागखण्डप्रमाणत्वात्, तेभ्य एकेन्द्रियाः पर्याप्ता अनन्तगुणाः, वनस्पतिकायिकानां पर्याप्तानामनन्तमानत्वात्, तेभ्यः सेन्द्रियाः पर्याप्ता विशेषाधिकाः, द्वीन्द्रियादीनामपि पर्याप्तानां तत्र प्रक्षेपात्। (गतं) तृतीयमल्पबहुत्वं, सम्प्रत्येतेषामेव सेन्द्रियादीनां प्रत्येकं पर्याप्तापर्याप्तगतान्यल्पबहुत्वान्याह—सर्वस्तोकाः सेन्द्रिया अपर्याप्तकाः, इह सेन्द्रियेषु मध्ये एकेन्द्रिया एव बहवः तत्रापि च सूक्ष्माः तेषां सर्वलोकापन्नत्वात् सूक्ष्माश्चापर्याप्ताः सर्वस्तोकाः पर्याप्ताः सङ्ख्येयगुणा इति सेन्द्रिया अपर्याप्ताः सर्वस्तोकाः, पर्याप्ताः सङ्ख्येयगुणाः, एवमेकेन्द्रिया अपि अपर्याप्ताः सर्वस्तोकाः, पर्याप्ताः सङ्ख्येयगुणा भावनीयाः। तथा सर्वस्तोका द्वीन्द्रियाः पर्याप्तकाः, यावन्ति प्रतरेऽङ्गुलस्य सङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणत्वात् तेषां, तेभ्योऽपर्याप्ताः असङ्ख्येयगुणाः, प्रतरगताङ्गुलासङ्ख्येयभागखण्डप्रमाणत्वात्, एवं त्रिचतुरिन्द्रियपञ्चेन्द्रियाल्पबहुत्वान्यपि वक्तव्यानि। गतं षडल्पबहुत्वात्मकं चतुर्थमल्पबहुत्वम्। सम्प्रत्येतेषां सेन्द्रियादीनां समुदितानां पर्याप्तापर्याप्तानामल्पबहुत्वमाह—'एएसि णं भंते' इत्यादि। इदं प्रागुक्तद्वितीयतृतीयाल्पबहुत्वभावनानुसारेण स्वयं भावनीयं, तत्त्वतो भावितत्वात्। गतमिन्द्रियद्वारम्, इदानीं कायद्वारमधिकृत्याह—

एएसि णं भंते ! सकाइयाणं पुढविकाइयाणं आउकाइयाणं तेउकाइयाणं वाउकाइयाणं वणस्सइकाइयाणं तसकाइयाणं अकाइयाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सवत्थोवा तसकाइया तेउकाइया असंखेज्जगुणा पुढविकाइया विसेसाहिया आउकाइया विसेसाहिया वाउकाइया विसेसाहिया अकाइया अणंतगुणा वणस्सइकाइया अणंतगुणा सकाइया विसेसाहिया ॥ एएसि णं भंते ! सकाइयाणं पुढविकाइयाणं आउकाइयाणं तेउकाइयाणं वाउकाइयाणं वणस्सइकाइयाणं तसकाइयाणं अपज्जत्तगाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा तसकाइया अपज्जत्तगा तेउकाइया अपज्जत्तगा असंखेज्जगुणा पुढविकाइया अपज्जत्तगा विसेसाहिया आउकाइया अपज्जत्तगा विसेसाहिया वाउकाइया अपज्जत्तगा विसेसाहिया वणस्सइकाइया अपज्जत्तगा अणंतगुणा सकाइया अपज्जत्तगा विसेसाहिया ॥ एएसि णं भंते ! सकाइयाणं पुढविकाइयाणं आउकाइयाणं तेउकाइयाणं वाउकाइयाणं वणस्सइकाइयाणं तसकाइयाणं पज्जत्तगाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा तसकाइया पज्जत्तगा तेउकाइया पज्जत्तगा असंखेज्जगुणा पुढविकाइया पज्जत्तगा विसेसाहिया आउकाइया पज्जत्तगा विसेसाहिया वाउकाइया पज्जत्तगा विसेसाहिया वणस्सइकाइया पज्जत्तगा अणंतगुणा सकाइया पज्जत्तगा विसेसाहिया ॥ एएसि णं भंते ! सकाइयाणं पज्जत्तापज्जत्तगाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा सकाइया अपज्जत्तगा सकाइया पज्जत्तगा संखेज्जगुणा ॥ एएसि णं भंते ! पुढविकाइयाणं पज्जत्तापज्जत्तगाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा पुढविका-

३ अल्पबहुत्वपदे कायाल्प० सू. ५९

इया अपज्जत्तगा पुढवीकाइया पज्जत्तगा संखेज्जगुणा ॥ एएसि णं भंते ! आउकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा आउकाइया अपज्जत्तगा आउकाइया पज्जत्तगा संखेज्जगुणा ॥ एएसिणं भंते ! तेउकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा तेउकाइया अपज्जत्तगा तेउकाइया पज्जत्तगा संखेज्जगुणा । एएसिं णं भंते ! वाउकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा वाउकाइया अपज्जत्तगा वाउकाइया पज्जत्तगा संखेज्जगुणा ॥ एएसि णं भंते ! वणस्सइकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा वणस्सइकाइया अपज्जत्तगा वणस्सइकाइया पज्जत्तगा संखेज्जगुणा ॥ एएसि णं भंते ! तसकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, सव्वत्थोवा तसकाइया पज्जत्तगा अपज्जत्तगा असंखेज्जगुणा ॥ एएसि णं भंते ! सकाइयाणं पुढविकाइआणं आउकाइआणं तेउकाइआणं वाउकाइआणं वणस्सइकाइआणं तसकाइयाण य पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सव्वत्थोवा तसकाइआ पज्जत्तगा तसकाइआ अपज्जत्तगा संखेज्जगुणा तेउकाइआ अपज्जत्तगा असंखेज्जगुणा पुढविकाइआ अपज्जत्ता विसेसाहिया आउकाइआ अपज्जत्तगा विसेसाहिआ वाउकाइआ अपज्जत्तगा विसेसाहिआ तेउकाइआ पज्जत्तगा संखेज्जगुणा पुढविकाइआ पज्जत्ता विसेसाहिआ आउकाइआ पज्जत्ता विसेसाहिया वाउकाइआ पज्जत्ता विसेसाहिआ वणस्सइकाइआ अपज्जत्ता अणंतगुणा सका-

इआ अपज्जत्तगा विसेसाहिया वणस्सइकाइआ पज्जत्तगा संखेज्जगुणा सकाइया पज्जत्तगा विसेसाहिआ सकाइया विसेसाहिया ॥ ( सू० ५९ )

सर्वस्तोकास्त्रसकायिकाः, द्वीन्द्रियादीनामेव त्रसकायिकत्वात्, तेषा च शेषकायापेक्षया अल्पत्वात्, तेभ्यस्तेजःकायिका असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्यः पृथिवीकायिका विशेषाधिकाः, प्रभूतासङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्योऽप्कायिका विशेषाधिकाः, प्रभूततरासङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्यो वायुकायिका विशेषाधिकाः, प्रभूततमासङ्ख्येयलोकाकाशप्रदेशमानत्वात्, तेभ्योऽकायिका अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यो वनस्पतिकायिका अनन्तगुणाः, अनन्तलोकाकाशप्रदेशराशिप्रमाणत्वात्, तेभ्यः सकायिका विशेषाधिकाः, पृथिवीकायिकादीनामपि तत्र प्रक्षेपात्। उक्तमौघिकानामल्पबहुत्वम्, इदानीमेतेषामेवापर्याप्तानां द्वितीयमल्पबहुत्वमाह—'एएसि णं भंते! सकाइयाणं' इत्यादि सुगमं ॥ सम्प्रत्येतेषामेव पर्याप्तानां तृतीयमल्पबहुत्वमाह—'एएसि णं भंते! सकाइयाणं' इत्यादि सुगमं, साम्प्रतमेतेषामेव सकायिकादीनां प्रत्येकं पर्याप्तापर्याप्तगतमल्पबहुत्वमाह—'एएसि णं भंते! सकाइयाणं पज्जत्तापज्जत्ताणं' इत्यादि सुगमम् ॥ सम्प्रत्येतेषामेव सकायिकादीनां समुदितानां पर्याप्तापर्याप्तानामल्पबहुत्वमाह—'एएसि णं भंते! सकाइयाणं' इत्यादि, सर्वस्तोकास्त्रसकायिकाः पर्याप्तकाः, तेभ्यस्त्रसकायिका एवापर्याप्तका असङ्ख्येयगुणाः, द्वीन्द्रियादीनामपर्याप्तानां पर्याप्तद्वीन्द्रिया-

दिभ्योऽसङ्ख्येयगुणत्वात्, ततः तेजःकायिका अपर्याप्ता असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, ततः पृथिव्यम्बुवायवोऽपर्याप्तकाः क्रमेण विशेषाधिकाः, ततः तेजःकायिकाः पर्याप्ताः सङ्ख्येयगुणाः, सूक्ष्मेष्वपर्याप्तेभ्यः पर्याप्तानां सङ्ख्येयगुणत्वात्, ततः पृथिव्यब्वायवः पर्याप्ताः क्रमेण विशेषाधिकाः, ततो वनस्पतयोऽपर्याप्ता अनन्तगुणाः, पर्याप्ताः संङ्ख्येयगुणाः ॥ तदेवं कायद्वारे सामान्येन पञ्च सूत्राणि प्रतिपादितानि, सम्प्रत्यस्मिन्नेव द्वारे सूक्ष्मबादरादिभेदेन पञ्चदश सूत्राण्याह—

एएसि णं भंते ! सुहुमाणं सुहुमपुढविकाइयाणं सुहुमआउकाइआणं सुहुमतेउकाइआणं सुहुमवाउकाइआणं सुहुमवणस्सइकाइयाणं सुहुमनिओयाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सव्वत्थोवा सुहुमतेउकाइया सुहुमपुढविकाइआ विसेसाहिया सुहुमआउकाइआ विसेसाहिया सुहुमवाउकाइआ विसेसाहिआ सुहुमनिगोदा असंखेज्जगुणा सुहुमवणस्सइकाइया अणंतगुणा सुहुमा विसेसाहिया ॥ एएसि णं भंते ! सुहुमअपज्जत्तगाणं सुहुमपुढविअपज्जत्तगाणं सुहुमआउअपज्जत्तयाणं सुहुमतेउअपज्जत्तयाणं सुहुमवाउअपज्जत्तयाणं सुहुमवण०अपज्जत्तयाणं सुहुमनिगोदाअपज्जत्ताण य कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सव्वत्थोवा सुहुमतेउअपज्जत्तया सुहुमपुढवि० अप० विसे० सुहुमआउ० अप० विसे० सुहुमवाउ०अप० विसे० सुहुमनिगोदा अप० असंखे० सुहुमवण० अपज्जत्तया अणंतगुणा सुहुमा अपज्जत्तया विसेसा० । एएसि णं भंते ! सुहुमपज्जत्त० सुहुमपुढविका० पज्जत्त० सुहुमआउका० पज्जत्त०

सुहुमतेउका० पज्जत्त० सुहुमवाउका० पज्जत्तगाणं सुहुमवणस्सइका० पज्जत्त० सुहुमनिगोदपज्जत्तगाण य कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सवत्थोवा सुहुमतेउका० पज्जत्तगा सुहुमपुढविका० पज्जत्तगा विसेसा० सुहुमआउका० पज्जत्तगा विसेसा० सुहुमवाउका० पज्जत्त० विसेसा० सुहुमनिगोया पज्जत्तगा असंखेज्जगुणा सुहुमवण० पज्जत्त० अणंत० सुहुमपज्जत्त० विसेसा० । एएसि णं भंते ! सुहुमाणं पज्जत्तापज्जत्तगाणं कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सवत्थोवा सुहुमअपज्जत्तगा सुहुमपज्जत्तगा संखे० । एएसि णं भंते ! सुहुमपुढवि० पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सवत्थोवा सुहुमपुढविकाइया अपज्जत्तया सुहुमपुढविकाइया पज्जत्तया संखेज्जगुणा। एएसि णं भंते ! सुहुमआउ० पज्जत्तापज्जत्तगाणं कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सवत्थोवा सुहुमआउका० अपज्जत्त० सुहुमाआउका० पज्जत्तगा संखेज्जगुणा। एएसि णं भंते ! सुहुमतेउ० पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सवत्थोवा सुहुमतेउका० अपज्जत्त० सुहुमतेउका० पज्जत्ता संखे० । एएसि णं भंते ! सुहुमवाउका० पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सवत्थोवा सुहुमवाउका० अपज्जत्त० वाउका० पज्जत्त० संखेज्ज० । एएसि णं भंते ! सुहुमवण० पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सवत्थोवा सुहुमवण० अपज्ज० सुहुमवणस्सइपज्जत्त० संखे० । एएसि णं भंते ! सुहुमनिगोयाणं कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा ! सवत्थोवा सुहुमनिगोया अपज्जत्त० सुहुमनिगोया पज्जत्त० संखेज्जगुणा । एएसि णं भंते ! सुहुमाणं सुहुमपुढ० सुहुमआउ० सुहुमतेउ० सुहुमवाउ० सुहुमवण० सुहुमनिगोदाण य पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा ४ ?, गोयमा !

सव्वत्थोवा सुहुमतेउकाइया अपज्जत्तया सुहुमपुढवीअपज्ज० विसेसा० सुहुमआउ० अपज्ज० विसेसा० सुहुमवाउ० अपज्ज० विसेसा० सुहुमतेउ० अपज्ज० संखेज्जगुणा सुहुमपुढवीपज्जत्त० विसेसा० सुहुमआउ० पज्जत्त० विसेसा० सुहुमवाउ० पज्जत्त० विसेसा० सुहुमनिगोदा अपज्ज० असंखे० सुहुमनिगोदा पज्जत्त० संखे० सुहुमवण० अपज्ज० अणंतगुणा सुहुम-अपज्ज० विसेसा० सुहुमवण० पज्जत्त० संखेज्ज० सुहुमपज्जत्त० विसेसा० सुहुमा विसेसाहिया । ( सूत्रम् ६० )

सर्वस्तोकाः सूक्ष्माः तेजःकायिकाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्यः सूक्ष्मपृथिवीकायिका विशेषाधिकाः, प्रभूतासङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्यः सूक्ष्माप्कायिका विशेषाधिकाः, प्रभूततरासङ्ख्येयलोकाकाशप्रदेशमानत्वात्, तेभ्यः सूक्ष्मवायुकायिका विशेषाधिकाः, प्रभूततमासङ्ख्येयलोकाकाशप्रदेशराशिमानत्वात्, तेभ्यः सूक्ष्मनिगोदा असङ्ख्येयगुणाः, [ ग्रन्थाग्रं० ३००० ] सूक्ष्मग्रहणं बादरव्यवच्छेदार्थं, द्विविधा हि निगोदाः—सूक्ष्मा बादराश्च, तत्र बादराः सूरणकन्दादिषु, सूक्ष्माः सर्वलोकापन्नाः, ते च प्रतिगोलकमसङ्ख्येया इति सूक्ष्मवायुकायिकेभ्योऽसङ्ख्येयगुणाः, तेभ्यः सूक्ष्मवनस्पतिकायिका अनन्तगुणाः, प्रतिनिगोदमनन्तानां जीवानां भावात्, तेभ्यः सामानिकाः सूक्ष्मजीवा विशेषाधिकाः, सूक्ष्मपृथिवीकायिकादीनामपि तत्र प्रक्षेपात् । गतमौघिकानामिदमल्पबहुत्वम्, इदानीमेतेषामेवापर्याप्तानामाह—'एएसि णं भंते ! सुहुमअपज्जत्तगाणं' इत्यादि, सर्वं प्राग्वद्भावनीयम् । सम्प्रत्येतेषामेव पर्याप्तानां तृतीयमल्पबहुत्वमाह—'एएसि णं भंते ! सुहुमपज्जत्तगाणं' इत्यादि, इदमपि प्रागुक्तक्र-

मेणैव भावनीयं। अधुना अमीषामेव सूक्ष्मादीनां प्रत्येकं पर्याप्तापर्याप्तगतान्यल्पबहुत्वान्याह—'एएसि णं भंते! सुहुमाणं पज्जत्तापज्जत्ताणं' इत्यादि, इह बादरेषु पर्याप्तेभ्योऽपर्याप्ता असङ्ख्येयगुणाः, एकैकपर्याप्तनिश्रयाऽसङ्ख्येयानामपर्याप्तानामुत्पादात्, तथा चोक्तं प्राक् प्रथमे प्रज्ञापनाख्ये पदे—"पज्जत्तगनिस्साए अपज्जत्तगा वक्कमंति, जत्थ एगो तत्थ नियमा असंखेज्जा" इति, सूक्ष्मेषु पुनर्नायं क्रमः, पर्याप्ताश्चापर्याप्तापेक्षया चिरकालावस्थायिन इति सदैव ते बहवो लभ्यन्ते, तत उक्तं सर्वस्तोकाः सूक्ष्मा अपर्याप्ताः, तेभ्यः सूक्ष्माः पर्याप्तकाः सङ्ख्येयगुणाः, एवं पृथिवीकायिकादिष्वपि प्रत्येकं भावनीयम्। गतं चतुर्थमल्पबहुत्वम्, इदानीं सर्वेषा समुदितानां पर्याप्तापर्याप्तगतं पञ्चममल्पबहुत्वमाह—'एएसि णं भंते! सुहुमाणं सुहुमपुढविकाइयाणं' इत्यादि, सर्वस्तोकाः सूक्ष्मतेजःकायिका अपर्याप्ताः, कारणं प्रागेवोक्तं, तेभ्यः सूक्ष्मपृथिवीकायिका अपर्याप्ता विशेपाधिकाः तेभ्यः सूक्ष्माप्कायिका अपर्याप्ता विशेपाधिकाः तेभ्यः सूक्ष्मवायुकायिका अपर्याप्ता विशेपाधिकाः, अत्रापि कारणं प्रागेवोक्तं, तेभ्यः सूक्ष्मतेजःकायिकाः पर्याप्ताः सङ्ख्येयगुणाः, अपर्याप्तेभ्यो हि पर्याप्ताः सङ्ख्येयगुणा इत्यनन्तरं भावितं, तत्र सर्वस्तोकाः सूक्ष्मतेजःकायिका अपर्याप्ता उक्ताः इतरे च सूक्ष्मापर्याप्तपृथिवीकायिकादयो विशेपाधिकाः, विशेपाधिकत्वं च मनागधिकत्वं न द्विगुणत्वं न त्रिगुणत्वं वा, ततः सूक्ष्मतेजःकायिकेभ्योऽपर्याप्तेभ्यः पर्याप्ताः सूक्ष्मतेजःकायिकाः सङ्ख्येयगुणाः सन्तः सूक्ष्मवायुकायिकापर्याप्तेभ्योऽपि सङ्ख्येयगुणा भवन्ति, तेभ्यः सूक्ष्मपृथिवीकायिकाः पर्याप्ताः विशेपाधिकाः तेभ्यः

सूक्ष्माप्कायिकाः पर्याप्ता विशेषाधिकाः तेभ्योऽपि सूक्ष्मवायुकायिकाः पर्याप्ता विशेषाधिकाः तेभ्यः सूक्ष्मनिगोदाः अपर्याप्ता असङ्ख्येयगुणाः, तेषामतिप्राचुर्यात्, तेभ्यः सूक्ष्मनिगोदाः पर्याप्ताः सङ्ख्येयगुणाः, सूक्ष्मेष्वपर्याप्तेभ्यः पर्याप्तानामोघतः सङ्ख्येयगुणत्वात्, तेभ्यः सूक्ष्मवनस्पतिकायिका अपर्याप्तका अनन्तगुणाः, प्रतिनिगोदमनन्तानां तेषां भावात्, तेभ्यः सामान्यतः सूक्ष्मा अपर्याप्तका विशेषाधिकाः, सूक्ष्मपृथिवीकायिकादीनामपि तत्र प्रक्षेपात्, तेभ्यः सूक्ष्मवनस्पतिकायिकाः पर्याप्तकाः सङ्ख्येयगुणाः, सूक्ष्मेषु ह्यपर्याप्तेभ्यः पर्याप्तकाः सङ्ख्येयगुणाः, यच्चापान्तराले विशेषाधिकत्वं तदल्पमिति न सङ्ख्येयगुणत्वव्याघातः, तेभ्यः सूक्ष्माः पर्याप्तका विशेषाधिकाः, सूक्ष्मपृथिव्यादीनामपि पर्याप्तानां तत्र प्रक्षेपात्, तेभ्यः सूक्ष्मा विशेषाधिकाः, अपर्याप्तानामपि तत्र प्रक्षेपात्। तदेवमुक्तानि सूक्ष्माश्रितानि पञ्च सूत्राणि, सम्प्रति बादराश्रितानि पञ्चोक्तक्रमेणाभिधित्सुराह—

एएसि णं भंते! बादराणं बादरपुढविकाइयाणं बादरआउकाइयाणं बादरतेउकाइयाणं बादरवाउकाइयाणं बादरवणस्सइकाइयाणं पत्तेयसरीरबादरवणस्सइकाइयाणं बादरनिगोदाणं बादरतसकाइयाणं कयरे कयरेहिंतो अप्पा वा ४?, गोयमा! सव्वत्थोवा बादरतसकाइया बादरतेउकाइया असंखेज्जगुणा पत्तेयसरीरबादरवणस्सइकाइया असंखेज्जगुणा बादरनिगोदा असंखेज्जगुणा बादरा पुढवी० असंखे० बादरा आउकाइया असं० बादरा वाउकाइया असंखे० बादरा वणस्स० अणंतगुणा बादरा विसेसाहिया। एएसि णं भंते! बादरपुढविकाइयअपज्जत्तगाणं बादरआउअपज्जत्तगाणं बादरतेउअपज्ज-

त्तगाणं बादरवाउअपज्जत्तगाणं बादरवणस्सइअपज्जत्तगाणं पत्तेयसरीरबादरवणस्सइअपज्जत्तगाणं बादरनिगोदअपज्जत्तगाणं बादरतसकाइयअपज्जत्तगाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा बादरतसकाइया अपज्जत्तगा बादरतेउकाइया अपज्जत्तगा असंखेज्जगुणा पत्तेयसरीरबादरवणस्सइकाइया अपज्जत्तगा असंखेज्जगुणा बादरनिगोदा अपज्जत्तगा असंखेज्जगुणा बायरपुढवीकाइया अपज्जत्तगा असंखेज्जगुणा बादरआउकाइया अपज्जत्तगा असंखेज्जगुणा बादरवाउकाइया अपज्जत्तगा असंखेज्जगुणा बादरवणस्सइकाइया अपज्जत्तगा अणंतगुणा बादरअपज्जत्तगा विसेसाहिया । एएसि णं भंते ! बायरपज्जत्तयाणं बादरपुढवीकाइयाणं पज्जत्तयाणं बायरआउकाइयाणं पज्जत्तयाणं बायरतेउकाइयाणं पज्जत्तयाणं बायरवाउकाइयाणं पज्जत्तयाणं पत्तेयसरीरबायरवणस्सइकाइयाणं पज्जत्तयाणं बायरनिगोदपज्जत्तयाणं बायरतसकाइयपज्जत्तगाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा बायरतेउकाइया पज्जत्तया बायरतसकाइया पज्जत्तया असंखेज्जगुणा पत्तेयसरीरबायरवणस्सइकाइया पज्जत्तया असंखेज्जगुणा बायरनिगोदा पज्जत्तया असंखेज्जगुणा बादरपुढवीकाइया पज्जत्तया असंखेज्जगुणा बायरआउकाइया पज्जत्तया असंखेज्जगुणा बायरवाउकाइया पज्जत्तया असंखेज्जगुणा बायरवणस्सइकाइया पज्जत्तया अणंतगुणा बायरपज्जत्तया विसेसाहिया । एएसि णं भंते ! बायराणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा बायरपज्जत्तया बायरअपज्जत्तया असंखेज्जगुणा । एएसि णं भंते ! बायरपुढवीकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा बायरपुढवीकाइया पज्जत्तया बायर-

पुढविकाइया अपज्जत्तया असंखेज्जगुणा। एएसि णं भंते! बायरआउकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरआउकाइया पज्जत्तया बायरआउकाइया अपज्जत्तया असंखेज्जगुणा। एएसि णं भंते! बायरतेउकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गो० सव्वत्थोवा बायरतेउकाइया पज्जत्तया अपज्जत्तया असंखेज्जगुणा। एएसि णं भंते! बायरवाउकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बादरवाउकाइया पज्जत्तया बायरवाउकाइया अपज्जत्तया असंखेज्जगुणा। एएसि णं भंते ! बायरवणस्सइकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सव्वत्थोवा बायरवणस्सइकाइया पज्जत्तया बायरवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा। एएसि णं भंते! पत्तेयसरीरबायरवणस्सइकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा पत्तेयसरीरबायरवणस्सइकाइया पज्जत्तया पत्तेयसरीरबायरवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा। एएसि णं भंते ! बायरनिगोयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा बायरनिगोया पज्जत्ता बायरनिगोया अपज्जत्ता असंखेज्जगुणा। एएसि णं भंते ! बायरतसकाइयाणं पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा! सव्वत्थोवा बायरतसकाइया पज्जत्ता बायरतसकाइया अपज्जत्ता असंखेज्जगुणा। एएसि णं भंते ! बायराणं बायरपुढवीकाइयाणं बायरआउकाइयाणं बायरतेउकाइयाणं बायरवाउकाइयाणं बायरवणस्सइकाइयाणं पत्तेयसरीरबायरवणस्सइकाइयाणं बायरनिगोयाणं बायरतसकाइयाणं पज्जत्तापज्जत्ताणं

कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरतेउकाइया पज्जत्तया बायरतसकाइया पज्जत्तया असंखेज्जगुणा बायरतसकाइया अपज्जत्तया असंखेज्जगुणा पत्तेयसरीरबायरवणस्सइकाइया पज्जत्तया असंखेज्जगुणा बायरनिगोया पज्जत्तया असंखेज्जगुणा बादरपुढवीकाइया पज्जत्तया असंखेज्जगुणा बायरआउकाइया पज्जत्तया असंखेज्जगुणा बायरवाउकाइया पज्जत्तया असंखेज्जगुणा बायरतेउकाइया अपज्जत्तया असंखेज्जगुणा पत्तेयसरीरबायरवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा बायरनिगोया अपज्जत्तया असंखेज्जगुणा बायरपुढवीकाइया अपज्जत्तया असंखेज्जगुणा बायरआउकाइया अपज्जत्तया असंखेज्जगुणा बायरवाउकाइया अपज्जत्तया असंखेज्जगुणा बायरवणस्सइकाइया पज्जत्तया अणंतगुणा बायरवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा बायरअपज्जत्तया विसेसा० बायरा विसेसा० । (सू०६१)

'एएसि णं भंते ! बायराणं बायरपुढवीकाइयाणं' इत्यादि, सर्वस्तोका बादरत्रसकायिकाः, द्वीन्द्रियादीनामेव बादरत्रसत्वात्, तेषां च शेषकायेभ्योऽल्पत्वात्, तेभ्यो बादरतेजःकायिका असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्योऽपि प्रत्येकशरीरबादरवनस्पतिकायिका असङ्ख्येयगुणाः, स्थानस्यासङ्ख्येयगुणत्वात्, बादरतेजःकायिका हि मनुष्यक्षेत्रे एव भवन्ति, तथा चोक्तं द्वितीये स्थानाख्ये पदे—"कहि णं भंते ! बादरतेउकाइयाणं पज्जत्तगाणं ठाणा पन्नत्ता ?, गोयमा ! सट्ठाणेणं अंतो मणुस्सखित्ते अड्ढाइज्जेसु दीवसमुद्देसु निव्वाघाएणं पन्नरससु कम्मभूमीसु वाघाएणं पंचसु महाविदेहेसु, एत्थ णं बायरतेउकाइयाणं पज्जत्तगाणं ठाणा पन्नत्ता" तथा "जत्थेव बायर-

तेउकाइयाणं पज्जत्तगाणं ठाणा तत्थेव बायरतेउकाइयाणं अपज्जत्तगाणं ठाणा पन्नत्ता" इति, बादरवनस्पतिकायिकास्तु त्रिष्वपि लोकेषु भवनादिषु, तथा चोक्तं तस्मिन्नेव द्वितीये स्थानाख्ये पदे—"कहि णं भंते ! बायरवणस्सइकाइयाणं पज्जत्तगाणं ठाणा पन्नत्ता ?, गोयमा ! सट्ठाणेणं सत्तसु घणोदहिसु सत्तसु घणोदहिवलयेसु अहोलोए पायालेसु भवणेसु भवणपत्थडेसु उड्ढलोए कप्पेसु विमाणेसु विमाणावलियासु विमाणपत्थडेसु तिरियलोए अगडेसु तलाएसु नदीसु दहेसु वाविसु पुक्खरिणीसु दीहियासु गुंजालियासु सरेसु सरपंतियासु सरसरपंतियासु विलेसु विलपंतियासु उज्झरेसु निज्झरेसु चिल्ललेसु पल्ललेसु वप्पिणेसु दीवेसु समुद्देसु सव्वेसु चेव जलासएसु जलठाणेसु, एत्थ णं बायरवणस्सइकाइयाणं पज्जत्तगाणं ठाणा पन्नत्ता" तथा "जत्थेव बायरवणस्सइकाइयाणं पज्जत्तगाणं ठाणा तत्थेव बायरवणस्सइकाइयाणं अपज्जत्तगाणं ठाणा पन्नत्ता" इति, ततः क्षेत्रस्यासङ्ख्येयगुणत्वादुपपद्यन्ते बादरतेजःकायिकेभ्योऽसङ्ख्येयगुणाः प्रत्येकशरीरबादरवनस्पतिकायिकाः, तेभ्यो बादरनिगोदा असङ्ख्येयगुणाः, तेषामत्यन्तसूक्ष्मावगाहनत्वात्, जलेषु सर्वत्रापि च भावात्, पनकसेवालादयो हि जलेऽवश्यंभाविनः ते च बादरानन्तकायिका इति; तेभ्योऽपि बादरपृथिवीकायिका असङ्ख्येयगुणाः, अष्टासु पृथिवीषु सर्वेषु विमानभवनपर्वतादिषु भावात्, तेभ्योऽसङ्ख्येयगुणा बादराप्कायिकाः, समुद्रेषु जलप्राभूत्यात्, तेभ्यो बादरवायुकायिका असङ्ख्येयगुणाः, सुषिरे सर्वत्र वायुसंभवात्, तेभ्यो बादरवनस्पतिकायिका अनन्तगुणाः, प्रतिबादरनिगोदमनन्तानां जीवानां भावात्, तेभ्यः सामा-

न्यतो बादरा जीवा विशेषाधिकाः, बादरत्रसकायिकादीनामपि तत्र प्रक्षेपात्। गतमेकमौधिकानां बादराणामल्पबहुत्वम्, इदानीमेतेषामेवापर्याप्तानां द्वितीयमाह—'एएसि णं भंते! बायरापज्जत्तगाणं' इत्यादि, सर्वस्तोका बादरत्रसकायिका अपर्याप्तकाः, युक्तिरत्र प्रागुक्तैव, तेभ्यो बादरतेजःकायिका अपर्याप्ता असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, इत्येवं प्रागुक्तक्रमेणेदमप्यल्पबहुत्वं भावनीयं। गतं द्वितीयमल्पबहुत्वम्, इदानीमेतेषामेव पर्याप्तानां तृतीयमल्पबहुत्वमाह—'एएसि णं भंते! बायरपज्जत्तगाणं' इत्यादि, सर्वस्तोका बादरतेजःकायिकाः पर्याप्ताः, आवलिकासमयवर्गस्य कतिपयसमयन्यूनैरावलिकासमयैर्गुणितस्य यावान्समयराशिर्भवति तावत्प्रमाणत्वात्तेषा, उक्तं च—"आवलियवग्गो ऊणावलिए गुणिओ हु बायरा ते उ" इति तेभ्यो बादरत्रसकायिकाः पर्याप्ता असङ्ख्येयगुणाः, प्रतरे यावन्त्यङ्गुलसङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणत्वात्तेषां, तेभ्यः प्रत्येकशरीरबादरवनस्पतिकायिकाः पर्याप्ताः असङ्ख्येयगुणाः, प्रतरे यावन्त्यङ्गुलासङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणत्वात्तेषां, उक्तं च—"पत्तेयपज्जवणकाइयाओ पयरं हरंति लोगस्स। अङ्गुलअसंखभागेण भाइय"मिति तेभ्यो बादरनिगोदाः पर्याप्तका असङ्ख्येयगुणाः, तेषामत्यन्तसूक्ष्मावगाहनत्वाज्जलाशयेषु च सर्वत्र भावात्, तेभ्यो बादरपृथिवीकायिकाः पर्याप्ताः असङ्ख्येयगुणाः, अतिप्रभूतसङ्ख्यप्रतराङ्गुलासङ्ख्येयभागखण्डमानत्वात्, तेभ्योऽपि बादराप्कायिकाः पर्याप्ता असङ्ख्येयगुणाः, अतिप्रभूततरसङ्ख्यप्रतराङ्गुलासङ्ख्येयभागखण्डमानत्वात्, तेभ्यो बादरवायुकायिकाः पर्याप्ता असङ्ख्येयगुणाः, घनीकृतस्य लोकस्यासङ्ख्ये-

येषु सङ्ख्याततमभागवर्त्तिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणत्वात्तेषां, तेभ्यो बादरवनस्पतिकायिकाः पर्याप्ता अनन्तगुणाः, प्रतिबादरैकैकनिगोदमनन्तानां जीवानां भावात्, तेभ्यः सामान्यतो बादरपर्याप्तका विशेषाधिकाः, बादरतेजःकायिकादीनामपि पर्याप्तानां तत्र प्रक्षेपात्। गतं तृतीयमल्पबहुत्वम्, इदानीमेतेषामेव पर्याप्तापर्याप्तगतान्यल्पबहुत्वान्याह—'एएसि णं भंते! बायराणं पज्जत्तापज्जत्ताणं' इत्यादि, इह बादरैकैकपर्याप्तनिश्रया असङ्ख्येया बादरा अपर्याप्ता उत्पद्यन्ते, 'पज्जत्तगनिस्साए अपज्जत्तगा वक्कमंति, जत्थ एगो तत्थ नियमा असंखेज्जा' इति वचनात्, ततः सर्वत्र पर्याप्तेभ्योऽपर्याप्ता असङ्ख्येयगुणा वक्तव्याः, त्रसकायिकसूत्रं प्रागुक्तयुक्त्या भावनीयं। गतं चतुर्थमल्पबहुत्वम्, सम्प्रत्येतेषामेव समुदितानां पर्याप्तापर्याप्तानां पञ्चममल्पबहुत्वमाह—'एएसि णं भंते! बायराणं बायरपुढवीकाइयाणं' इत्यादि, सर्वस्तोकाः बादरतेजःकायिकाः पर्याप्तकाः तेभ्यो बादरत्रसकायिकाः पर्याप्ता असङ्ख्येयगुणाः तेभ्यो बादरत्रसकायिका अपर्याप्ता असङ्ख्येयगुणाः तेभ्यो बादरप्रत्येकवनस्पतिकायिकाः पर्याप्ता असङ्ख्येयगुणाः तेभ्यो बादरनिगोदाः पर्याप्तका असङ्ख्येयगुणाः तेभ्यो बादरपृथिवीकायिकाः पर्याप्तका असङ्ख्येयगुणाः तेभ्यो बादराप्कायिकाः पर्याप्तका असङ्ख्येयगुणाः तेभ्यो बादरवायुकायिकाः पर्याप्ता असङ्ख्येयगुणाः, एतेषु पदेषु युक्तिः प्रागुक्ताऽनुसरणीया, तेभ्यो बादरतेजःकायिका अपर्याप्तका असङ्ख्येयगुणाः, यतो बादरवायुकायिकाः पर्याप्ताः असङ्ख्येयेषु प्रतरेषु यावन्त आकाशप्रदेशास्तावत्प्रमाणाः, बादरतेजःकायिकाश्चापर्याप्ता असङ्ख्येयलोकाकाशप्रदेशप्रमाणाः, ततो भवन्त्यस-

ङ्ख्येयगुणाः, ततः प्रत्येकबादरवनस्पतिकायिका अपर्याप्तका असङ्ख्येयगुणाः ततो बादरनिगोदा अपर्याप्तका असङ्ख्येयगुणाः ततो बादरपृथिवीकायिका अपर्याप्तका असङ्ख्येयगुणाः ततो बादराप्कायिका अपर्याप्तका असङ्ख्येयगुणाः बादरवायुकायिका अपर्याप्ता यथोत्तरमसङ्ख्येयगुणाः वक्तव्याः, यद्यपि चैते प्रत्येकमसङ्ख्येयलोकाकाशप्रदेशप्रमाणास्तथाप्यसङ्ख्यातस्यासङ्ख्यातभेदभिन्नत्वात् इत्थं यथोत्तरमसङ्ख्येयगुणत्वं न विरुध्यते, तेभ्यो बादरवायुकायिकापर्याप्तेभ्यो बादरवनस्पतिकायिका जीवाः पर्याप्ता अनन्तगुणाः, प्रतिबादरैकैकनिगोदमनन्तानां जीवानां भावात्, तेभ्यः सामान्यतो बादराः पर्याप्तका विशेषाधिकाः, बादरतेजःकायिकादीनां पर्याप्तानां तत्र प्रक्षेपात्, तेभ्यो बादरवनस्पतिकायिका अपर्याप्तका असङ्ख्येयगुणाः, एकैकपर्याप्तबादरवनस्पतिकायिकनिगोदनिश्रयाऽसङ्ख्येयानामपर्याप्तबादरवनस्पतिकायिकनिगोदानामुत्पादात्, तेभ्यः सामान्यतो बादरा अपर्याप्ता विशेषाधिकाः, बादरतेजःकायिकादीनामप्यपर्याप्तानां तत्र प्रक्षेपात्, तेभ्यः पर्याप्तापर्याप्तविशेषणरहिताः सामान्यतो बादरा विशेषाधिकाः, बादरपर्याप्ततेजःकायिकादीनामपि तत्र प्रक्षेपात् ॥ गतानि बादराश्रितान्यपि पञ्च सूत्राणि, सम्प्रति सूक्ष्मबादरसमुदायगतां पञ्चसूत्रीमभिधित्सुः प्रथमत औघिकं सूक्ष्मबादरसूत्रमाह—

एएसि णं भंते ! सुहुमाणं सुहुमपुढवीकाइयाणं सुहुमआउकाइयाणं सुहुमतेउकाइयाणं सुहुमवाउकाइयाणं सुहुमवणस्सइकाइयाणं सुहुमनिगोयाणं बायराणं बायरपुढवीकाइयाणं बायरआउकाइयाणं बायरतेउकाइयाणं बायरवाउकाइयाणं बाय-

रवणस्सइकाईयाणं पत्तेयसरीरबायरवणस्सइकाइयाणं बायरनिगोयाणं तसकाइयाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरतसकाइया बायरतेउकाइया असंखेज्जगुणा पत्तेयसरीरबायरवणस्सइकाइया असंखेज्जगुणा बायरनिगोया असंखेज्जगुणा बायरपुढवीकाइया असंखेज्जगुणा बायरआउकाइया असंखेज्जगुणा बायरवाउकाइया असंखेज्जगुणा सुहुमतेउकाइया असंखेज्जगुणा सुहुमपुढवीकाइया विसेसाहिया सुहुमआउकाइया विसेसाहिया सुहुमवाउकाइया विसेसाहिया सुहुमनिगोया असंखेज्जगुणा बायरवणस्सइकाइया अणंतगुणा बायरा विसेसाहिया सुहुमवणस्सइकाइया अणंतगुणा सुहुमा विसेसाहिया ॥ एएसि णं भंते ! सुहुमअपज्जत्तयाणं सुहुमपुढवीकाइयाणं अपज्जत्तयाणं सुहुमआउकाइयाणं अपज्जत्तयाणं सुहुमतेउकाइयाणं अपज्जत्तयाणं सुहुमवाउकाइयाणं अपज्जत्तयाणं सुहुमवणस्सइकाइयाणं अपज्जत्तयाणं सुहुमनिगोयाणं अपज्जत्तयाणं बायरअपज्जत्तयाणं बायरपुढवीकाइयाणं अपज्जत्तयाणं बायरआउकाइयाणं अपज्जत्तयाणं बायरतेउकाइयाणं अपज्जत्तयाणं बायरवाउकाइयाणं अपज्जत्तयाणं बायरवणस्सइकाइयाणं अपज्जत्तयाणं पत्तेयसरीरबायरवणस्सइकाइयाणं अपज्जत्तयाणं बायरनिगोयाणं अपज्जत्तयाणं बायरतसकाइयाणं अपज्जत्तयाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरतसकाइया अपज्जत्तया बायरतेउकाइया अपज्जत्तया असंखेज्जगुणा पत्तेयसरीरबायरवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा बायरनिगोया अपज्जत्तया असंखेज्जगुणा बायरपुढवीकाइया अपज्जत्तया असंखेज्जगुणा बादरआउकाइया अपज्जत्तया असंखेज्जगुणा बायरवाउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमतेउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमपुढवीकाइया अपज्ज-

त्तया विसेसाहिया सुहुमआउकाइया अपज्जत्तया विसेसाहिया सुहुमवाउकाइया अपज्जत्तया विसेसाहिया सुहुमनिगोया अपज्जत्तया असंखेज्जगुणा वायरवणस्सइकाइया अपज्जत्तया अणंतगुणा वायरा अपज्जत्तया विसेसाहिया सुहुमवणस्सइकाइया अपत्तज्जया असंखेज्जगुणा सुहुमा अपज्जत्तया विसेसाहिया ॥ एएसि णं भंते ! सुहुमपज्जत्तयाणं सुहुमपुढविकाइया पज्जत्तयाणं सुहुमआउकाइया पज्जत्तयाणं सुहुमतेउकाइया पज्जत्तयाणं सुहुमवाउकाइया पज्जत्तयाणं सुहुमवणस्सइकाइया पज्जत्तयाणं सुहुमनिगोया पज्जत्तयाणं वायरपज्जत्तयाणं वायरपुढवीकाइया पज्जत्तयाणं वायरआउकाइया पज्जत्तयाणं वायरतेउकाइया पज्जत्तयाणं वायरवाउकाइया पज्जत्तयाणं वायरवणस्सइकाइया पज्जत्तयाणं पत्तेयसरीरवायरवणस्सइकाइया पज्जत्तयाणं वायरनिगोया पज्जत्तयाणं वायरतसकाइयपज्जत्तयाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा वायरतेउकाइया पज्जत्तया वायरतसकाइया पज्जत्तया असंखेज्जगुणा पत्तेयसरीरवायरवणस्सइकाइया पज्जत्तया असंखेज्जगुणा वायरनिगोया पज्जत्तया असंखेज्जगुणा वायरपुढविकाइया पज्जत्तया असंखेज्जगुणा वायरआउकाइया पज्जत्तया असंखेज्जगुणा वायरवाउकाइया पज्जत्तया असंखेज्जगुणा सुहुमतेउकाइया पज्जत्तया असंखेज्जगुणा सुहुमपुढवीकाइया पज्जत्तया विसेसाहिया सुहुमआउकाइया पज्जत्तया विसेसाहिया सुहुमवाउकाइया पज्जत्तया विसेसाहिया सुहुमनिगोया पज्जत्तया असंखेज्जगुणा वायरवणस्सइकाइया पज्जत्तया अणंतगुणा वायरपज्जत्तया विसेसाहिया सुहुमवणस्सइकाइया पज्जत्तया असंखेज्जगुणा सुहुमपज्जत्तया विसेसाहिया ॥ एएसि णं भंते ! सुहुमाणं वायराण य पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा वायरा पज्जत्तया वायरअपज्जत्तया असंखेज्जगुणा

सुहुमअपज्जत्तया असंखेज्जगुणा सुहुमपज्जत्तया संखेज्जगुणा ॥ एएसि णं भंते ! सुहुमपुढविकाइयाणं बायरपुढविकाइयाण य पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरपुढविकाइया पज्जत्तया बायरपुढविकाइया अपज्जत्तया असंखेज्जगुणा सुहुमपुढवीकाइया अप्प० असं० सुहुमपुढविकाइया पज्जत्तया संखेज्जगुणा ॥ एएसि णं भंते ! सुहुमआउकाइयाणं बायरआउकाइयाण य पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरआउकाइया पज्जत्तया बायरआउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमआउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमआउकाइया पज्जत्तया संखेज्जगुणा ॥ एएसि णं भंते ! सुहुमतेउकाइयाणं बायरतेउकाइयाण य पज्जत्ताऽपज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरतेउकाइया पज्जत्तया बायरतेउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमतेउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमतेउकाइया पज्जत्तया संखेज्जगुणा ॥ एएसि णं भंते सुहुमवाउकाइयाणं बायरवाउकाइयाण य पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरवाउकाइया पज्जत्तया बायरवाउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमवाउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमवाउकाइया पज्जत्तया संखेज्जगुणा ॥ एएसि णं भंते ! सुहुमवणस्सइकाइयाणं बायरवणस्सइकाइयाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरवणस्सइकाइया पज्जत्तया बायरवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा सुहुमवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा सुहुमवणस्सइकाइया पज्जत्तया संखेज्जगुणा ॥ एएसि णं भंते ! सुहुमनिगोयाणं बायरनिगो-

याण य पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बायरनिगोयया पज्जत्तया बायरनिगोयया अपज्जत्तया असंखेज्जगुणा सुहुमनिगोयया अपज्जत्तया असंखेज्जगुणा सुहुमनिगोयया पज्जत्तया संखेज्जगुणा ॥ एएसि णं भंते ! सुहुमाणं सुहुमपुढवीकाइयाणं सुहुमआउकाइयाणं सुहुमतेउकाइयाणं सुहुमवाउकाइयाणं सुहुमवणस्सइकाइयाणं सुहुमनिगोयाणं बायराणं बायरपुढविकाइयाणं बायरआउकाइयाणं बायरतेउकाइयाणं बायरवाउकाइयाणं बायरवणस्सइकाइयाणं पत्तेयसरीरबायरवणस्सइकाइयाणं बायरनिगोयाणं बायरतसकाइयाण य पज्जत्तापज्जत्ताणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा बादरतेउकाइया पज्जत्तया बायरतसकाइया पज्जत्तया असंखेज्जगुणा बायरतसकाइया अपज्जत्तया असंखेज्जगुणा पत्तेयसरीरबायरवणस्सइकाइया पज्जत्तया असंखेज्जगुणा बायरनिगोया पज्जत्तया असंखेज्जगुणा बायरपुढवीकाइया पज्जत्तया असंखेज्जगुणा बायरआउकाइया पज्जत्तया असंखेज्जगुणा बायरवाउकाइया पज्जत्तया असंखेज्जगुणा बायरतेउकाइया अपज्जत्तया असंखेज्जगुणा पत्तेयसरीरबायरवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा बायरनिगोया अपज्जत्तया असंखेज्जगुणा बायरपुढवीकाइया अपज्जत्तया असंखेज्जगुणा बायरआउकाइया अपज्जत्तया असंखेज्जगुणा बायरवाउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमतेउकाइया अपज्जत्तया असंखेज्जगुणा सुहुमपुढवीकाइया अपज्जत्तया विसेसाहिया सुहुमआउकाइया अपज्जत्तया विसेसाहिया सुहुमवाउकाइया अपज्जत्तया विसेसाहिया सुहुमतेउकाइया पज्जत्तया असंखेज्जगुणा सुहुमपुढवीकाइया पज्जत्तया विसेसाहिया सुहुमआउकाइया पज्जत्तया विसेसाहिया सुहुमवाउकाइया पज्जत्तया विसेसाहिया सुहुमनिगोया अपज्जत्तया असंखेज्जगुणा सुहुमनिगोया पज्जत्तया संखेज्जगुणा

बायरवणस्सइकाइया पज्जत्तया अणंतगुणा बायरपज्जत्तया विसेसाहिया बायरवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा बायरअपज्जत्तया विसेसाहिया बायरा विसेसाहिया सुहुमवणस्सइकाइया अपज्जत्तया असंखेज्जगुणा सुहुमअपज्जत्तया विसेसाहिया सुहुमवणस्सइकाइया पज्जत्तया संखेज्जगुणा सुहुमपज्जत्तया विसेसाहिया सुहुमा विसेसाहिया । दारं । (सू० ६२)

'एएसि णं भंते !' इत्यादि, इह प्रथमं बादरगतमल्पबहुत्वं बादरपञ्चसूत्र्यां यत्प्रथमं सूत्रं तद्वद्भावनीयं यावद्बादरवायुकायपदं, तदनन्तरं यत्सूक्ष्मगतमल्पबहुत्वं तत्सूक्ष्मपञ्चसूत्र्यां यत्प्रथमं सूत्रं तद्वत्तावद् यावत्सूक्ष्मनिगोदचिन्ता, तदनन्तरं बादरवनस्पतिकायिका अनन्तगुणाः, प्रतिबादरनिगोदमनन्तानां जीवानां भावात्, तेभ्यो बादरा विशेषाधिकाः, बादरतेजःकायिकादीनामपि तत्र प्रक्षेपात्, तेभ्यः सूक्ष्मवनस्पतिकायिका असङ्ख्येयगुणाः, बादरनिगोदेभ्यः सूक्ष्मनिगोदानामसङ्ख्येयगुणत्वात्, तेभ्यः सामान्यतः सूक्ष्मा विशेषाधिकाः, सूक्ष्मतेजःकायिकादीनामपि तत्र प्रक्षेपात् । गतमेकमल्पबहुत्वम्, इदानीमेतेषामेवापर्याप्तानां द्वितीयमाह—'एएसि णं भंते !' इत्यादि, सर्वस्तोका बादरत्रसकायिका अपर्याप्ताः ततो बादरतेजःकायिकबादरप्रत्येकवनस्पतिकायिकबादरनिगोदबादरपृथिवीकायिकबादराप्कायिकबादरवायुकायिका अपर्याप्ताः क्रमेण यथोत्तरमसङ्ख्येयगुणाः, अत्र भावना बादरपञ्चसूत्र्यां यद्द्वितीयमपर्याप्तकसूत्रं तद्वत्कर्तव्या, ततो बादरवायुकायिकेभ्योऽपर्याप्तेभ्योऽसङ्ख्येयगुणाः सूक्ष्मतेजःकायिका अपर्याप्ताः, अतिप्रभूतासङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, तेभ्यः सूक्ष्मपृथिवीकायिकसूक्ष्माप्कायिकसूक्ष्मवायुकायिकसूक्ष्मनिगोदा

अपर्याप्ता यथोत्तरमसङ्ख्येयगुणाः, अत्र भावना सूक्ष्मपञ्चसूत्र्यां यद् द्वितीयं सूत्रं तद्वत्, तेभ्यः सूक्ष्मनिगोदापर्याप्तेभ्यो वादरवनस्पतिकायिका जीवा अपर्याप्ताः अनन्तगुणाः, प्रतिवादरैकैकनिगोदमनन्तानां जीवानां सद्भावात्, तेभ्यः सामान्यतो वादरापर्याप्तका विशेषाधिकाः, वादरत्रसकायिकापर्याप्तादीनामपि तत्र प्रक्षेपात्, तेभ्यः सूक्ष्मवनस्पतिकायिका अपर्याप्ता असङ्ख्येयगुणाः, वादरनिगोदापर्याप्तेभ्यः सूक्ष्मनिगोदापर्याप्तानामसङ्ख्येयगुणत्वात्, तेभ्यः सामान्यतः सूक्ष्माः पर्याप्ता विशेषाधिकाः, सूक्ष्मतेजःकायिकापर्याप्तादीनामपि तत्र प्रक्षेपात्। गतं द्वितीयमल्पबहुत्वम्, अधुना एतेषामेव पर्याप्तानां तृतीयमल्पबहुत्वमाह—'एएसि णं भंते! सुहुमपज्जत्तयाणं' इत्यादि, सर्वस्तोका वादरतेजःकायिकाः पर्याप्ताः तेभ्यो वादरत्रसकायिकवादरप्रत्येकवनस्पतिकायिकवादरनिगोदवादरपृथिवीकायिकवादराप्कायिकवादरवायुकायिकाः पर्याप्ता यथोत्तरमसङ्ख्येयगुणाः, अत्र भावना वादरपञ्चसूत्र्यां यत्तृतीयं पर्याप्तसूत्रं तद्वत् कर्त्तव्या, वादरपर्याप्तवायुकायिकेभ्यः सूक्ष्मतेजःकायिकाः पर्याप्ता असङ्ख्येयगुणाः, वादरवायुकायिका हि असङ्ख्येयप्रतरप्रदेशराशिप्रमाणाः सूक्ष्मतेजःकायिकास्तु पर्याप्ता असङ्ख्येयलोकाकाशप्रदेशराशिप्रमाणास्ततोऽसङ्ख्येयगुणाः, ततः सूक्ष्मपृथिवीकायिकसूक्ष्माप्कायिकसूक्ष्मवायुकायिकाः पर्याप्ताः क्रमेण यथोत्तरं विशेषाधिकाः ततः सूक्ष्मवायुकायिकेभ्यः पर्याप्तेभ्यः सूक्ष्मनिगोदाः पर्याप्तका असङ्ख्येयगुणाः, तेषामतिप्रभूततया प्रतिगोलकं भावात्, तेभ्यो वादरवनस्पतिकायिका जीवाः पर्याप्तका अनन्तगुणाः, प्रतिवादरैकैकनिगोदमनन्तानां भावात्, तेभ्यः

सामान्यतो बादराः पर्याप्तका विशेषाधिकाः, बादरतेजःकायिकादीनामपि पर्याप्तानां तत्र प्रक्षेपात्, तेभ्यः सूक्ष्मवनस्पतिकायिकाः पर्याप्ता असङ्ख्येयगुणाः, बादरनिगोदपर्याप्तेभ्यः सूक्ष्मनिगोदपर्याप्तानामसङ्ख्येयगुणत्वात्, तेभ्यः सामान्यतः सूक्ष्माः पर्याप्ता विशेषाधिकाः, सूक्ष्मतेजःकायिकादीनामपि पर्याप्तानां तत्र प्रक्षेपात्। गतं तृतीयमल्पबहुत्वम्, इदानीमेतेषामेव सूक्ष्मबादरादीनां प्रत्येकं पर्याप्तापर्याप्तानां पृथग् पृथगल्पबहुत्वमाह—'एएसि णं भंते! सुहुमाणं बायराणं पज्जत्तापज्जत्ताणं' इत्यादि, सर्वत्रेयं भावना—सर्वस्तोका बादराः पर्याप्ताः, परिमितक्षेत्रवर्त्तित्वात्, तेभ्यो बादरा अपर्याप्ताः असङ्ख्येयगुणाः, एकैकबादरपर्याप्तनिश्रया असङ्ख्येयानां बादरापर्याप्तानामुत्पादात्, तेभ्यः सूक्ष्मा अपर्याप्ताः असङ्ख्येयगुणाः, सर्वलोकापन्नतया तेषां क्षेत्रस्यासङ्ख्येयगुणत्वात्, तेभ्यः सूक्ष्मपर्याप्तकाः सङ्ख्येयगुणाः, चिरकालावस्थायितया तेषां सदैव सङ्ख्येयगुणतयाऽवाप्यमानत्वात्। गतं चतुर्थमल्पबहुत्वम्, इदानीमेतेषामेव सूक्ष्मसूक्ष्मपृथिवीकायिकादीनां बादरबादरपृथिवीकायिकादीना च प्रत्येकं पर्याप्तापर्याप्तानां च समुदायेन पञ्चममल्पबहुत्वमाह—सर्वस्तोका बादरतेजःकायिकाः पर्याप्ताः, आवलिकासमयवर्गे कतिपयसमयन्यूनैरावलिकासमयैर्गुणिते यावान्समयराशिस्तावत्प्रमाणत्वात् तेषां, तेभ्यो बादरत्रसकायिकाः पर्याप्ता असङ्ख्येयगुणाः, प्रतरे यावत्यङ्गुलसङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणत्वात् तेषां, तेभ्यो बादरत्रसकायिका अपर्याप्ता असङ्ख्येयगुणाः, प्रतरे यावत्यङ्गुलासङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणत्वात् तेषां, तेभ्यः प्रत्येकबादरवनस्पतिकायिकबादरनिगोदबा-

दरपृथिवीकायिकबादराप्कायिकबादरवायुकायिकाः पर्याप्ता यथोत्तरमसङ्ख्येयगुणाः, यद्यप्येते प्रत्येकं प्रतरे यावत्यङ्गुलासङ्ख्येयभागमात्राणि खण्डानि तावत्प्रमाणास्तथाप्यङ्गुलासङ्ख्येयभागस्यासङ्ख्येयभेदभिन्नत्वात् इत्थं यथोत्तरमसङ्ख्येयगुणत्वमभिधीयमानं न विरुध्यते, तेभ्यो बादरतेजःकायिका अपर्याप्ता असङ्ख्येयगुणाः, असङ्ख्येयलोकाकाशप्रदेशप्रमाणत्वात्, ततः प्रत्येकशरीरबादरवनस्पतिकायिकबादरनिगोदबादरपृथिवीकायिकबादराप्कायिकबादरवायुकायिका अपर्याप्ता यथोत्तरमसङ्ख्येयगुणाः, ततो बादरवायुकायिकेभ्योऽपर्याप्तेभ्यः सूक्ष्मतेजःकायिका अपर्याप्ता असङ्ख्येयगुणाः ततः सूक्ष्मपृथिवीकायिकसूक्ष्माप्कायिकसूक्ष्मवायुकायिका अपर्याप्ता यथोत्तरं विशेषाधिकाः ततः सूक्ष्मपर्याप्तास्तेजःकायिकाः सङ्ख्यातगुणाः, सूक्ष्मेष्वपर्याप्तेभ्यः पर्याप्तानां ओघत एव सङ्ख्येयगुणत्वात्, ततः सूक्ष्मपृथिवीकायिकसूक्ष्माप्कायिकसूक्ष्मवायुकायिकाः पर्याप्ताः यथोत्तरं विशेषाधिकाः तेभ्यः सूक्ष्मनिगोदा अपर्याप्तका असङ्ख्येयगुणाः, तेषामतिप्राभूत्येन सर्वलोकेषु भावात्, तेभ्यः सूक्ष्मनिगोदाः पर्याप्तकाः सङ्ख्येयगुणाः, सूक्ष्मेष्वपर्याप्तेभ्यः पर्याप्तानामोघत एव सदा सङ्ख्येयगुणत्वात्, एते च बादरापर्याप्ततेजःकायिकादयः पर्याप्तसूक्ष्मनिगोदपर्यवसानाः षोडश पदार्था यद्यप्यन्यत्राविशेषेणासङ्ख्येयलोकाकाशप्रदेशप्रमाणतया संगीयन्ते तथाप्यसङ्ख्येयत्वस्यासंख्येयभेदभिन्नत्वाद् इत्थमसङ्ख्येयगुणत्वं विशेषाधिकत्वं सङ्ख्येयगुणत्वं च प्रतिपाद्यमानं न विरोधभागिति, तेभ्यः पर्याप्तसूक्ष्मनिगोदेभ्यो बादरवनस्पतिकायिकाः पर्याप्ता अनन्तगुणाः, प्रतिबादरैकैकनिगोदमनन्तानां जीवानां भावात्,

तेभ्यः सामान्यतो बादराः पर्याप्ता विशेषाधिकाः, बादरपर्याप्ततेजःकायिकादीनामपि तत्र प्रक्षेपात्, तेभ्यो बादरवनस्पतिकायिका अपर्याप्तका असङ्ख्येयगुणाः, एकैकपर्याप्तबादरनिगोदनिश्रया असङ्ख्येयानां बादरनिगोदापर्याप्तानामुत्पादात्, तेभ्यः सामान्यतो बादरा अपर्याप्ता विशेषाधिकाः, बादरतेजःकायिकादीनामप्यपर्याप्तानां तत्र प्रक्षेपात्, तेभ्यः सामान्यतो बादरा विशेषाधिकाः, पर्याप्तानामपि तत्र प्रक्षेपात्, तेभ्यः सूक्ष्मवनस्पतिकायिका अपर्याप्ता असङ्ख्येयगुणाः, बादरनिगोदेभ्यः सूक्ष्मनिगोदानामपर्याप्तानामप्यसङ्ख्येयगुणत्वात्, ततः सामान्यतः सूक्ष्मापर्याप्तका विशेषाधिकाः, सूक्ष्मपृथिवीकायिकादीनामप्यपर्याप्तानां तत्र प्रक्षेपात्, तेभ्यः सूक्ष्मवनस्पतिकायिकाः पर्याप्ताः सङ्ख्येयगुणाः, सूक्ष्मवनस्पतिकायिकापर्याप्तेभ्यो हि सूक्ष्मवनस्पतिकायिकपर्याप्ताः सङ्ख्येयगुणाः, सूक्ष्मेष्वोघतोऽपर्याप्तेभ्यः पर्याप्तानां सङ्ख्येयगुणत्वात् ततः सूक्ष्मापर्याप्तेभ्योऽपि सङ्ख्येयगुणाः, विशेषाधिकत्वस्य सङ्ख्येयगुणत्वबाधनायोगात्, तेभ्यः सामान्यतः सूक्ष्माः पर्याप्ता विशेषाधिकाः, पर्याप्तसूक्ष्मपृथिवीकायिकादीनामपि तत्र प्रक्षेपात्, ततः सामान्यतः सूक्ष्माः पर्याप्तापर्याप्तविशेषणरहिता विशेषाधिकाः, अपर्याप्तानामपि तत्र प्रक्षेपात्। गतं सूक्ष्मबादरसमुदायगतं पञ्चममल्पबहुत्वं, तद्गतौ समर्थितानि पञ्चदशापि सूत्राणीति ॥ गतं कायद्वारम्, इदानीं योगद्वारमाह—

एएसि णं भन्ते ! जीवाणं सयोगीणं मणजोगीणं वइजोगीणं कायजोगीणं अयोगीण य कयरे कयरेहिंतो अप्पा वा बहुया

वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा जीवा मणयोगी वययोगी असंखेज्जगुणा अयोगी अणंतगुणा काययोगी अणंतगुणा सयोगी विसेसाहिया । दारं ॥ (सू.६३) एएसिणं भन्ते ! जीवाणं सवेयगाणं इत्थीवेयगाणं पुरिसवेयगाणं नपुंसकवेयगाणं अवेयगाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा जीवा पुरिसवेयगा इत्थीवेयगा संखेज्जगुणा अवेयगा अणंतगुणा नपुंसकवेयगा अणंतगुणा सवेयगा विसेसाहिया । दारं ॥ (सू.६४)

सर्वस्तोका मनोयोगिनः, सञ्ज्ञिनः पर्याप्ता एव हि मनोयोगिनः ते च स्तोका इति, तेभ्यो वाग्योगिनोऽसङ्ख्येयगुणाः, द्वीन्द्रियादीनां वाग्योगिनां सञ्ज्ञिभ्योऽसङ्ख्यातगुणत्वात्, तेभ्योऽयोगिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यः काययोगिनोऽनन्तगुणाः, वनस्पतीनामनन्तत्वात्, यद्यपि निगोदजीवानामनन्तानामेकं शरीरं तथापि तेनै[1]केन शरीरेण सर्वेऽप्याहारादिग्रहणं कुर्वन्तीति सर्वेषामपि काययोगित्वान्नानन्तगुणत्वव्याघातः, तेभ्यः सामान्यतः सयोगिनो विशेषाधिकाः, द्वीन्द्रियादीनामपि वाग्योगादीनां तत्र प्रक्षेपात् ॥ गतं योगद्वारम्, इदानीं वेदद्वारमाह-सर्वस्तोकाः पुरुषवेदाः, सञ्ज्ञिनामेव तिर्यग्मनुष्याणां देवानां च पुरुषवेदभावात्, तेभ्यः स्त्रीवेदाः सङ्ख्येयगुणाः, यत उक्तं जीवाभिगमे—"तिरिक्खजोणियपुरिसेहिंतो तिरिक्खजोणियइत्थीओ तिगुणीओ तिरूवाहियाओ य, तहा मणुस्सपुरिसेहिंतो मणुस्सइत्थीओ सत्तावीसगुणाओ सत्तावीसरूवुत्तराओ य, तथा देवपुरिसेहिंतो देवित्थीओ

१ ग्रहणयोगापेक्षया तेनैकेनेति, तैजसकार्मणयोगरूपकाययोगापेक्षया तेनैकेनेति ।

वत्तीसगुणाओ वत्तीसरूवुत्तराओ" इति, वृद्धाचार्यैरप्युक्तं—'तिगुणा तिरूवअहिया तिरियाणं इत्थिया मुणेयवा । सत्तावीसगुणा पुण मणुयाणं तदहिया चेव ॥ १ ॥ वत्तीसगुणा वत्तीसरूवअहिया य तहय देवाणं । देवीओ पन्नत्ता जिणेहिं जियरागदोसेहिं ॥ २ ॥ " अवेदका अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यो नपुंसकवेदा अनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणत्वात्, सामान्यतः सवेदकाः विशेषाधिकाः, स्त्रीवेदकपुरुषवेदकानामपि तत्र प्रक्षेपात् ॥ गतं वेदद्वारम्, इदानीं कषायद्वारमाह—

एएसि णं भंते ! सकसाईणं कोहकसाईणं माणकसाईणं मायाकसाईणं लोहकसाईणं अकसाईण य कयरे कयरेहिंतो अप्पा वा वहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा जीवा अकसाई माणकसाई अणंतगुणा कोहकसाई विसेसाहिया मायाकसाई विसेसाहिया लोहकसाई विसेसाहिया सकसाई विसेसाहिया । दारं ॥(सू.६५) एएसि णं भंते ! जीवाणं सलेसाणं किण्हलेसाणं नीललेस्साणं काउलेस्साणं तेउलेस्साणं पम्हलेस्साणं सुक्कलेस्साणं अलेस्साण य कयरे कयरेहिंतो अप्पा वा वहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा जीवा सुक्कलेस्सा पम्हलेस्सा संखेज्जगुणा तेउलेस्सा संखे-

---

१ तिरश्चां स्त्रियस्त्रिरूपाधिकास्त्रिगुणा ज्ञातव्याः । मनुजानां सप्तविंशतिगुणाः सप्तविंशत्यधिका एव पुनः ॥ १ ॥ देवानां द्वात्रिंशद्गुणा द्वात्रिंशद्रूपाधिकाश्च देव्यः प्रज्ञप्ता जितरागद्वेषैर्जिनैः ॥ २ ॥

ज्जगुणा अलेस्सा अणंतगुणा काउलेस्सा अणंतगुणा नीललेस्सा विसेसाहिया कण्हलेस्सा विसेसाहिया सलेस्सा विसेसाहिया ॥ दारं ॥ ( सू. ६६ )

सर्वस्तोका अकषायिणः, सिद्धानां कतिपयानां च मनुष्याणामकपायित्वात्, तेभ्यो मानकषायिणो—मानकपायपरिणामवन्तोऽनन्तगुणाः, पट्स्वपि जीवनिकायेषु मानकपायपरिणामस्यावाप्यमानत्वात्, तेभ्यः क्रोधकपायिणो विशेषाधिकाः तेभ्योऽपि मायाकपायिणो विशेपाधिकाः तेभ्योऽपि लोभकपायिणो विशेपाधिकाः, मानकपायपरिणामकालापेक्षया क्रोधादिकपायपरिणामकालस्य यथोत्तरं विशेपाधिकतया क्रोधादिकपायाणामपि यथोत्तरं विशेपाधिकत्वभावात्, लोभकषायिभ्यः सामान्यतः सकपायिणो विशेपाधिकाः, मानादिकपायिणामपि तत्र प्रक्षेपात्, सकपायिण इत्यत्रैवं व्युत्पत्तिः—कपायशब्देन कपायोदयः परिगृह्यते, तथा च लोके व्यवहारः—सकपायोऽयं कपायोदयवानित्यर्थः, सह कपायेण—कपायोदयेन ये वर्त्तन्ते ते सकपायोदयाः—विपाकावस्थां प्राप्ताः स्वोदयमुपदर्शयन्तः कपायकर्मपरमाणवस्तेपु सत्सु जीवस्यावश्यं कपायोदयसम्भवात्, सकपाया विद्यन्ते येपां ते सकपायिणः कपायोदयसहिता इति तात्पर्यार्थः ॥ गतं कपायद्वारम्, इदानीं लेश्याद्वारम्—सर्वस्तोकाः शुक्ललेश्याः, लान्तकादिष्वेवानुत्तरपर्यवसानेषु वैमानिकेषु देवेषु कतिपयेषु च गर्भव्युत्क्रान्तिकेषु कर्मभूमिकेषु सङ्ख्येयवर्षायुष्केषु मनुष्येषु तिर्यक्स्त्रीपुंसेषु च कतिपयेषु सङ्ख्येयवर्षायुष्केषु तस्याः संभवात्, तेभ्यः पद्मलेश्याकाः सङ्ख्येयगुणाः, सा हि पद्म-

लेश्या सनत्कुमारमाहेन्द्रब्रह्मलोककल्पवासिषु देवेषु तथा प्रभूतेषु गर्भव्युत्क्रान्तिकेषु कर्मभूमिजेषु सङ्ख्येयवर्षायुष्केषु मनुष्यस्त्रीपुंसेषु तथा गर्भव्युत्क्रान्तिकतिर्यग्योनिकस्त्रीपुंसेषु सङ्ख्येयवर्षायुष्केष्ववाप्यते, सनत्कुमारादिदेवादयश्च समुदिता लान्तकादिदेवादिभ्यः सङ्ख्येयगुणा इति भवन्ति शुक्ललेश्याकेभ्यः पद्मलेश्याकाः सङ्ख्येयगुणाः, तेभ्यस्तेजोलेश्याकाः सङ्ख्येयगुणाः, सर्वेषां सौधर्मेशानज्योतिष्कदेवानां कतिपयानां च भवनपतिव्यन्तरगर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रियमनुष्याणां बादरपर्याप्तैकेन्द्रियाणां च तेजोलेश्याभावात्, नन्वसङ्ख्येयगुणाः कस्मान्न भवन्ति ?, कथं भवन्तीति चेत्, उच्यते, इह ज्योतिष्काः भवनवासिभ्योऽप्यसङ्ख्येयगुणाः किं पुनः सनत्कुमारादिदेवेभ्यः, ते च ज्योतिष्कास्तेजोलेश्याकाः तथा सौधर्मेशानकल्पदेवाश्च, ततः प्राप्नुवन्त्यसङ्ख्येयगुणाः, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात्, लेश्यापदे हि गर्भव्युत्क्रान्तिकतिर्यग्योनिकानां संमूर्च्छिमपञ्चेन्द्रियतिर्यग्योनिकानां च कृष्णलेश्याद्यल्पबहुत्वे सूत्रं वक्ष्यति—'सव्वत्थोवा गब्भवक्कंतियतिरिक्खजोणिया सुक्कलेसा तिरिक्खजोणिणीओ संखेज्जगुणाओ, पम्हलेसा गब्भवक्कंतियतिरिक्खजोणिया संखेज्जगुणा तिरिक्खजोणिणीओ संखेज्जगुणाओ, तेउलेसागब्भवक्कंतियतिरिक्खजोणिया संखेज्जगुणा तेउलेसाओ तिरिक्खजोणिणीओ संखेज्जगुणाओ" इति, महादण्डके च तिर्यग्योनिकस्त्रीभ्यो व्यन्तरा ज्योतिष्काश्च सङ्ख्येयगुणा वक्ष्यन्ते, ततो यद्यपि भवनवासिभ्योऽप्यसङ्ख्येयगुणा ज्योतिष्काः तथापि पद्मलेश्याकेभ्यस्तेजोलेश्याकाः सङ्ख्येयगुणा एव, इदमत्र तात्पर्यं—यदि केवलान् देवानेव पद्मलेश्यानधिकृत्य देवा एव

तेजोलेश्याकाश्चिन्त्यन्ते ततो भवन्त्यसङ्ख्येयगुणाः यावता तिर्यक्सम्मिश्रतया पद्मलेश्याकेभ्यस्तिर्यक्संम्मिश्रा एव तेजोलेश्याकाश्चिन्त्यन्ते तिर्यञ्चश्च पद्मलेश्या अपि अतिबहवस्ततः सङ्ख्येयगुणा एव लभ्यन्ते नासङ्ख्येयगुणा इति, तेभ्योऽलेश्याका अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यः कापोतलेश्या अनन्तगुणाः, वनस्पतिकायिकानामपि कापोतलेश्यायाः संभवात्, वनस्पतिकायिकानां च सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेभ्योऽपि नीललेश्या विशेषाधिकाः, प्रभूततराणां नीललेश्यासंभवात्, तेभ्योऽपि कृष्णलेश्याका विशेषाधिकाः, प्रभूततमानां कृष्णलेश्याकत्वात्, तेभ्यः सामान्यतः सलेश्या विशेषाधिकाः, नीललेश्याकादीनामपि तत्र प्रक्षेपात्॥ गतं लेश्याद्वारम्, इदानीं सम्यक्त्वद्वारमाह—

एएसि णं भंते! जीवाणं सम्मदिट्ठीणं मिच्छादिट्ठीणं सम्मामिच्छादिट्ठीणं च कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा जीवा सम्मामिच्छदिट्ठी सम्मदिट्ठी अणंतगुणा मिच्छादिट्ठी अणंतगुणा। दारं।(सू.६७)

एएसि णं भंते! जीवाणं आभिणिबोहियणाणीणं सुयणाणीणं ओहिणाणीणं मणपज्जवणाणीणं केवलणाणीण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा जीवा मणपज्जवणाणी ओहिनाणी असंखेज्जगुणा आभिणिबोहियनाणी सुयनाणी दोवि तुल्ला विसेसाहिया केवलनाणी अणंतगुणा। एएसि णं भंते! जीवाणं मइअन्नाणीणं सुयअन्नाणीणं विभंगणाणीण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा!

सव्वत्थोवा जीवा विभंगनाणी मइअन्नाणी सुयअन्नाणी दोवि तुल्ला अणंतगुणा । एएसि णं भंते! जीवाणं आभिणिबोहियणाणीणं सुयनाणीणं ओहिनाणीणं मणपज्जवनाणीणं केवलनाणीणं मइअन्नाणीणं सुयअन्नाणीणं विभंगणाणीण य कयरे कयरेहिंतो अप्पा वा वहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा मणपज्जवनाणी ओहिनाणी असंखेज्जगुणा आभिणिवोहियनाणी सुयनाणी दोवि तुल्ला विसेसाहिया विभंगनाणी असंखेज्जगुणा केवलनाणी अनंतगुणा मइअन्नाणी सुयअंन्नाणी य दोवि तुल्ला अणंतगुणा । दारं ॥ ( सू० ६८ )

सर्वस्तोकाः सम्यग्मिथ्यादृष्टयः, सम्यग्मिथ्यादृष्टिपरिणामकालस्यान्तर्मुहूर्त्तप्रमाणतयाऽतिस्तोकत्वेन तेषां पृच्छासमये स्तोकानामेव लभ्यमानत्वात्, तेभ्यः सम्यग्दृष्टयोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽपि मिथ्यादृष्टयोऽनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेषां च मिथ्यादृष्टित्वादिति ॥ गतं सम्यक्त्वद्वारम्, अधुना ज्ञानद्वारमाह—सर्वस्तोका मनःपर्यवज्ञानिनः, संयतानामेवामर्षौषध्यादिऋद्धिप्राप्तानां मनःपर्यवज्ञानसंभवात्, तेभ्योऽसङ्ख्येयगुणा अवधिज्ञानिनः, नैरयिकतिर्यक्पञ्चेन्द्रियमनुष्यदेवानामप्यवधिज्ञानसंभवात्, तेभ्य आभिनिवोधिकज्ञानिनः श्रुतज्ञानिनश्च विशेषाधिकाः, सञ्ज्ञितिर्यक्पञ्चेन्द्रियमनुष्याणामेवावधिज्ञानविकलानामपि केषाञ्चिदाभिनिवोधिकश्रुतज्ञानभावात्, स्वस्थाने तु द्वयेऽपि परस्परं तुल्याः, "जत्थ मइनाणं तत्थ सुयनाणं जत्थ सुयनाणं तत्थ मइनाणं" इति वचनात्, तेभ्यः केवलज्ञानिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात् ॥ उक्तं ज्ञानिना-

मल्पबहुत्वम्, इदानीं तत्प्रतिपक्षभूतानामज्ञानिनामल्पबहुत्वमाह—सर्वस्तोका विभङ्गज्ञानिनः, कतिपयानामेव नैरयिकदेवतिर्यक्पञ्चेन्द्रियमनुष्याणां विभङ्गभावात्, तेभ्यो मत्यज्ञानिनः श्रुताज्ञानिनोऽनन्तगुणाः, वनस्पतीनामपि मत्यज्ञानश्रुताज्ञानभावात् तेषां चानन्तत्वात् स्वस्थाने तु परस्परं तुल्याः "जत्थ मइअन्नाणं तत्थ सुयअन्नाणं जत्थ सुयअन्नाणं तत्थ मइअन्नाणं" इति वचनात् ॥ सम्प्रत्युभयेषां ज्ञान्यज्ञानिनां समुदायेनाल्पबहुत्वमाह—सर्वस्तोका मनःपर्यवज्ञानिनः तेभ्योऽसङ्ख्येयगुणा अवधिज्ञानिनः तेभ्य आभिनिबोधिकज्ञानिनः श्रुतज्ञानिनश्च विशेषाधिकाः, स्वस्थाने तु द्वयेऽपि परस्परं तुल्याः, अत्र भावना प्रागेवोक्ता, तेभ्योऽसङ्ख्येयगुणा विभङ्गज्ञानिनः, यस्मात्सुरगतौ निरयगतौ च सम्यग्दृष्टिभ्यो मिथ्यादृष्टयोऽसङ्ख्येयगुणाः पठ्यन्ते, देवनैरयिकाश्च सम्यग्दृष्टयोऽवधिज्ञानिनो मिथ्यादृष्टयो विभङ्गज्ञानिन इत्यसङ्ख्येयगुणाः, तेभ्यः केवलज्ञानिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यो मत्यज्ञानिनः श्रुताज्ञानिनश्चानन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तत्वात्, तेषां च मत्यज्ञानिश्रुताज्ञानित्वात्, स्वस्थाने तु द्वयेऽपि परस्परं तुल्याः ॥ गतं ज्ञानद्वारम्, इदानीं दर्शनद्वारमाह—

एएसि णं भंते! जीवाणं चक्खुदंसणीणं अचक्खुदंसणीणं ओहिदंसणीणं केवलदंसणीण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा जीवा ओहिदंसणी चक्खुदंसणी असंखेज्जगुणा केवलदंसणी अणंतगुणा अचक्खुदंसणी अणंतगुणा। दारं। (सू० ६९) एएसि णं भंते! जीवाणं संयताणं असंयताणं संजयासंजयाणं नोसं-

जयनोअसंजयनोसंजयासंजयाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा जीवा संजया संजया संयता असंखेज्जगुणा नोसंयतानोअसंजयानोसंयतासंयता अणंतगुणा असंजया अणंतगुणा ॥ दारं। (सू० ७०)। एएसि णं भंते! जीवाणं सागारोवउत्ताणं अणागारोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसा हिया वा?, गोयमा! सव्वत्थोवा जीवा अणागारोवउत्ता सागारोवउत्ता संखेज्जगुणा। दारं। (सू० ७१)। एएसि णं भंते! जीवाणं आहारगाणं अणाहारगाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा जीवा अणाहारगा आहारगा असंखेज्जगुणा दारं ॥ (सू० ७२)।

सर्वस्तोका अवधिदर्शनिनः, देवनैरयिकाणां कतिपयानां च सञ्ज्ञिपञ्चेन्द्रियतिर्यग्मनुष्याणामवधिदर्शनभावात्, तेभ्यश्चक्षुर्दर्शनिनोऽसङ्ख्येयगुणाः, सर्वेषां देवनैरयिकगर्भजमनुष्याणां सञ्ज्ञितिर्यक्पञ्चेन्द्रियाणां असञ्ज्ञितिर्यक्पञ्चेन्द्रियाणां चतुरिन्द्रियाणां च चक्षुर्दर्शनभावात्, तेभ्यः केवलदर्शनिनोऽनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्योऽचक्षुर्दर्शनिनोऽनन्तगुणाः, वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तत्वात् ॥ गतं दर्शनद्वारम्, अधुना संयतद्वारमाह—सर्वस्तोकाः संयताः, उत्कृष्टपदेऽपि तेषां कोटीसहस्रपृथक्त्वप्रमाणतया लभ्यमानत्वात्, "कोडिसहस्सपुहुत्तं मणुयलोए संजयाणं" इति वचनात्, तेभ्यः संयतासंयताः—देशविरता असङ्ख्येयगुणाः, तिर्यक्पञ्चेन्द्रियाणामसङ्ख्यातानां देशविरतिसद्भावात्, तेभ्यो नोसंयतनोऽसंयतनोसंयतासंयता अनन्तगुणाः, प्रतिषेधत्रयवृत्ता हि सिद्धास्ते चानन्ता

इति, तेभ्योऽसंयता अनन्तगुणाः, वनस्पतीनां सिद्धेभ्योऽप्यनन्तत्वात् ॥ गतं संयतद्वारम्, सम्प्रत्युपयोगद्वारमाह—इहानाकारोपयोगकालः सर्वस्तोकः साकारोपयोगकालस्तु सङ्ख्येयगुणः ततो जीवा अप्यनाकारोपयोगोपयुक्ताः सर्वस्तोकाः, पृच्छासमये तेषां स्तोकानामेवावाप्यमानत्वात्, तेभ्यः साकारोपयोगोपयुक्ताः सङ्ख्येयगुणाः, साकारोपयोगकालस्य दीर्घतया तेषां पृच्छासमये बहूनां प्राप्यमाणत्वात् ॥ गतमुपयोगद्वारम्, इदानीमाहारद्वारमाह—सर्वस्तोका जीवा अनाहारकाः, विग्रहगत्यापन्नादीनामेवानाहारकत्वात्, उक्तं च—"विग्गहगइमावन्ना केवलिणो समुहया अयोगी य । सिद्धा य अणाहारा सेसा आहारगा जीवा ॥ १ ॥" तेभ्यः आहारका असङ्ख्येयगुणाः, ननु वनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तत्वात् तेषां चाहारकतयापि लभ्यमानत्वात् कथमनन्तगुणा न भवन्ति ?, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात्, इह सूक्ष्मनिगोदाः सर्वसङ्ख्ययाप्यसङ्ख्येयाः, तत्राप्यन्तर्मुहूर्त्तसमयराशितुल्याः सूक्ष्मनिगोदाः सर्वकालं विग्रहे वर्त्तमाना लभ्यन्ते, ततोऽनाहारका अप्यतिबहवः सकलजीवराश्यसङ्ख्येयभागतुल्या इति तेभ्यः आहारका असङ्ख्येयगुणा एव नानन्तगुणाः ॥ गतमाहारद्वारम्, इदानीं भाषकद्वारमाह—

एएसि णं भंते ! जीवाणं भासगाणं अभासगाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा भासगा अभासगा अणंतगुणा । दारं । (सू० ७३) । एएसि णं भंते ! जीवाणं परीत्ताणं अपरीत्ताण य

१ विग्रहगतिमापन्नाः केवलिनः समुद्धताश्चायोगिनश्च । सिद्धाश्चानाहाराः शेषा आहारका जीवाः ॥ १ ॥

रीत्तनोअपरीत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा परीत्ता नोपरीत्तानोअपरीत्ता अणंतगुणा, अपरीत्ता अणंतगुणा । दारं ( सू० ७४ ) । एएसि णं भंते ! जीवाणं पज्जत्ताणं अपज्जत्ताणं नोपज्जत्तानोअपज्जत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा नोपज्जत्तानोअपज्जत्तगा अपज्जत्तगा अणंतगुणा पज्जत्तगा संखिज्जगुणा । दारं । ( सू० ७५ ) । एएसि णं भंते ! जीवाणं सुहुमाणं बायराणं नोसुहुमनोबायराण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा नोसुहुमानोबायरा बायरा अणंतगुणा सुहुमा असंखेज्जगुणा । दारं । ( सू० ७६ ) । एएसि णं भंते ! जीवाणं सन्नीणं असन्नीणं नोसन्नीनोअसन्नीणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा सन्नी नोसन्नीनोअसन्नी अणंतगुणा असन्नी अणंतगुणा । दारं । ( सू० ७७ ) । एएसि णं भंते ! जीवाणं भवसिद्धियाणं अभवसिद्धियाणं नोभवसिद्धियानोअभवसिद्धियाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा अभवसिद्धिया णोभवसिद्धियाणोअभवसिद्धिया अणंतगुणा भवसिद्धिया अणंतगुणा । दारं । ( सू० ७८ ) ।

सर्वस्तोका भाषकाः—भाषालब्धिसम्पन्नाः, द्वीन्द्रियादीनामेव भाषकत्वात्, अभाषका—भाषालब्धिहीना अनन्तगुणाः, वनस्पतिकायिकानामनन्तत्वात् ॥ गतं भाषकद्वारं, सम्प्रति परीत्तद्वारमाह—इह परीत्ता द्विविधाः—

भवपरीत्ताः कायपरीत्ताश्च, तत्र भवपरीत्ता येषां किञ्चिदूनोऽपार्धपुद्गलपरावर्त्तमात्रसंसारः, कायपरीत्ताः—प्रत्येकशरीरिणः, तत्रोभयेऽपि परीत्ताः सर्वस्तोकाः, शुक्लपाक्षिकाणां प्रत्येकशरीरिणां चाशेषजीवापेक्षयाऽतिस्तोकत्वात्, ततो नोपरीत्तानोअपरीत्ता अनन्तगुणाः, उभयप्रतिषेधवृत्ता हि सिद्धाः ते चानन्ता इति, तेभ्योऽपरीत्ता अनन्तगुणाः, कृष्णपाक्षिकाणां साधारणवनस्पतीनां वा सिद्धेभ्योऽप्यनन्तगुणत्वात् ॥ गतं परीत्तद्वारं, सम्प्रति पर्याप्तद्वारमाह—सर्वस्तोका नोपर्याप्तकनोअपर्याप्तकाः, उभयप्रतिषेधवर्त्तिनो हि सिद्धाः ते चापर्याप्तकादिभ्यः सर्वस्तोका इति, तेभ्योऽपर्याप्तका अनन्तगुणाः, साधारणवनस्पतिकायिकानां सिद्धेभ्योऽप्यनन्तगुणाना सर्वकालमपर्याप्तत्वेन लभ्यमानत्वात्, तेभ्यः पर्याप्ताः सङ्ख्येयगुणाः, इह सर्ववहवो जीवाः सूक्ष्माः, सूक्ष्माश्च सर्वकालमपर्याप्तेभ्यः पर्याप्ताः सङ्ख्येयगुणा इति सङ्ख्येयगुणा उक्ताः ॥ गतं पर्याप्तद्वारं, सम्प्रति सूक्ष्मद्वारमाह—सर्वस्तोका जीवा नोसूक्ष्मनोवादराः सिद्धा इत्यर्थः, तेषां सूक्ष्मजीवराशेर्वादरजीवराशेश्चानन्तभागकल्पत्वात्, तेभ्यो वादरा अनन्तगुणाः, वादरनिगोदजीवानां सिद्धेभ्योऽप्यनन्तगुणत्वात्, तेभ्यः सूक्ष्मा असङ्ख्येयगुणाः, वादरनिगोदेभ्यः सूक्ष्मनिगोदानामसङ्ख्येयगुणत्वात् ॥ गतं सूक्ष्मद्वारम्, इदानीं सञ्ज्ञिद्वारम्—सर्वस्तोकाः सञ्ज्ञिनः, समनस्कानामेव सञ्ज्ञित्वात्, तेभ्यो नोसञ्ज्ञि[नो]नोअसञ्ज्ञिनः अनन्तगुणाः, उभयप्रतिषेधवृत्ता हि सिद्धाः ते च सञ्ज्ञिभ्योऽनन्तगुणा एवेति, तेभ्योऽसञ्ज्ञिनोऽनन्तगुणाः, वनस्पतीनां सिद्धेभ्योऽप्यनन्तगुणत्वात् ॥ गतं सञ्ज्ञिद्वारम्, इदानीं भवसिद्धिकद्वा-

रमाह—सर्वस्तोका अभवसिद्धिकाः—अभव्याः, जघन्ययुक्तानन्तकपरिमाणत्वात्, उक्तं चानुयोगद्वारेषु—"उक्कोसए परित्ताणंतए रूवे पक्खित्ते जहन्नयं जुत्ताणंतयं होइ, अभवसिद्धियावि तत्तिया चेवे"ति, तेभ्यो नोभवसिद्धिकनोअभवसिद्धिका अनन्तगुणाः, यत उभयप्रतिषेधवृत्तयः सिद्धाः ते चाजघन्योत्कृष्टयुक्तानन्तकपरिमाणा इत्यनन्तगुणाः, तेभ्योऽपि भवसिद्धिका अनन्तगुणाः यतो भव्यनिगोदस्यैकस्यानन्तभागकल्पाः सिद्धाः भव्यजीवराशिनिगोदाश्वासङ्ख्येया लोके इति ॥ गतं भवसिद्धिकद्वारं, साम्प्रतमस्तिकायद्वारमाह—

एएसि णं भंते ! धम्मत्थिकायअधम्मत्थिकायआगासत्थिकायजीवत्थिकायपोग्गलत्थिकायअद्धासमयाणं दव्वट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए एए णं तिन्निऽवि तुल्ला दव्वट्ठयाए सव्वत्थोवा, जीवत्थिकाए दव्वट्ठयाए अणंतगुणे, पोग्गलत्थिकाए दव्वट्ठयाए अणंतगुणे, अद्धासमए दव्वट्ठयाए अणंतगुणे । एएसि णं भंते ! धम्मत्थिकायअधम्मत्थिकायआगासत्थिकायजीवत्थिकायपोग्गलत्थिकायअद्धासमयाणं पएसट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! धम्मत्थिकाए अधम्मत्थिकाए एए णं दोवि तुल्ला पएसट्ठयाए सव्वत्थोवा, जीवत्थिकाए पएसट्ठयाए अणंतगुणे, पोग्गलत्थिकाए पएसट्ठयाए अणंतगुणे, अद्धासमए पएसट्ठयाए अणंतगुणे, आगासत्थिकाए पएसट्ठयाए अणंतगुणे । एएयस्स णं भंते ! धम्मत्थिकायस्स दव्वट्ठपएसट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवे एगे

धम्मत्थिकाए दवट्ठयाए से चेव पएसट्ठयाए असंखेज्जगुणे। एयस्स णं भंते! अधम्मत्थिकायस्स दवट्ठपएसट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सवत्थोवे एगे अधम्मत्थिकाए दवट्ठयाए से चेव पएसट्ठयाए असंखेज्जगुणे। एयस्स णं भंते! आगासत्थिकायस्स दवट्ठपएसट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सवत्थोवे एगे आगासत्थिकाए दवट्ठयाए से चेव पएसट्ठयाए अणंतगुणे। एयस्स णं भंते! जीवत्थिकायस्स दवट्ठपएसट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सवत्थोवे जीवत्थिकाए दवट्ठयाए से चेव पएसट्ठयाए असंखेज्जगुणे, एयस्स णं भंते? पोग्गलत्थिकायस्स दवट्ठपएसट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सवत्थोवे पोग्गलत्थिकाए दवट्ठयाए से चेव पएसट्ठयाए असंखेज्जगुणे। अद्धासमये न पुच्छिज्जइ पएसाभावा। एएसि णं भंते! धम्मत्थिकायअधम्मत्थिकायआगासत्थिकायजीवत्थिकायपोग्गलत्थिकायअद्धासमयाणं दवट्ठपएसट्ठयाए य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए एए तिन्निवि तुल्ला दवट्ठयाए सवत्थोवा, धम्मत्थिकाए अधम्मत्थिकाए य एएसि णं दोन्निवि तुल्ला पएसट्ठयाए असंखेज्जगुणा, जीवत्थिकाए दवट्ठयाए अणंतगुणे से चेव पएसट्ठयाए असंखेज्जगुणे, पोग्गलत्थिकाए दवट्ठयाए अणंतगुणे से चेव पएसट्ठयाए असंखेज्जगुणे, अद्धासमए दवट्ठपएसट्ठयाए अणंतगुणे, आगासत्थिकाए पएसट्ठयाए अणंतगुणे। दारं। (सू० ७९)

धर्म्मास्तिकायोऽधर्म्मास्तिकाय आकाशास्तिकाय एते त्रयोऽपि द्रव्यार्थतया–द्रव्यमेवार्थो द्रव्यार्थः तस्य भावो द्रव्यार्थता तया द्रव्यरूपतया इत्यर्थः तुल्याः—समानाः, प्रत्येकमेकसङ्ख्याकत्वात्, अत एव सर्वस्तोकाः, तेभ्यो जीवास्तिकायो द्रव्यार्थतया अनन्तगुणः, जीवानां प्रत्येकं द्रव्यत्वात् तेषां च जीवास्तिकाये अनन्तत्वात्, तस्मादपि पुद्गलास्तिकायो द्रव्यार्थतयाऽनन्तगुणः, कथमिति चेत्, उच्यते, इह परमाणुद्विप्रदेशकादीनि पृथक् पृथक् द्रव्याणि, तानि च सामान्यतस्त्रिधा, तद्यथा—प्रयोगपरिणतानि मिश्रपरिणतानि विश्रसापरिणतानि च, तत्र प्रयोगपरिणतान्यपि तावज्जीवेभ्योऽनन्तगुणानि, एकैकस्य जीवस्यानन्तैः प्रत्येकं ज्ञानावरणीयदर्शनावरणीयादिकर्मपुद्गलस्कन्धैरावेष्टित(परिवेष्टित) त्वात्, किं पुनः शेषाणि?, ततः प्रयोगपरिणतेभ्यो मिश्रपरिणतान्यनन्तगुणानि, तेभ्यो विश्रसापरिणतान्यनन्तगुणानि, तथा चोक्तं प्रज्ञप्तौ—"सव्वत्थोवा पुग्गला पयोगपरिणया मीसपरिणया अनंतगुणा वीससापरिणया अनंतगुणा" इति, ततो भवति जीवास्तिकायात् पुद्गलास्तिकायो द्रव्यार्थतयाऽनन्तगुणः, तस्मादप्यद्धासमयो द्रव्यार्थतयाऽनन्तगुणः; कथमिति चेत्, उच्यते, इहैकस्यैव परमाणोरनागते काले तत्र द्विप्रदेशिकत्रिप्रदेशकयावत्दशप्रदेशिकसङ्ख्यातप्रदेशिकासङ्ख्यातप्रदेशिकानन्तप्रदेशिकस्कन्धान्तःपरिणामितया अनन्ता भाविनः संयोगा पृथक्पृथक्कालाः केवलवेदसोपलब्धाः, यथा चैकस्य परमाणोस्तथा सर्वेषां प्रत्येकं द्विप्रदेशादिस्कन्धानां चानन्ताः संयोगाः पुरस्कृताः पृथक्पृथक्काला उपलब्धाः, सर्वेषामपि मनुष्य[लोक]क्षेत्रान्तर्वर्त्तितया परिणाम-

संभवात्, तथा क्षेत्रतोऽप्ययं परमाणुरमुष्मिन्नाकाशप्रदेशे अमुष्मिन् कालेऽवगाहिष्यते इत्येवमनन्ता एकस्य परमाणोर्भाविनः संयोगाः, यथैकस्य परमाणोस्तथा सर्वेषां परमाणूनां, तथा द्विप्रदेशकादीनामपि स्कन्धानामनन्तप्रदेशस्कन्धपर्यन्तानां प्रत्येकं तत्तदेकप्रदेशाद्यवगाहभेदतो भिन्नभिन्नकाला अनन्ता भाविनः संयोगाः, तथा कालतोऽप्ययं परमाणुरमुष्मिन्नाकाशप्रदेशे एकसमयस्थितिको द्विसमयस्थितिक इत्येवमेकस्यापि परमाणोरेकस्मिन्नाकाशप्रदेशेऽसङ्ख्येया भाविनः संयोगाः एवं सर्वेष्वपि आकाशप्रदेशेषु प्रत्येकमसङ्ख्येया भाविनः संयोगाः ततो भूयो भूयस्तेष्वाकाशप्रदेशेषु परावृत्तौ कालस्यानन्तत्वादनन्ताः कालतो भाविनः संयोगाः, यथा चैकस्य परमाणोस्तथा सर्वेषां परमाणूनां सर्वेषां च प्रत्येकं द्विप्रदेशिकादीनां स्कन्धानां, तथा भावतोऽप्ययं परमाणुरमुष्मिन् काले एकगुणकालको भवतीत्येवमेकस्यापि परमाणोर्भिन्नभिन्नकाला अनन्ताः संयोगाः, यथा चैकस्य परमाणोस्तथा सर्वेषां परमाणूनां सर्वेषां च द्विप्रदेशिकादीनां स्कन्धानां पृथक् पृथक् अनन्ता भावतः पुरस्कृतसंयोगाः, तदेवमेकस्यापि परमाणोर्द्रव्यक्षेत्रकालभावविशेषसम्बन्धवशादनन्ता भाविनः समया उपलब्धाः, यथैकस्य परमाणोस्तथा सर्वेषां परमाणूनां सर्वेषां च प्रत्येकं द्विप्रदेशिका(दी)नां स्कन्धानां, न चैतत् परिणामिकालवस्तुव्यतिरेके परिणामिपुद्गलास्तिकायादिव्यतिरेके चोपपद्यते, ततः सर्वमिदं तात्त्विकमवसेयं, उक्तं च—"संयोगपुरस्कारश्च नाम भाविनि हि युज्यते काले। न हि संयोगपुरस्कारो ह्यसतां केषांचिदुपपन्नः॥१॥" इति, यथा च सर्वेषां परमाणूनां सर्वेषां च द्विप्रदेशिकादीनां स्कन्धानां

प्रत्येकं द्रव्यक्षेत्रकालभावविशेषसम्बन्धवशादनन्ता भाविनोऽद्धासमयाः तथा अतीता अपीति सिद्धः पुद्गलास्तिकायादनन्तगुणोऽद्धासमयो द्रव्यार्थतयेति । उक्तं द्रव्यार्थतया परस्परमल्पबहुत्वम्, इदानीमेतेषामेव प्रदेशार्थतया तदाह—धर्म्मास्तिकायोऽधर्म्मास्तिकाय एतौ द्वावपि परस्परं प्रदेशार्थतया तुल्यौ, उभयोरपि लोकाकाशप्रदेशपरिमाणप्रदेशत्वात्, शेषास्तिकायाद्धासमयापेक्षया च सर्वस्तोकौ, ततो जीवास्तिकायः प्रदेशार्थतया अनन्तगुणः, जीवास्तिकाये जीवानामनन्तत्वात् एकैकस्य च जीवस्य लोकाकाशप्रदेशपरिमाणप्रदेशत्वात्, तस्मादपि पुद्गलास्तिकायः प्रदेशार्थतयाऽनन्तगुणः, कथमिति चेत्, उच्यते, इह कर्मस्कन्धप्रदेशा अपि तावत् सर्वजीवप्रदेशेभ्योऽनन्तगुणाः, एकैकस्य जीवप्रदेशस्यानन्तानन्तैः कर्मपरमाणुभिरावेष्टितपरिवेष्टितत्वात्, किं पुनः सकलपुद्गलास्तिकायप्रदेशाः?, ततो भवति जीवास्तिकायात् पुद्गलास्तिकायः प्रदेशार्थतयाऽनन्तगुणः, तस्मादप्यद्धासमयः प्रदेशार्थतयाऽनन्तगुणः, एकैकस्य पुद्गलास्तिकायप्रदेशस्य प्रागुक्तक्रमेण तत्तद्द्रव्यक्षेत्रकालभावविशेषसम्बन्धभावतोऽनन्तानामतीताद्धासमयानामनन्तानामनागतसमयानां भावात्, तस्मादाकाशास्तिकायः प्रदेशार्थतयाऽनन्तगुणः, अलोकस्य सर्वतोऽप्यनन्तताभावात् ॥ गतं प्रदेशार्थतयाऽल्पबहुत्वम्, इदानीं प्रत्येकं द्रव्यार्थप्रदेशार्थतयाऽल्पबहुत्वमाह—सर्वस्तोको धर्म्मास्तिकायो द्रव्यार्थतया, एकत्वात्, प्रदेशार्थतयाऽसङ्ख्येयगुणः, लोकाकाशप्रदेशपरिमाणप्रदेशात्मकत्वात्, एवमधर्म्मास्तिकायसूत्रमपि भावनीयम्, आकाशास्तिकायो द्रव्यार्थतया सर्वस्तोकः, एकत्वात्, प्रदेशार्थतयाऽनन्तगुणः, अपरिमि-

तत्वात्, जीवास्तिकायो द्रव्यार्थतया सर्वस्तोकः, प्रदेशार्थतयाऽसङ्ख्येयगुणः, प्रतिजीवं लोकाकाशप्रदेशपरिमाणप्रदेशभावात्, तथा सर्वस्तोकः पुद्गलास्तिकायो द्रव्यार्थतया, द्रव्याणां सर्वत्रापि स्तोकत्वात्, स एव पुद्गलास्तिकायस्तत्तद्रव्यापेक्षया प्रदेशार्थतया चिन्त्यमानोऽसङ्ख्येयगुणः, ननु बहवः खलु जगत्यनन्तप्रदेशका अपि स्कन्धा विद्यन्ते ततोऽनन्तगुणाः कस्मान्न संभवन्ति ?, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात्, इह हि स्वल्पा अनन्तप्रदेशकाः स्कन्धाः परमाण्वादयस्त्वतिबहवः, तथा च वक्ष्यति सूत्रम्—"सव्वत्थोवा अणंतपएसिया खंधा दव्वट्ठयाए, परमाणुपोग्गला दव्वट्ठयाए अणंतगुणा, संखेज्जपएसिया खंधा दव्वट्ठयाए संखेज्जगुणा, असंखेज्जपएसिया खंधा दव्वट्ठयाए असंखेज्जगुणा" इति, ततो यदा सर्व एव पुद्गलास्तिकायः प्रदेशार्थतया चिन्त्यते तदाऽनन्तप्रदेशकानां स्कन्धानामतिस्तोकत्वात् परमाणूनां चातिबहुत्वात् तेषां च पृथक् पृथक् द्रव्यत्वात् असङ्ख्येयप्रदेशकानां च स्कन्धानां परमाण्वपेक्षयाऽसङ्ख्येयगुणत्वादसङ्ख्येयगुण एवोपपद्यते नानन्तगुण इत्यर्थः, 'अद्धासमए न पुच्छिज्जइ' इति, अद्धासमयो द्रव्यार्थप्रदेशार्थतया न पृच्छ्यते, कुतः ? इत्याह—प्रदेशाभावात्, आह–कोऽयमद्धासमयानां द्रव्यार्थतानियमो ?, यावता प्रदेशार्थताऽपि तेषां विद्यते एव, तथाहि—यथाऽनन्तानां परमाणूनां समुदायः स्कन्धो भण्यते स च द्रव्यं तदवयवाश्च प्रदेशाः तथेहापि सकलः कालो द्रव्यं तदवयवाश्च समयाः प्रदेशा इति, तदयुक्तं, दृष्टान्तदार्ष्टान्तिकवैषम्यात्, परमाणूनां समुदायः तदा स्कन्धो भवति यदा ते परस्परसापेक्षतया परिणमन्ते, परस्परनिरपेक्षाणां केव-

लपरमाणूनामिव स्कन्धत्वायोगात्, अद्धासमयास्तु परस्परनिरपेक्षा एव, वर्त्तमानसमयभावे पूर्वापरसमययोरभावात्, ततो न स्कन्धत्वपरिणामः, तद्भावाच्च नाद्धासमयाः प्रदेशाः, किं तु पृथग् द्रव्याण्येवेति ॥ सम्प्रत्यमीषां धर्म्मास्तिकायादीनां सर्वेषां युगपत् द्रव्यार्थप्रदेशार्थतयाऽल्पबहुत्वमाह—धर्म्मास्तिकायोऽधर्म्मास्तिकाय आकाशास्तिकाय एते त्रयोऽपि द्रव्यार्थतया तुल्याः सर्वस्तोकाश्च, प्रत्येकमेकसङ्ख्याकत्वात्, तेभ्यो धर्मास्तिकायोऽधर्म्मास्तिकाय एतौ द्वावपि प्रदेशार्थतयाऽसङ्ख्येयगुणौ, स्वस्थाने तु परस्परं तुल्यौ, ताभ्यां जीवास्तिकायो द्रव्यार्थतयाऽनन्तगुणः, अनन्तानां जीवद्रव्याणां भावात्, स एव जीवास्तिकायः प्रदेशार्थतयाऽसङ्ख्येयगुणः, प्रतिजीवमसङ्ख्येयानां प्रदेशानां भावात्, तस्मादपि प्रदेशार्थतया जीवास्तिकायात् पुद्गलास्तिकायो द्रव्यार्थतयाऽनन्तगुणः, प्रतिजीवप्रदेशं ज्ञानावरणीयादिकर्म्मपुद्गलस्कन्धानामप्यनन्तानां भावात्, स एव पुद्गलास्तिकायः प्रदेशार्थतयाऽसङ्ख्येयगुणः, अत्र भावना प्रागिव, तस्मादपि प्रदेशार्थतया पुद्गलास्तिकायात् अद्धासमयो द्रव्यार्थप्रदेशार्थतयाऽनन्तगुणः, अत्रापि भावना प्रागिव, तस्मादप्याकाशास्तिकायः प्रदेशार्थतया अनन्तगुणः, सर्वास्वपि दिक्षु तस्यान्ताभावात्, अद्धासमयस्य च मनुष्यक्षेत्रमात्रभावात् ॥ गतमस्तिकायद्वारम्, इदानीं चरमद्वारमाह—

एएसि णं भंते ! जीवाणं चरिमाणं अचरिमाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा अचरिमा चरिमा अणंतगुणा । दारं । ( सू० ८० )

इह येषां चरमो भवः संभवी योग्यतयाऽपि ते चरमा उच्यन्ते, ते चार्थात् भव्याः, इतरे अचरमा—अभव्याः सिद्धाश्च, उभयेषामपि चरमभवाभावात्, तत्र स्तोका अचरमाः, अभव्यानां सिद्धाना च समुदितानामप्यजघन्योत्कृष्टयुक्तानन्तकपरिमाणत्वात्, तेभ्योऽनन्तगुणाश्चरमाः, अजघन्योत्कृष्टानन्तानन्तकपरिमाणत्वात् ॥ गतं चरमद्वारम्, अधुना जीवद्वारमाह—

एएसि णं भंते ! जीवाणं पोग्गलाणं अद्धासमयाणं सव्वदव्वाणं सव्वपएसाणं सव्वपज्जवाण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा पोग्गला अणंतगुणा अद्धासमया अणंतगुणा सव्वदव्वा विसेसाहिया सव्वपएसा अणंतगुणा सव्वपज्जवा अणंतगुणा । दारं । ( सू० ८१ )

सर्वस्तोका जीवाः, तेभ्यः पुद्गला अनन्तगुणाः, तेभ्योऽद्धासमया अनन्तगुणाः, अत्र भावना प्रागेव कृता, तेभ्योऽद्धासमयेभ्यः सर्वद्रव्याणि विशेषाधिकानि, कथमिति चेत्, उच्यते, इह येऽनन्तरमद्धासमयाः पुद्गलेभ्योऽनन्तगुणा उक्तास्ते प्रत्येकं द्रव्याणि ततो द्रव्यचिन्तायां तेऽपि परिगृह्यन्ते तेषु च मध्ये सर्वजीवद्रव्याणि सर्वपुद्गलद्रव्याणि धर्माधर्माकाशास्तिकायद्रव्याणि च प्रक्षिप्यन्ते तानि च समुदितान्यप्यद्धासमयानामनन्तभागकल्पानीति तेषु प्रक्षिप्तेष्वपि मनागधिकत्वं जातं इत्यद्धासमयेभ्यः सर्वद्रव्याणि विशेषाधिकानि, तेभ्यः सर्वप्रदेशा अनन्तगुणाः,

आकाशानन्तत्वात्, तेभ्यः सर्वपर्यवा अनन्तगुणाः, एकैकस्मिन्नाकाशप्रदेशेऽनन्तानामगुरुलघुपर्यायाणां भावात् ॥ गतं जीवद्वारम्, अधुना क्षेत्रद्वारमाह—

खेत्ताणुवाएणं सव्वत्थोवा जीवा उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखेज्जगुणा तेलुक्के असंखेज्जगुणा उड्ढलोए असंखेज्जगुणा अहोलोए विसेसाहिया ( सू० ८२ )

क्षेत्रस्यानुपातः—अनुसारः क्षेत्रानुपातः तेन चिन्त्यमाना जीवाः सर्वस्तोका ऊर्द्धलोकतिर्यग्लोके, इह ऊर्द्धलोकस्य यदधस्तनमाकाशप्रदेशप्रतरं यच्च तिर्यग्लोकस्य सर्वोपरितनमाकाशप्रदेशप्रतरमेष ऊर्द्धलोकतिर्यग्लोकः, तथाप्रवचनप्रसिद्धेः, इयमत्र भावना—इह सामस्त्येन चतुर्दशरज्ज्वात्मको लोकः, स च त्रिधा भिद्यते, तद्यथा—उर्द्धलोकः तिर्यग्लोकोऽधोलोकश्च, रुचकाच्चैतेषां विभागः, तथाहि—रुचकस्याधस्तान्नव योजनशतानि रुचकस्योपरिष्टान्नवयोजनशतानि तिर्यग्लोकः, तस्य च तिर्यग्लोकस्याधस्तादधोलोकः उपरिष्टादूर्द्धलोकः, देशोनसप्तरज्जुप्रमाण ऊर्द्धलोकः समधिकसप्तरज्जुप्रमाणोऽधोलोकः मध्येऽष्टादशयोजनशतोच्छ्रयस्तिर्यग्लोकः, तत्र रुचकसमाद्भूतलभागान्नवयोजनशतानि गत्वा यज्ज्योतिश्चक्रस्योपरितनं तिर्यग्लोकसम्बन्धि एकप्रादेशिकमाकाशप्रतरं तत्तिर्यग्लोकप्रतरं तस्य चोपरि यदेकप्रादेशिकमाकाशप्रतरं तदूर्द्धलोकप्रतरं ते द्वे अप्यूर्द्धलोकतिर्यग्लोक इति व्यवह्रियते, तथाअनादिप्रवचनपरिभाषाप्रसिद्धेः, तत्र वर्त्तमानाः जीवाः सर्वस्तोकाः, कथमिति चेत्, उच्यते, इह ये ऊर्द्धलोकात्तिर्यग्लो-

के तिर्यग्लोकादूर्द्ध्वलोके (च) समुत्पद्यमाना विवक्षितं प्रतरद्वयं स्पृशन्ति ये च तत्रस्था एव केचन तत्प्रतरद्वयाध्यासिनो वर्त्तन्ते ते किल विवक्षिते प्रतरद्वये वर्त्तन्ते, नान्ये, ये पुनरूर्द्ध्वलोकादधोलोके समुत्पद्यमानास्तत्प्रतरद्वयं स्पृशन्ति ते न गण्यन्ते, तेषां सूत्रान्तरविषयत्वात्, ततः स्तोका एवाधिकृतप्रतरद्वयवर्त्तिनो जीवाः, ननूर्द्ध्वलोकगतानामपि सर्वजीवानामसङ्ख्येयो भागोऽनवरतं म्रियमाणोऽवाप्यते, ते च तिर्यग्लोके समुत्पद्यमाना विवक्षितं प्रतरद्वयं स्पृशन्तीति कथमधिकृतप्रतरद्वयसंस्पर्शिनः स्तोकाः ?, तदयुक्तं, वस्तुतत्त्वापरिज्ञानात्, तथाहि—यद्यपि नामोर्द्ध्वलोकगतानां सर्वजीवानामसङ्ख्येयो भागोऽनवरतं म्रियमाणोऽवाप्यते तथापि न ते सर्व एव तिर्यग्लोके समुत्पद्यन्ते, प्रभूततराणामधोलोके ऊर्द्ध्वलोके च समुत्पादात्, ततोऽधिकृतप्रतरद्वयवर्त्तिनः सर्वस्तोका एव, तेभ्योऽधोलोकतिर्यग्लोके विशेषाधिकाः, इह यदधोलोकस्योपरितनमेकप्रादेशिकमाकाशप्रदेशप्रतरं यच्च तिर्यग्लोकस्य सर्वाधस्तनमेकप्रादेशिकमाकाशप्रदेशप्रतरमेतद्द्वयमप्यधोलोकतिर्यग्लोक इत्युच्यते, तथाप्रवचनप्रसिद्धेः, तत्र ये विग्रहगत्या तत्रस्थतया वा वर्त्तन्ते ते विशेषाधिकाः, कथमिति चेत्, उच्यते, इह येऽधोलोकात्तिर्यग्लोके तिर्यग्लोकाद्वाऽधोलोके ईलिकागत्या समुत्पद्यमाना अधिकृतप्रतरद्वयं स्पृशन्ति ये च तत्रस्था एव केचन तत्प्रतरद्वयमध्यासीना वर्त्तन्ते ते विवक्षितप्रतरद्वयवर्तिनो, ये पुनरधोलोकादूर्द्ध्वलोके समुत्पद्यमानास्तत्प्रतरद्वयं स्पृशन्ति ते न परिगृह्यन्ते, तेषां सूत्रान्तरविषयत्वात्, केवलमूर्द्ध्वलोकादधोलोके विशेषाधिका इत्यधोलोकात्तिर्यग्लोके समुत्पद्यमाना ऊर्द्ध्वलोकापेक्षया

विशेषाधिका अवाप्यन्ते ततो विशेषाधिकाः, तेभ्यस्तिर्यग्लोकवर्त्तिनोऽसङ्ख्येयगुणाः, उक्तक्षेत्रद्विकात्तिर्यग्लोकक्षेत्रस्यासङ्ख्येयगुणत्वात्, तेभ्यस्त्रैलोक्ये—त्रिलोकसंस्पर्शिनोऽसङ्ख्येयगुणाः, इह ये केवले ऊर्द्धलोकेऽधोलोके तिर्यग्लोके वा वर्त्तन्ते ये च विग्रहगत्या ऊर्द्धलोकतिर्यग्लोकौ स्पृशन्ति ते न गण्यन्ते, किं तु ये विग्रहगत्यापन्नास्त्रीनपि लोकान् स्पृशन्ति ते परिग्राह्याः, सूत्रस्य विशेषविषयत्वात्, ते च तिर्यग्लोकवर्त्तिभ्योऽसङ्ख्येयगुणा एव, कथमिति चेत्, उच्यते, इह बहवः प्रतिसमयमूर्द्धलोकेऽधोलोके च सूक्ष्मनिगोदा उद्वर्त्तन्ते, ये तु तिर्यग्लोकवर्त्तिनः सूक्ष्मनिगोदा उद्वर्त्तन्ते अर्थादधोलोके ऊर्द्धलोके वा केचित्तस्मिन्नेव वा तिर्यग्लोके समुत्पद्यन्ते ततो न ते लोकत्रयसंस्पर्शिन इति नाधिकृतसूत्रविषयाः, तत्रोर्द्धलोकाधोलोकगतानां सूक्ष्मनिगोदानामुद्वर्त्तमानानां मध्ये केचित् स्वस्थाने एवोर्द्धलोकेऽधोलोके वा समुत्पद्यन्ते केचित्तिर्यग्लोके, तेभ्योऽसङ्ख्येयगुणा अधोलोकगता ऊर्द्धलोके ऊर्द्धलोकगता अधोलोके समुत्पद्यन्ते, ते च तथोत्पद्यमानास्त्रीनपि लोकान् स्पृशन्तीत्यसङ्ख्येयगुणाः, कथं पुनरेतदवसीयते यदुत एवंप्रमाणा बहवो जीवाः सदा विग्रहगत्यापन्नाः लभ्यन्ते इति चेत् ?, उच्यते, युक्तिवशात्, तथाहि—प्रागुक्तमिदमत्रैव सूत्रं पर्याप्तद्वारे—"सव्वत्थोवा जीवा नोपज्जत्तानोअपज्जत्ता. अपज्जत्ता अनंतगुणा पज्जत्ता संखेज्जगुणा" इति, त एवं नामापर्याप्ता बहवः येनैतेभ्यः पर्याप्ताः सङ्ख्येयगुणा एव नासङ्ख्येयगुणा नाप्यनन्तगुणाः, ते चापर्याप्ता बहवोऽन्तरगतौ वर्त्तमाना लभ्यन्ते इति, तेभ्य ऊर्द्धलोके—ऊर्द्धलोकावस्थिता असङ्ख्येयगुणाः, उपपातक्षेत्रस्यातिबहुत्वात्, असङ्ख्ये-

याना च भागानामुद्वर्त्तनायाश्च संभवात्, तेभ्योऽधोलोके—अधोलोकवर्त्तिनो विशेषाधिकाः, ऊर्द्धलोकक्षेत्रादधोलोकक्षेत्रस्य विशेषाधिकत्वात् । तदेवं सामान्यतो जीवानां क्षेत्रानुपातेनाल्पबहुत्वमुक्तम्, इदानीं चतुर्गतिदण्डकक्रमेण तदभिधित्सुः प्रथमतो नैरयिकाणामाह—

खेत्ताणुवाएणं सव्वत्थोवा नेरइया तेलोक्के अहोलोयतिरियलोए असंखेज्जगुणा, अहोलोए असंखेज्जगुणा ॥ खेत्ताणुवाएणं सव्वत्थोवा तिरिक्खजोणिया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखेज्जगुणा तेलोक्के असंखेज्जगुणा उड्ढलोए असंखेज्जगुणा अहोलोए विसेसाहिया ॥ खेत्ताणुवाएणं सव्वत्थोवाओ तिरिक्खजोणिणीओ उड्ढलोए उड्ढलोयतिरियलोए असंखेज्जगुणाओ तेलोक्के संखेज्जगुणाओ अहोलोयतिरियलोए संखेज्जगुणाओ अहोलोए संखेज्जगुणाओ तिरियलोए संखेज्जगुणाओ ॥ खेत्ताणुवाएणं सव्वत्थोवा मणुस्सा तेलोक्के उड्ढलोयतिरियलोए असंखेज्जगुणा अहोलोयतिरियलोए संखेज्जगुणा उड्ढलोए संखेज्जगुणा अहोलोए संखेज्जगुणा तिरियलोए संखेज्जगुणा। खेत्ताणुवाएणं सव्वत्थोवा मणुस्सीओ तेलोक्के उड्ढलोयतिरियलोए संखेज्जगुणाओ अहोलोयतिरियलोए संखेज्जगुणाओ उड्ढलोए संखेज्जगुणाओ अहोलोए संखेज्जगुणाओ तिरियलोए संखेज्जगुणाओ ॥ खेत्ताणुवाएणं सव्वत्थोवा देवा उड्ढलोए उड्ढलोयतिरियलोए असंखेज्जगुणा तेलोक्के संखेज्जगुणा अहोलोयतिरियलोए संखेज्जगुणा अहोलोए संखेज्जगुणा तिरियलोए संखेज्जगुणा। खेत्ताणुवा-

एणं सव्वत्थोवाओ देवीओ उड्ढलोए उड्ढलोयतिरियलोए असंखेज्जगुणाओ तेलोक्के संखेज्जगुणाओ अहोलोयतिरियलोए संखेज्जगुणाओ अहोलोए संखेज्जगुणाओ तिरियलोए संखेज्जगुणाओ ( सू० ८२ )

'क्षेत्रानुपातेन' क्षेत्रानुसारेण नैरयिकाश्चिन्त्यमानाः सर्वस्तोकास्त्रैलोक्ये—लोकत्रयसंस्पर्शिनः, कथं लोकत्रयसंस्पर्शिनो नैरयिकाः कथं वा ते सर्वस्तोकाः इति चेत् ?, उच्यते, इह ये मेरुशिखरे अञ्जनदधिमुखपर्वतशिखरादिषु वा वापीषु वर्त्तमाना मत्स्यादयो नरकेषूत्पित्सव ईलिकागत्या प्रदेशान् विक्षिपन्ति ते किल त्रैलोक्यमपि स्पृशन्ति नारकव्यपदेशं च लभन्ते तत्कालमेव नरकेषूत्पत्तेर्नारकायुष्कप्रतिसंवेदनात्, ते चेत्थंभूताः कतिपये इति सर्वस्तोकाः, अन्ये तु व्याचक्षते—नारका एव यथोक्तवापीषु तिर्यक्पञ्चेन्द्रियतयोत्पद्यमानाः समुद्घातवशतो विक्षिप्तनिजात्मप्रदेशदण्डाः परिगृह्यन्ते, ते हि किल तदा नारका एव निर्विवादं, तदायुष्कप्रतिसंवेदनात्, त्रैलोक्यसंस्पर्शिनश्च, यथोक्तवापीर्यावदात्मप्रदेशदण्डस्य विक्षिप्तत्वादिति, तेभ्योऽधोलोकतिर्यग्लोके—अधोलोकतिर्यग्लोकसञ्ज्ञप्रागुक्तप्रतरद्वयस्य संस्पर्शिनोऽसङ्ख्येयगुणाः, यतो बहवोऽसङ्ख्येयेषु द्वीपसमुद्रेषु पञ्चेन्द्रियतिर्यग्योनिका नरकेषूत्पद्यमाना यथोक्तं प्रतरद्वयं स्पृशन्ति ततो भवन्ति पूर्वोक्तेभ्योऽसङ्ख्येयगुणाः, क्षेत्रस्यासङ्ख्यातगुणत्वात्, मन्दरादिक्षेत्रादसङ्ख्येयद्वीपसमुद्रात्मकं क्षेत्रमसङ्ख्येयगुणमित्यतो भवन्त्यसङ्ख्येयगुणाः, अन्ये त्वभिदधति—नारका एवासङ्ख्येयेषु द्वीपसमुद्रेषु तिर्यक्पञ्चेन्द्रियतयोत्पद्यमाना मारणान्तिकसमुद्घातेन विक्षिप्तनिजात्मप्रदेशदण्डा द्रष्टव्याः, ते हि नार-

कायुःप्रतिसंवेदनान्नारका उद्वर्त्तमाना अपि असङ्ख्येयाः प्राप्यन्ते इति प्रागुक्तेभ्योऽसङ्ख्येयगुणाः, तेभ्योऽधोलोकेऽसङ्ख्येयगुणाः, तस्य तेषां स्वस्थानत्वात् । उक्तं नारकगतिमधिकृत्य क्षेत्रानुपातेनाल्पबहुत्वम्, इदानीं तिर्यग्गतिमधिकृत्याह—इदं सर्वमपि सामान्यतो जीवसूत्रमिव भावनीयं, तदपि तिरश्च एव सूक्ष्मनिगोदानधिकृत्य भावितम्, अधुना तिर्यग्योनिकस्त्रीविषयमल्पबहुत्वमाह—क्षेत्रानुपातेन तिर्यग्योनिकस्त्रियश्चिन्त्यमानाः सर्वस्तोकाः ऊर्द्ध्वलोके, इह मन्दराद्रिवापीप्रभृतिष्वपि हि पञ्चेन्द्रियतिर्यग्योनिकाः स्त्रियो भवन्ति, ताश्च क्षेत्रस्याल्पत्वात् सर्वस्तोकाः, ताभ्य ऊर्द्ध्वलोकतिर्यग्लोके—ऊर्द्ध्वलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वये वर्त्तमानाः असङ्ख्येयगुणाः, कथमिति चेत् ?, उच्यते, यावत्सहस्रारदेवलोकस्तावद्देवा अपि गर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रिययोनिषूत्पद्यन्ते किं पुनः शेषकायाः ?, ते हि यथासंभवमुपरिवर्त्तिनोऽपि तत्रोत्पद्यन्ते, ततो ये सहस्रारान्ता देवा अन्येऽपि च शेषकाया ऊर्द्ध्वलोकात्तिर्यग्लोके तिर्यक्पञ्चेन्द्रियस्त्रीत्वेन तदायुः प्रतिसंवेदयमाना उत्पद्यन्ते यास्तिर्यग्लोकवर्त्तिन्यस्तिर्यक्पञ्चेन्द्रियस्त्रिय ऊर्द्ध्वलोके देवत्वेन शेषकायत्वेन चोत्पद्यमाना मारणान्तिकसमुद्घातेनोत्पत्तिदेशे निजनिजात्मप्रदेशदण्डान् विक्षिपन्ति ता यथोक्तं प्रतरद्वयं स्पृशन्ति तिर्यग्योनिकस्त्रियश्च तास्ततोऽसङ्ख्येयगुणाः, क्षेत्रस्यासङ्ख्येयगुणत्वात्, ताभ्यस्त्रैलोक्ये सङ्ख्येयगुणाः, यस्मादधोलोकात् भवनपतिव्यन्तरनारकाः शेषकाया अपि चोर्द्ध्वलोकेऽपि तिर्यक्पञ्चेन्द्रियस्त्रीत्वेनोत्पद्यन्ते ऊर्द्ध्वलोकाद् देवादयोऽप्यधोलोके च ते समवहता निजनिजात्मप्रदेशदण्डैस्त्रीनपि लोकान् स्पृशन्ति प्रभूताश्च

ते तथा तिर्यग्योनिकस्त्र्यायुःप्रतिसंवेदनात् तिर्यग्योनिकस्त्रियश्च ततः सङ्ख्येयगुणाः, ताभ्योऽधोलोकतिर्यग्लोके— अधोलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वये वर्त्तमानाः सङ्ख्येयगुणाः, बहवो हि नारकादयः समुद्घातमन्तरेणापि तिर्यग्लोके तिर्यक्पञ्चेन्द्रियस्त्रीत्वेनोत्पद्यन्ते तिर्यग्लोकवर्त्तिनश्च जीवास्तिर्यग्योनिकस्त्रीत्वेनाधोलौकिकग्रामेष्वपि च ते च तथोत्पद्यमाना यथोक्तं प्रतरद्वयं स्पृशन्ति तिर्यग्योनिकस्त्र्यायुःप्रतिसंवेदनाच्च तिर्यग्योनिकस्त्रियोऽपि, तथाऽधोलौकिकग्रामा योजनसहस्रावगाहाः पर्यन्तेऽर्वाक् क्वचित्प्रदेशे नवयोजनशतावगाहा अपि तत्र काश्चित्तिर्यग्योनिकस्त्रियोऽवस्थानेनापि यथोक्तप्रतरद्वयाध्यासिन्यो वर्त्तन्ते ततो भवन्ति पूर्वोक्ताभ्यः सङ्ख्येयगुणाः, ताभ्योऽधोलोके सङ्ख्येयगुणाः, यतोऽधोलौकिकग्रामाः सर्वेऽपि च समुद्रा योजनसहस्रावगाहाः ततो नवयोजनशतानामधस्तात् या वर्त्तन्ते मत्सीप्रभृतिकास्तिर्यग्योनिकस्त्रियस्ताः स्वस्थानत्वात् प्रभूता इति सङ्ख्येयगुणाः, क्षेत्रस्य सङ्ख्येयगुणत्वात्, ताभ्यस्तिर्यग्लोके सङ्ख्येयगुणाः। उक्तं तिर्यग्गतिमप्यधिकृत्याल्पबहुत्वम्, इदानीं मनुष्यगतिविषयमाह—क्षेत्रानुपातेन मनुष्याश्चिन्त्यमानास्त्रैलोक्ये—त्रैलोक्यसंस्पर्शिनः सर्वस्तोकाः, यतो ये ऊर्द्ध्वलोकादधोलौकिकग्रामेषु समुत्पित्सवो मारणान्तिकसमुद्घातेन समवहता भवन्ति ते केचित् समुद्घातवशाद् बहिर्निर्गतैः स्वात्मप्रदेशैस्त्रीनपि लोकान् स्पृशन्ति येऽपि चान्ये वैक्रियसमुद्घातमाहारकसमुद्घातं वा गताः [प्राप्ताः] तथाविधप्रयत्नविशेषात् दूरतरमूर्द्ध्वाधोविक्षिप्तात्मप्रदेशाः ये च केवलिसमुद्घातगतास्तेऽपि त्रीनपि लोकान् स्पृशन्ति स्तोकाश्चेति सर्वस्तोकाः,

तेभ्य ऊर्द्धलोकतिर्यग्लोके—ऊर्द्धलोकतिर्यग्लोकसञ्ज्ञकप्रतरद्वयसंस्पर्शिनोऽसङ्ख्येयगुणाः, यत इह वैमानिकदेवाः शेषकायाश्च यथासंभवमूर्द्धलोकात्तिर्यग्लोके मनुष्यत्वेन समुत्पद्यमाना यथोक्तप्रतरद्वयसंस्पर्शिनो भवन्ति विद्याधराणामपि च मन्दरादिषु गमनं तेषां च शुक्ररुधिरादिपुद्गलेषु संमूर्च्छिममनुष्याणामुत्पाद इति ते विद्याधरा रुधिरादिपुद्गलसम्मिश्रा यदा गच्छन्ति तदा संमूर्च्छिममनुष्या अपि यथोक्तप्रतरद्वयसंस्पर्शवन्त उपजायन्ते ते चातिबहव इत्यसङ्ख्येयगुणाः, तेभ्योऽधोलोकतिर्यग्लोके—अधोलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वये सङ्ख्येयगुणाः, यतोऽधोलौकिकग्रामेषु स्वभावत एव बहवो मनुष्याः, ततो ये तिर्यग्लोकात् मनुष्येभ्यः शेषकायेभ्यो वाऽधोलौकिकग्रामेषु गर्भव्युत्क्रान्तिकमनुष्यत्वेन संमूर्च्छिममनुष्यत्वेन वा समुत्पित्सवो ये चाधोलोकादधोलौकिकग्रामरूपात् शेषाद्वा मनुष्येभ्यः शेषकायेभ्यो वा तिर्यग्लोके गर्भव्युत्क्रान्तिकमनुष्यत्वेन वा संमूर्च्छिममनुष्यत्वेन वा समुत्पत्तुकामास्ते यथोक्तं किल प्रतरद्वयं स्पृशन्ति बहुतराश्च ते तथा स्वस्थानतोऽपि केचिदधोलौकिकग्रामेषु यथोक्तप्रतरद्वयसंस्पर्शिन इति ते प्रागुक्तेभ्यः सङ्ख्येयगुणाः, तेभ्यः ऊर्द्धलोके सङ्ख्येयगुणाः, सौमनसादिक्रीडार्थं चैत्यवन्दननिमित्तं वा प्रभूततराणां विद्याधरचारणमुनीनां ( गमनागमन ) भावात् तेषां च यथायोगं रुधिरादिपुद्गलयोगतः संमूर्च्छिममनुष्यसंभवात्, तेभ्योऽधोलोके सङ्ख्येयगुणाः, स्वस्थानत्वेन बहुत्वभावात्, तेभ्यस्तिर्यग्लोके सङ्ख्येयगुणाः, क्षेत्रस्य सङ्ख्येयगुणत्वात् स्वस्थानत्वाच्च । सम्प्रति क्षेत्रानुपातेन मानुषीविषयमल्पबहुत्वमाह—क्षेत्रानुपातेन मानुष्यश्चिन्त्यमानाः सर्वस्तोकाः

त्रैलोक्यस्पर्शिन्यः, ऊर्द्ध्वलोकादधोलोके समुत्पित्सूना मारणान्तिकसमुद्घातवशविनिर्गतदूरतरात्मप्रदेशानामथवा वैक्रियसमुद्घातगतानां केवलिसमुद्घातगतानां वा त्रैलोक्यसंस्पर्शनात् तासां चातिस्तोकत्वमिति सर्वस्तोकाः, ताभ्य ऊर्द्ध्वलोकतिर्यग्लोके—ऊर्द्ध्वलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वये सङ्ख्येयगुणाः वैमानिकदेवानां शेषकायाणां चोर्द्ध्वलोकात् तिर्यग्लोके मनुष्यस्त्रीत्वेनोत्पद्यमानानां तथा तिर्यग्लोकगतमनुष्यस्त्रीणामूर्द्ध्वलोके समुत्पित्सूनां मारणान्तिकसमुद्घातवशात् दूरतरमूर्द्ध्वविक्षिप्तात्मप्रदेशानामद्यापि कालमकुर्वन्तीनां यथोक्तप्रतरद्वयसंस्पर्शनभावात् तासां चोभयासामपि बहुतरत्वात्, ताभ्योऽधोलोकतिर्यग्लोके—प्रागुक्तस्वरूपे प्रतरद्वयरूपे सङ्ख्येयगुणाः, तिर्यग्लोकाद् मनुष्यस्त्रीभ्यः शेषेभ्यो वाऽधोलौकिकग्रामेषु यदिवाऽधोलौकिकग्रामरूपात् शेषाद्वा तिर्यग्लोके मनुष्यस्त्रीत्वेनोत्पित्सूनां कासाञ्चिदधोलौकिकग्रामेष्ववस्थानतोऽपि यथोक्तप्रतरद्वयसंस्पर्शसंभवात् तासां च प्रागुक्ताभ्योऽतिबहुत्वात्, ताभ्योऽपि ऊर्द्ध्वलोके सङ्ख्येयगुणाः, क्रीडार्थं चैत्यवन्दननिमित्तं वा सौमनसादिषु प्रभूततराणां विद्याधरीणां (गमन)-संभवात्, ताभ्योऽप्यधोलोके सङ्ख्येयगुणाः, स्वस्थानत्वेन तत्रापि बहुतराणां भावात्, ताभ्यस्तिर्यग्लोके सङ्ख्येयगुणाः, क्षेत्रस्य सङ्ख्येयगुणत्वात् स्वस्थानत्वाच्च । गतं मनुष्यगतिमधिकृत्याल्पबहुत्वम्, इदानीं देवगतिमधिकृत्याह—क्षेत्रानुपातेन चिन्त्यमाना देवाः सर्वस्तोकाः ऊर्द्ध्वलोके, वैमानिकानामेव तत्र भावात् तेषां चाल्पत्वात्, येऽपि भवनपतिप्रभृतयो जिनेन्द्रजन्ममहोत्सवादौ मन्दरादिषु गच्छन्ति तेऽपि स्वल्पा एवेति सर्वस्तोकाः, तेभ्य ऊर्द्ध्वलोकति-

र्यग्लोके—ऊर्द्ध्वलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वयेऽसङ्ख्येयगुणाः, तद्धि ज्योतिष्काणा प्रत्यासन्नमिति स्वस्थानं, तथा भवनपतिव्यन्तरज्योतिष्का मन्दरादौ सौधर्मादिकल्पगताः स्वस्थाने गमागमेन तथा ये सौधर्म्मादिषु देवत्वेनोत्पित्सवो देवायुः प्रतिसंवेदयमानाः स्वोत्पत्तिदेशमभिगच्छन्ति ते यथोक्तं प्रतरद्वयं स्पृशन्ति ततः सामस्त्येन यथोक्तप्रतरद्वयसंस्पर्शिनः परिभाव्यमाना अतिबहव इति पूर्वोक्तेभ्योऽसङ्ख्येयगुणाः, तेभ्यस्त्रैलोक्यसंस्पर्शिनः सङ्ख्येयगुणाः, यतो भवनपतिव्यन्तरज्योतिष्कवैमानिका देवाः तथाविधप्रयत्नविशेषवशतो वैक्रियसमुद्घातेन समवहताः सन्तः त्रीनपि लोकान् स्पृशन्ति ते चेत्थं समवहताः प्रागुक्तप्रतरद्वयस्पर्शिभ्यः सङ्ख्येयगुणाः केवलवेदसोपलभ्यन्ते इति सङ्ख्येयगुणाः, तेभ्योऽधोलोकतिर्यग्लोके—अधोलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वये वर्त्तमानाः सङ्ख्येयगुणाः, तद्धि प्रतरद्विकं भवनपतिव्यन्तरदेवानां प्रत्यासन्नतया स्वस्थानं तथा बहवो भवनपतयः स्वभवनस्थाः तिर्यग्लोकगमागमेन तथोद्वर्त्तमानाः तथा वैक्रियसमुद्घातेन समवहतास्तथा तिर्यग्लोकवर्त्तिनस्तिर्यक्पञ्चेन्द्रियमनुष्या वा भवनपतित्वेनोत्पद्यमाना भवनपत्यायुरनुभवन्तो यथोक्तप्रतरद्वयसंस्पर्शिनोऽतिबहव इति सङ्ख्येयगुणाः, तेभ्योऽधोलोके सङ्ख्येयगुणाः, भवनपतीनां स्वस्थानमितिकृत्वा, तेभ्यस्तिर्यग्लोके सङ्ख्येयगुणाः, ज्योतिष्कव्यन्तराणां स्वस्थानत्वात्। अधुना देवीरधिकृत्याल्पबहुत्वमाह—'खेत्ताणुवाएणं' इत्यादि, सर्वं देवसूत्रमिवाविशेषेण भावनीयं। तदेवमुक्तं देवविषयमौघिकमल्पबहुत्वम्, इदानीं भवनपत्यादिविशेषविषयं प्रतिपिपादयिषुः प्रथमतो भवनपतिविषयमाह—

खेत्ताणुवाएणं सव्वत्थोवा भवणवासी देवा उड्ढलोए उड्ढलोयतिरियलोए असंखेज्जगुणा तेलोक्के संखेज्जगुणा अहोलोयतिरियलोए असंखेज्जगुणा तिरियलोए असंखेज्जगुणा अहोलोए असंखेज्जगुणा। खेत्ताणुवाएणं सव्वत्थोवाओ भवणवासिणीओ देवीओ उड्ढलोए उड्ढलोयतिरियलोए असंखेज्जगुणाओ तेलोक्के संखेज्जगुणाओ अहोलोयतिरियलोए असंखेज्जगुणाओ तिरियलोए असंखेज्जगुणाओ अहोलोए असंखेज्जगुणाओ॥ खेत्ताणुवाएणं सव्वत्थोवा वाणमंतरा देवा उड्ढलोए उड्ढलोयतिरियलोए असंखेज्जगुणा तेलोक्के संखेज्जगुणा अहोलोयतिरियलोए असंखेज्जगुणा अहोलोए संखेज्जगुणा तिरियलोए संखेज्जगुणा। खेत्ताणुवाएणं सव्वत्थोवाओ वाणमंतरीओ देवीओ उड्ढलोए उड्ढलोयतिरियलोए असंखेज्जगुणाओ तेलोक्के संखेज्जगुणाओ अहोलोयतिरियलोए असंखेज्जगुणाओ अहोलोए संखेज्जगुणाओ तिरियलोए संखेज्जगुणाओ॥ खेत्ताणुवाएणं सव्वत्थोवा जोइसिया देवा उड्ढलोए उड्ढलोयतिरियलोए असंखेज्जगुणा तेलोक्के संखेज्जगुणा अहोलोयतिरियलोए असंखेज्जगुणा अहोलोए संखेज्जगुणा तिरियलोए असंखेज्जगुणा। खेत्ताणुवाएणं सव्वत्थोवाओ जोइसिणीओ देवीओ उड्ढलोए उड्ढलोयतिरियलोए असंखेज्जगुणाओ तेलोक्के संखेज्जगुणाओ अहोलोयतिरियलोए असंखेज्जगुणाओ अहोलोए संखेज्जगुणाओ तिरियलोए असंखेज्जगुणाओ॥ खेत्ताणुवाएणं सव्वत्थोवा वेमाणिया देवा [ ग्रन्थाग्रं० २००० ] उड्ढलोयतिरियलोए तेलोक्के संखेज्जगुणा अहोलोयतिरियलोए संखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए संखेज्जगुणा उड्ढलोए असंखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवाओ वेमाणिणीओ देवीओ उड्ढलोयतिरियलोए तेलोक्के संखेज्जगुणाओ अहोलोयतिरियलोए संखेज्जगुणाओ अहोलोए संखेज्जगुणाओ तिरियलोए संखेज्जगुणाओ उड्ढलोए असंखेज्जगुणाओ ( सू० ८४ )

क्षेत्रानुपातेन भवनवासिनो देवाश्चिन्त्यमानाः सर्वस्तोका ऊर्द्धलोके, तथाहि—केषांचित्सौधर्म्मादिष्वपि कल्पेषु पूर्वसंगतिकनिश्रया गमनं भवति, केषाञ्चिन्मन्दरे तीर्थकरजन्ममहिमानिमित्तमञ्जनदधिमुखेष्वष्टाह्निकानिमित्तमपरेषां मन्दरादिषु क्रीडानिमित्तं गमनमेते च सर्वेऽपि स्वल्पा इति सर्वस्तोका ऊर्द्धलोके, तेभ्य ऊर्द्धलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वये असङ्ख्येयगुणाः, कथमिति चेत् ?, उच्यते, इह तिर्यग्लोकस्था वैक्रियसमुद्घातेन समवहता ऊर्द्धलोकं तिर्यग्लोकं च स्पृशन्ति तथा ये तिर्यग्लोकस्था एव मारणान्तिकसमुद्घातेन समवहता ऊर्द्धलोके सौधर्म्मादिषु देवलोकेषु वादरपर्याप्तपृथिवीकायिकतया वादरपर्याप्ताप्कायिकतया वादरपर्याप्तप्रत्येकवनस्पतिकायिकतया च शुभेषु मणिविधानादिषु स्थानेषूत्पत्तुकामा अद्यापि स्वभवायुः प्रतिसंवेदयमानाः, न पारभविकं पृथिवीकायिकाद्यायुः, द्विविधा हि मारणान्तिकसमुद्घातसमवहताः—केचित्पारभविकमायुः प्रतिसंवेदयन्ते केचिन्नेति, तथा चोक्तं प्रज्ञप्तौ—"जीवे णं भंते! मारणंतियसमुग्घाएणं समोहए समोहणित्ता जे भविए मंदरस्स पव्वयस्स पुरच्छिमे णं वायरपुढविकाइयत्ताए उववज्जित्तए से णं भंते! किं तत्थगए उववज्जेज्जा उयाहु पडिनियत्तित्ता उववज्जइ ?, गोयमा! अत्थेगइए तत्थगए चेव उववज्जइ अत्थेगइए ततो पडिनियत्तित्ता दोचंपि मारणंतियसमुग्घाएणं समोहणति, समोहणित्ता तओ पच्छा उववज्जइ" इति, स्वभवायुःप्रतिसंवेदनाच्च ते भवनवासिन एव लभ्यन्ते, ते इत्थंभूता उत्पत्तिदेशे विक्षिप्तात्मप्रदेशदण्डाः तथोर्द्धलोके गमनागमनतस्तत्प्रतरद्वयप्रत्यासन्नक्रीडास्थानतश्च यथोक्तं

प्रतरद्वयं स्पृशन्ति ततः प्रागुक्तेभ्योऽसङ्ख्येयगुणाः, तेभ्यस्त्रैलोक्ये—त्रैलोक्यसंस्पर्शिनः सङ्ख्येयगुणाः, यतो ये ऊर्द्ध्वलोके तिर्यक्पञ्चेन्द्रिया भवनपतित्वेनोत्पत्तुकामा ये च स्वस्थाने वैक्रियसमुद्घातेन मारणान्तिकप्रथमसमुद्घातेन वा तथाविधतीव्रप्रयत्नविशेषेण समवहतास्ते त्रैलोक्यसंस्पर्शिन इति सङ्ख्येयगुणाः, परस्थानसमवहतेभ्यः स्वस्थानसमवहतानां सङ्ख्येयगुणत्वात्, तेभ्योऽधोलोकतिर्यग्लोके—अधोलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वयेऽसङ्ख्येयगुणाः, स्वस्थानप्रत्यासन्नतया तिर्यग्लोके गमनागमनभावतः स्वस्थानस्थितक्रोधादिसमुद्घातगमनतश्च बहूनां यथोक्तप्रतरद्वयसंस्पर्शभावात्, तेभ्यस्तिर्यग्लोकेऽसङ्ख्येयगुणाः, समवसरणादौ वन्दननिमित्तं द्वीपेषु च रमणीयेषु क्रीडानिमित्तमागमनसंभवात् आगतानां च चिरकालमप्यवस्थानात्, तेभ्योऽधोलोकेऽसङ्ख्येयगुणाः, भवनवासिनामधोलोकस्य स्वस्थानत्वात् । एवं भवनवासिदेवीगतमप्यल्पबहुत्वं भावनीयं । सम्प्रति व्यन्तरगतमल्पबहुत्वमाह—क्षेत्रानुपातेन चिन्त्यमाना व्यन्तराः सर्वस्तोका ऊर्द्ध्वलोके, कतिपयानामेव पण्डकवनादौ तेषां भावात्, तेभ्य ऊर्द्ध्वलोकतिर्यग्लोके प्रतरद्वयरूपेऽसङ्ख्येयगुणाः, केषांचित् स्वस्थानान्तर्वर्त्तितया अपरेषां स्वस्थानप्रत्यासन्नतया अन्येषां बहूनां मन्दरादिषु गमनागमनभावतो यथोक्तप्रतरद्वयसंस्पर्शात्, तेषां समुदायेन चिन्त्यमानानामतिबहुत्वभावात्, तेभ्यस्त्रैलोक्ये सङ्ख्येयगुणाः, यतो लोकत्रयवर्त्तिनोऽपि व्यन्तरास्तथाविधप्रयत्नविशेषवशतो वैक्रियसमुद्घातेन समवहताः सन्तस्त्रीनपि लोकानात्मप्रदेशैः स्पृशन्ति, ते च प्रागुक्तेभ्योऽतिबहव इति सङ्ख्येयगुणाः, तेभ्योऽधोलोकतिर्यग्लोके प्रतर-

द्वयरूपे असङ्ख्येयगुणाः, तद्धि वहूनां व्यन्तराणां खस्थानं ततस्तत्संस्पर्शिनो वहव इत्यसङ्ख्येयगुणाः, अधोलोके सङ्ख्येयगुणाः, अधोलौकिकग्रामेषु तेषां स्वस्थानभावात् वहूनामधोलोके क्रीडार्थं गमनभावात्, तेभ्यस्तिर्यग्लोके सङ्ख्येयगुणाः, तिर्यग्लोकस्य तेषां स्वस्थानत्वात्। एवं व्यन्तरदेवीविषयमप्यल्पवहुत्वं वक्तव्यं। सम्प्रति ज्योतिष्कविषयमल्पवहुत्वमाह—क्षेत्रानुपातेन चिन्त्यमाना ज्योतिष्काः सर्वस्तोका ऊर्द्धलोके, केषाञ्चिदेव मन्दरे तीर्थकरजन्ममहोत्सवनिमित्तमञ्जनदधिमुखेष्वष्टाह्निकानिमित्तं च परेषां केषाञ्चिन्मन्दरादिषु क्रीडानिमित्तं गमनसंभवात्, तेभ्य ऊर्द्धलोकतिर्यग्लोके प्रतरद्वयरूपे असङ्ख्येयगुणाः, तद्धि प्रतरद्वयं केचित् स्वस्थानस्थिता अपि स्पृशन्ति, प्रत्यासन्नत्वात्, अपरे वैक्रियसमुद्घातसमवहताः, अन्ये ऊर्द्धलोकगमनागमनभावतः, ततोऽधिकृतप्रतरद्वयस्पर्शिनः पूर्वोक्तेभ्योऽसङ्ख्येयगुणाः, तेभ्यस्त्रैलोक्ये—त्रैलोक्यसंस्पर्शिनः सङ्ख्येयगुणाः, ये हि ज्योतिष्कास्तथाविधतीव्रप्रयत्नवैक्रियसमुद्घातेन समवहतास्त्रीनपि लोकान् स्वप्रदेशैः स्पृशन्ति ते स्वभावतोऽप्यतिवहव इति पूर्वोक्तेभ्यः सङ्ख्येयगुणाः, तेभ्योऽधोलोकतिर्यग्लोके प्रतरद्वये वर्त्तमाना असङ्ख्येयगुणाः, यतो वहवोऽधोलौकिकग्रामेषु समवसरणादिनिमित्तमधोलोके क्रीडानिमित्तं गमनागमनभावतो वहवश्चाधोलोकात् ज्योतिष्केषु समुत्पद्यमाना यथोक्तं प्रतरद्वयं स्पृशन्ति, ततो घटन्ते पूर्वोक्तेभ्योऽसङ्ख्येयगुणाः, तेभ्यः सङ्ख्येयगुणा अधोलोके, वहूनामधोलोके क्रीडानिमित्तमधोलौकिकग्रामेषु समवसरणादिषु चिरकालावस्थानात्, तेभ्योऽसङ्ख्येयगुणास्तिर्यग्लोके, तिर्यग्लोकस्य तेषां स्वस्थानत्वात्। एवं

ज्योतिष्कदेवीसूत्रमपि भावनीयं । सम्प्रति वैमानिकदेवविषयमल्पबहुत्वमाह—'क्षेत्रानुपातेन' क्षेत्रानुसारेण चिन्त्यमाना वैमानिका देवाः सर्वस्तोकाः ऊर्द्धलोकतिर्यग्लोके—ऊर्द्धलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वये, यतो येऽधोलोके तिर्यग्लोके वा वर्त्तमाना जीवा वैमानिकेषूत्पद्यन्ते ये च तिर्यग्लोके वैमानिका गमनागमनं कुर्वन्ति ये च विवक्षितप्रतरद्वयाध्यासितं क्रीडास्थानं संश्रिता ये च तिर्यग्लोकस्थिता एव वैक्रियसमुद्घातं मारणान्तिकसमुद्घातं वा कुर्वाणास्तथाविधप्रयत्नविशेषादूर्द्धमात्मप्रदेशान् निसृजन्ति ते विवक्षितं प्रतरद्वयं स्पृशन्ति ते चाल्पे इति सर्वस्तोकाः, तेभ्यस्त्रैलोक्ये सङ्ख्येयगुणाः, कथमिति चेत् ?, उच्यते, इह येऽधोलौकिकग्रामेषु समवसरणादिनिमित्तमधोलोके वा क्रीडानिमित्तं गताः सन्तो वैक्रियसमुद्घातं मारणान्तिकसमुद्घातं वा कुर्वाणास्तथाविधप्रयत्नविशेषाद् दूरतरमूर्द्धं विक्षिप्तात्मप्रदेशदण्डा ये च वैमानिकभवादीलिकागत्या च्यवमाना अधोलौकिकग्रामेषु समुत्पद्यन्ते ते किल त्रीनपि लोकान् स्पृशन्ति बहवश्च पूर्वोक्तेभ्य इति सङ्ख्येयगुणाः, तेभ्योऽप्यधोलोकतिर्यग्लोके—अधोलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वये सङ्ख्येयगुणाः, अधोलौकिकग्रामेषु समवसरणादौ गमनागमनभावतो विवक्षितप्रतरद्वयाध्यासितसमवसरणादौ चावस्थानतो बहूनां यथोक्तप्रतरद्वयसंस्पर्शभावात्, तेभ्योऽधोलोके सङ्ख्येयगुणाः, अधोलौकिकग्रामेषु बहूनां समवसरणादाववस्थानभावात्, तेभ्यस्तिर्यग्लोके सङ्ख्येयगुणाः, बहुषु समवसरणेषु बहुषु च क्रीडास्था-

नेषु बहूनामवस्थानभावात्, तेभ्य ऊर्द्धलोकेऽसङ्ख्येयगुणाः, ऊर्द्धलोकस्य स्वस्थानत्वात्, तत्र च सदैव बहुतरभावात्। एवं वैमानिकदेवीविषयं सूत्रमपि भावनीयं ॥ सम्प्रत्येकेन्द्रियादिगतमल्पबहुत्वमाह—

खेत्ताणुवाएणं सव्वत्थोवा एगिंदिया जीवा उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोक्के असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया। खेत्ताणुवाएणं सव्वत्थोवा एगिंदिया जीवा अपज्जत्तगा उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोक्के असंखेज्जगुणा उड्ढलोए असंखेज्जगुणा अहोलोए विसेसाहिया। खित्ताणुवाएणं सव्वत्थोवा एगिंदिया जीवा पज्जत्तगा उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोक्के असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया ( सू० ८५ )

क्षेत्रानुपातेन चिन्त्यमाना एकेन्द्रिया जीवाः सर्वस्तोका ऊर्द्धलोकतिर्यग्लोके—ऊर्द्धलोकतिर्यग्लोकसञ्ज्ञे प्रतरद्वये, यतो ये तत्रस्था एव केचन ये चोर्द्धलोकात्तिर्यग्लोके तिर्यग्लोकादूर्द्धलोके समुत्पित्सवः कृतमारणान्तिकसमुद्घातास्ते किल विवक्षितं प्रतरद्वयं स्पृशन्ति स्वल्पाश्च ते इति सर्वस्तोकाः, तेभ्योऽधोलोकतिर्यग्लोके विशेषाधिकाः, यतो ये अधोलोकात्तिर्यग्लोके तिर्यग्लोकाद्वाऽधोलोके ईलिकागत्या समुत्पद्यमाना विवक्षितं प्रतरद्वयं स्पृशन्ति तत्रस्थाश्च ऊर्द्धलोकाच्चाधोलोके विशेषाधिकास्ततो बहवोऽधोलोकात्तिर्यग्लोके समुत्पद्यमाना अवाप्यन्ते इति

३ अल्पबहुत्वपदे क्षेत्रानुपातेन देवाल्प. एकेन्द्रिया.सू. ८४-८५

विशेषाधिकाः, तेभ्यस्तिर्यग्लोकेऽसङ्ख्येयगुणाः, उक्तप्रतरद्विकक्षेत्रात्तिर्यग्लोकक्षेत्रस्यासङ्ख्येयगुणत्वात्, तेभ्यस्त्रैलोक्येऽसङ्ख्येयगुणाः, बहवो ह्यूर्द्ध्वलोकादधोलोके अधोलोकादूर्द्ध्वलोके च समुत्पद्यन्ते, तेषां च मध्ये बहवो मारणान्तिकसमुद्घातवशाद्विक्षिप्तात्मप्रदेशदण्डास्त्रीनपि लोकान् स्पृशन्ति ततो भवत्यसङ्ख्येयगुणाः, तेभ्य ऊर्द्ध्वलोकेऽसङ्ख्येयगुणाः, उपपातक्षेत्रस्यातिबहुत्वात्, तेभ्योऽधोलोके विशेषाधिकाः, ऊर्द्ध्वलोकक्षेत्रादधोलोकक्षेत्रस्य विशेषाधिकत्वात्। एवमपर्याप्तविषयं पर्याप्तविषयं च सूत्रं भावयितव्यम्॥ अधुना द्वीन्द्रियविषयमल्पबहुत्वमाह—

खेत्ताणुवाएणं सव्वत्थोवा बिइंदिया उड्ढलोए उड्ढलोयतिरियलोए असंखिज्जगुणा तेलुक्के असंखिज्जगुणा अहोलोयतिरियलोए असंखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए संखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवा बेइंदिया अपज्जत्तया उड्ढलोए उड्ढलोयतिरियलोए असंखिज्जगुणा तेलोक्के असंखेज्जगुणा अहोलोयतिरियलोए असंखेज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए संखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवा बेइंदिया पज्जत्ता उड्ढलोए उड्ढलोयतिरियलोए असंखिज्जगुणा तेलोक्के असंखिज्जगुणा अहोलोयतिरियलोए असंखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए संखिज्जगुणा॥ खित्ताणुवाएणं सव्वत्थोवा तेइंदिया उड्ढलोए उड्ढलोयतिरियलोए असंखिज्जगुणा तेलोक्के असंखिज्जगुणा अहोलोयतिरियलोए असंखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए संखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवा तेइंदिया अपज्जत्तया उड्ढलोए उड्ढलोगतिरियलोए असंखिज्जगुणा तेलोक्के असंखिज्जगुणा अहोलोयतिरियलोए असंखिज्जगुणा अहोलोए संखि-

ज्जगुणा तिरियलोए संखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवा तेइंदिया पज्जत्तया उड्ढलोए उड्ढलोयतिरियलोए असंखिज्जगुणा तेलुक्के असंखिज्जगुणा अहोलोयतिरियलोए असंखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए संखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवा चउरिंदिया जीवा उड्ढलोए उड्ढलोयतिरियलोए असंखिज्जगुणा तेलोक्के असंखिज्जगुणा अहोलोयतिरियलोए असंखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए संखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवा चउरिंदिया जीवा अपज्जत्तया उड्ढलोए उड्ढलोयतिरियलोए असंखिज्जगुणा तेलुक्के असंखिज्जगुणा अहोलोयतिरियलोए असंखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए संखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवा चउरिंदिया जीवा पज्जत्तया उड्ढलोए उड्ढलोयतिरियलोए असंखिज्जगुणा तेलोक्के असंखिज्जगुणा अहोलोयतिरियलोए असंखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए संखिज्जगुणा ( सू० ८६ )

'क्षेत्रानुपातेन' क्षेत्रानुसारेण चिन्त्यमाना द्वीन्द्रियाः सर्वस्तोका ऊर्द्ध्वलोके, ऊर्द्ध्वलोकस्यैकदेशे तेषां संभवात्, तेभ्य ऊर्द्ध्वलोकतिर्यग्लोके प्रतरद्वयरूपेऽसङ्ख्येयगुणाः, यतो ये ऊर्द्ध्वलोकात्तिर्यग्लोके तिर्यग्लोकादूर्द्ध्वलोके द्वीन्द्रियत्वेन समुत्पत्तुकामास्तदायुरनुभवन्त ईलिकागत्या समुत्पद्यंते ये च द्वीन्द्रिया एव तिर्यग्लोकादूर्द्ध्वलोके ऊर्द्ध्वलोकाद्वा तिर्यग्लोके द्वीन्द्रियत्वेनान्यत्वेन वा समुत्पत्तुकामाः कृतप्रथममारणान्तिकसमुद्घाताः अत एव द्वीन्द्रियायुः प्रतिसंवेदयमानाः समुद्घातवशाच्च दूरतरविक्षिप्तनिजात्मप्रदेशदण्डा ये च प्रतरद्वयाध्यासितक्षेत्रसमासीनास्ते यथोक्त-

प्रतरद्वयसंस्पर्शिनः बहवश्चेति पूर्वोक्तेभ्योऽसङ्ख्येयगुणाः, तेभ्यस्त्रैलोक्येऽसङ्ख्येयगुणाः, यतो द्वीन्द्रियाणां प्राचुर्येणोत्पत्तिस्थानान्यधोलोके तस्माच्चातिप्रभूतानि तिर्यग्लोके, तत्र ये द्वीन्द्रिया अधोलोकादूर्द्ध्वलोके द्वीन्द्रियत्वेनान्यत्वेन वा समुत्पत्तुकामाः कृतप्रथममारणान्तिकसमुद्घाताः समुद्घातवशाच्चोत्पत्तिदेशं यावत् विक्षिप्तात्मप्रदेशदण्डास्ते द्वीन्द्रियायुः प्रतिसंवेदयमानाः ये चोर्द्ध्वलोकादधोलोके द्वीन्द्रियाः शेषकाया वा यावद् द्वीन्द्रियत्वेन समुत्पद्यमाना द्वीन्द्रियायुरनुभवन्ति ते त्रैलोक्यसंस्पर्शिनः ते च बहव इति पूर्वोक्तेभ्योऽसङ्ख्येयगुणाः, तेभ्योऽधोलोकतिर्यग्लोकप्रतरद्वयरूपेऽसङ्ख्येयगुणाः, यतो येऽधोलोकात्तिर्यग्लोके तिर्यग्लोकाद्वाऽधोलोके द्वीन्द्रियत्वेन समुत्पत्तुकामास्तदायुरनुभवन्त ईलिकागत्या समुत्पद्यन्ते ये च द्वीन्द्रियास्तिर्यग्लोकादधोलोके द्वीन्द्रियत्वेन शेषकायत्वेन वोत्पित्सवः कृतप्रथममारणान्तिकसमुद्घाता द्वीन्द्रियायुरनुभवन्तः समुद्घातवशेनोत्पत्तिदेशं यावद् विक्षिप्तात्मप्रदेशदण्डास्ते यथोक्तं प्रतरद्वयं स्पृशन्ति प्रभूताश्चेति पूर्वोक्तेभ्योऽसङ्ख्येयगुणाः, तेभ्योऽधोलोके सङ्ख्येयगुणाः, तत्रोत्पत्तिस्थानानामतिप्रचुराणां भावात्, तेभ्योऽपि तिर्यग्लोके सङ्ख्येयगुणाः, अतिप्रचुरतराणां योनिस्थानानां तत्र भावात्, यथेदमौघिकं द्वीन्द्रियसूत्रं तथा पर्याप्तापर्याप्तद्वीन्द्रियसूत्रौघिकत्रीन्द्रियपर्याप्तापर्याप्तौघिकचतुरिन्द्रियपर्याप्तापर्याप्तसूत्राणि भावनीयानि ॥ साम्प्रतमौघिकपञ्चेन्द्रियविषयमल्पबहुत्वमाह—

खित्ताणुवाएणं सव्वत्थोवा पंचिंदिया तेलुक्के उड्ढलोयतिरियलोए संखिज्जगुणा अहोलोयतिरियलोए संखिज्जगुणा उड्ढलोए

संखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए असंखिज्जगुणा । खित्ताणुवाएणं सव्वत्थोवा पंचिंदिया अपज्जत्तया तेलोक्के उड्ढलोयतिरियलोए संखेज्जगुणा अहोलोयतिरियलोए संखिज्जगुणा उड्ढलोए संखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए असंखिज्जगुणा । खित्ताणुवाएणं सव्वत्थोवा पंचिंदिया पज्जत्ता उड्ढलोए उड्ढलोयतिरियलोए असंखिज्जगुणा तेलुक्के संखिज्जगुणा अहोलोयतिरियलोए संखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए असंखिज्जगुणा ( सू० ८७ )

क्षेत्रानुपातेन चिन्त्यमानाः पञ्चेन्द्रियाः सर्वस्तोकास्त्रैलोक्ये—त्रैलोक्यसंस्पर्शिनः, यतो येऽधोलोकादूर्द्धलोके ऊर्द्धलोकाद्वाऽधोलोके शेषकायाः पञ्चेन्द्रियायुरनुभवन्त ईलिकागत्या समुत्पद्यन्ते ये च पञ्चेन्द्रिया ऊर्द्धलोकादधोलोके अधोलोकादूर्द्धलोके शेपकायत्वेन पञ्चेन्द्रियत्वेन वोत्पित्सवः कृतमारणान्तिकसमुद्घाताः समुद्घातवशाच्चोत्पत्तिदेशं यावत् विक्षिप्तात्मप्रदेशदण्डाः पञ्चेन्द्रियायुरद्याप्यनुभवन्ति ते त्रैलोक्यसंस्पर्शिनः ते चाल्पे इति सर्वस्तोकाः, तेभ्य ऊर्द्धलोकतिर्यग्लोके प्रतरद्वयरूपे असङ्ख्येयगुणाः, प्रभूततराणामुपपातेन समुद्घातेन वा यथोक्तप्रतरद्वयसंस्पर्शसंभवात्, तेभ्योऽधोलोकतिर्यग्लोके सङ्ख्येयगुणाः, अतिप्रभूततराणामुपपातसमुद्घाताभ्यामधोलोकतिर्यग्लोकसञ्ज्ञप्रतरद्वयसंस्पर्शभावात्, तेभ्य ऊर्द्धलोके सङ्ख्येयगुणाः, वैमानिकानामवस्थानभावात्, तेभ्योऽधोलोके सङ्ख्येयगुणाः, वैमानिकदेवेभ्यः सङ्ख्येयगुणानां नैरयिकाणां तत्र भावात्, तेभ्यस्तिर्यग्लोकेऽसङ्ख्येयगुणाः, संमूर्च्छिमजलचरखचरादीनां व्यन्तरज्योतिष्काणां संमूर्च्छिममनुष्याणां तत्र भावात् । एवं पञ्चेन्द्रियापर्याप्तसूत्रमपि भाव-

नीयं । पञ्चेन्द्रियपर्याप्तसूत्रमिदम्—'खेत्ताणुवाएणं' इत्यादि, क्षेत्रानुपातेन चिन्त्यमानाः पञ्चेन्द्रियाः पर्याप्ताः सर्वस्तोका ऊर्द्धलोके, प्रायो वैमानिकानामेव तत्र भावात्, तेभ्य ऊर्द्धलोकतिर्यग्लोके प्रतरद्वयरूपेऽसङ्ख्येयगुणाः, विवक्षितप्रतरद्वयप्रत्यासन्नज्योतिष्काणां तदध्यासितक्षेत्राश्रितव्यन्तरतिर्यक्पञ्चेन्द्रियाणां वैमानिकव्यन्तरज्योतिष्कविद्याधरचारणमुनितिर्यक्पञ्चेन्द्रियाणामूर्द्धलोके तिर्यग्लोके च गमनागमने कुर्वतामधिकृतप्रतरद्वयसंस्पर्शात्, तेभ्यस्त्रैलोक्ये—त्रैलोक्यसंस्पर्शिनः सङ्ख्येयगुणाः, कथमिति चेत्, उच्यते, यतो ये भवनपतिव्यन्तरज्योतिष्कवैमानिकाः विद्याधरा वाऽधोलोकस्थाः कृतवैक्रियसमुद्घातास्तथाविधप्रयत्नविशेषादूर्द्धलोके विक्षिप्तात्मप्रदेशदण्डास्ते त्रीनपि लोकान् स्पृशन्ति इति सङ्ख्येयगुणाः, तेभ्योऽधोलोकतिर्यग्लोके प्रतरद्वयरूपे सङ्ख्येयगुणाः, बहवो हि व्यन्तराः स्वस्थानप्रत्यासन्नतया भवनपतयस्तिर्यग्लोके ऊर्द्धलोके वा व्यन्तरज्योतिष्कवैमानिका देवा अधोलौकिकग्रामेषु समवसरणादौ अधोलोके क्रीडादिनिमित्तं च गमनागमनकरणतः तथा समुद्रेषु केचित्तिर्यक्पञ्चेन्द्रियाः स्वस्थानप्रत्यासन्नतया अपरे तदध्यासितक्षेत्राश्रिततया यथोक्तं प्रतरद्वयं स्पृशन्ति ततः सङ्ख्येयगुणाः, तेभ्योऽधोलोके सङ्ख्येयगुणाः, नैरयिकाणां भवनपतीनां च तत्रावस्थानात्, तेभ्यस्तिर्यग्लोकेऽसङ्ख्येयगुणाः, तिर्यक्पञ्चेन्द्रियमनुष्यव्यन्तरज्योतिष्काणामवस्थानात्। तदेवमुक्तं पञ्चेन्द्रियाणामल्पबहुत्वम्, इदानीमेकेन्द्रियभेदानां पृथिवीकायिकादीनां पञ्चानामौधिकपर्याप्तापर्याप्तभेदेन प्रत्येकं त्रीणि त्रीण्यल्पबहुत्वान्याह—

खित्ताणुवाएणं सवत्थोवा पुढविकाइया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया । खित्ताणुवाएणं सवत्थोवा पुढविकाइया अपज्जत्तया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया । खित्ताणुवाएणं सवत्थोवा पुढविकाइगा पज्जत्तया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलुके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया ॥ खित्ताणुवाएणं सवत्थोवा आउकाइया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलुके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया । खित्ताणुवाएणं सवत्थोवा आउकाइया अपज्जत्तया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया । खित्ताणुवाएणं सवत्थोवा आउकाइया पज्जत्तया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया ॥ खित्ताणुवाएणं सवत्थोवा तेउकाइया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया । खित्ताणुवाएणं सवत्थोवा तेउकाइया अपज्जत्तया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया । खित्ताणुवाएणं सवत्थोवा तेउकाइया पज्जत्तया उड्ढलो-

यतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोके असंखिज्जगुणा उड्ढलोए असंखेज्जगुणा अहोलोए विसेसाहिया ॥ खित्ताणुवाएणं सव्वत्थोवा वाउकाइया अपज्जत्तया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलुक्के असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया। खित्ताणुवाएणं सव्वत्थोवा वाउकाइया पज्जत्तया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलुक्के असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया ॥ खित्ताणुवाएणं सव्वत्थोवा वणस्सइकाइया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया। खित्ताणुवाएणं सव्वत्थोवा वणस्सइकाइया अपज्जत्तया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलुक्के असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया। खित्ताणुवाएणं सव्वत्थोवा वणस्सइकाइया पज्जत्तया उड्ढलोयतिरियलोए अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा तेलोके असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया ( सू० ८८ )

इमानि पञ्चदशापि सूत्राणि प्रागुक्तैकेन्द्रियसूत्रवद्भावनीयानि । साम्प्रतमौघिकत्रसकायापर्याप्तपर्याप्तत्रसकायसूत्राण्याह—

खित्ताणुवाएणं सव्वत्थोवा तसकाइया तेलोके उड्ढलोयतिरियलोए असंखिज्जगुणा अहोलोयतिरियलोए संखिज्जगुणा उड्ढ-

लोए संखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए असंखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवा तसकाइया अपज्जत्तया तेलोक्के उड्ढलोयतिरियलोए असंखिज्जगुणा अहोलोयतिरियलोए संखिज्जगुणा उड्ढलोए संखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए असंखिज्जगुणा। खित्ताणुवाएणं सव्वत्थोवा तसकाइया पज्जत्तया तेलोक्के उड्ढलोयतिरियलोए असंखिज्जगुणा अहोलोयतिरियलोए संखिज्जगुणा उड्ढलोए संखिज्जगुणा अहोलोए संखिज्जगुणा तिरियलोए असंखिज्जगुणा॥ (सू० ८९)

इमानि पञ्चेन्द्रियसूत्रवद् भावनीयानि। गतं क्षेत्रद्वारम्, इदानीं वन्धद्वारं वक्तव्यं—वन्धोपलक्षितं द्वारं, तदाह—

एएसि णं भंते! जीवाणं आउयस्स कम्मस्स वंधगाणं अवंधगाणं पज्जत्ताणं अपज्जत्ताणं सुत्ताणं जागराणं समोहयाणं असमोहयाणं सायावेयगाणं असायावेयगाणं इंदिओवउत्ताणं नोइंदिओवउत्ताणं सागारोवउत्ताणं अणागारोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा?, गोयमा! सव्वत्थोवा जीवा आउयस्स कम्मस्स वंधगा १ अपज्जत्तया संखेज्जगुणा २ सुत्ता संखेज्जगुणा ३ समोहया संखेज्जगुणा ४ सायावेयगा संखेज्जगुणा ५ इंदिओवउत्ता संखेज्जगुणा ६ अणागारोवउत्ता संखेज्जगुणा ७ सागारोवउत्ता संखेज्जगुणा ८ नोइंदिओवउत्ता विसेसाहिया ९ असायावेयगा विसेसाहिया १० असमोहया विसेसाहिया ११ जागरा विसेसाहिया १२ पज्जत्तया विसेसाहिया १३ आउयस्स कम्मस्स अवंधया विसेसाहिया १४ (सू० ९०)

इहायुःकर्मबन्धकाबन्धकानां पर्याप्तापर्याप्तानां सुप्तजाग्रतां समवहतासमवहतानां सातवेदकासातवेदकानां इन्द्रियोपयुक्तनोइन्द्रियोपयुक्तानां साकारोपयुक्तानाकारोपयुक्तानां समुदायेनाल्पबहुत्वं वक्तव्यं, तत्र प्रत्येकं तावद् ब्रूमः येन समुदायेन सुखेन तदवगम्यते, तत्र सर्वस्तोकाः आयुषो बन्धका अबन्धकाः सङ्ख्येयगुणाः, यतोऽनुभूयमानभवायुषि त्रिभागावशेषे पारभविकमायुर्जीवा बध्नन्ति त्रिभागत्रिभागाद्यवशेषे वा ततो द्वौ त्रिभागावबन्धकाल एकस्त्रिभागो बन्धकाल इति बन्धकेभ्योऽबन्धकाः सङ्ख्येयगुणाः । तथा सर्वस्तोका अपर्याप्तकाः पर्याप्तकाः सङ्ख्येयगुणाः, एतच्च सूक्ष्मजीवानधिकृत्य वेदितव्यं, सूक्ष्मेषु हि बाह्यो व्याघातो न भवति ततस्तद्भावाद् बहूनां निष्पत्तिः स्तोकानामेव चानिष्पत्तिः । तथा सर्वस्तोकाः सुप्ताः, जागराः सङ्ख्येयगुणाः, एतदपि सूक्ष्मानेकेन्द्रियानधिकृत्य वेदितव्यं, यस्मादपर्याप्ताः सुप्ता एव लभ्यन्ते, पर्याप्ता जागरा अपि, [उक्तं च मूलटीकायां—"जम्हा अपज्जत्ता सुत्ता लब्भंति, केइ अपज्जत्तगा जेसिं संखिज्जा समया अतीता ते य थोवा इयरेऽवि थोवगा चेव सेसा, जागरा पज्जत्ता ते संखिज्जगुणा" इति ] जागराः पर्याप्तास्तेन सङ्ख्येयगुणा इति । तथा समवहताः सर्वस्तोकाः, यत इह समवहता मारणान्तिकसमुद्घातेन परिगृह्यन्ते, मारणान्तिकश्च समुद्घातो मरणकाले न शेषकालं, तत्रापि न सर्वेषामिति सर्वस्तोकाः, तेभ्योऽसमवहता असङ्ख्येयगुणाः, जीवनकालस्यातिबहुत्वात् । तथा सर्वस्तोकाः सातवेदकाः, यत इह बहवः साधारणशरीरा अल्पे च प्रत्येकशरीरिणः, साधारणशरीराश्च बहवोऽसातवेदकाः स्वल्पाः सातवेदिनः

प्रत्येकशरीरिणस्तु भूयांसः सातवेदकाः स्तोका असातवेदिनः, ततः स्तोकाः सातवेदकाः तेभ्योऽसातवेदकाः सङ्ख्येयगुणाः। तथा सर्वस्तोका इन्द्रियोपयुक्ताः तेभ्यो नोइन्द्रियोपयुक्ताः सङ्ख्येयगुणाः, इन्द्रियोपयोगो हि प्रत्युत्पन्नकालविषयः ततस्तदुपयोगकालस्य स्तोकत्वात् पृच्छासमये स्तोका अवाप्यन्ते, यदा तु तमेवार्थमिन्द्रियेण दृष्ट्वा विचारयत्योघसञ्ज्ञयाऽपि तदा नोइन्द्रियोपयुक्तः स व्यपदिश्यते ततो नोइन्द्रियोपयोगस्यातीतानागतकालविषयतया बहुकालत्वात् सङ्ख्येयगुणा नोइन्द्रियोपयुक्ताः। तथा सर्वस्तोका अनाकारोपयुक्ताः, अनाकारोपयोगकालस्य स्तोकत्वात्, साकारोपयुक्ताः सङ्ख्येयगुणाः, अनाकारोपयोगकालात् साकारोपयोगकालस्य सङ्ख्येयगुणत्वात् ॥ इदानीं समुदायगतं सूत्रोक्तमल्पबहुत्वं भाव्यते—सर्वस्तोका जीवा आयुःकर्मणो बन्धकाः, आयुर्बन्धकालस्य प्रतिनियतत्वात्, तेभ्योऽपर्याप्ताः सङ्ख्येयगुणाः, यस्मादपर्याप्ता अनुभूयमानभवत्रिभागाद्यवशेषायुषः पारभविकमायुर्बध्नन्ति ततो द्वौ त्रिभागावबन्धकाल एको बन्धकाल इति बन्धकालादबन्धकालः सङ्ख्येयगुणः तेन सङ्ख्येयगुणा एवापर्याप्ता आयुर्बन्धकेभ्यः, तेभ्योऽपर्याप्तेभ्य सुप्ताः सङ्ख्येयगुणाः, यस्मादपर्याप्तेषु पर्याप्तेषु च सुप्ता लभ्यन्ते, पर्याप्ताश्चापर्याप्तेभ्यः सङ्ख्येयगुणा इत्यपर्याप्तेभ्यः सुप्ताः सङ्ख्येयगुणाः, तेभ्यः समवहताः सङ्ख्येयगुणाः, बहूनां पर्याप्तेष्वपर्याप्तेषु मारणान्तिकसमुद्घातेन समवहतानां सदा लभ्यमानत्वात्, तेभ्यः सातवेदकाः सङ्ख्येयगुणाः, आयुर्बन्धकापर्याप्तसुप्तेष्वपि सातवेदकानां लभ्यमानत्वात्, तेभ्य इन्द्रियोपयुक्ताः सङ्ख्येयगुणाः, असातवेदकानामपि

३ अल्पबहुत्वपदे आयुर्बन्धकाद्यल्प.सू.९०

इन्द्रियोपयोगस्य लभ्यमानत्वात्, तेभ्योऽनाकारोपयोगोपयुक्ताः सङ्ख्येयगुणाः, इन्द्रियोपयोगेषु नोइन्द्रियोपयोगेषु चानाकारोपयोगस्य लभ्यमानत्वात्, तेभ्यः साकारोपयुक्ताः सङ्ख्येयगुणाः, इन्द्रियोपयोगेषु नोइन्द्रियोपयोगेषु च साकारोपयोगकालस्य बहुत्वात्, तेभ्यो नोइन्द्रियोपयोगोपयुक्ता विशेषाधिकाः, नोइन्द्रियानाकारोपयुक्तानामपि तत्र प्रक्षेपात्, अत्र विनेयजनानुग्रहार्थमसद्भावस्थापनया निदर्शनमुच्यते—इह सामान्यतः किल साकारोपयुक्ता द्विनवत्यधिकं शतं १९२, ते च किल द्विधा—इन्द्रियसाकारोपयुक्ता नोइन्द्रियसाकारोपयुक्ताश्च, तत्रेन्द्रियसाकारोपयुक्ताः किलातीव स्तोका इति विंशतिसङ्ख्याः कल्प्यन्ते, शेषं द्विसप्तत्युत्तरशतं १७२ नोइन्द्रियसाकारोपयुक्ताः, नोइन्द्रियानाकारोपयुक्ताश्च द्विपञ्चाशत्कल्पाः, ततः सामान्यतः साकारोपयुक्तेभ्यः इन्द्रियसाकारोपयुक्तेषु विंशतिकल्पेष्वपनीतेषु द्विपञ्चाशत्कल्पेषु अनाकारोपयुक्तेषु तेषु मध्ये प्रक्षिप्तेषु द्वे शते चतुर्विंशत्यधिके भवतः, ततः साकारोपयुक्तेभ्यो नोइन्द्रियोपयुक्ता विशेषाधिकाः, तेभ्योऽसातवेदका विशेषाधिकाः, इन्द्रियोपयुक्तानामप्यसातवेदकत्वात्, तेभ्योऽसमवहता विशेषाधिकाः, सातवेदकानामप्यसमवहतत्वभावात्, तेभ्यो जागरा विशेषाधिकाः, समवहतानामपि केषांचिज्जागरत्वात्, तेभ्यः पर्याप्ताः विशेषाधिकाः, सुप्तानामपि केषाञ्चित्पर्याप्तत्वात्, सुप्ता हि पर्याप्ता अपि भवन्ति जागरास्तु पर्याप्ता एवेति नियमः, तेभ्योऽपि पर्याप्तेभ्यः आयुःकर्मबन्धकाः विशेषाधिकाः, अपर्याप्तानामप्यायुःकर्मबन्धकत्वभावात्, इदमेवाल्पबहुत्वं विनेयजनानुग्रहाय स्थापनाराशिभिरुपदर्श्यते—इह द्वे

पङ्क्ती उपर्यधोभावेन न्यस्येते, तत्रोपरितन्या पङ्क्तावायुःकर्मबन्धका अपर्याप्ताः सुप्ताः समवहताः सातवेदका इन्द्रियोपयुक्ताः अनाकारोपयुक्ताः क्रमेण स्थाप्यन्ते, तस्या अधस्तन्यां पङ्क्तौ तेषामेव पदानामधस्तात् यथासङ्ख्यमायुरबन्धकाः पर्याप्ता जागरा असमवहता असातवेदका नोइन्द्रियोपयुक्ताः साकारोपयुक्ताः । स्थापना चेयं

| | | | | | | |
|---|---|---|---|---|---|---|
| आयुर्बन्धकाः १ | अपर्याप्ताः २ | सुप्ताः ४ | समवहताः ८ | सातवेदकाः १६ | इन्द्रियोपयुक्ताः ३२ | अनाकारोपयुक्ताः ६४ |
| आयुरबन्धकाः २५५ | पर्याप्ताः २५४ | जागराः २५२ | असमवहताः २४८ | असातवेदकाः २४० | नोइन्द्रियोपयुक्ताः २२४ | साकारोपयुक्ताः १९२ |

अत्रोपरितन्यां पङ्क्तौ सर्वाण्यपि पदानि सङ्ख्येयगुणानि, आयुःपदं सर्वेषामाद्यमिति तत्परिमाणसङ्ख्यायामेकः स्थाप्यते, ततः शेषपदानि किल जघन्येन सङ्ख्येयेन सङ्ख्येयगुणानीति द्विगुणद्विगुणाङ्कः तेषु स्थाप्यते, तद्यथा—द्वौ चत्वारः अष्टौ षोडश द्वात्रिंशत् चतुष्षष्टिः, सर्वोऽपि जीवराशिरनन्तानन्तस्वरूपोऽप्यसत्कल्पनया षट्पञ्चाशदधिकशतद्वयपरिमाणः परिकल्प्यते, ततोऽस्माद् राशेरायुर्बन्धकादिगताः सङ्ख्याः शोधयित्वा यद्यत् शेषमवतिष्ठति तत्तदायुरबन्धकादीनां परिमाणं स्थापयितव्यं, तद्यथा—आयुरबन्धकादिपदे द्वे शते पञ्चपञ्चाशदधिके, शेषेषु यथोक्तक्रमं द्वे शते चतुःपञ्चाशदधिके द्वे शते द्विपञ्चाशदधिके द्वे शते अष्टाचत्वारिंशदधिके द्वे शते चत्वारिंशदधिके द्वे शते चतुर्विंशत्यधिके द्विनवत्यधिकं शतं, एवं च सत्युपरितनपङ्क्तिगतान्यनाकारोपयुक्तपर्यन्तानि पदानि सङ्ख्येयगुणानि द्विगुणद्विगुणा-

धिकत्वात्, ततः परं साकारोपयुक्तपदमपि सङ्ख्येयगुणं त्रिगुणत्वात्, शेषाणि तु नोइन्द्रियोपयुक्तादीनि प्रतिलोमं विशेषाधिकानि, द्विगुणत्वस्यापि क्वचिदभावात् ॥ तदेवं गतं बन्धद्वारम्, इदानीं पुद्गलद्वारमाह—

खित्ताणुवाएणं सव्वत्थोवा पुग्गला तेलोक्के उड्ढलोयतिरियलोए अणंतगुणा अहोलोयतिरियलोए विसेसाहिया तिरियलोए असंखिज्जगुणा उड्ढलोए असंखिज्जगुणा अहोलोए विसेसाहिया ॥ दिसाणुवाएणं सव्वत्थोवा पुग्गला उड्ढदिसाए अहोलोए विसेसाहिया उत्तरपुरच्छिमेणं दाहिणपच्चत्थिमेण य दोवि तुल्ला असंखिज्जगुणा दाहिणपुरच्छिमेण उत्तरपच्चत्थिमेण य दोवि विसेसाहिया पुरच्छिमेणं असंखिज्जगुणा पच्चत्थिमेणं विसेसाहिया दाहिणेणं विसेसाहिया उत्तरेणं विसेसाहिया ॥ खित्ताणुवाएणं सव्वत्थोवाइं दव्वाइं तेलोक्के उड्ढलोयतिरियलोए अणंतगुणाइं अहोलोयतिरियलोए विसेसाहियाइं उड्ढलोए असंखिज्जगुणाइं अहोलोए अणंतगुणाइं तिरियलोए संखिज्जगुणाइं ॥ दिसाणुवाएणं सव्वत्थोवाइं दव्वाइं अहोदिसाए उड्ढदिसाए अणंतगुणाइं उत्तरपुरच्छिमेणं दाहिणपच्चत्थिमेण य दोवि तुल्लाइं असंखिज्जगुणाइं दाहिणपुरच्छिमेणं उत्तरपच्चत्थिमेण य दोवि तुल्लाइं विसेसाहियाइं पुरच्छिमेणं असंखिज्जगुणाइं पच्चत्थिमेणं विसेसाहियाइं दाहिणेणं विसेसाहियाइं उत्तरेणं विसेसाहियाइं ( सू० ९१ )

इदमल्पबहुत्वं पुद्गलानां द्रव्यार्थत्वमङ्गीकृत्य व्याख्येयं, तथासम्प्रदायात्, तत्र 'क्षेत्रानुपातेन' क्षेत्रानुसारेण चिन्त्यमानाः पुद्गलास्त्रैलोक्ये—त्रैलोक्यसंस्पर्शिनः सर्वस्तोकाः, सर्वस्तोकानि त्रैलोक्यव्यापीनि पुद्गलद्रव्याणीति

भावः, यस्मात् महास्कन्धा एव त्रैलोक्यव्यापिनः ते चाल्पा इति, तेभ्य ऊर्द्ध्वलोकतिर्यग्लोकेऽनन्तगुणाः, यतस्तिर्यग्लोकस्य यत्सर्वोपरितनमेकप्रादेशिकं प्रतरं यच्चोर्द्ध्वलोकस्य सर्वाधस्तनमेकप्रादेशिकं प्रतरमेते द्वे अपि प्रतरे ऊर्द्ध्वलोकतिर्यग्लोक उच्यते ते चानन्ताः सङ्ख्येयप्रादेशिकाः अनन्ता असङ्ख्येयप्रादेशिकाः अनन्ता अनन्तप्रादेशिकाः स्कन्धाः स्पृशन्तीति द्रव्यार्थतयाऽनन्तगुणाः, तेभ्योऽधोलोकतिर्यग्लोके प्रागुक्तप्रकारेण प्रतरद्वयरूपे विशेषाधिकाः, क्षेत्रस्याऽऽयामविष्कम्भाभ्यां मनाग् विशेषाधिकत्वात्, तेभ्यस्तिर्यग्लोकेऽसङ्ख्येयगुणाः, क्षेत्रस्यासङ्ख्येयगुणत्वात्, तेभ्यऊर्द्ध्वलोकेऽसङ्ख्येयगुणाः, यतस्तिर्यग्लोकक्षेत्रादूर्द्ध्वलोकक्षेत्रमसङ्ख्येयगुणमिति, तेभ्योऽधोलोके विशेषाधिकाः, ऊर्द्ध्वलोकादधोलोकस्य विशेषाधिकत्वात्, देशोनसप्तरज्जुप्रमाणो ह्यूर्द्ध्वलोकः समधिकसप्तरज्जुप्रमाणस्त्वधोलोकः ॥ सम्प्रति दिगनुपातेनाल्पबहुत्वमाह—'दिगनुपातेन' दिगनुसारेण चिन्त्यमानाः पुद्गलाः सर्वस्तोकाः ऊर्द्ध्वदिशि, इह रत्नप्रभासमभूतलमेरुमध्येऽष्टप्रादेशिको रुचकस्तस्माद्विनिर्गता चतुःप्रदेशा ऊर्द्ध्वदिग् यावल्लोकान्तस्ततस्तत्र सर्वस्तोकाः पुद्गलाः, तेभ्योऽधोदिशि विशेषाधिकाः, अधोदिगपि रुचकादेव प्रभवति चतुष्प्रदेशा यावल्लोकान्तस्ततस्तस्या विशेषाधिकत्वात् तत्र पुद्गला विशेषाधिकाः, तेभ्य उत्तरपूर्वस्यां दक्षिणपश्चिमायां च प्रत्येकमसङ्ख्येयगुणाः, स्वस्थाने तु परस्परं तुल्याः, यतस्ते द्वे अपि दिशौ रुचकाद्विनिर्गते मुक्तावलिसंस्थिते तिर्यग्लोकान्तमधोलोकान्तमूर्द्ध्वलोकान्तं पर्यवसिते, तेन क्षेत्रस्यासङ्ख्येयगुणत्वात्तत्र पुद्गला असङ्ख्येयगुणाः, क्षेत्रं तु स्वस्थाने सममिति पुद्गला अपि स्वस्थाने

तुल्याः, तेभ्योऽपि दक्षिणपूर्वस्यामुत्तरपश्चिमाया च प्रत्येकं विशेषाधिकाः, स्वस्थाने तु परस्परं तुल्याः, कथं विशेषाधिका इति चेत्?, उच्यते, इह सौमनसगन्धमादनेषु सप्त सप्त कूटानि विद्युत्प्रभमाल्यवतोर्नव नव, तेषु च कूटेषु धूमिका अवश्यायादिसूक्ष्मपुद्गलाः प्रभूताः संभवन्ति ततो विशेषाधिकाः, स्वस्थाने तु क्षेत्रस्य पर्वतादेश्च समानत्वात् तुल्याः, तेभ्यः पूर्वस्यां दिशि असङ्ख्येयगुणाः, क्षेत्रस्यासङ्ख्येयगुणत्वात्, तेभ्यः पश्चिमायां विशेषाधिकाः, अधोलौकिकग्रामेषु शुषिरभावतो बहूनां पुद्गलानामवस्थानभावात्, दक्षिणेन विशेषाधिकाः, बहुभुवनशुषिरभावात्, तेभ्य उत्तरस्यां दिशि विशेषाधिकाः, यत उत्तरस्यामायामविष्कम्भाभ्यां सङ्ख्येययोजनकोटीकोटीप्रमाणं मानसं सरस्तत्र ये जलचराः पनकसेवालादयश्च सत्त्वास्ते अतिबहव इति तेषां ये तैजसकार्मणपुद्गलास्तेऽधिकाः प्राप्यन्ते इति पूर्वोक्तेभ्यो विशेषाधिकाः ॥ तदेवं पुद्गलविषयमल्पबहुत्वमुक्तम्, इदानीं सामान्यतो द्रव्यविषयं क्षेत्रानुपातेनाह—क्षेत्रानुपातेन चिन्त्यमानानि द्रव्याणि सर्वस्तोकानि त्रैलोक्ये—त्रैलोक्यसंस्पर्शीनि, यतो धर्म्मास्तिकायाधर्म्मास्तिकायाकाशास्तिकायद्रव्याणि पुद्गलास्तिकायस्य महास्कन्धा जीवास्तिकायस्य मारणान्तिकसमुद्घातेनातीव समवहता जीवाः त्रैलोक्यव्यापिनः ते चाल्पे इति सर्वस्तोकानि, तेभ्य ऊर्द्ध्वलोकतिर्यग्लोके—प्रागुक्तस्वरूपप्रतरद्वयात्मकेऽनन्तगुणानि, अनन्तैः पुद्गलद्रव्यैरनन्तैर्जीवद्रव्यैस्तस्य संस्पर्शात्, तेभ्योऽधोलोकतिर्यग्लोके विशेषाधिकानि, ऊर्द्ध्वलोकतिर्यग्लोकादधोलोकतिर्यग्लोकस्य मनाग् विशेषाधिकत्वात्, तेभ्य ऊर्द्ध्वलोकेऽसङ्ख्येयगुणानि, क्षेत्रस्यासङ्ख्येयगुण-

त्वात्, तेभ्योऽधोलोकेऽनन्तगुणानि, कथमिति चेत्?, उच्यते, इहाधोलौकिकग्रामेषु कालोऽस्ति, तस्य च कालस्य तत्तत्परमाणुसङ्ख्येयासङ्ख्येयानन्तप्रादेशिकद्रव्यक्षेत्रकालभावपर्यायसम्बन्धवशात् प्रतिपरमाण्वादिद्रव्यमनन्तता ततो भवन्त्यधोलोकेऽनन्तगुणानि, तेभ्यस्तिर्यग्लोके सङ्ख्येयगुणानि, अधोलौकिकग्रामप्रमाणानां खण्डानां मनुष्यलोके कालद्रव्याधारभूते सङ्ख्येयानामवाप्यमानत्वात् ॥ सम्प्रति दिगनुपातेन सामान्यतो द्रव्याणामल्पबहुत्वमाह—'दिगनुपातेन' दिगनुसारेण चिन्त्यमानानि सामान्यतो द्रव्याणि सर्वस्तोकान्यधोदिशि—प्राग्व्यावर्णितस्वरूपायां, तेभ्य ऊर्द्ध्वदिश्यनन्तगुणानि, किं कारणमिति चेत्?, उच्यते, इहोर्द्ध्वलोके मेरोः पञ्चयोजनशतिकं स्फटिकमयं काण्डं, तत्र चन्द्रादित्यप्रभाऽनुप्रवेशात् द्रव्याणां क्षणादिकालप्रतिभागोऽस्ति, कालस्य च प्रागुक्तनीत्या प्रतिपरमाण्वादिद्रव्यमानन्त्यात् तेभ्योऽनन्तगुणानि, तेभ्य उत्तरपूर्वस्यामीशान्यां दक्षिणपश्चिमायां—नैऋतकोणे इत्यर्थः असङ्ख्येयगुणानि, क्षेत्रस्यासङ्ख्येयगुणत्वात्, स्वस्थाने तु द्वयान्यपि परस्परं तुल्यानि, समानक्षेत्रत्वात्, तेभ्यो दक्षिणपूर्वस्याम्—आग्नेय्यामुत्तरपश्चिमायां—वायव्यकोणे इति भावः विशेषाधिकानि, विद्युत्प्रभमाल्यवत्कूटाश्रितानां धूमिकाऽवश्यायादिश्लक्ष्णपुद्गलद्रव्याणां बहूनां संभवात्, तेभ्यः पूर्वस्यां दिश्यसङ्ख्येयगुणानि, क्षेत्रस्यासङ्ख्येयगुणत्वात्, तेभ्यः पश्चिमायां विशेषाधिकानि, अधोलौकिकग्रामेषु शुषिरभावतो बहूनां पुद्गलद्रव्याणामवस्थानसंभवात्, ततो दक्षिणस्यां दिशि विशेषाधिकानि, बहुभुवनशुषिरभावात्, तत उत्तरस्यां विशेषाधिकानि, तत्र मानससरसि जीवद्रव्याणां तदा-

३ अल्पबहुत्वपदे क्षेत्रदिग्भ्यां पुद्गलद्रव्याल्प.सू.९१

श्रितानां तैजसकार्मणपुद्गलस्कन्धद्रव्याणां च भूयसां भावात् ॥ सम्प्रति परमाणुपुद्गलानां सङ्ख्येयप्रदेशानामसङ्ख्येयप्रदेशानामनन्तप्रदेशानां परस्परमल्पबहुत्वमाह—

एएसि णं भंते ! परमाणुपोग्गलाणं संखेज्जपएसियाणं असंखेज्जपएसियाणं अणंतपएसियाण य खंधाणं दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा अणंतपएसिया खंधा दव्वट्ठयाए परमाणुपोग्गला दव्वट्ठयाए अणंतगुणा संखेज्जपएसिया खंधा दव्वट्ठयाए संखेज्जगुणा असंखपएसिया खंधा दव्वट्ठयाए असंखेज्जगुणा पएसट्ठयाए सव्वत्थोवा अणंतपएसिया खंधा पएसट्ठयाए परमाणुपोग्गला अपएसट्ठयाए अणंतगुणा संखेज्जपएसिया खंधा पएसट्ठयाए संखेज्जगुणा असंखपएसिया खंधा पएसट्ठयाए असंखेज्जगुणा दव्वट्ठपएसट्ठयाए सव्वत्थोवा अणंतपएसिया खंधा दव्वट्ठयाए ते चेव पएसट्ठयाए अणंतगुणा परमाणुपोग्गला दव्वट्ठपएसट्ठयाए अणंतगुणा संखेज्जपएसिया खंधा दव्वट्ठयाए संखेज्जगुणा ते चेव पएसट्ठयाए संखेज्जगुणा असंखपएसिया खंधा दव्वट्ठयाए असंखेज्जगुणा ते चेव पएसट्ठयाए असंखेज्जगुणा ॥ एएसिणं भंते ! एगपएसोगाढाणं संखेज्जपएसोगाढाणं असंखेज्जपएसोगाढाण य पोग्गलाणं दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा एगपएसोगाढा पोग्गला दव्वट्ठयाए संखेज्जपएसोगाढा पोग्गला दव्वट्ठयाए संखेज्जगुणा असंखेज्जपएसोगाढा पोग्गला दव्वट्ठयाए असंखेज्जगुणा पएसट्ठयाए सव्वत्थोवा एगपएसोगाढा पोग्गला

पएसट्ठयाए संखिज्जपएसोगाढा पोग्गला पएसट्ठयाए संखिज्जगुणा असंखिज्जपएसोगाढा पुग्गला पएसट्ठयाए असंखेज्जगुणा दव्वट्ठपएसट्ठयाए सव्वत्थोवा एगपएसोगाढा पुग्गला दव्वट्ठपएसट्ठयाए संखिज्जपएसोगाढा पुग्गला दव्वट्ठयाए संखिज्जगुणा ते चेव पएसट्ठयाए संखिज्जगुणा असंखिज्जपएसोगाढा पुग्गला दव्वट्ठयाए असंखिज्जगुणा ते चेव पएसट्ठयाए असंखिज्जगुणा । एएसि णं भन्ते! एगसमयठिइयाणं० असंखिज्जसमयठिइयाणं पुग्गलाणं दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे कयरेहिंतो अप्पां वा वहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा एगसमयठिइया पुग्गला दव्वट्ठयाए संखिज्जसमयठिइया पुग्गला दव्वट्ठयाए संखिज्जगुणा असंखिज्जसमयठिइया पुग्गला दव्वट्ठयाए असंखिज्जगुणा पएसट्ठयाए सव्वत्थोवा एगसमयठिइया पुग्गला पएसट्ठयाए संखिज्जसमयठिइया पुग्गला पएसट्ठयाए संखेज्जगुणा असंखिज्जसमयठिइया पुग्गला पएसट्ठयाए असंखेज्जगुणा दव्वट्ठपएसट्ठयाए सव्वत्थोवा एगसमयठिइया पुग्गला दव्वट्ठपएसट्ठयाए संखिज्जसमयठिइया पुग्गला दव्वट्ठयाए संखिज्जगुणा ते चेव पएसट्ठयाए संखिज्जगुणा असंखिज्जसमयठिइया पुग्गला दव्वट्ठयाए असंखिज्जगुणा ते चेव पएसट्ठयाए असंखिज्जगुणा । एएसि णं भंते एगगुणकालगाणं संखिज्जगुणकालगाणं असंखिज्जगुणकालगाणं अणंतगुणकालगाण य पुग्गलाणं दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए य कयरे कयरेहिंतो अप्पा वा वहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! जहा पुग्गला तहा भाणियव्वा, एवं संखिज्जगुणकालगाणवि, एवं सेसावि वण्णा गंधा रसा फासा भाणियव्वा, फासाणं कक्खडमउयगुरुयलहुयाणं जहा एगपएसोगाढाणं भणियं तहा भाणियव्वं । अवसेसा फासा जहा वन्ना तहा भाणियव्वा ॥ दारं ( सू० ९२ )

३ अल्पबहुत्वपदे द्रव्यक्षेत्रकालभावाल्प.सू. ९२

'एएसि णं भंते ! परमाणुपोग्गलाणं संखेज्जपएसियाणं' इत्यादि पाठसिद्धं, नवरमत्राल्पबहुत्वभावनायां सर्वत्र तथास्वाभाव्यं कारणं वाच्यं । सम्प्रत्येतेषामेव क्षेत्रप्राधान्येनाल्पबहुत्वमाह—इह क्षेत्राधिकारतः क्षेत्रस्य प्राधान्यात् परमाणुकाद्यनन्ताणुकस्कन्धा अपि विवक्षितैकप्रदेशावगाढा आधाराधेययोरभेदोपचारादेकद्रव्यत्वेन व्यवह्रियन्ते, ते इत्थंभूता एकप्रदेशावगाढाः पुद्गलाः—पुद्गलद्रव्याणि सर्वस्तोकानि, लोकाकाशप्रदेशप्रमाणानीत्यर्थः, न हि स कश्चिदेवंभूत आकाशप्रदेशोऽस्ति य एकप्रदेशावगाहनपरिणामपरिणतानां परमाण्वादीनामवकाशदानपरिणामेन परिणतो न वर्त्तते इति, तेभ्यः सङ्ख्येयप्रदेशावगाढाः पुद्गला द्रव्यार्थतया सङ्ख्येयगुणाः, कथमिति चेत् ?, उच्यते, इहापि क्षेत्रस्य प्राधान्यात् द्व्यणुकाद्यनन्ताणुकस्कन्धा द्विप्रदेशावगाढा एकद्रव्यत्वेन विवक्ष्यन्ते, तानि च तथाभूतानि पुद्गलद्रव्याणि पूर्वोक्तेभ्यः सङ्ख्येयगुणानि, तथाहि—सर्वलोकप्रदेशास्तत्त्वतोऽसङ्ख्येया अपि असत्कल्पनया दश परिकल्प्यन्ते, ते च प्रत्येकचिन्तायां दशैवेति दश एकप्रदेशावगाढानि पुद्गलद्रव्याणि लब्धानि, तेष्वेव च दशसु प्रदेशेषु अन्यग्रहणान्यमोक्षणद्वारेण बहवो द्विकसंयोगा लभ्यन्ते इति भवन्त्येकप्रदेशावगाढेभ्यो द्विप्रदेशावगाढानि पुद्गलद्रव्याणि सङ्ख्येयगुणानि एवं तेभ्योऽपि त्रिप्रदेशावगाढानि एवमुत्तरोत्तरं यावदुत्कृष्टसङ्ख्येयप्रदेशावगाढानि, ततः स्थितमेतत्—एकप्रदेशावगाढेभ्यः सङ्ख्येयप्रदेशावगाढाः पुद्गलाः द्रव्यार्थतया सङ्ख्येयगुणा इति, एवं तेभ्योऽसङ्ख्येयप्रदेशावगाढाः पुद्गला द्रव्यार्थतया असङ्ख्येयगुणाः, असङ्ख्यातस्यासङ्ख्यातभेदभिन्नत्वात्, द्रव्यार्थतासूत्रं प्रदेशार्थतासूत्रं द्रव्यपर्याया-

र्थंतासूत्रं च सुगमत्वात् स्वयं भावनीयं, कालभावसूत्राण्यपि सुगमत्वात् स्वयं भावयितव्यानि, नवरं 'जहा पोग्गला तहा भाणियव्वा' इति यथा प्राक् सामान्यतः पुद्गला उक्तास्तथा एकगुणकालकादयोऽपि वक्तव्याः, ते चैवम्—यतः 'सव्वत्थोवा अणंतपएसिआ खंधा एगगुणकालगा, परमाणुपुग्गला दव्वट्ठयाए एगगुणकालगा अणंतगुणा, संखिज्जपएसिया खंधा एगगुणकालगा संखिज्जगुणा, असंखिज्जपएसिआ खंधा एगगुणकालगा असंखिज्जगुणा । पएसट्ठयाए सव्वत्थोवा अणंतपएसिआ खंधा एगगुणकालगा, परमाणुपुग्गला एगगुणकालगा अणंतगुणा इत्यादि' एवं सङ्ख्येयगुणकालकानामसङ्ख्येयगुणकालकानामनन्तगुणकालकानामपि वाच्यं, एवं शेषवर्णगन्धरसा अपि वक्तव्याः, कर्कशमृदुगुरुलघवः स्पर्शा यथा एकप्रदेशाद्यवगाढा भणितास्तथा वक्तव्याः, ते चैवम्—'सव्वत्थोवा एगपएसोगाढा एगगुणकक्खडफासा दव्वट्ठयाए, संखिज्जपएसोगाढा एगगुणकक्खडफासा पोग्गला दव्वट्ठयाए संखिज्जगुणा, असंखिज्जपएसोगाढा एगगुणकक्खडफासा दव्वट्ठयाए असंखिज्जगुणा' इत्यादि, एवं सङ्ख्येयगुणकर्कशस्पर्शा असङ्ख्येयगुणकर्कशस्पर्शा अनन्तगुणकर्कशस्पर्शा वाच्याः, एवं मृदुगुरुलघवः, अवशेषाश्चत्वारः शीतादयः स्पर्शा यथा वर्णादय उक्तास्तथा वक्तव्याः, तत्र पाठोऽप्युक्तानुसारेण स्वयं भावनीयः । गतं पुद्गलद्वारम्, इदानीं महादण्डकं विवक्षुर्गुरुमापृच्छति—

अह भंते ! सव्वजीवप्पबहुं महादण्डयं वन्नइस्सामि—सव्वत्थोवा गब्भवक्कंतिया मणुस्सा १ मणुस्सीओ संखिज्जगुणाओ २

वायरतेउकाइआ पज्जत्तया असंखिज्जगुणा ३ अणुत्तरोववाइया देवा असंखिज्जगुणा ४ उवरिमगेविज्जगा देवा संखिज्जगुणा ५ मज्झिमगेविज्जगा देवा संखिज्जगुणा ६ हिट्ठिमगेविज्जगा देवा संखिज्जगुणा ७ अच्चुए कप्पे देवा संखिज्जगुणा ८ आरणे कप्पे देवा संखिज्जगुणा ९ पाणए कप्पे देवा संखिज्जगुणा १० आणए कप्पे देवा संखिज्जगुणा ११ अहे सत्तमाए पुढवीए नेरइया असंखिज्जगुणा १२ छट्ठीए तमाए पुढवीए नेरइया असंखिज्जगुणा १३ सहस्सारे कप्पे देवा असंखिज्जगुणा १४ महासुक्के कप्पे देवा असंखिज्जगुणा १५ पंचमाए धूमप्पभाए पुढवीए नेरइआ असंखिज्जगुणा १६ लंतए कप्पए देवा असंखिज्जगुणा १७ चउत्थीए पंकप्पभाए पुढवीए नेरइआ असंखिज्जगुणा १८ बंभलोए कप्पे देवा असंखिज्जगुणा १९ तच्चाए वालुयप्पभाए पुढवीए नेरइआ असंखिज्जगुणा २० माहिंदे कप्पे देवा असंखिज्जगुणा २१ सणंकुमारे कप्पे देवा असंखिज्जगुणा २२ दोच्चाए सक्करप्पभाए पुढवीए नेरइया असंखिज्जगुणा २३ संमुच्छिमा मणुस्सा असंखिज्जगुणा २४ ईसाणे कप्पे देवा असंखिज्जगुणा २५ ईसाणे कप्पे देवीओ संखिज्जगुणाओ २६ सोहम्मे कप्पे देवा संखिज्जगुणा २७ सोहम्मे कप्पे देवीओ संखेज्जगुणाओ २८ भवणवासी देवा असंखेज्जगुणा २९ भवणवासिणीओ देवीओ संखेज्जगुणाओ ३० इमीसे रयणप्पभाए पुढवीए नेरइआ असंखिज्जगुणा ३१ खहयरपंचिंदियतिरिक्खजोणिया पुरिसा असंखिज्जगुणा ३२ खहयरपंचिंदियतिरिक्खजोणिणीओ संखिज्जगुणाओ ३३ थलयरपंचिंदियतिरिक्खजोणिआ पुरिसा संखिज्जगुणा ३४ थलयरपंचिंदियतिरिक्खजोणिणीओ संखिज्जगुणाओ ३५ जलयरपंचिंदियतिरिक्खजोणिआ पुरिसा संखिज्जगुणा ३६ जलयरपंचिंदियतिरिक्खजोणिणीओ संखिज्जगुणाओ ३७ वाणमंतरा देवा संखिज्जगुणा ३८ वाणमंतरीओ देवीओ संखिज्जगुणाओ ३९

जोइसिया देवा संखिज्जगुणा ४० जोइसिणीओ देवीओ संखिज्जगुणाओ ४१ खहयरपंचिंदियतिरिक्खजोणिआ नपुंसगा संखिज्जगुणा ४२ थलयरपंचिंदियतिरिक्खजोणिआ नपुंसगा संखिज्जगुणा ४३ जलयरपंचिंदियतिरिक्खजोणिआ नपुंसगा संखिज्जगुणा ४४ चउरिंदिया पज्जत्तया संखिज्जगुणा ४५ पंचिंदिया पज्जत्तया विसेसाहिया ४६ वेइंदिया पज्जत्तया विसेसाहिया ४७ तेइंदिया पज्जत्तया विसेसाहिया ४८ पंचिंदिया अपज्जत्तया असंखेज्जगुणा ४९ चउरिंदिया अपज्जत्तया विसेसाहिया ५० तेइंदिया अपज्जत्तया विसेसाहिया ५१ वेइंदिया अपज्जत्तया विसेसाहिया ५२ पत्तेयसरीरबायरवणस्सइकाइया पज्जत्तया असंखिज्जगुणा ५३ बायरनिगोया पज्जत्तया असंखिज्जगुणा ५४ बायरपुढवीकाइया पज्जत्तगा असंखिज्जगुणा ५५ बायरआउकाइया पज्जत्तया असंखिज्जगुणा ५६ बायरवाउकाइया पज्जत्तगा असंखिज्जगुणा ५७ बायरतेउकाइया अपज्जत्तगा असंखिज्जगुणा ५८ पत्तेयसरीरबायरवणस्सइकाइया अपज्जत्तगा असंखिज्जगुणा ५९ बायरनिगोया अपज्जत्तया असंखिज्जगुणा ६० बायरपुढवीकाइया अपज्जत्तया असंखिज्जगुणा ६१ बायरआउकाइया अपज्जत्तया असंखिज्जगुणा ६२ बायरवाउकाइया अपज्जत्तया असंखिज्जगुणा ६३ सुहुमतेउकाइया अपज्जत्तया असंखिज्जगुणा ६४ सुहुमपुढवीकाइया अपज्जत्तया विसेसाहिया ६५ सुहुमआउकाइया अपज्जत्तया विसेसाहिआ ६६ सुहुमवाउकाइया अपज्जत्तया विसेसाहिआ ६७ सुहुमतेउकाइया पज्जत्तया संखिज्जगुणा ६८ सुहुमपुढवीकाइया पज्जत्तया विसेसाहिआ ६९ सुहुमआउकाइया पज्जत्तया विसेसाहिआ ७० सुहुमवाउकाइया पज्जत्तया विसेसाहिआ ७१ सुहुमनिगोया अपज्जत्तया असंखिज्जगुणा ७२ सुहुमनिगोया पज्जत्तया संखिज्जगुणा ७३ अभवसिद्धिआ अणंतगुणा ७४ परिवडियसम्मद्दिट्ठि अणंतगुणा ७५ सिद्धा अणंतगुणा ७६

'कइविहा णं भंते ! पज्जवा पन्नत्ता ?' इति, अथ केनाभिप्रायेण गौतमस्वामिना भगवानेवं पृष्टः ?, उच्यते, उक्तमादौ प्रथमे पदे प्रज्ञापना द्विविधा प्रज्ञप्ता, तद्यथा—जीवप्रज्ञापना अजीवप्रज्ञापना चेति, तत्र जीवाश्चाजीवाश्च द्रव्याणि, द्रव्यलक्षणं चेदम्—'गुणपर्यायवद्द्रव्य'मिति (तत्त्वा० अ० ५ सू० ३१) ततो जीवाजीवपर्यायभेदावगमार्थमेवं पृष्टवान्, तथा च भगवानपि निर्वचनमेवमेवाह—'गोयमा ! दुविहा पज्जवा पन्नत्ता, तंजहा—जीवपज्जवा य अजीवपज्जवा य' इति, तत्र पर्याया गुणा विशेषा धर्म्मा इत्यनर्थान्तरं, ननु सम्बन्धं प्रतिपादयतेदमुक्तम्—इह त्वौदयिकादिभावाश्रयपर्यायपरिमाणावधारणं प्रतिपाद्यत इति, औदयिकादयश्च भावा जीवाश्रयाः, ततो जीवपर्याया एव गम्यन्ते अथ चास्मिन्निर्वचनसूत्रे द्वयानामपि पर्याया उक्तास्ततो न सुन्दरः सम्बन्धः, तदयुक्तम्, अभिप्रायापरिज्ञानात्, औदयिको हि भावः पुद्गलवृत्तिरपि भवति, ततो जीवाजीवभेदेनौदयिकभावस्य द्वैविध्यान्न सम्बन्धकथननिर्वचनसूत्रयोर्विरोधः । सम्प्रति सम्बन्ध(पर्याय)परिमाणावगमाय पृच्छति—'जीवपज्जवा णं भंते ! किं संखेज्जा' इत्यादि, इह यस्माद्वनस्पतिसिद्धवर्जाः सर्वेऽपि नैरयिकादयः प्रत्येकमसङ्ख्येयाः मनुष्येष्वसङ्ख्येयत्वं संमूर्च्छिममनुष्यापेक्षया वनस्पतयः सिद्धाश्च प्रत्येकमनन्ताः ततः पर्यायिणामनन्तत्वाद् भवन्त्यनन्ता जीवपर्यायाः ॥ तदेवं गौतमेन सामान्यतो जीवपर्यायाः पृष्टाः भगवानपि सामान्येन निर्वचनमुक्तवान्, इदानीं विशेषविषयं प्रश्नं गौतम आह—

नेरइयाणं भंते ! केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ—नेरइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! नेरइए नेरइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए सिय हीणे सिय तुल्ले सिय अब्भहिए जइ हीणे असंखिज्जइभागहीणे वा संखिज्जइभागहीणे वा संखिज्जगुणहीणे वा असंखिज्जगुणहीणे वा अह अब्भहिए असंखिज्जइभागमब्भहिए वा संखिज्जइभागमब्भहिए वा संखिज्जगुणमब्भहिए वा असंखिज्जगुणमब्भहिए वा, ठिईए सिय हीणे सिय तुल्ले सिय अब्भहिए जइ हीणे असंखिज्जइभागहीणे वा संखिज्जइभागहीणे वा संखिज्जगुणहीणे वा असंखिज्जगुणहीणे वा अह अब्भहिए असंखिज्जभागमब्भहिए वा संखिज्जभागमब्भहिए वा संखिज्जगुणमब्भहिए वा असंखिज्जगुणमब्भहिए वा, कालवण्णपज्जवेहिं सिय हीणे सिय तुल्ले सिय अब्भहिए, जइ हीणे अणंतभागहीणे वा असंखेज्जभागहीणे संखेज्जभागहीणे वा संखेज्जगुणहीणे वा असंखेज्जगुणहीणे वा अणंतगुणहीणे वा अह अब्भहिए अणंतभागमब्भहिए वा असंखेज्जभागमब्भहिए वा संखेज्जभागमब्भहिए वा संखेज्जगुणमब्भहिए वा असंखेज्जगुणमब्भहिए वा अणंतगुणमब्भहिए वा, नीलवन्नपज्जवेहिं लोहियवन्नपज्जवेहिं पीयवन्नपज्जवेहिं हालिद्दवन्नपज्जवेहिं सुक्किल्लवन्नपज्जवेहिं छट्ठाणवडिए, सुब्भिगंधपज्जवेहिं दुब्भिगंधपज्जवेहि य छट्ठाणवडिए, तित्तरसपज्जवेहिं कडुयरसपज्जवेहिं कसायरसपज्जवेहिं अंबिलरसपज्जवेहिं महुररसपज्जवेहिं छट्ठाणवडिए, कक्खडफासपज्जवेहिं मउयफासपज्जवेहिं गरुयफासपज्जवेहिं लहुयफासपज्जवेहिं सीयफासपज्जवेहिं उसिणफासपज्जवेहिं निद्धफासपज्जवेहिं लुक्खफासपज्जवेहिं छट्ठाणवडिए, आभिणिबोहियनाणपज्जवेहिं सुयनाणपज्जवेहिं ओहिनाणपज्जवेहिं मइअन्नाणपज्जवेहिं सुयअन्नाणपज्जवेहिं विभंगनाणपज्जवेहिं चक्खुदंसणपज्जवेहिं अचक्खुदंसणपज्जवेहिं ओहिदंसणपज्ज-

वेहिं छट्ठाणवडिए, से तेणट्ठेणं गोयमा ! एवं वुच्चइ नेरइयाणं नो संखेज्जा नो असंखेज्जा अणंता पज्जवा पन्नत्ता। (सूत्रं १०४)

'नेरइयाणं भंते ! केवइया पज्जवा पन्नत्ता' इति, अथ केनाभिप्रायेणैवं गौतमः पृष्टवान् ?, उच्यते, पूर्वं किल सामान्यप्रश्ने पर्यायिणामनन्तत्वात् पर्यायाणामानन्त्यमुक्तं, यत्र पुनः पर्यायिणामानन्त्यं नास्ति तत्र कथमिति पृच्छति-'नेरइयाणं' इत्यादि, तत्रापि निर्वचनमिदम् 'अनन्ता' इति, अत्रैव जातसंशयः प्रश्नयति-'से केणट्ठेणं भंते !' इत्यादि, अथ केनार्थेन-केन कारणेन केन हेतुना भदन्त ! एवमुच्यते-नैरयिकाणां पर्याया एवम्-अनन्ता इति ?, भगवानाह-'गोयमा ! नेरइए नेरइयस्स दवट्ठयाए तुल्ले,' इत्यादि, अथ पर्यायाणामानन्त्यं कथं घटते इति पृष्टे तदेव पर्यायाणामानन्त्यं यथा युक्त्युपपन्नं भवति तथा निर्वचनीयं नान्यत् ततः केनाभिप्रायेण भगवतैवं निर्वचनमवाचि-नैरयिको नैरयिकस्य द्रव्यार्थतया तुल्य इति ?, उच्यते, एकमपि द्रव्यमनन्तपर्यायमित्यस्य न्यायस्य प्रदर्शनार्थं, तत्र यस्मादिदमपि नारकजीवद्रव्यमेकसङ्ख्याऽवरुद्धमिति नैरयिको नैरयिकस्य द्रव्यार्थतया तुल्यः, द्रव्यमेवार्थो द्रव्यार्थः तद्भावो द्रव्यार्थता तया द्रव्यार्थतया तुल्यः, एवं तावत् द्रव्यार्थतया तुल्यत्वमभिहितं, इदानीं प्रदेशार्थतामधिकृत्य तुल्यत्वमाह-'पएसट्ठयाए तुल्ले' इदमपि नारकजीवद्रव्यं लोकाकाशप्रदेशपरिमाणप्रदेशमिति प्रदेशार्थतयाऽपि नैरयिको नैरयिकस्य तुल्यः, प्रदेश एवार्थ प्रदेशार्थः तद्भावः प्रदेशार्थता तया प्रदेशार्थतया, कस्मादभिहितमिति चेत्, उच्यते, द्रव्यद्वैविध्यप्रदर्शनार्थं, तथाहि-द्विविधं द्रव्यं-प्रदेशवत् अप्रदेशवच्च, तत्र परमाणुरप्र-

देशः, द्विप्रदेशत्रिप्रदेशादिकं तु प्रदेशवत्, एतच्च द्रव्यद्वैविध्यं पुद्गलास्तिकाय एव भवति, शेषाणि तु धर्म्मास्तिकायादीनि द्रव्याणि नियमात् सप्रदेशानि, 'ओगाहणट्टयाए सिय हीणे' इत्यादि, नैरयिकोऽसङ्ख्यातप्रदेशोऽपरस्य नैरयिकस्य तुल्यप्रदेशस्य अवगाहनमवगाहः—शरीरोच्छ्रयः अवगाहनमेवार्थोऽवगाहनार्थस्तद्भावोऽवगाहनार्थता तया अवगाहनार्थतया 'सिय हीणे' इत्यादि, स्याच्छब्दः प्रशंसाऽस्तित्वविवादविचारणाऽनेकान्तसंशयप्रश्नादिष्वर्थेषु, अत्रानेकान्तद्योतकस्य ग्रहणं, स्याद्धीनः अनेकान्तेन हीन इत्यर्थः, स्यात्तुल्यः—अनेकान्तेन तुल्य इत्यर्थः, स्यादभ्यधिकः—अनेकान्तेनाभ्यधिक इति भावः, कथमिति चेत्, उच्यते, यस्माद्वक्ष्यति रत्नप्रभापृथिवीनैरयिकाणां भवधारणीयस्य वैक्रियशरीरस्य जघन्येनावगाहनाया अङ्गुलस्यासङ्ख्येयो भागः उत्कर्षतः सप्त धनूंषि त्रयो हस्ताः षट् चाङ्गुलानि, उत्तरोत्तरासु च पृथिवीषु द्विगुणं द्विगुणं यावत् सप्तमनरकपृथिवीनैरयिकाणां जघन्यतोऽवगाहनाऽङ्गुलस्यासङ्ख्येयो भागः उत्कर्षतः पञ्चधनुःशतानीति, तत्र 'जइ हीणे' इत्यादि, यदि हीनस्ततोऽसङ्ख्येयभागहीनो वा स्यात् सङ्ख्येयभागहीनो वा सङ्ख्येयगुणहीनो वा स्यात् असङ्ख्येयगुणहीनो वा, अथाभ्यधिकस्ततोऽसङ्ख्येयभागाभ्यधिको वा स्यात्सङ्ख्येयभागाभ्यधिको वा सङ्ख्येयगुणाभ्यधिको वाऽसङ्ख्येयगुणाभ्यधिको वा, कथमिति चेत्?, उच्यते, एकः किल नारक उच्चैस्त्वेन पञ्च धनुःशतानि अपरस्तान्येवाङ्गुलासङ्ख्येयभागहीनानि, अङ्गुलासङ्ख्येयभागश्च पञ्चानां धनुःशतानामसङ्ख्येये भागे वर्त्तते, तेन सोऽङ्गुलासङ्ख्येयभागहीनपञ्चधनुःशतप्रमाणः अपरस्य परिपूर्णपञ्चधनुःशतप्रमाणस्यापेक्षयाऽसङ्ख्येयभागहीनः, इतरस्त्वितरापेक्षयाऽसङ्ख्येयभागाभ्यधिकः-

तथा एकः पञ्चधनुःशतान्युच्चैस्त्वेन अपरस्तान्येव द्वाभ्यां त्रिभिर्वा धनुर्भिर्न्यूनानि ते च द्वे त्रीणि वा धनूंषि पञ्चाना धनुःशतानां सङ्ख्येयभागे वर्त्तन्ते ततः सोऽपरस्य परिपूर्णपञ्चधनुःशतप्रमाणस्यापेक्षया सङ्ख्येयभागहीनः, इतरस्तु परिपूर्णपञ्चधनुःशतप्रमाणस्तदपेक्षया सङ्ख्येयभागाभ्यधिकः, तथा एकः पञ्चविंशं धनुःशतमुच्चैस्त्वेनापरः परिपूर्णानि पञ्चधनुःशतानि, पञ्चविंशं च धनुःशतं चतुर्भिर्गुणितं पञ्च धनुःशतानि भवन्ति ततः पञ्चविंशत्यधिकधनुःशतप्रमाणोच्चैस्त्वेऽप्यपरस्य परिपूर्णपञ्चधनुःशतप्रमाणस्यापेक्षया सङ्ख्येयगुणहीनो भवति तदपेक्षया त्वितरः परिपूर्णपञ्चधनुःशतप्रमाणः सङ्ख्येयगुणाभ्यधिकः, तथा एकोऽपर्याप्तावस्थायामङ्गुलस्यासङ्ख्येयभागावगाहे वर्त्तते अन्यस्तु पञ्चधनुःशतान्युच्चैस्त्वेन, अङ्गुलासङ्ख्येयभागश्चासङ्ख्येयेन गुणितः सन् पञ्चधनुःशतप्रमाणो भवति, ततोऽपर्याप्तावस्थायामङ्गुलासङ्ख्येयभागप्रमाणेऽवगाहे वर्त्तमानः परिपूर्णपञ्चधनुःशतप्रमाणापेक्षया असङ्ख्येयगुणहीनः, पञ्चधनुःशतप्रमाणस्तु तदपेक्षयाऽसङ्ख्येयगुणाभ्यधिकः। 'ठिईए सिय हीणे' इत्यादि, यथाऽवगाहनया हानौ वृद्धौ च चतुःस्थानपतित उक्तस्तथा स्थित्याऽपि वक्तव्य इति भावः, एतदेवाह—'जइ हीणे' इत्यादि, तत्रैकस्य किल नारकस्य त्रयस्त्रिंशत्सागरोपमाणि स्थितिः अपरस्य तु तान्येव समयादिन्यूनानि, तत्र यः समयादिन्यूनत्रयस्त्रिंशत्सागरोपमप्रमाणस्थितिकः स परिपूर्णत्रयस्त्रिंशत्सागरोपमस्थितिकनारकापेक्षयाऽसङ्ख्येयभागहीनः परिपूर्णत्रयस्त्रिंशत्सागरोपमस्थितिकस्तु तदपेक्षयाऽसङ्ख्येयभागाभ्यधिकः, समयादेः सागरोपमापेक्षयाऽसङ्ख्येयभागमात्रत्वात्, तथाहि—असङ्ख्येयैः समयैरेकाऽऽवलिका सङ्ख्या-

ताभिरावलिकाभिरेक उच्छ्वासनिःश्वासकालः सप्तभिरुच्छ्वासनिःश्वासैरेकः स्तोकः सप्तभिः स्तोकैरेको लवः सप्तसप्तत्या लवानामेको मुहूर्त्तः त्रिंशता मुहूर्त्तैरहोरात्रः पञ्चदशभिरहोरात्रैः पक्षः द्वाभ्यां पक्षाभ्या मासः द्वादशभिर्मासैः संवत्सरः असङ्ख्येयैः संवत्सरैः पल्योपमसागरोपमाणि, समयाऽऽवलिकोच्छ्वासमुहूर्त्तदिवसाहोरात्रपक्षमाससंवत्सरयुगैः हीनः परिपूर्णस्थितिकनारकापेक्षयाऽसङ्ख्येयभागहीनो भवति तदपेक्षया त्वितरोऽसङ्ख्येयभागाभ्यधिकः, तथा एकस्य त्रयस्त्रिंशत्सागरोपमाणि स्थितिः परस्य तान्येव पल्योपमैर्न्यूनानि, दशभिश्च पल्योपमकोटीकोटीभिरेकं सागरोपमं निष्पद्यते, ततः पल्योपमैर्न्यूनस्थितिकः परिपूर्णस्थितिकनारकापेक्षया सङ्ख्येयभागहीनः परिपूर्णस्थितिकस्तु तदपेक्षया सङ्ख्येयभागाभ्यधिकः, तथैकस्य सागरोपममेकं स्थितिः अपरस्य परिपूर्णानि त्रयस्त्रिंशत्सागरोपमाणि, तत्रैकसागरोपमस्थितिकः परिपूर्णस्थितिकनारकापेक्षया सङ्ख्येयगुणहीनः, एकस्य सागरोपमस्य त्रयस्त्रिंशता गुणने परिपूर्णस्थितिकत्वप्राप्तेः, परिपूर्णस्थितिकस्तु तदपेक्षया सङ्ख्येयगुणाभ्यधिकः, तथैकस्य दश वर्षसहस्राणि स्थितिः अपरस्य त्रयस्त्रिंशत्सागरोपमाणि, दश वर्षसहस्राण्यसङ्ख्येयरूपेण गुणकारेण गुणितानि त्रयस्त्रिंशत्सागरोपमाणि भवन्ति, ततो दशवर्षसहस्रस्थितिकः त्रयस्त्रिंशत्सागरोपमस्थितिकनारकापेक्षयाऽसङ्ख्येयगुणहीनः तदपेक्षया तु त्रयस्त्रिंशत्सागरोपमस्थितिकोऽसङ्ख्येयगुणाभ्यधिक इति, तदेवमेकस्य नारकस्यापरनारकापेक्षया द्रव्यतो द्रव्यार्थतया प्रदेशार्थतया च तुल्यत्वमुक्तं क्षेत्रतोऽवगाहनं प्रति हीनाधिकत्वेन चतुःस्थानपतितत्वं कालतोऽपि स्थितितो हीनाधिकत्वेन

चतुःस्थानपतितत्वं, इदानीं भावाश्रयं हीनाधिकत्वं प्रतिपाद्यते—यतः सकलमेव जीवद्रव्यमजीवद्रव्यं वा परस्परतो द्रव्यक्षेत्रकालभावैर्विभज्यते यथा घटः, तथाहि—द्रव्यत एको मार्त्तिकः अपरः काञ्चनो राजतादिर्वा क्षेत्रत एक इहत्यः अपरः पाटलिपुत्रकः कालत एकोऽद्यतनः अन्यस्त्वैपमः परुत्तनो वा भावत एकः श्यामः अपरस्तु रक्तादिः एवमन्यदपि। तत्र प्रथमतः पुद्गलविपाकिनामकर्मोदयनिमित्तं जीवौदयिकभावाश्रयेण हीनाधिकत्वमाह—'कालवन्नपज्जवेहिं सिय हीणे सिय तुल्ले सिय अब्भहिए' अस्याक्षरघटना पूर्ववत्, तत्र यथा हीनत्वमभ्यधिकत्वं च तथा प्रतिपादयति—'जइ हीणे' इत्यादि, इह भावापेक्षया हीनत्वाभ्यधिकत्वचिन्तायां हानौ वृद्धौ च प्रत्येकं षट्स्थानपतितत्वमवाप्यते, षट्स्थानके च यद्यदपेक्षयाऽनन्तभागहीनं तस्य सर्वजीवानन्तकेन भागे हृते यल्लभ्यते तेनानन्ततमेन भागेन हीनं, यच्च यदपेक्षयाऽसङ्ख्येयभागहीनं तस्यापेक्षणीयस्यासङ्ख्येयलोकाकाशप्रदेशप्रमाणेन राशिना भागे हृते यल्लभ्यते तावता भागेन न्यूनं, यच्च यदधिकृत्य सङ्ख्येयभागहीनं तस्यापेक्षणीयस्योत्कृष्टसङ्ख्येयकेन भागे हृते यल्लभ्यते तावता हीनं, गुणनसङ्ख्यायां तु यद्यतः सङ्ख्येयगुणं तदवधिभूतमुत्कृष्टेन सङ्ख्येयकेन गुणितं सद्यावद् भवति तावत्प्रमाणमवसातव्यं, यच्च यतोऽसङ्ख्येयगुणं तदवधिभूतमसङ्ख्येयलोकाकाशप्रदेशप्रमाणेन गुणकारेण गुण्यते गुणितं सद्यावद्भवति तावदवसेयं, यच्च यस्मादनन्तगुणं तदवधिभूतं सर्वजीवानन्तकरूपेण गुणकारेण गुण्यते गुणितं सद्यावद्भवति तावत्प्रमाणं द्रष्टव्यं, तथा चैतदेव कर्मप्रकृतिसङ्ग्रहिण्यां षट्स्थानकप्ररूपणाऽवसरे भागहारगुणकारस्वरूप-

मुपवर्णितं 'सव्वजियाणंतमंसंखलोगसंखेज्जगस्स जेट्ठस्स । भागो तिसु गुणणातिसु' इति, सम्प्रत्यधिकृतसूत्रोक्तषट्स्थानपतितत्वं भाव्यते—तत्र कृष्णवर्णपर्यायपरिमाणं तत्त्वतोऽनन्तसङ्ख्यात्मकमप्यसद्भावस्थापनया किल दश सहस्राणि १००००, तस्य सर्वजीवानन्तकेन शतपरिमाणपरिकल्पितेन भागो ह्रियते लब्धं शतं १००, तत्रैकस्य किल नारकस्य कृष्णवर्णपर्यायपरिमाणं दश सहस्राणि, अपरस्य तान्येव शतेन हीनानि ९९००, शतं च सर्वजीवानन्तभागहारलब्धत्वादनन्ततमो भागः, ततो यस्य शतेन हीनानि दश सहस्राणि सोऽपरस्य परिपूर्णदशसहस्रप्रमाणकृष्णवर्णपर्यायस्य नारकस्यापेक्षयाऽनन्तभागहीनः तदपेक्षया तु सोऽपरः कृष्णवर्णपर्यायोऽनन्तभागाभ्यधिकः, तथा कृष्णवर्णपर्यायपरिमाणस्य दशसहस्रसङ्ख्याकस्यासङ्ख्येयलोकाकाशप्रदेशप्रमाणपरिकल्पितेन पञ्चाशत्परिमाणेन भागहारेण भागो ह्रियते लब्धे द्वे शते एषोऽसङ्ख्येयतमो भागः, तत्रैकस्य किल नारकस्य कृष्णवर्णपर्याया दशसहस्राणि शतद्वयेन हीनानि ९८०० अपरस्य परिपूर्णानि दश सहस्राणि १००००, तत्र यः शतद्वयहीनदशसहस्रप्रमाणकृष्णवर्णपर्यायः स परिपूर्णकृष्णवर्णपर्यायनारकापेक्षया असङ्ख्येयभागहीनः परिपूर्णकृष्णवर्णपर्यायस्तु तदपेक्षयाऽसङ्ख्येयभागाभ्यधिकः, तथा तस्यैव कृष्णवर्णपर्यायराशेर्दशसहस्रसङ्ख्याकस्योत्कृष्टसङ्ख्येयकपरिमाणकल्पितेन दशकपरिमाणेन भागहारेण भागो ह्रियते तल्लब्धं सहस्रं एष किल सङ्ख्याततमो भागः, तत्रैकस्य नारकस्य किल कृष्णवर्णपर्यायपरिमाणं नव सहस्राणि ९००० अपरस्य दश सहस्राणि १००००, नव सहस्राणि तु दशसहस्रेभ्यः सहस्रेण हीनानि

सहस्रं च सङ्ख्येयतमो भाग इति नवसहस्रप्रमाणकृष्णवर्णपर्यायः परिपूर्णकृष्णवर्णपर्यायनारकापेक्षया सङ्ख्येयभागहीनः तदपेक्षया त्वितरः सङ्ख्येयभागाधिकः, तथैकस्य नारकस्य किल कृष्णवर्णपर्यायपरिमाणं सहस्रं अपरस्य दश सहस्राणि, तत्र सहस्रं दशकेनोत्कृष्टसङ्ख्यातककल्पेन गुणितं दशसहस्रसङ्ख्याकं भवति इति सहस्रसङ्ख्यकृष्णवर्णपर्यायो नारको दशसहस्रसङ्ख्याककृष्णवर्णपर्यायनारकापेक्षया सङ्ख्येयगुणहीनः तदपेक्षया परिपूर्णकृष्णवर्णपर्यायः सङ्ख्येयगुणाभ्यधिकः, तथैकस्य किल नारकस्य कृष्णवर्णपर्यायाग्रं द्वे शते परस्य परिपूर्णानि दश सहस्राणि, द्वे च शते असङ्ख्येयलोकाकाशप्रदेशपरिमाणप्रकल्पितेन पञ्चाशत्परिमाणेन गुणकारेण गुणिते दश सहस्राणि जायन्ते, ततो द्विशतपरिमाणकृष्णवर्णपर्यायो नारकः परिपूर्णकृष्णवर्णपर्यायनारकापेक्षयाऽसङ्ख्येयगुणहीनः तदपेक्षया त्वितरोऽसङ्ख्येयगुणाभ्यधिकः, तथैकस्य किल नारकस्य कृष्णवर्णपर्यायपरिमाणं शतमपरस्य दश सहस्राणि शते च सर्वजीवानन्तपरिमाणपरिकल्पितेन (शत) गुणकारेण गुणिते जायन्ते दश सहस्राणि, ततः शतपरिमाणकृष्णवर्णपर्यायो नारकः परिपूर्णकृष्णवर्णपर्यायनारकापेक्षया अनन्तगुणहीनः इतरस्तु तदपेक्षयाऽनन्तगुणाभ्यधिकः, यथा कृष्णवर्णपर्यायानधिकृत्य हानौ वृद्धौ च षट्स्थानपतितत्वमुक्तमेवं शेषवर्णगन्धरसस्पर्शैरपि प्रत्येकं षट्स्थानपतितत्वं भावनीयं, । तदेवं पुद्गलविपाकिनामकर्मोदयजनितजीवौदयिकभावाश्रयेण षट्स्थानपतितत्वमुपदर्शितं, इदानीं जीवविपाकिज्ञानावरणीयादिकर्मक्षयोपशमभावाश्रयेण तदुपदर्शयति—'आभिणिबोहियणाणपज्जवेहिं' इत्यादि, पूर्ववत् प्रत्येकमाभिनिबोधि-

कादिषु षट्स्थानपतितत्वं भावनीयं, इह द्रव्यतस्तुल्यत्वं वदता संमूर्च्छिमसर्वप्रभेदनिर्भेदबीजं मयूराण्डकरसवदनभिव्यक्तदेशकालक्रमं प्रत्ययवद्धविशेषभेदपरिणतेर्योग्यं द्रव्यमित्यावेदितं, अवगाहनया चतुःस्थानपतितत्वमभिवदता क्षेत्रतः सङ्कोचविकोचधर्म्मा आत्मा न तु द्रव्यप्रदेशसङ्ख्याया इति दर्शितं, उक्तं चैतदन्यत्रापि—"विकसनसङ्कोचनयोर्न स्तो द्रव्यप्रदेशसङ्ख्यायाः। वृद्धिह्रासौ स्तः क्षेत्रतस्तु तावात्मनस्तस्मात् ॥ १ ॥" स्थित्या चतुःस्थानपतितत्वं वदताऽऽयुःकर्मस्थितिनिर्वर्त्तकानामध्यवसायस्थानानामुत्कर्षापकर्षवृत्तिरुपदर्शिता, अन्यथा स्थित्या चतुःस्थानपतितत्वायोगात्, आयुःकर्म चोपलक्षणं तेन सर्वकर्मस्थितिनिर्वर्त्तकेष्वप्यध्यवसायेपूत्कर्षापकर्षवृत्तिरवसातव्या, कृष्णादिपर्यायैः षट्स्थानपतितत्वमुपदर्शयता एकस्यापि नारकस्य पर्याया अनन्ताः किं पुनः सर्वेषां नारकाणामिति दर्शितं, अथ नारकाणां पर्यायानन्त्यं पृष्टेन भगवता तदेव पर्यायानन्त्यं वक्तव्यं न त्वन्यत् ततः किमर्थं द्रव्यक्षेत्रकालभावाभिधानमिति ?, तदयुक्तं, अभिप्रायापरिज्ञानात्, इह न सर्वेषां सर्वे स्वपर्यायाः समसङ्ख्याः किं तु षट्स्थानपतिताः, एतचानन्तरमेव दर्शितं, तच्च षट्स्थानपतितत्वं परिणामित्वमन्तरेण न भवति, तच्च परिणामित्वं यथोक्तलक्षणस्य द्रव्यस्येति द्रव्यतस्तुल्यत्वमभिहितं, तथा न कृष्णादिपर्यायैरेव पर्यायवान् जीवः किं तु तत्तत्क्षेत्रसङ्कोचविकोचधर्मतयाऽपि तथा तत्तदध्यवसायस्थानयुक्ततयाऽपीति ख्यापनार्थं क्षेत्रकालाभ्यां चतुःस्थानपतितत्वमुक्तमिति कृतं प्रसङ्गेन। तदेवमवसितं नैरयिकाणां पर्यायानन्त्यं, इदानीमसुरकुमारेषु पर्यायाग्रं पिपृच्छिषुराह—

असुरकुमाराणं भंते ! केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ—असुरकुमाराणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! असुरकुमारे असुरकुमारस्स दवट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए चउट्ठाणवडिए कालवन्नपज्जवेहिं छट्ठाणवडिए एवं नीलवन्नपज्जवेहिं लोहियवन्नपज्जवेहिं हालिद्दवन्नपज्जवेहिं सुक्किलवन्नपज्जवेहिं सुब्भिगंधपज्जवेहिं दुब्भिगंधपज्जवेहिं तित्तरसपज्जवेहिं कडुयरसपज्जवेहिं कसायरसपज्जवेहिं अंबिलरसपज्जवेहिं महुररसपज्जवेहिं कक्खडफासपज्जवेहिं मउयफासपज्जवेहिं गरुयफासपज्जवेहिं लहुयफासपज्जवेहिं सीयफासपज्जवेहिं उसिणफासपज्जवेहिं निद्धफासपज्जवेहिं लुक्खफासपज्जवेहिं आभिणिबोहियणाणपज्जवेहिं सुयनाणपज्जवेहिं ओहिनाणपज्जवेहिं मइअन्नाणपज्जवेहिं सुयअन्नाणपज्जवेहिं विभंगनाणपज्जवेहिं चक्खुदंसणपज्जवेहिं अचक्खुदंसणपज्जवेहिं ओहिदंसणपज्जवेहिं छट्ठाणवडिए, से एएणट्ठेणं गोयमा ! एवं वुच्चइ—असुरकुमाराणं अणंता पज्जवा पन्नत्ता एवं जहा नेरइया, जहा असुरकुमारा तहा नागकुमाराविं जाव थणियकुमारा (सू०१०५) ॥ पुढविकाइयाणं भंते ! केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ पुढविकाइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! पुढविकाइए पुढविकाइयस्स दवट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए सिय हीणे सिय तुल्ले सिय अब्भहिए, जइ हीणे असंखिज्जइभागहीणे वा संखिज्जइभागहीणे वा संखिज्जइगुणहीणे वा असंखिज्जइगुणहीणे वा, अह अब्भहिए असंखिज्जइभागअब्भहिए वा संखिज्जइभागअब्भहिए वा संखिज्जगुणअब्भहिए वा असंखिज्जगुणअब्भहिए वा, ठिईए तिट्ठाणवडिए सिय हीणे सिय तुल्ले सिय अब्भहिए, जइ हीणे असंखिज्जभागहीणे वा संखिज्जभागहीणे वा संखिज्जगुणहीणे वा अह

अब्भहिए असंखिज्जइभागअब्भहिए वा संखिज्जइभागअब्भहिए वा संखिज्जगुणअब्भहिए वा वन्नेहिं गंधेहिं रसेहिं फासेहिं मइअन्नाणपज्जवेहिं सुयअन्नाणपज्जवेहिं अचक्खुदंसणपज्जवेहिं छट्ठाणवडिए ॥ आउकाइयाणं भंते ! केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ आउकाइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! आउकाइए आउकाइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तिट्ठाणवडिए वन्नगंधरसफासमइअन्नाणसुअअन्नाणअचक्खुदंसणपज्जवेहिं छट्ठाणवडिए ॥ तेउकाइयाणं पुच्छा गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ—तेउकाइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! तेउकाइए तेउकाइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए, ठिईए तिट्ठाणवडिए, वन्नगंधरसफासमइअन्नाणसुयअन्नाणअचक्खुदंसणपज्जवेहि य छट्ठाणवडिए ॥ वाउकाइयाणं पुच्छा गोयमा ! वाउकाइयाणं अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ—वाउकाइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! वाउकाइए वाउकाइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तिट्ठाणवडिए वन्नगंधरसफासमइअन्नाणसुयअन्नाणअचक्खुदंसणपज्जवेहिं छट्ठाणवडिए ॥ वणस्सइकाइयाणं पुच्छा गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ—वणस्सइकाइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! वणस्सइकाइए वणस्सइकाइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तिट्ठाणवडिए वन्नगंधरसफासमइअन्नाणसुयअन्नाणअचक्खुदंसणपज्जवेहि य छट्ठाणवडिए, से एएणट्ठेणं गोयमा ! एवं वुच्चइ—वणस्सइकाइयाणं अणंता पज्जवा पन्नत्ता ॥ (सू० १०६) बेइंदियाणं पुच्छा गोयमा ! अणंता पज्जवा

पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ–बेइंदियाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! बेइंदिए बेइंदियस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए सिय हीणे सिय तुल्ले सिय अब्भहिए, जइ हीणे असंखिज्जइभागहीणे वा संखिज्जइभागहीणे वा संखिज्जइगुणहीणे वा असंखिज्जइगुणहीणे वा, अह अब्भहिए असंखिज्जभागअब्भहिए वा संखिज्जइभागअब्भहिए वा संखिज्जगुणमब्भहिए वा असंखिज्जइगुणमब्भहिए वा, ठिईए तिट्ठाणवडिए, वन्नगंधरसफासआभिणिबोहियनाणसुयनाणमइअन्नाणसुयअन्नाणअचक्खुदंसणपज्जवेहि य छट्ठाणवडिए, एवं तेइंदियावि, एवं चउरिंदियावि नवरं दो दंसणा चक्खुदंसणं अचक्खुदंसणं ( सू० १०७) पंचिंदियतिरिक्खजोणियाणं पज्जवा जहा नेरइयाणं तहा भाणियव्वा ( सू० १०८ ) मणुस्साणं भंते ! केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ–मणुस्साणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! मणूसे मणूसस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए चउट्ठाणवडिए वन्नगंधरसफासआभिणिबोहियनाणसुयनाणओहिनाणमणपज्जवनाणकेवलनाणपज्जवेहिं तुल्ले तिहिं दंसणेहिं छट्ठाणवडिए केवलदंसणपज्जवेहिं तुल्ले ( सू० १०९ ) वाणमंतरा ओगाहणट्ठयाए ठिईए चउट्ठाणवडिया वण्णाईहिं छट्ठाणवडिया जोइसिया वेमाणियावि एवं चेव नवरं ठिईए तिट्ठाणवडिया ( सू० ११० )

'असुरकुमाराणं भंते ! केवइया पज्जवा पन्नत्ता ?' इत्यादि, उक्त एवार्थः प्रायः सर्वेष्वप्यसुरकुमारादिषु, ततः सकलमपि चतुर्विंशतिदण्डकसूत्रं प्राग्वद् भावनीयं, यस्तु विशेषः स उपदर्श्यते, तत्र यत्पृथिवीकायिकादीनामवगा-

हनाया अङ्गुलासङ्ख्येयभागप्रमाणाया अपि चतुःस्थानपतितत्वं तदङ्गुलासङ्ख्येयभागप्रमाणस्यासङ्ख्येयभेदभिन्नत्वादवसेयं, स्थित्या हीनत्वमभ्यधिकत्वं च त्रिस्थानपतितं न चतुःस्थानपतितं, असङ्ख्येयगुणवृद्धिहान्योरसंभवात्, कथं तयोरसंभव इति चेत्, उच्यते, इह पृथिव्यादीनां सर्वजघन्यमायुः क्षुल्लकभवग्रहणं, क्षुल्लकभवग्रहणस्य च परिमाणमावलिकानां द्वे शते षट्पञ्चाशदधिके, मुहूर्त्ते च द्विघटिकाप्रमाणे सर्वसङ्ख्यया क्षुल्लकभवग्रहणानां पञ्चषष्टिः सहस्राणि पञ्च शतानि षट्त्रिंशदधिकानि ६५५३६, उक्तं च—"दोन्नि सयाइं नियमा छप्पन्नाइं पमाणओ हुंति । आवलियपमाणेण खुड्डागभवग्गहणमेयं ॥ १ ॥ पन्नट्ठिसहस्साइं पंचेव सयाइं तह य छत्तीसा । खुड्डागभवग्गहणं भवंति एते मुहुत्तेणं ॥ २ ॥" पृथिव्यादीनां च स्थितिरुत्कर्षतोऽपि सङ्ख्येयवर्षप्रमाणा ततो नासङ्ख्येयगुणवृद्धिहान्योः संभवः, शेषवृद्धिहानित्रिकभावना त्वेवं–एकस्य किल पृथिवीकायस्य स्थितिः परिपूर्णानि द्वाविंशतिवर्षसहस्राणि अपरस्य तान्येव समयन्यूनानि ततः समयन्यूनद्वाविंशतिवर्षसहस्रस्थितिकः परिपूर्णद्वाविंशतिवर्षसहस्रस्थितिकापेक्षयाऽसङ्ख्येयभागहीनः तदपेक्षया त्वितरोऽसङ्ख्येयभागाधिकः, तथैकस्य परिपूर्णानि द्वाविंशतिवर्षसहस्राणि स्थितिरपरस्य तान्येवान्तर्मुहूर्त्तादिनोनानि, अन्तर्मुहूर्त्तादिकं(च) द्वाविंशतिवर्षसहस्राणां सङ्ख्येयतमो भागः, ततोऽन्तर्मुहूर्त्तादिन्यूनद्वाविंशतिवर्षसहस्रस्थितिकः परिपूर्णद्वाविंशतिवर्षसहस्रस्थितिकापेक्षया सङ्ख्येयभागहीनः तदपेक्षया परिपूर्णद्वाविंशतिवर्षसहस्रस्थितिकः सङ्ख्येयभागाभ्यधिकः, तथैकस्य द्वाविंशतिवर्षसहस्राणि स्थितिरपरस्यान्तर्मुहूर्त्तं मासो वर्षं वर्षसहस्रं वा,

अन्तर्मुहूर्त्तादिकं(च)नियतपरिमाणया सङ्ख्यया गुणितं द्वाविंशतिवर्पसहस्रप्रमाणं भवति तेनान्तर्मुहूर्त्तादिप्रमाणस्थितिकः परिपूर्णद्वाविंशतिवर्पसहस्रस्थितिकापेक्षया सङ्ख्येयगुणहीनः तदपेक्षया तु परिपूर्णद्वाविंशतिवर्पसहस्रस्थितिकः सङ्ख्येयगुणाभ्यधिकः, एवमप्कायिकादीनामपि चतुरिन्द्रियपर्यासानां स्वस्वोत्कृष्टस्थित्यनुसारेण स्थित्या त्रिस्थानपतितत्वं भावनीयं । तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां च चतुःस्थानपतितत्वं, तेपां ह्युत्कर्पतस्त्रीणि पल्योपमानि स्थितिः, पल्योपमं चासङ्ख्येयवर्पसहस्रप्रमाणमतोऽसङ्ख्येयगुणवृद्धिहान्योरपि संभवादुपपद्यते चतुःस्थानपतितत्वं, एवं व्यन्तराणामपि, तेपां जघन्यतो दशवर्पसहस्रस्थितिकत्वादुत्कर्पतः पल्योपमस्थितिः (तेः), ज्योतिष्कवैमानिकानां पुन स्थित्या त्रिस्थानपतितत्वं, यतो ज्योतिष्काणां जघन्यमायुः पल्योपमाष्टभागः उत्कृष्टं वर्पलक्षाधिकं पल्योपमं, वैमानिकानां जघन्यं पल्योपमं उत्कृष्टं त्रयस्त्रिंशत्सागरोपमाणि, दशकोटीकोटीसङ्ख्येयपल्योपमप्रमाणं च सागरोपममतस्तेपामप्यसङ्ख्येयगुणवृद्धिहान्यसंभवात् स्थितितस्त्रिस्थानपतिता, शेपसूत्रभावना तु सुगमत्वात् स्वयं भावनीया ॥ तदेवं सामान्यतो नैरयिकादीनां प्रत्येकं पर्यायानन्त्यं प्रतिपादितं, इदानीं जघन्याद्यवगाहनाद्यधिकृत्य तेपामेव प्रत्येकं पर्यायाग्रं प्रतिपिपादयिपुराह—

जहन्नोगाहणगाणं भंते ! नेरइयाणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! जहन्नोगाहणए नेरइए जहन्नोगाहणस्स नेरइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए तुल्ले

ठिईए चउट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं तिहिं नाणेहिं तिहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए, उक्कोसोगाहणगाणं भंते ! नेरइयाणं केवइया पज्जवा पन्नत्ता?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ उक्कोसोगाहणयाणं नेरइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! उक्कोसोगाहणए नेरइए उक्कोसोगाहणस्स नेरइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए तुल्ले, ठिईए सिय हीणे सिय तुल्ले सिय अब्भहिए, जइ हीणे असंखिज्जभागहीणे वा संखिज्जभागहीणे वा अह अब्भहिए असंखिज्जभागअब्भहिए वा संखिज्जभागअब्भहिए वा, वन्नगंधरसफासपज्जवेहिं तिहिं नाणेहिं तिहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए, अजहन्नमणुक्कोसोगाहणाणं नेरइयाणं केवइया पज्जवा पन्नत्ता ?, गोयमा !, अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ अजहन्नमणुक्कोसोगाहणाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! अजहन्नमणुक्कोसोगाहणए नेरइए अजहन्नमणुक्कोसोगाहणस्स नेरइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए सिय हीणे सिय तुल्ले सिय अब्भहिए जइ हीणे असंखिज्जभागहीणे वा संखिज्जभागहीणे वा संखिज्जगुणहीणे वा असंखिज्जगुणहीणे वा अह अब्भहिए असंखिज्जभागअब्भहिए वा संखिज्जभागअब्भहिए वा संखिज्जगुणअब्भहिए वा असंखिज्जगुणअब्भहिए वा, ठिईए सिय हीणे सिय तुल्ले सिय अब्भहिए, जइ हीणे असंखिज्जभागहीणे वा संखिज्जभागहीणे वा संखिज्जगुणहीणे वा असंखिज्जगुणहीणे वा अह अब्भहिए असंखिज्जभागअब्भहिए वा संखिज्जभागअब्भहिए वा संखिज्जगुणअब्भहिए वा असंखिज्जगुणअब्भहिए वा, वन्नगंधरसफासपज्जवेहिं तिहिं नाणेहिं तिहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए, से एएणट्ठेणं गोयमा ! एवं वुच्चइ अजहन्नमणुक्कोसोगाहणाणं नेरइयाणं अणंता पज्जवा पन्नत्ता । जहन्नठिइयाणं

भंते! नेरइयाणं केवइया पज्जवा पन्नत्ता ?, गोयमा! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते! एवं वुच्चइ जहन्नठिइयाणं नेरइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा! जहन्नठिइए नेरइए जहन्नठिइयस्स नेरइयस्स दवट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तुल्ले वन्नगंधरसफासपज्जवेहिं तिहिं नाणेहिं तिहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए एवं उक्कोसठिइएवि, अजहन्नमणुक्कोसठिइएवि, नवरं सट्ठाणे चउट्ठाणवडिए। जहन्नगुणकालगाणं भंते! नेरइयाणं केवइया पज्जवा पन्नत्ता ?, गोयमा! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते! एवं वुच्चइ—जहन्नगुणकालगाणं नेरइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा! जहन्नगुणकालए नेरइए जहन्नगुणकालगस्स नेरइयस्स दवट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए चउट्ठाणवडिए कालवन्नपज्जवेहिं तुल्ले अवसेसेहिं वन्नगंधरसफासपज्जवेहिं तिहिं नाणेहिं तिहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए, से एएणट्ठेणं गोयमा! एवं वुच्चइ जहन्नगुणकालगाणं नेरइयाणं अणंता पज्जवा पन्नत्ता, एवं उक्कोसगुणकालएवि, अजहन्नमणुक्कोसगुणकालएवि एवं चेव, नवरं कालवन्नपज्जवेहिं छट्ठाणवडिए, एवं अवसेसा चत्तारि वन्ना दो गंधा पंच रसा अट्ठ फासा भाणियवा। जहन्नाभिणिबोहियनाणीणं भंते! नेरइयाणं केवइया पज्जवा पन्नत्ता ?, गोयमा! जहन्नाभिणिबोहियनाणीणं नेरइयाणं अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते! एवं वुच्चइ जहन्नाभिणिबोहियनाणीणं नेरइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा! जहन्नाभिणिबोहियनाणी नेरइए जहन्नाभिणिबोहियस्स नाणिस्स नेरइयस्स दवट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए चउट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं छट्ठाणवडिए आभिणिबोहियनाणपज्जवेहिं तुल्ले सुयनाण० ओहिनाणपज्जवेहिं छट्ठाणवडिए तिहिं दंसणेहिं छट्ठा-

णवडिए, एवं उक्कोसाभिणिवोहियनाणीवि, अजहन्नमणुक्कोसाभिणिबोहियणाणीवि एवं चेव, णवरं आभिणिबोहियनाणपज्जवेहिं सट्ठाणे छट्ठाणवडिए, एवं सुयनाणी ओहिनाणीवि, नवरं जस्स नाणा तस्स अन्नाणा नत्थि, जहा नाणा तहा अन्नाणावि भाणियव्वा, नवरं जस्स अन्नाणा तस्स नाणा न भवंति। जहन्नचक्खुदंसणीणं भंते! नेरइयाणं केवइया पज्जवा पन्नत्ता?, गोयमा! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते! एवं वुच्चइ जहन्नचक्खुदंसणीणं नेरइयाणं अणंता पज्जवा पन्नत्ता?, गोयमा! जहन्नचक्खुदंसणीणं नेरइए जहन्नचक्खुदंसणिस्स नेरइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए चउट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं तिहिं नाणेहिं तिहिं अन्नाणेहिं छट्ठाणवडिए चक्खुदंसणपज्जवेहिं तुल्ले अचक्खुदंसणपज्जवेहिं ओहिदंसणपज्जवेहिं छट्ठाणवडिए, एवं उक्कोसचक्खुदंसणीवि, अजहन्नमणुक्कोसचक्खुदंसणीवि एवं चेव, नवरं सट्ठाणे छट्ठाणवडिए, एवं अचक्खुदंसणीवि ओहिदंसणीवि। ( सूत्रं १११ )

'जहन्नोगाहणाणं भंते!' इत्यादि, सुगमं नवरं 'ठिईए चउट्ठाणवडिए' इति जघन्यावगाहनो हि दशवर्षसहस्राणिस्थितिकोऽपि भवति रत्नप्रभायां उत्कृष्टस्थितिकोऽपि सप्तमनरकपृथिव्यां, तत उपपद्यते स्थित्या चतुःस्थानपतितता, 'तिहिं नाणेहिं तिहिं अन्नाणेहिं'ति इह यदा गर्भव्युत्क्रान्तिकसञ्ज्ञिपञ्चेन्द्रियो नरकेपूत्पद्यते तदा स नारकायुःसंवेदनप्रथमसमय एव पूर्वगृहीतौदारिकशरीरपरिशाटं करोति तस्मिन्नेव समये सम्यग्दृष्टेस्त्रीणि ज्ञानानि मिथ्यादृष्टेस्त्रीण्यज्ञानानि समुत्पद्यन्ते, ततोऽविग्रहेण विग्रहेण वा गत्वा वैक्रियशरीरसंघातं करोति, यस्तु संमूर्च्छिमासञ्ज्ञिपञ्चेन्द्रियो

नरकेपूत्पद्यते तस्य तदानीं विभङ्गज्ञानं नास्तीति जघन्यावगाहनस्याज्ञानानि भजनया द्रष्टव्यानि द्वे त्रीणि चेति, उत्कृष्टावगाहनसूत्रे स्थित्या हानौ वृद्धौ च द्विस्थानपतितत्वं, तद्यथा—असङ्ख्येयभागहीनत्वं वा सङ्ख्येयभागहीनत्वं वा, तथा असङ्ख्येयभागाधिकत्वं वा सङ्ख्येयभागाधिकत्वं वा न तु सङ्ख्येयासङ्ख्येयगुणवृद्धिहानी, कस्मादिति चेत्, उच्यते, उत्कृष्टावगाहना हि नैरयिकाः पञ्चधनुःशतप्रमाणाः, ते च सप्तमनरकपृथिव्यां, तत्र जघन्या स्थितिः द्वाविंशतिः सागरोपमाणि उत्कृष्टा त्रयस्त्रिंशत्सागरोपमाणि, ततोऽसङ्ख्येयसङ्ख्येयभागहानिवृद्धी एव घटेते न त्वसङ्ख्येयसङ्ख्येयगुणहानिवृद्धी, तेषां चोत्कृष्टावगाहनानां त्रीणि ज्ञानानि त्रीण्यज्ञानानि वा नियमाद्वेदितव्यानि, न भजनया, भजनाहेतोः संमूर्च्छिमासञ्ज्ञिपञ्चेन्द्रियोत्पादस्य तेषामसंभवात्, अजघन्योत्कृष्टावगाहनसूत्रे यदवगाहनया चतुःस्थानपतितत्वं तदेवं—अजघन्योत्कृष्टावगाहनो हि सर्वजघन्याङ्गुलासङ्ख्येयभागात्परतो मनाक् बृहत्तराङ्गुलासङ्ख्येयभागादारभ्य यावदङ्गुलासङ्ख्येयभागन्यूनानि पञ्चधनुःशतानि तावदवसेयः, ततः सामान्यनैरयिकसूत्र इवात्राप्युपपद्यते अवगाहनातश्चतुःस्थानपतितता, स्थित्या चतुःस्थानपतितता सुप्रतीता, दशवर्षसहस्रेभ्य आरभ्योत्कर्षतस्त्रयस्त्रिंशत्सागरोपमाणामपि तस्यां लभ्यमानत्वात्, जघन्यस्थितिसूत्रे अवगाहनया चतुःस्थानपतितत्वं तस्यामवगाहनायां जघन्यतोऽङ्गुलासङ्ख्येयभागादारभ्योत्कर्षतः सप्तानां धनुषामवाप्यमानत्वात्, अत्रापि त्रीण्यज्ञानानि केषांचित्कादाचित्कतया द्रष्टव्यानि, संमूर्च्छिमासञ्ज्ञिपञ्चेन्द्रियेभ्य उत्पन्नानामपर्याप्तावस्थायां विभङ्गस्याभावात्, उत्कृष्टस्थितिचिन्तायामवगा-

हनया चतुःस्थानपतितत्वमुत्कृष्टस्थितिकस्यावगाहनायां जघन्यतोऽङ्गुलासङ्ख्येयभागादारभ्योत्कर्षतः पञ्चानां धनुःशतानामवाप्यमानत्वात्, 'अजहन्नुक्कोसठिइएवि एवं चेव' इत्यादि, अजघन्योत्कृष्टस्थितावपि तथा वक्तव्यं यथा जघन्यस्थितिसूत्रे उत्कृष्टस्थितिसूत्रे च, नवरमयं विशेषः—जघन्यस्थितिसूत्रे उत्कृष्टस्थितिसूत्रे च स्थित्या तुल्यत्वमभिहितं अत्र तु 'स्वस्थानेऽपि' स्थितावपि चतुःस्थानपतित इति वक्तव्यं, समयाधिकदशवर्षसहस्रेभ्य आरभ्योत्कर्षतः समयोनत्रयस्त्रिंशत्सागरोपमाणामवाप्यमानत्वात्, जघन्यगुणकालकादिसूत्राणि सुप्रतीतानि, नवरं 'जस्स नाणा तस्स अन्नाणा नत्थि'त्ति यस्य ज्ञानानि तस्याज्ञानानि न संभवन्तीति, यतः सम्यग्दृष्टेर्ज्ञानानि मिथ्यादृष्टेरज्ञानानि, सम्यग्दृष्टित्वं च मिथ्यादृष्टित्वोपमर्देन भवति मिथ्यादृष्टित्वमपि सम्यग्दृष्टित्वोपमर्देन भवति, ततो ज्ञानसद्भावेऽज्ञानाभावः एवमज्ञानसद्भावे ज्ञानाभावः, तत उक्तं—'जहा नाणा तहा अन्नाणावि भाणियव्वा, नवरं जस्स अन्नाणा तस्स नाणा न संभवन्ति' इति शेषं पाठसिद्धं ।

जहन्नोगाहगाणं भंते ! असुरकुमाराणं केवइया पज्जवा पन्नत्ता?, गोयमा! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते! एवं वुच्चइ जहन्नोगाहगाणं असुरकुमाराणं अणंता पज्जवा पन्नत्ता!, गोयमा! जहन्नोगाहणए असुरकुमारे जहन्नोगाहणस्स असुरकुमारस्स दवट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए तुल्ले ठिईए चउट्ठाणवडिए वन्नाईहिं छट्ठाणवडिए आभिणिबोहियनाण० सुयनाण० ओहिनाणपज्जवेहिं तिहिं अन्नाणेहिं तिहिं दंसणेहि य छट्ठाणवडिए, एवं उक्कोसोगाहणएवि, एवं अजहन्नमणुक्कोसो-

गाहणएवि, नवरं उक्कोसोगाहणएवि असुरकुमारे ठिईए चउट्ठाणवडिए, एवं जाव थणियकुमारा। (सूत्रं ११२) जहन्नोगाहणाणं भंते ! पुढविकाइयाणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ जहन्नोगाहणाणं पुढविकाइयाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! जहन्नोगाहणए पुढविकाइए जहन्नोगाहणस्स पुढविकाइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए तुल्ले ठिईए तिट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं दोहिं अन्नाणेहिं अचक्खुदंसणपज्जवेहि य छट्ठाणवडिए, एवं उक्कोसोगाहणएवि, अजहन्नमणुक्कोसोगाहणएवि एवं चेव, नवरं सट्ठाणे चउट्ठाणवडिए, जहन्नठिइयाणं पुढविकाइयाणं पुच्छा गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ जहन्नठिइयाणं पुढविकाइयाणं अणंता पज्जवा पन्नत्ता !, गोयमा ! जहन्नठिइए पुढविकाइए जहन्नठिइयस्स पुढविकाइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तुल्ले वन्नगंधरसफासपज्जवेहिं मतिअन्नाण० सुयअन्नाण० अचक्खुदंसणपज्जवेहिं छट्ठाणवडिए, एवं उक्कोसठिइएवि, अजहन्नमणुक्कोसठिइएवि एवं चेव, नवरं सट्ठाणे तिट्ठाणवडिए, जहन्नगुणकालयाणं भंते ! पुढविकाइयाणं पुच्छा गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ जहन्नगुणकालयाणं पुढविकाइयाणं अणंता पज्जवा पन्नत्ता, गोयमा ! जहन्नगुणकालए पुढविकाइए जहन्नगुणकालगस्स पुढविकाइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तिट्ठाणवडिए कालवन्नपज्जवेहिं तुल्ले अवसेसेहिं वन्नगंधरसफासपज्जवेहिं छट्ठाणवडिए दोहिं अन्नाणेहिं अचक्खुदंसणपज्जवेहि य छट्ठाणवडिए, एवं उक्कोसगुणकालएवि, अजहन्नमणुक्कोसगुणकालएवि एवं चेव, नवरं सट्ठाणे छट्ठाणवडिए, एवं पंच वन्ना दो गंधा पंच रसा अट्ठ फासा भाणियव्वा। जहन्नमतिअन्नाणीणं भंते ! पुढ-

विकाइयाणं पुच्छा गोयमा ! अणंता पज्जवा पन्नत्ता, से केंणट्ठेणं भंते! एवं वुच्चइ जहन्नमतिअन्नाणीणं पुढविकाइयाणं अणंता पज्जवा पन्नत्ता !, गोयमा ! जहन्नमतिअन्नाणी पुढविकाइए जहन्नमतिअन्नाणिस्स पुढविकाइयस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तिट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं छट्ठाणवडिए मइअन्नाणपज्जवेहिं तुल्ले सुयअन्नाणपज्जवेहिं अचक्खुदंसणपज्जवेहिं छट्ठाणवडिए, एवं उक्कोसमइअन्नाणीवि, अजहन्नमणुक्कोसमइअन्नाणीवि एवं चेव, नवरं सट्ठाणे छट्ठाणवडिए, एवं सुयअन्नाणीवि अचक्खुदंसणीवि एवं चेव जाव वणप्फइकाइया ( सूत्रं० ११२) जहन्नोगाहणगाणं भंते ! बेइंदियाणं पुच्छा गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ जहन्नोगाहणगाणं बेइंदियाणं अणंता पज्जवा पन्नत्ता !, गोयमा ! जहन्नोगाहणए बेइंदिए जहन्नोगाहणस्स बेइंदियस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए तुल्ले ठिईए तिट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं दोहिं नाणेहिं दोहिं अन्नाणेहिं अचक्खुदंसणपज्जवेहि य छट्ठाणवडिए, एवं उक्कोसोगाहणएवि, णवरं णाणा णत्थि, अजहन्नमणुक्कोसोगाहणए जहा जहन्नोगाहणए, णवरं सट्ठाणे ओगाहणाए चउट्ठाणवडिए, जहन्नठिइयाणं भंते! बेइंदियाणं पुच्छा गोयमा! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ जहन्नठियाणं बेइंदिइयाणं अणंता पज्जवा पन्नत्ता !, गोयमा! जहन्नठिइए बेइंदिए जहन्नठिइयस्स बेइंदियस्स दवट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठितीए तुल्ले वन्नगंधरसफासपज्जवेहिं दोहिं अन्नाणेहिं अचक्खुदंसणपज्जवेहि य छट्ठाणवडिए, एवं उक्कोसठिइएवि, नवरं दो णाणा अब्भहिया, अजहन्नमणुक्कोसठिइए जहा उक्कोसठिइए णवरं ठिईए तिट्ठाणवडिए । जहन्नगुणकालगाणं बेइंदियाणं पुच्छा गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं

भंते ! एवं वुच्चइ—जहन्नगुणकालगाणं बेइंदियाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! जहन्नगुणकालए बेइंदिए जहन्नगुणकालगस्स बेइंदियस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए छट्ठाणवडिए ठिईए तिट्ठाणवडिए कालवन्नपज्जवेहिं तुल्ले अवसेसेहिं वन्नगंधरसफासपज्जवेहिं दोहिं नाणेहिं दोहिं अन्नाणेहिं अचक्खुदंसणपज्जवेहि य छट्ठाणवडिए, एवं उक्कोसगुणकालएवि, अजहन्नमणुक्कोसगुणकालएवि एवं चेव, णवरं सट्ठाणे छट्ठाणवडिए, एवं पंच वन्ना दो गंधा पंच रसा अट्ठ फासा भाणियव्वा, जहन्नाभिणिबोहियनाणीणं भंते ! बेइंदियाणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ—जहन्नाभिणिबोहियनाणीणं बेइंदियाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! जहन्नाभिणिबोहियणाणी बेइंदिए जहन्नाभिणिबोहियणाणिस्स बेइंदियस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तिट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं छट्ठाणवडिए आभिणिबोहियणाणपज्जवेहिं तुल्ले सुयणाणपज्जवेहिं छट्ठाणवडिए अचक्खुदंसणपज्जवेहिं छट्ठाणवडिए, एवं उक्कोसाभिणिबोहियणाणीवि, अजहन्नमणुक्कोसाभिणिबोहियणाणीवि एवं चेव, नवरं सट्ठाणे छट्ठाणवडिए, एवं सुयनाणीवि सुयअन्नाणीवि अचक्खुदंसणीवि, णवरं जत्थ णाणा तत्थ अन्नाणा नत्थि जत्थ अन्नाणा तत्थ णाणा नत्थि, जत्थ दंसणं तत्थ णाणावि अन्नाणावि, एवं तेइंदियाणवि, चउरिंदियाणवि एवं चेव णवरं चक्खुदंसणं अब्भहियं ( सूत्रं० ११४ ) जहन्नोगाहणगाणं भंते ! पंचिंदियतिरिक्खजोणियाणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ जहन्नोगाहणगाणं पंचिंदियतिरिक्खजोणियाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! जहन्नोगाहणए पंचिंदियतिरिक्खजोणिए जहन्नोगाहणयस्स पंचिंदियतिरि-

क्खजोणियस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए तुल्ले ठिईए तिट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं दोहिं नाणेहिं दोहिं अन्नाणेहिं दोहिं दंसणेहिं छट्ठाणवडिए, उक्कोसोगाहणएवि एवं चेव, णवरं तिहिं नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए, जहा उक्कोसोगाहणए तहा अजहन्नमणुक्कोसोगाहणएवि, णवरं ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए चउट्ठाणवडिए, जहन्नठिइयाणं भंते ! पंचिंदियतिरिक्खजोणियाणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ जहन्नठिइयाणं पंचिंदियतिरिक्खजोणियाणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! जहन्नठिइए पंचिंदियतिरिक्खजोणिए जहन्नठिइयस्स पंचिंदियतिरिक्खजोणियस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तुल्ले वन्नगंधरसफासपज्जवेहिं दोहिं अन्नाणेहिं दोहिं दंसणेहिं छट्ठाणवडिए, उक्कोसठिइएवि एवं चेव णवरं दो नाणा दो अन्नाणा दो दंसणा, अजहन्नमणुक्कोसठिइएवि एवं चेव, नवरं ठिईए चउट्ठाणवडिए तिन्नि णाणा तिन्नि अन्नाणा तिन्नि दंसणा । जहन्नगुणकालगाणं भंते ! पंचिंदियतिरिक्खजोणियाणं पुच्छा गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! जहन्नगुणकालए पंचिंदियतिरिक्खजोणिए जहन्नगुणकालगस्स पंचिंदियतिरिक्खजोणियस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए चउट्ठाणवडिए कालवन्नपज्जवेहिं तुल्ले अवसेसेहिं वन्नगंधरसफासपज्जवेहिं तिहिं नाणेहिं तिहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए, एवं उक्कोसगुणकालएवि, अजहन्नमणुक्कोसगुणकालएवि एवं चेव, नवरं सट्ठाणे छट्ठाणवडिए, एवं पंच वन्ना दो गंधा पंच रसा अट्ठ फासा, जहन्नाभिणिबोहियणाणीणं भंते ! पंचिंदियतिरिक्खजोणियाणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्न-

त्ता, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! जहन्नाभिणिबोहियणाणी पंचिंदियतिरिक्खजोणिए जहन्नाभिणिबोहियणाणिस्स पंचिंदियतिरिक्खजोणियस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं छट्ठाणवडिए आभिणिबोहियनाणपज्जवेहिं तुल्ले सुयनाणपज्जवेहिं छट्ठाणवडिए चक्खुदंसणपज्जवेहिं छट्ठाणवडिए अचक्खुदंसणपज्जवेहिं छट्ठाणवडिए, एवं उक्कोसाभिणिबोहियनाणीवि, णवरं ठिईए तिट्ठाणवडिए, तिन्नि नाणा तिन्नि दंसणा सट्ठाणे तुल्ले सेसेसु छट्ठाणवडिए, अजहन्नमणुक्कोसाभिणिबोहियनाणी जहा उक्कोसाभिणिबोहियनाणी णवरं ठिईए चउट्ठाणवडिए, सट्ठाणे छट्ठाणवडिए, एवं सुयनाणीवि, जहन्नोहिनाणीणं भंते ! पंचिंदियतिरिक्खजोणियाणं पुच्छा, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा !, जहन्नोहिनाणी पंचिंदियतिरिक्खजोणिए जहन्नोहिनाणिस्स पंचिंदियतिरिक्खजोणियस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तिट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं आभिणिबोहियनाणसुयनाणपज्जवेहिं छट्ठाणवडिए ओहिनाणपज्जवेहिं तुल्ले, अन्नाणा नत्थि, चक्खुदंसणपज्जवेहिं अचक्खुदंसणपज्जवेहि य ओहिदंसणपज्जवेहिं छट्ठाणवडिए, एवं उक्कोसोहिनाणीवि अजहन्नोक्कोसोहिनाणीवि एवं चेव, णवरं सट्ठाणे छट्ठाणवडिए, जहा आभिणिबोहियनाणी तहा मइअन्नाणी सुयअन्नाणी य, जहा ओहिनाणी तहा विभंगनाणीवि, चक्खुदंसणी अचक्खुदंसणी य जहा आभिणिबोहियनाणी, ओहिदंसणी जहा ओहिनाणी, जत्थ नाणा तत्थ अन्नाणा नत्थि जत्थ अन्नाणा तत्थ नाणा नत्थि, जत्थ दंसणा तत्थ णाणावि अन्नाणावि अत्थित्ति भाणियव्वं ( सूत्रं० ११५ ) जहन्नोगाहणगाणं भंते ! मणुस्साणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्न-

त्ता, से केणेट्ठणं भंते ! एवं वुच्चइ—जहन्नोगाहणगाणं मणुस्साणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! जहन्नोगाहणए मणूसे जहन्नोगाहणगस्स मणूसस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए तुल्ले ठिईए तिट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं तिहिं नाणेहिं दोहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए, उक्कोसोगाहणएवि एवं चेव, नवरं ठिईए सिय हीणे सिय तुल्ले सिय अब्भहिए, जइ हीणे असंखिज्जइभागहीणे अह अब्भहिए असंखेज्जइभागअब्भहिए, दो नाणा दो अन्नाणा दो दंसणा, अजहन्नमणुक्कोसोगाहणएवि एवं चेव, णवरं ओगाहणट्ठयाए चउट्ठाणवडिए, ठिईए चउट्ठाणवडिए आइल्लेहिं चउहिं नाणेहिं छट्ठाणवडिए, केवलनाणपज्जवेहिं तुल्ले, तिहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए, केवलदंसणपज्जवेहिं तुल्ले, जहन्नठिइयाणं भंते ! मणुस्साणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! जहन्नठिइए मणुस्से जहन्नठिइयस्स मणुस्सस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तुल्ले वन्नगंधरसफासपज्जवेहिं दोहिं अन्नाणेहिं दोहिं दंसणेहिं छट्ठाणवडिए, एवं उक्कोसठिइएवि, नवरं दो नाणा दो अन्नाणा दो दंसणा, अजहन्नमणुक्कोसठिइएवि एवं चेव, नवरं ठिईए चउट्ठाणवडिए ओगाहणट्ठयाए चउट्ठाणवडिए आइल्लेहिं चउहिं नाणेहिं छट्ठाणवडिए केवलनाणपज्जवेहिं तुल्ले तिहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए केवलदंसणपज्जवेहिं तुल्ले । जहन्नगुणकालयाणं भंते ! मणुस्साणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! जहन्नगुणकालए मणूसे जहन्नगुणकालगस्स मणुस्सस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए चउट्ठाणवडिए कालवन्नपज्जवेहिं तुल्ले अवसेसेहिं वन्नगंधरसफासपज्जवेहिं

छट्ठाणवडिए चउहिं नाणेहिं छट्ठाणवडिए केवलनाणपज्जवेहिं तुल्ले तिहिं अन्नाणेहिं तिहिं दंसणेहिं छट्ठाणवडिए केवलदं-
सणपज्जवेहिं तुल्ले, एवं उक्कोसगुणकालएवि, अजहन्नमणुक्कोसगुणकालएवि एवं चेव, नवरं सट्ठाणे छट्ठाणवडिए, एवं पंच
वन्ना दो गंधा पंच रसा अट्ठ फासा भाणियव्वा । जहन्नाभिणिबोहियनाणीणं मणुस्साणं केवइया पज्जवा पन्नत्ता ?, गोय-
मा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! जहन्नाभिणिबोहियणाणी मणूसे जहन्नाभिणिबो-
हियणाणिस्स मणुस्सस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए चउट्ठाणवडिए वन्नगंधरस-
फासपज्जवेहिं छट्ठाणवडिए आभिणिबोहियनाणपज्जवेहिं तुल्ले सुयनाणपज्जवेहिं दोहिं दंसणेहिं छट्ठाणवडिए, एवं उक्कोसा-
भिणिबोहियनाणीवि नवरं आभिणिबोहियनाणपज्जवेहिं तुल्ले ठिईए तिट्ठाणवडिए तिहिं नाणेहिं तिहिं दंसणेहिं छट्ठाणव-
डिए, अजहन्नमणुक्कोसाभिणिबोहियनाणी जहा उक्कोसाभिणिबोहियनाणी, नवरं ठिईए चउट्ठाणवडिए सट्ठाणे छट्ठाणवडि-
ए, एवं सुयनाणीवि, जहन्नोहिनाणीणं भंते ! मणुस्साणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता,
से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! जहन्नोहिनाणी मणुस्से जहन्नोहिनाणिस्स मणूसस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए
तुल्ले ओगाहणट्ठयाए तिट्ठाणवडिए ठिईए तिट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं दोहिं नाणेहिं छट्ठाणवडिए ओहिनाणपज्ज-
वेहिं तुल्ले मणनाणपज्जवेहिं छट्ठाणवडिए तिहिं दंसणेहिं छट्ठाणवडिए, एवं उक्कोसोहिनाणीवि, अजहन्नमणुक्कोसोहिनाणी
एवं चेव, नवरं ओगाहणट्ठयाए चउट्ठाणवडिए, सट्ठाणे छट्ठाणवडिए, जहा ओहिनाणी तहा मणपज्जवनाणीवि भाणियव्वे,
नवरं ओगाहणट्ठयाए तिट्ठाणवडिए, जहा आभिणिबोहियणाणी तहा मइअन्नाणी सुयअन्नाणीवि भाणियव्वे, जहा ओहि-

नाणी तहा विभंगनाणीवि भाणियव्वे चक्खुदंसणी अचक्खुदंसणी य जहा आभिणिबोहियणाणी ओहिदंसणी जहा ओहिनाणी । जत्थ नाणा तत्थ अन्नाणा नत्थि जत्थ अन्नाणा तत्थ नाणा नत्थि, जत्थ दंसणा तत्थ णाणावि अन्नाणावि । केवलनाणीणं भंते ! मणुस्साणं केवइया पज्जवा पन्नत्ता ?, गोयमा ! अणंता पज्जवा पन्नत्ता, से केणट्ठेणं भंते ! एवं वुच्चइ— केवलनाणीणं मणुस्साणं अणंता पज्जवा पन्नत्ता ?, गोयमा ! केवलनाणी मणूसे केवलनाणिस्स मणूसस्स दव्वट्ठयाए तुल्ले पएसट्ठयाए तुल्ले ओगाहणट्ठयाए चउट्ठाणवडिए ठिईए तिट्ठाणवडिए वन्नगंधरसफासपज्जवेहिं छट्ठाणवडिए केवलनाणपज्जवेहिं केवलदंसणपज्जवेहि य तुल्ले एवं केवलदंसणीवि मणूसे भाणियव्वे ॥ ( सूत्रं ११६ ) वाणमंतरा जहा असुरकुमारा । एवं जोइसियवेमाणिया, नवरं सट्ठाणे ठिईए तिट्ठाणवडिए भाणियव्वे, सेत्तं जीवपज्जवा । ( सूत्रं ११७ )

एवमसुरकुमारादिसूत्राण्यपि भावनीयानि प्रायः समानगमत्वात्, जघन्यावगाहनादिपृथिव्यादिसूत्रे स्थित्या त्रिस्थानपतितत्वं सङ्ख्येयवर्षायुष्कत्वात्, एतच्च प्रागेव सामान्यपृथिवीकायिकसूत्रे भावितं, पर्यायचिन्तायामज्ञाने एव मत्यज्ञानश्रुताज्ञानलक्षणे वक्तव्ये न तु ज्ञाने, तेषां सम्यक्त्वस्य तेषु मध्ये सम्यक्त्वसहितस्य चोत्पादासंभवात् 'उभयाभावो पुढवाइएसु' इति वचनात्, अत एवैतदेवोक्तमत्र 'दोहिं अन्नाणेहिं' इति । जघन्यावगाहनद्वीन्द्रियसूत्रे 'दोहिं नाणेहिं दोहिं अन्नाणेहिं' इति, द्वीन्द्रियाणां हि केषाञ्चिदपर्याप्तावस्थायां सास्वादनसम्यक्त्वमवाप्यते सम्यग्दृष्टेश्च ज्ञाने इति द्वे ज्ञाने लभ्येते शेषाणामज्ञाने तत उक्तं द्वाभ्यां ज्ञानाभ्यां द्वाभ्यामज्ञानाभ्यामिति, उत्कृष्टाव-

गाहनायां त्वपर्याप्तावस्थाया अभावात् सास्वादनसम्यक्त्वं नावाप्यते ततस्तत्र ज्ञाने न वक्तव्ये, तथा चाह—'एवं उक्कोसितोगाहणाए वि नवरं नाणा नत्थि'त्ति, तथाऽजघन्योत्कृष्टावगाहना किल प्रथमसमयादूर्द्धं भवति इत्यपर्याप्तावस्थायामपि, तस्याः संभवात् सासादनसम्यक्त्ववतां ज्ञाने अन्येपां चाज्ञाने इति ज्ञाने चाज्ञाने च वक्तव्ये, तथा चाह—'अजहन्नमणुक्कोसोगाहणए जहा जहन्नोगाहणए' इति, तथा जघन्यस्थितिसूत्रे द्वे अज्ञाने एव वक्तव्ये न तु ज्ञाने, यतः सर्वजघन्यस्थितिको लब्ध्यपर्याप्तको भवति न च लब्ध्यपर्याप्तकेपु मध्ये सास्वादनसम्यग्दृष्टिरुत्पद्यते, किं कारणमिति चेत्, उच्यते, लब्ध्यपर्याप्तको हि सर्वसङ्क्लिष्टः सासादनसम्यग्दृष्टिश्च मनाक् शुभपरिणामस्ततः स तेपु मध्ये नोत्पद्यते तेनाज्ञाने एव लभ्येते न ज्ञाने, उत्कृष्टस्थितिपु पुनर्मध्ये सासादनसम्यक्त्वसहितोऽप्युत्पद्यते इति तत्सूत्रे ज्ञाने अज्ञाने च वक्तव्ये, तथा चाह—'एवं उक्कोसठिइएवि, नवरं दो नाणा अब्भहिया' इति, एवमेवाजघन्योत्कृष्टस्थितिसूत्रमपि वक्तव्यं, भावसूत्राणि पाठसिद्धानि, एवं त्रीन्द्रियचतुरिन्द्रिया अपि वक्तव्याः, नवरं चतुरिन्द्रियाणां चक्षुर्दर्शनमधिकं अन्यथा चतुरिन्द्रियत्वायोगादिति तेपां चक्षुर्दर्शनविपयमपि सूत्रं वक्तव्यं, जघन्यावगाहनतिर्यक्पञ्चेन्द्रियसूत्रे 'ठिईए तिट्ठाणवडिए' इति, इह तिर्यक्पञ्चेन्द्रियः सङ्ख्येयवर्षायुष्क एव जघन्यावगाहनो भवति, नाऽसङ्ख्येयवर्षायुष्कः, किं कारणं इति चेत्, उच्यते, असङ्ख्येयवर्षायुपो हि महाशरीराः कङ्ककुक्षिपरिणामत्वात् पुष्टाहाराः प्रबलधातूपचयाः ततस्तेपां भूयान् शुक्रनिपेको भवति शुक्रनिपेकानुसारेण च तिर्यग्मनुष्याणामुत्पत्तिस-

मयेऽवगाहनेति न तेषां जघन्यावगाहना लभ्यते किं तु सङ्ख्येयवर्षायुषां, सङ्ख्येयवर्षायुषश्च स्थित्या त्रिस्थानपतिताः, एतच्च भावितं प्राक्, तत उक्तं स्थित्या त्रिस्थानपतिता इति, 'दोहिं नाणेहिं दोहिं अन्नाणेहिं' इति जघन्यावगाहनो हि तिर्यक्पञ्चेन्द्रियः सङ्ख्येयवर्षायुष्कोऽपर्याप्तो भवति सोऽपि चाल्पकायेषु मध्ये समुत्पद्यमानस्ततस्तस्यावधिविभङ्गज्ञानासंभवात् द्वे ज्ञाने द्वे अज्ञाने उक्ते, यस्तु विभङ्गज्ञानसहितो नरकादुद्धृत्य सङ्ख्येयवर्षायुष्केषु तिर्यक्पञ्चेन्द्रियेषु मध्ये समुत्पद्यमानो वक्ष्यते स महाकायेषूत्पद्यमानो द्रष्टव्यः नाल्पकायेषु, तथास्वाभाव्यात्, अन्यथाऽधिकृतसूत्रविरोधः, उत्कृष्टावगाहनतिर्यक्पञ्चेन्द्रियसूत्रे 'तिहिं नाणेहिं तिहिं अन्नाणेहिं' इति त्रिभिर्ज्ञानैस्त्रिभिरज्ञानैश्च षट्स्थानपतिताः, तत्र त्रीणि अज्ञानानि कथमिति चेत्, उच्यते, इह यस्य योजनसहस्रं शरीरावगाहना स उत्कृष्टावगाहनः स च सङ्ख्येयवर्षायुष्क एव भवति पर्याप्तश्च, तेन तस्य त्रीणि ज्ञानानि त्रीण्यज्ञानानि च संभवन्ति, स्थित्याऽपि चासावुत्कृष्टावगाहनः त्रिस्थानपतितः, सङ्ख्येयवर्षायुष्कत्वात्, अजघन्योत्कृष्टावगाहनसूत्रे स्थित्या चतुःस्थानपतितः, यतोऽजघन्योत्कृष्टावगाहनोऽसङ्ख्येयवर्षायुष्कोऽपि लभ्यते, तत्रोपपद्यते प्रागुक्तयुक्त्या चतुःस्थानपतितत्वं, जघन्यस्थितिकतिर्यक्पञ्चेन्द्रियसूत्रे द्वे अज्ञाने एव वक्तव्ये न तु ज्ञाने, यतोऽसौ जघन्यस्थितिको लब्ध्यपर्याप्तक एव भवति न च तन्मध्ये सासादनसम्यग्दृष्टेरुत्पाद इति, उत्कृष्टस्थितिकतिर्यक्पञ्चेन्द्रियसूत्रे 'दो नाणा दो अन्नाणा' इति, उत्कृष्टस्थितिको हि तिर्यक्पञ्चेन्द्रियस्त्रिपल्योपमस्थितिको भवति, तस्य च द्वे अज्ञाने तावन्नियमेन यदा पुनः

षण्मासावशेषायुर्वैमानिकेषु बद्धायुष्को भवति तदा तस्य द्वे ज्ञाने लभ्येते अत उक्तं द्वे ज्ञाने द्वे अज्ञाने इति, अजघन्योत्कृष्टस्थितिकतिर्यक्पञ्चेन्द्रियसूत्रे 'ठिईए चउट्ठाणवडिए' इति अजघन्योत्कृष्टस्थितिको हि तिर्यक्पञ्चेन्द्रियः सङ्ख्येयवर्षायुष्कोऽपि लभ्यते असङ्ख्येयवर्षायुष्कोऽपि समयोनत्रिपल्योपमस्थितिकः ततश्चतुःस्थानपतितः, जघन्याभिनिबोधिकतिर्यक्पञ्चेन्द्रियसूत्रे 'ठिईए चउट्ठाणवडिए' इति, असङ्ख्येयवर्षायुषोऽपि हि तिर्यक्पञ्चेन्द्रियस्य स्वभूमिकानुसारेण जघन्ये आभिनिबोधिकश्रुतज्ञाने लभ्येते ततः सङ्ख्येयवर्षायुषोऽसङ्ख्येयवर्षायुषश्च जघन्याभिनिबोधिकश्रुतज्ञानसंभवाद् भवन्ति स्थित्या चतुःस्थानपतिताः, उत्कृष्टाभिनिबोधिकज्ञानसूत्रे स्थित्या च त्रिस्थानपतिता वक्तव्याः, यत इह यस्योत्कृष्टे आभिनिबोधिकश्रुतज्ञाने स नियमात् सङ्ख्येयवर्षायुष्कः सङ्ख्येयवर्षायुष्कश्च स्थित्यापि त्रिस्थानपतित एव यथोक्तं प्राक्, अवधिसूत्रे विभङ्गसूत्रेऽपि स्थित्या त्रिस्थानपतितः, किं कारणम् इति चेत्, उच्यते, असङ्ख्येयवर्षायुषोऽवधिविभङ्गासंभवात्, आह च मूलटीकाकारः 'ओहिविभङ्गेसु नियमा तिट्ठाणवडिए, किं कारणं ?, भन्नइ, ओहिविभङ्गा असंखेज्जवासाउयस्स नत्थि'त्ति जघन्यावगाहनमनुष्यसूत्रे 'ठिईए तिट्ठाणवडिए' इति तिर्यक्पञ्चेन्द्रियवत्, मनुष्योऽपि जघन्यावगाहनो नियमात् सङ्ख्येयवर्षायुष्कः, सङ्ख्येयवर्षायुष्कश्च स्थित्या त्रिस्थानपतित एवेति 'तिहिं नाणेहिं' इति, यदा कश्चित् तीर्थकरोऽनुत्तरोपपातिकदेवो वा अप्रतिपतितेनावधिज्ञानेन जघन्यायामवगाहनायामुत्पद्यते तदाऽवधिज्ञानमपि लभ्यते इतीह त्रिभिर्ज्ञानैरित्युक्तं, विभङ्गज्ञानसहितस्तु नरकादुद्वृत्तो जघ-

न्यायामवगाहनायां नोत्पद्यते तथास्वाभाव्यात् अतो विभङ्गज्ञानं न लभ्यते इति द्वाभ्यामज्ञानाभ्यामित्युक्तं, उत्कृष्टावगाहनमनुष्यसूत्रे 'ठिईए सिय हीणे सिय तुल्ले सिय अब्भहिए जइ हीणे असंखेज्जभागहीणे जइ अब्भहिए असंखेज्जभागअब्भहिए' इति, उत्कृष्टावगाहना हि मनुष्यास्त्रिगव्यूतोच्छ्रयाः त्रिगव्यूतानां च स्थितिर्जघन्यतः पल्योपमासङ्ख्येयभागहीनानि त्रीणि पल्योपमानि उत्कर्षतस्तान्येव परिपूर्णानि त्रीणि पल्योपमानि, उक्तं च जीवाभिगमे— 'उत्तरकुरुदेवकुराए मणुस्साणं भंते ! केवइयं कालं ठिई पन्नत्ता ?, गोयमा ! जहन्नेणं तिन्नि पलिओवमाइं पलिओवमस्सासंखिज्जइभागहीणाइं उक्कोसेणं तिन्नि पलिओवमाइं' त्रिपल्योपमासङ्ख्येयभागश्च त्रयाणां पल्योपमानामसङ्ख्येयतमो भाग इति पल्योपमासङ्ख्येयभागहीनपल्योपमत्रयस्थितिकः परिपूर्णपल्योपमत्रयस्थितिकापेक्षयाऽसङ्ख्येयभागहीनः, इतरस्तु तदपेक्षयाऽसङ्ख्येयभागाधिकः, शेषा वृद्धिहानयो न लभ्यन्ते, 'दो नाणा दो अन्नाणा' इति उत्कृष्टावगाहना हि असङ्ख्येयवर्षायुषः, असङ्ख्येयवर्षायुषां चावधिविभङ्गासंभवः, तथास्वाभाव्यात्, अतो द्वे एव ज्ञाने द्वे चाज्ञाने इति, तथाऽजघन्योत्कृष्टावगाहनः सङ्ख्येयवर्षायुष्कोऽपि भवति असङ्ख्येयवर्षायुष्कोऽपि भवति, असङ्ख्येयवर्षायुष्कोऽपि गव्यूतद्विगव्यूतोच्छ्रयः ततोऽवगाहनयाऽपि चतुःस्थानपतितत्वं स्थित्याऽपि तथा, आद्यैश्चतुर्भिर्मतिश्रुतावधिमनःपर्यायरूपैर्ज्ञानैः षट्स्थानपतिताः, तेषां चतुर्णामपि ज्ञानानां तत्तद्द्रव्यादिसापेक्षतया क्षयोपशमवैचित्र्यतस्तारतम्यभावात्, केवलज्ञानपर्यवैस्तुल्यता, निःशेषस्वावरणक्षयतः प्रादुर्भूतस्य केवलज्ञानस्य भेदाभावात्, शेषं

सुगमं, जघन्यस्थितिकमनुष्यसूत्रे 'दोहिं अन्नाणेहिं' इति द्वाभ्यामज्ञानाभ्यां मत्यज्ञानश्रुताज्ञानरूपाभ्यां षट्स्थानपतितता वक्तव्या, न तु ज्ञानाभ्यां, कस्मादिति चेत् ?, उच्यते, जघन्यस्थितिका मनुष्याः संमूर्च्छिमाः, संमूर्च्छिममनुष्याश्च नियमतो मिथ्यादृष्टयः, ततस्तेषामज्ञाने एव न तु ज्ञाने, उत्कृष्टस्थितिकमनुष्यसूत्रे 'दो नाणा दो अन्नाणा' इति, उत्कृष्टस्थितिका हि मनुष्यास्त्रिपल्योपमायुषः, तेषां च तावदज्ञाने नियमेन यदा पुनः षण्मासावशेषायुषो वैमानिकेषु बद्धायुषस्तदा सम्यक्त्वलाभात् द्वे ज्ञाने लभ्येते अवधिविभङ्गौ चासङ्ख्येयवर्षायुषां न स्त इति त्रीणि ज्ञानानि त्रीण्यज्ञानानीति नोक्तं, अजघन्योत्कृष्टस्थितिकमनुष्यसूत्रमजघन्योत्कृष्टावगाहनमनुष्यसूत्रमिव भावनीयं, जघन्याभिनिबोधिकमनुष्यसूत्रे द्वे ज्ञाने वक्तव्ये द्वे दर्शने च, किं कारणं इति चेत् ?, उच्यते, जघन्याभिनिबोधिको हि जीवो नियमादवधिमनःपर्यवज्ञानविकलः, प्रबलज्ञानावरणकर्मोदयसद्भावात्, अन्यथा जघन्याभिनिबोधिकज्ञानत्वायोगात्, ततः शेषज्ञानदर्शनासंभवादाभिनिबोधिकज्ञानपर्यवैस्तुल्यः श्रुतज्ञानपर्यवैर्द्वाभ्यां दर्शनाभ्यां च षट्स्थानपतिततोक्ता, उत्कृष्टाभिनिबोधिकसूत्रे 'ठिईए तिट्ठाणवडिए' इति उत्कृष्टाभिनिबोधिको हि नियमात्सङ्ख्येयवर्षायुः, असङ्ख्येयवर्षायुषः तथाभवस्वाभाव्यात् सर्वोत्कृष्टाभिनिबोधिकज्ञानासंभवात्, सङ्ख्येयवर्षायुषश्च प्रागुक्तयुक्तेः स्थित्या त्रिस्थानपतिता इति, जघन्यावधिसूत्रे उत्कृष्टावधिसूत्रे चावगाहनया त्रिस्थानपतितो वक्तव्यः, यतः सर्वजघन्योऽवधिर्यथोक्तस्वरूपो मनुष्याणां पारभविको न भवति, किं तु तद्भवभावी, सोऽपि च पर्याप्तावस्थायां, अपर्या-

सावस्थायां तद्योग्यविशुद्ध्यभावात्, उत्कृष्टोऽप्यवधिर्भावतश्चारित्रिणः, ततो जघन्यावधिरुत्कृष्टावधिर्वाऽवगाहनया त्रिस्थानपतितः, अजघन्योत्कृष्टस्त्ववधिः पारभविकोऽपि संभवति ततोऽपर्याप्तावस्थायामपि तस्य संभवात् अजघन्योत्कृष्टावधिरवगाहनया चतुःस्थानपतितः, स्थित्या तु जघन्यावधिरुत्कृष्टावधिरजघन्योत्कृष्टावधिर्वा त्रिस्थानपतितः, असङ्ख्येयवर्षायुषामवधेरसंभवात्, सङ्ख्येयवर्षायुषां च त्रिस्थानपतितत्वात्, जघन्यमनःपर्यवज्ञानी उत्कृष्टमनःपर्यवज्ञानी अजघन्योत्कृष्टमनःपर्यवज्ञानी च स्थित्या त्रिस्थानपतितः, चारित्रिणामेव मनःपर्यायज्ञानसद्भावात्, चारित्रिणां च सङ्ख्येयवर्षायुष्कत्वात्, केवलज्ञानसूत्रे तु 'ओगाहणट्ठयाए चउट्ठाणवडिए' इति केवलिसमुद्घातं प्रतीत्य, तथाहि—केवलिसमुद्घातगतः केवली शेषकेवलिभ्योऽसङ्ख्येयगुणाधिकावगाहनः, तदपेक्षया शेषाः केवलिनोऽसङ्ख्येयगुणहीनावगाहनाः, स्वस्थाने तु शेषाः केवलिनस्त्रिस्थानपतिता इति स्थित्या त्रिस्थानपतितत्वं, सङ्ख्येयवर्षायुष्कत्वात् ॥ व्यन्तरा यथाऽसुरकुमाराः, ज्योतिष्कवैमानिका अपि तथैव, नवरं ते स्थित्या त्रिस्थानपतिता वक्तव्याः, एतच्च प्रागेव भावितं । उपसंहारमाह—[ ग्रन्थाग्रं ५००० ] 'सेत्तं जीवपज्जवा' एते जीवपर्यायाः । सम्प्रत्यजीवपर्यायान् पृच्छति—

अजीवपज्जवा णं भंते ! कइविहा पन्नत्ता ?, गोयमा ! दुविहा पन्नत्ता, तंजहा—रूविअजीवपज्जवा य अरूविअजीवपज्जवा य, अरूविअजीवपज्जवा णं भंते ! कइविहा पन्नत्ता ?, गोयमा ! दसविहा पन्नत्ता, तंजहा—धम्मत्थिकाए धम्मत्थिकायस्स

उववाओ भणिओ तेहिंतो मणुस्साणवि निरवसेसो भाणियव्वो, नवरं अहेसत्तमापुढविनेरइएहिंतो तेउवाउकाइएहिंतो ण उववज्जंति, सव्वदेवेहिंतो य उववाओ कायव्वो जाव कप्पातीतवेमाणियसव्वट्ठसिद्धदेवेहिंतोवि उववज्जावेयव्वा ( सूत्रं १३४ ) वाणमंतरदेवा णं भंते ! कओहिंतो उववज्जंति किं नेरइएहिंतो तिरिक्खजोणिय०मणुस्स० देवेहिंतो उववज्जंति ?, गोयमा ! जेहिंतो असुरकुमारा तेहिंतो भाणियव्वा ( सूत्रं १३५ ) जोइसिया णं भंते ! देवा णं कओहिंतो उववज्जंति, गोयमा ! एवं चेव नवरं संमुच्छिमअसंखिज्जवासाउयखहयरपंचिंदियतिरिक्खजोणियवज्जेहिंतो अंतरदीवमणुस्सवज्जेहिंतो उववज्जावेयव्वा ( सूत्रं १३६ ) वेमाणिया णं भंते ! कओहिंतो उववज्जंति किं नेरइएहिंतो किं तिरिक्खजोणिएहिंतो मणुस्सेहिंतो देवेहिंतो उववज्जंति ?, गोयमा ! णो णेरइएहिंतो उववज्जंति पंचिंदियतिरिक्खजोणिएहिंतो उववज्जंति मणुस्सेहिंतो उववज्जंति णो देवेहिंतो उववज्जंति एवं सोहम्मीसाणगदेवाऽवि भाणियव्वा, एवं सणंकुमारदेवावि भाणियव्वा नवरं असंखेज्जवासाउयअकम्मभूमगवज्जेहिंतो उववज्जंति, एवं जाव सहस्सारकप्पोवगवेमाणियदेवा भाणियव्वा, आणयदेवा णं भंते! कओहिंतो उववज्जंति किं नेरइएहिंतो किं पंचिंदियतिरिक्खजोणिय०मणुस्स०देवेहिंतो उववज्जंति ?, गोयमा ! णो णेरइएहिंतो उववज्जंति नो तिरिक्खजोणिएहिंतो उववज्जंति मणुस्सेहिंतो उववज्जंति णो देवेहिंतो उववज्जंति, जइ मणुस्सेहिंतो उववज्जंति किं संमुच्छिममणुस्सेहिंतो गब्भवक्कंतियमणुस्सेहिंतो उववज्जंति ?, गोयमा ! गब्भवक्कंतियमणुस्सेहिंतो नो संमुच्छिममणुस्सेहिंतो उववज्जंति, जइ गब्भवक्कंतियमणुस्सेहिंतो उववज्जंति किं कम्मभूमिगेहिंतो अकम्मभूमिगेहिंतो अंतरदीवगेहिंतो उववज्जंति ?, गोयमा ! नो अकम्मभूमिगेहिंतो णो अंतरदीवगेहिंतो उववज्जंति कम्मभूमिगगब्भवक्कंतियमणुस्से-

हिंतो उववज्जंति, जइ कम्मभूमगगब्भवक्कंतियमणूसेहिंतो उववज्जंति किं संखेज्जवासाउएहिंतो असंखेज्जवासाउएहिंतो उ० ?, गोयमा ! संखेज्जवासाउएहिंतो नो असंसिज्जवासाउएहिंतो उववज्जंति, जइ संखिज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसेहिंतो उववज्जंति किं पज्जत्तएहिंतो उववज्जंति अपज्जत्तएहिंतो उववज्जंति ?, गोयमा ! पज्जत्तएहिंतो उववज्जंति नो अपज्जत्तएहिंतो उववज्जंति, जइ पज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणुस्सेहिंतो उववज्जंति किं सम्मदिट्ठीपज्जत्तगसंखेज्जवासाउयकम्मभूमगेहिंतो उववज्जंति मिच्छदिट्ठिपज्जत्तगेहिंतो उववज्जंति सम्मामिच्छदिट्ठिपज्जत्तगेहिंतो उववज्जंति ?, गोयमा ! सम्मदिट्ठिपज्जत्तगसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसेहिंतो उववज्जंति मिच्छदिट्ठिपज्जत्तगेहिंतो उववज्जंति णो सम्मामिच्छदिट्ठिपज्जत्तएहिंतो उववज्जंति, जइ सम्मदिट्ठीपज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसेहिंतो उववज्जंति किं संजतसम्मदिट्ठीहिंतो असंयतसम्मदिट्ठीपज्जत्तएहिंतो संजयासंजयसम्मदिट्ठीपज्जत्तसंखेज्ज०हिंतो उववज्जंति ?, गोयमा ! तीहिंतोवि उववज्जंति, एवं जाव अच्चुगो कप्पो, एवं चेव गेविज्जगदेवावि नवरं असंजतसंजतासंजता एते पडिसेहेयव्वा, एवं जहेव गेविज्जगदेवा तहेव अणुत्तरोववाइयावि, णवरं इमं नाणत्तं संजया चेव, जइ सम्मदिट्ठीसंजतपज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसेहिंतो उववज्जंति किं पमत्तसंजयसम्मदिट्ठीपज्जत्तएहिंतो अपमत्तसंजयसम्मदिट्ठि०एहिंतो उववज्जंति ?, गोयमा ! अपमत्तसंज०एहिंतो उववज्जंति नो पमत्तसंज०एहिंतो उववज्जंति, जइ अपमत्तसंज०एहिंतो उववज्जंति किं इड्ढिपत्तसंजएहिंतो अणिड्ढिपत्तसंजएहिंतो ?, गोयमा ! दोहिंतो उववज्जंति । दारं । ( सूत्रं १३७ )

'नेरइया णं भंते ! कओहिंतो उववज्जंति' इत्यादि पाठसिद्धं नवरमेष संक्षेपार्थः—सामान्यतो नरकोपपातचिन्तायां रत्नप्रभोपपातचिन्तायां च देवनारकपृथिव्यादिपञ्चकविकलेन्द्रियत्रिकाणां तथाऽसङ्ख्येयवर्षायुश्चतुष्पदखचराणां शेषाणामपि चापर्याप्तकानां तिर्यक्पञ्चेन्द्रियाणां तथा मनुष्याणां संमूर्च्छिमानां गर्भव्युत्क्रान्तिकानामप्यकर्मभूमिजानां अन्तरद्वीपजानां कर्मभूमिजानामप्यसङ्ख्येयवर्षायुषां सङ्ख्येयवर्षायुषामपि अपर्याप्तकानां प्रतिषेधः शेषाणां विधानं, शर्कराप्रभायां संमूर्च्छिमानामपि प्रतिषेधः वालुकाप्रभायां भुजपरिसर्प्पाणामपि पङ्कप्रभायां खचराणामपि धूमप्रभायां चतुष्पदानामपि तमःप्रभायां उरःपरिसर्प्पाणामपि सप्तमपृथिव्यां स्त्रीणामपि। भवनवासिपूपपातचिन्तायां देवनारकपृथिव्यादिपञ्चकविकलेन्द्रियत्रिकापर्याप्ततिर्यक्पञ्चेन्द्रियसंमूर्च्छिमापर्याप्तगर्भव्युत्क्रान्तिकमनुष्याणां प्रतिषेधः शेषाणां विधानं, पृथिव्यब्वनस्पतौ सकलनैरयिकसनत्कुमारादिदेवानां तेजोवायुद्वित्रिचतुरिन्द्रियेषु सर्वनारकसर्वदेवानां तिर्यक्पञ्चेन्द्रियेष्वानतादिदेवानां मनुष्येषु सप्तमपृथिवीनारकतेजोवायूनां व्यन्तरेषु देवनारकपृथिव्यादिपञ्चकविकलेन्द्रियत्रिकापर्याप्ततिर्यक्पञ्चेन्द्रियसंमूर्च्छिमापर्याप्तगर्भव्युत्क्रान्तिकमनुष्याणां ज्योतिष्केषु संमूर्च्छिमतिर्यक्पञ्चेन्द्रियासङ्ख्येयवर्षायुष्कखचरान्तरद्वीपजमनुष्याणामपि प्रतिषेधः, एवं सौधर्मेशानयोरपि सनत्कुमारादिषु सहस्रारपर्यन्तेष्वकर्मभूमिजानामपि प्रतिषेधः आनतादिषु तिर्यक्पञ्चेन्द्रियाणामपि विजयादिषु मिथ्यादृष्टिमनुष्याणामपीति । गतं पञ्चमद्वारं, इदानीं षष्ठं द्वारमभिधित्सुराह—

नेरइया णं भंते ! अणंतरं उव्वट्टित्ता कहिं गच्छंति कहिं उववज्जंति किं नेरइएसु उववज्जंति तिरिक्खजोणिएसु उववज्जंति मणुस्सेसु उववज्जंति देवेसु उववज्जंति ?, गोयमा ! नो नेरइएसु उववज्जंति तिरिक्खजोणिएसु उववज्जंति मणुस्सेसु उववज्जंति नो देवेसु उववज्जंति, जइ तिरिक्खजोणिएसु उववज्जंति किं एगिंदिएसु उववज्जंति जाव पंचिंदियतिरिक्खजोणिएसु उववज्जंति ?, गोयमा ! णो एगिंदिएसु जाव नो चउरिंदिएसु उववज्जंति, एवं जेहिंतो उववाओ भणिओ तेसु उव्वट्टणावि भाणियव्वा, नवरं संमुच्छिमेसु न उववज्जंति, एवं सव्वपुढवीसु भाणियव्वं, नवरं अहेसत्तमाओ मणुस्सेसु ण उववज्जंति । ( सूत्रं१३८) । असुरकुमारा णं भंते ! अणंतरं उव्वट्टित्ता कहिं गच्छंति कहिं उववज्जंति किं नेरइएसु जाव देवेसु उ० ?, गोयमा ! नो नेरइएसु उववज्जंति तिरिक्खजोणिएसु उववज्जंति मणुस्सेसु उववज्जंति णो देवेसु उववज्जंति, जइ तिरिक्खजोणिएसु उववज्जंति किं एगिंदिएसु उववज्जंति जाव पंचिंदियतिरिक्खजोणिएसु उववज्जंति ?, गोयमा ! एगिंदियतिरिक्खजोणिएसु उववज्जंति नो बेइंदिएसु जाव नो चउरिंदिएसु उववज्जंति पंचिंदियतिरिक्खजोणिएसु उववज्जंति, जइ एगिंदिएसु उववज्जंति किं पुढविकाइयएगिंदिएसु जाव वणस्सइकाइयएगिंदिएसु उववज्जंति ?, गोयमा ! पुढविकाइयएगिंदिएसुवि आउकाइयएगिंदिएसुवि उववज्जंति नो तेउकाइएसु नो वाउकाइएसु उववज्जंति वणस्सइकाइएसु उववज्जंति, जइ पुढविकाइएसु उववज्जंति किं सुहुमपुढविकाइएसु बायरपुढविकाइएसु उववज्जंति ?, गोयमा ! बायरपुढविकाइएसु उववज्जंति नो सुहुमपुढविकाइएसु उववज्जंति, जइ बायरपुढविकाइएसु उववज्जंति किं पज्जत्तगबायरपुढविकाइएसु उववज्जंति अपज्जत्तबायरपुढविकाइएसु उववज्जंति ?, गोयमा ! पज्जत्तएसु उववज्जंति नो अपज्जत्तएसु उवव-

ज्जंति, एवं आउवणस्सइसुवि भाणियवं, पंचिंदियतिरिक्खजोणियमणूसेसु य जहा नेरइयाणं उवट्टणा संमुच्छिमवज्जा तहा भाणियवा एवं जाव थणियकुमारा (सूत्रं१३९)। पुढविकाइया णं भंते! अणंतरं उवट्टित्ता कहिं गच्छंति किं नेरइएसु जाव देवेसु ?, गोयमा! नो नेरइएसु तिरिक्खजोणियमणूसेसु उववज्जंति नो देवेसु उववज्जंति एवं जहा एतेसिं चेव उववाओ तहा उवट्टणावि देववज्जा भाणियवा, एवं आउवणस्सइबेइंदियतेइंदियचउरिंदियावि एवं तेउ०वाउ० नवरं मणुस्सवज्जेसु उववज्जंति (सूत्रं१४०) पंचिंदियतिरिक्खजोणिया णं भंते! अणंतरं उवट्टित्ता कहिं गच्छंति कहिं उववज्जंति ?, गोयमा! नेरइएसु जाव देवेसु उववज्जंति, जइ नेरइएसु उववज्जंति किं रयणप्पभापुढविनेरइएसु उववज्जंति जाव अहेसत्तमापुढविनेरइएसु उववज्जंति ?, गोयमा! रयणप्पभापुढविनेरइएसु उववज्जंति जाव अहेसत्तमापुढविनेरइएसु उववज्जंति, जइ तिरिक्खजोणिएसु उववज्जंति किं एगिंदिएसु जाव पंचिंदिएसु उ० ?, गोयमा! एगिंदिएसु जाव पंचिंदिएसु उववज्जंति, एवं जहा एतेसिं चेव उववाओ उवट्टणावि तहेव भाणियवा नवरं असंखेज्जवासाउएसुवि एते उववज्जंति, जइ मणुस्सेसु उववज्जंति किं संमुच्छिममणुस्सेसु उववज्जंति गब्भवक्कंतियमणूसेसु उववज्जंति ?, गोयमा! दोसुवि, एवं जहा उववाओ तहेव उवट्टणावि भाणियवा, नवरं अकम्मभूमग०अंतरदीवग० असंखेज्जवासाउएसुवि एते उववज्जंतित्ति भाणियवं, जइ देवेसु उववज्जंति किं भवणवईसु उववज्जंति जाव किं वेमाणिएसु उववज्जंति ?, गोयमा! सवेसु चेव उववज्जंति, जइ भवणवईसु किं असुरकुमारेसु उववज्जंति जाव थणियकुमारेसु उववज्जंति ?, गोयमा! सवेसु चेव उववज्जंति, एवं वाणमंतरजोइसियवेमाणिएसु निरंतरं उववज्जंति जाव सहस्सारो कप्पोत्ति। (सूत्रं१४१)। मणुस्सा णं भंते! अणंतरं उवट्टित्ता

कहिं गच्छंति कहिं उववज्जंति किं नेरइएसु उववज्जंति जाव देवेसु उववज्जंति ?, गोयमा! नेरइएसुवि उववज्जंति जाव देवेसुवि उववज्जंति, एवं निरंतरं सवेसु ठाणेसु पुच्छा, गोयमा ! सवेसु ठाणेसु उववज्जंति न किंचेवि पडिसेहो कायवो, जाव सवट्ठसिद्धदेवेसुवि उववज्जंति, अत्थेगतिया सिज्झंति बुज्झंति मुच्चंति परिनिवायंति सवदुक्खाणं अंतं करेंति। (सू०१४२)। वाणमंतरजोइसियवेमाणियसोहम्मीसाणा य जहा असुरकुमारा नवरं जोइसियाणंय वेमाणियाण य चयंतीति अभिलावो कायवो, सणंकुमारदेवाणं पुच्छा ? गोयमा ! जहा असुरकुमारा नवरं एगिंदिएसु ण उववज्जंति, एवं जाव सहस्सारगदेवा, आणय जाव अणुत्तरोववाइयादेवा एवंचेव, नवरं नो तिरिक्खजोणिएसु उववज्जंति मणुस्सेसु पज्जत्तसंखेज्जवासाउयकम्मभूमगगब्भवक्कंतियमणूसेसु उववज्जंति। दारं।.( सूत्रं १४३ )।

'नेरइया णं भंते ! अणंतरं उव्वट्टित्ता कहिं गच्छंति कहिं उववज्जंति' इत्यादि पाठसिद्धं, नवरमत्राप्येष संक्षेपार्थः— नैरयिकाणां स्वभवादुद्वृत्तानां गर्भजसङ्ख्येयवर्षायुष्कतिर्यक्पञ्चेन्द्रियमनुष्येषूत्पादः अधःसप्तमपृथिवीनारकाणां गर्भजसङ्ख्येयवर्षायुष्कतिर्यक्पञ्चेन्द्रियेष्वेव असुरकुमारादिभवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवानां बादरपर्याप्तपृथिव्यब्वनस्पतिगर्भजसङ्ख्येयवर्षायुष्कतिर्यक्पञ्चेन्द्रियमनुष्येषु पृथिव्यब्वनस्पतिद्वित्रिचतुरिन्द्रियाणां तिर्यग्गतौ मनुष्यगतौ च तेजोवायूनां तिर्यग्गतौ एव तिर्यक्पञ्चेन्द्रियाणां नारकतिर्यग्मनुष्यदेवगतिषु नवरं वैमानिकेषु सहस्रारपर्यन्तेषु मनुष्याणां सर्वेष्वपि स्थानेषु, सनत्कुमारादिदेवानां सहस्रारदेवपर्यन्तानां गर्भजसङ्ख्येयवर्षायुष्कतिर्यक्पञ्चेन्द्रियमनु-

ष्येषु, आनतादिदेवानां गर्भजसङ्ख्येयवर्षायुष्कमनुष्येष्वेवेति । गतं षष्ठं द्वारं, इदानीं सप्तमं द्वारं, तस्य चायमभिसम्बन्धः—येषां जीवानां नारकादिषु गतिषु विविध उपपातो वर्णितस्तैर्जीवैः पूर्वभवे एव वर्त्तमानैरायुर्बद्धं ततः पश्चादुपपातः, अन्यथोपपातायोगात्, तत्र कियति पूर्वभवायुषि शेषे पारभविकमायुर्बद्धमिति संशयानः पृच्छति—

नेरइया णं भंते ! कतिभागावसेसाउया परभवियाउयं पकरेंति ?, गोयमा ! नियमा छम्मासावसेसाउया परभवियाउयं, एवं असुरकुमाराविं, एवं जाव थणियकुमारा । पुढविकाइया णं भंते ! कतिभागावसेसाउया परभवियाउयं पकरेंति ?, गोयमा ! पुढविकाइया दुविहा पन्नत्ता, तंजहा—सोवक्कमाउया य निरुवक्कमाउया य, तत्थ णं जे ते निरुवक्कमाउया ते नियमा तिभागावसेसाउया परभवियाउयं पकरेंति, तत्थ णं जे ते सोवक्कमाउया ते सिय तिभागावसेसाउया परभवियाउयं पकरेंति सिय तिभागतिभागावसेसाउया परभवियाउयं पकरेंति सिय तिभागतिभागतिभागावसेसाउया परभवियाउयं पकरेंति, आउतेउवाउवणप्फइकाइयाणं बेइंदियतेइंदियचउरिंदियाणवि एवं चेव, पंचिंदियतिरिक्खजोणियाणं भंते ! कतिभागावसेसाउया परभवियाउयं पकरेंति ?, गोयमा ! पंचिंदियतिरिक्खजोणिया दुविहा पन्नत्ता, तंजहा—संखेज्जवासाउया य असंखेज्जवासाउया य, तत्थ णं जे ते असंखेज्जवासाउया ते नियमा छम्मासावसेसाउया परभवियाउयं पकरेंति, तत्थ णं जे ते संखिज्जवासाउया ते दुविहा पन्नत्ता, तंजहा—सोवक्कमाउया य निरुवक्कमाउया य, तत्थ णं जे ते निरुवक्कमाउया ते नियमा तिभागावसेसाउया परभवियाउयं पकरेंति, तत्थ णं जे ते सोवक्कमाउया ते णं सिय तिभागे परभ-

वियाउयं पकरेंति सिय तिभागतिभागे परभवियाउयं पकरेंति सिय तिभागतिभागतिभागावसेसाउया परभवियाउयं पकरेंति, एवं मणूसावि, वाणमंतरजोइसियवेमाणिया जहा नेरइया। दारं। ( सूत्रं १४४ )

'नेरइया णं भंते ! कइभागावसेसाउया परभवियाउयं बंधं(पकरें)ति' इत्यादि पाठसिद्धं। गतं सप्तमं द्वारं, इदानीमष्टमं द्वारं, तदेवं यद्भागावशेषेऽनुभूयमानभवायुषि पारभविकमायुर्बध्नन्ति तत्प्रतिपादितं, सम्प्रति यत्प्रकारं बध्नन्ति तत्प्रकारं नैरयिकादिदण्डकक्रमेण प्रतिपादयति—

कइविहे णं भंते ! आउयबंधे पन्नत्ते ?, गोयमा ! छव्विहे आउयबंधे पन्नत्ते, तंजहा—जातिनामनिहत्ताउए गतिनामनिहत्ताउए ठितीणामनिहत्ताउए ओगाहणनामनिहत्ताउए पएसनामनिहत्ताउए अणुभावनामनिहत्ताउए, नेरइयाणं भंते ! कइविहे आउयबंधे पन्नत्ते ?, गोयमा ! छव्विहे आउयबंधे पन्नत्ते, तंजहा—जातिनामनिहत्ताउए गतिणामनिहत्ताउए ठितीणामनिहत्ताउए ओगाहणणामनिहत्ताउए पदेसणामनिहत्ताउए अणुभावणामनिहत्ताउए एवं जाव वेमाणियाणं। जीवा णं भंते ! जातिनामनिहत्ताउयं कतिहिं आगरिसेहिं पगरेंति ?, गोयमा ! जहन्नेण एक्केण वा दोहिं वा तीहिं वा उक्कोसेणं अट्ठहिं, नेरइया णं भंते ! जातिनामनिहत्ताउयं कतिहिं आगरिसेहिं पगरेंति ?, गोयमा ! जहन्नेणं एक्केण वा दोहिं वा तीहिं वा उक्कोसेणं अट्ठहिं एवं जाव वेमाणिया, एवं गतिनामनिहत्ताउएवि ठितीणामनिहत्ताउएवि ओगाहणानामनिहत्ताउएवि पदेसनामनिहत्ताउएवि अणुभावनामनिहत्ताउएवि, एतेसिं णं भंते ! जीवाणं जातिनामनिहत्ताउयं जहन्नेणं एक्केण वा

दोहिं वा तीहिं वा उक्कोसेणं अट्ठहिं आगरिसेहिं पकरेमाणाणं कतरे कतरेहिंतो अप्पा वा वहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा जातिणामनिहत्ताउयं अट्ठहिं आगरिसेहिं पकरेमाणा सत्तहिं आगरिसेहिं पकरेमाणा संखेज्जगुणा छहिं आगरिसेहिं पकरेमाणा संखेज्जगुणा एवं पंचहिं संखिज्जगुणा चउहिं संखिज्जगुणा तीहिं संखिज्जगुणा दोहिं संखिज्जगुणा एगेणं आगरिसेणं पगरेमाणा संखेज्जगुणा, एवं एतेणं अभिलावेणं जाव अणुभागनामनिहत्ताउयं, एवं एते छप्पिय अप्पावहुदंडगा जीवादीया भाणियव्वा । ( सूत्रं १४५ ) इति पन्नवणाए वक्कंतियपयं छट्ठं समत्तं ६ ॥

'नेरइयाणं भंते ! कइविहे आउयवंधे पन्नत्ते' इत्यादि, 'जाइनामनिहत्ताउए' इति जातिः—एकेन्द्रियजात्यादिः पञ्चप्रकारा सैव नाम—नामकर्मण उत्तरप्रकृतिविशेषरूपं जातिनाम तेन सह निधत्तं—निषिक्तं यदायुस्तज्जातिनामनिधत्तायुः १, निषेकश्च कर्मपुद्गलानामनुभवनार्थं रचना, सा चैवं लक्षणा—'मोत्तूण सगमवाहं पढमाइ ठिईएँ वहुतरं दव्वं । सेसे विसेसहीणं जावुक्कोसंति उक्कोसा ॥ १ ॥' 'गतिनामनिहत्ताउए' इति गतिर्नरकगत्यादिभेदाच्चतुर्द्धा सैव नाम गतिनाम तेन सह निधत्तमायुर्गतिनामनिधत्तायुः २, स्थितिर्यत्तेन भवेन स्थातव्यं तत्प्रधानं नाम स्थितिनाम

---

१ मुक्त्वा स्वकीयामवाधां [ अवाधाकाले नानुभव इति न तत्र दलिकरचना ] प्रथमायां [ जघन्यायामन्तर्मुहूर्त्तरूपायां ] स्थितौ वहुतरं द्रव्यं [ एकाकर्षगृहीतेष्वपि दलिकेषु वहूनां जघन्यस्थितीनामेव भावात् ] शेषायां [ समयाद्यधिकान्तर्मुहूर्त्तादिकायां ] विशेषहीनं, एवं यावदुत्कृष्टां स्थितिं उत्कृष्टतो [ विशेषहीनं—सर्वहीनं दलिकं [ ॥ १ ॥

यद्यस्मिन् भवे उदयमागतमवतिष्ठते तद् गतिजातिशरीरपञ्चकादिव्यतिरिक्तं स्थितिनामावसेयमिति भावः, गत्यादीनां वर्जनं तेषां स्वपदैः 'गइनामनिहत्ताउए' इत्यादिभिरुपात्तत्वात्, तेन सह निधत्तायुः स्थितिनामनिधत्तायुः ३, तथा अवगाहते यस्यां जीवः साऽवगाहना—शरीरं औदारिकादिः तस्य नाम—औदारिकादिशरीरनामकर्म अवगाहनानाम शेषं तथैव ४, 'पएसनामनिहत्ताउए'त्ति प्रदेशाः—कर्मपरमाणवः ते च प्रदेशाः संक्रमतोऽप्यनुभूयमानाः परिगृह्यन्ते तत्प्रधानं नाम प्रदेशनाम, किमुक्तं भवति ?—यद्यस्मिन् भवे प्रदेशतोऽनुभूयते तत्प्रदेशनामेति, अनेन विपाकोदयमप्राप्तमपि नाम परिगृहीतं, तेन प्रदेशनाम्ना सह निधत्तमायुः प्रदेशनामनिधत्तायुः ५, तथाऽनुभावो—विपाकः, स चेह प्रकर्षप्राप्तः परिगृह्यते तत्प्रधानं नाम अनुभावनाम—यद्यस्मिन् भवे तीव्रविपाकं नामकर्म्मानुभूयते त(य)था नारकायुषि अशुभवर्णगन्धरसस्पर्शोपघातानादेयदुःस्वरायशःकीर्त्यादिनामानि तदनुभावनाम तेन सह निधत्तमायुरनुभावनामनिधत्तायुः ६, अथ कस्माज्जात्यादिनामकर्मभिरायुर्विशेष्यते ?, उच्यते, आयुःकर्मप्राधान्यख्यापनार्थं, तथाहि—नारकाद्यायुरुदये सति जात्यादिनामकर्मणामुदयो भवति नान्यथेति भवत्यायुषः प्रधानता इति, अथ जात्यादिनामविशिष्टमायुः कियद्भिराकर्षैर्बध्नातीति जिज्ञासुर्जीवादिदण्डकक्रमेण पृच्छति—'जीवा णं भंते ! जातिनामनिहत्ताउयं कइहिं आगरिसेहिं पगरंति' इत्यादि, आकर्षो नाम तथाविधेन प्रयत्नेन कर्मपुद्गलोपादानं यथा गौः पानीयं पिबन्ती भयेन पुनः पुनराघोटयति एवं जीवोऽपि यदा तीव्रेणायुर्बन्धाध्यवसायेन जातिनामनिधत्तायुः अन्यद्वा बध्नाति

तदा एकेन मन्देन द्वाभ्यां त्रिभिर्वा मन्दतरेण त्रिभिश्चतुर्भिर्वा मन्दतमेन पञ्चभिः षड्भिः सप्तभिरष्टभिर्वा, इह जात्यादिनाम्नामाकर्षनियम आयुषा सह बध्यमानानामवसातव्यो न शेषकालं, कासांचित् प्रकृतीनां ध्रुवबन्धिनीत्वादपरासां परावर्त्तमानत्वात् प्रभूतकालमपि बन्धसम्भवेनाकर्षानियमात्। इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां व्युत्क्रान्त्याख्यं षष्ठं पदं समाप्तम्।

इति श्रीप्रज्ञापनासूत्रे श्रीमन्मलयगिरिसूरिवर्यविरचितं व्युत्क्रान्त्याख्यं षष्ठं पदं समाप्तम्॥

# अथ सप्तममुच्छ्वासाख्यं पदं ।

व्याख्यातं षष्ठं पदं, इदानीं सप्तममारभ्यते, तस्य चायमभिसम्बन्धः, इहानन्तरपदे सत्त्वानामुपपातविरहादयोऽभिहिताः, अस्मिन् पुनर्नारकादिभावेनोत्पन्नानां प्राणापानपर्याप्त्या पर्याप्तानां यथासंभवमुच्छ्वासनिःश्वासक्रियाविरहाविरहकालपरिमाणमभिधेयं, इत्यनेन संबन्धेनायातस्यास्येदमादिसूत्रम्—

नेरइया णं भंते ! केवतिकालस्स आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा ?, गोयमा ! सततं संतयामेव आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा ॥ असुरकुमारा णं भंते ! केवतिकालस्स आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा ?, गोयमा ! जहन्नेणं सत्तण्हं थोवाणं उक्कोसेणं सातिरेगस्स पक्खस्स आणमंति वा जाव नीससंति ॥ नागकुमारा णं भंते ! केवइकालस्स आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा ?, गोयमा ! जहन्नेणं सत्तण्हं थोवाणं उक्कोसेणं मुहुत्तपुहुत्तस्स, एवं जाव थणियकुमाराणं ॥ पुढविकाइया णं भंते ! केवतिकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा ! वेमायाए आणमंति वा जाव नीससंति वा ॥ एवं जाव मणूसा ॥ वाणमंतरा जहा नागकुमारा ॥ जोइसिया णं भंते ! केवतिकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा ! जहन्नेणं मुहुत्तपुहुत्तस्स उक्कोसेणवि मुहुत्तपुहुत्तस्स जाव नीससंति वा ॥ वेमाणिया णं भंते ! केवतिकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा ! जहन्नेणं मुहुत्तपुहुत्तस्स.उक्कोसेणं

तेत्तीसाए पक्खाणं जाव नीससंति वा, सोहम्मदेवा णं भंते ! केवइकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा ! जहन्नेणं मुहुत्तपुहुत्तस्स उक्कोसेणं दोण्हं पक्खाणं जाव नीससंति वा, ईसाणगदेवा णं भंते ! केवइकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा! जहन्नेणं सातिरेगस्स मुहुत्तपुहुत्तस्स उक्कोसेणं सातिरेगाणं दोण्हं पक्खाणं जाव नीससंति वा, सणंकुमारदेवा णं भंते ! केवतिकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा ! जहन्नेणं दोण्हं पक्खाणं उक्कोसेणं सत्तण्हं पक्खाणं जाव नीससंति वा, माहिंदगदेवा णं भंते ! केवतिकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा ! जहन्नेणं साइरेगं दोण्हं पक्खाणं उक्कोसेणं साइरेगं सत्तण्हं पक्खाणं जाव नीससंति वा, बंभलोगदेवा णं भंते ! केवतिकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा ! जहन्नेणं सत्तण्हं पक्खाणं उक्कोसेणं दसण्हं पक्खाणं जाव नीससंति वा, लंतगदेवा णं भंते ! केवतिकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा ! जहन्नेणं दसण्हं पक्खाणं उक्कोसेणं चउदसण्हं पक्खाणं जाव नीससंति वा, महासुक्कदेवा णं भंते ! केवतिकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा ! जहन्नेणं चउदसण्हं पक्खाणं उक्कोसेणं सत्तरसण्हं पक्खाणं जाव नीससंति वा, सहस्सारगदेवा णं भंते ! केवतिकालस्स आणमंति वा जाव नीससंति वा ?, गोयमा! जहन्नेणं सत्तरसण्हं पक्खाणं उक्कोसेणं अट्ठारसण्हं पक्खाणं जाव नीससंति वा, आणयदेवा णं भंते ! केवतिकालस्स जाव नीससंति वा ? गोयमा ! जहन्नेणं अट्ठारसण्हं पक्खाणं उक्कोसेणं एगूणवीसाए पक्खाणं जाव नीससंति वा, पाणयदेवा णं भंते ! केवतिकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं एगूणवीसाए पक्खाणं उक्कोसेणं वीसाए पक्खाणं जाव नीससंति वा, आरणदेवा णं भंते ! केवतिकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं वीसाए पक्खाणं उक्को-

सेणं एगवीसाए पक्खाणं जाव नीससंति वा, अच्चुयदेवा णं भंते ! केवतिकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं एगवीसाए पक्खांणं उक्कोसेणं बावीसाए पक्खाणं जाव नीससंति वा । हिट्ठिमहिट्ठिमगेविज्जगदेवा णं भंते ! केवतिकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं बावीसाए पक्खाणं उक्कोसेणं तेवीसाए पक्खाणं जाव नीससंति वा, हिट्ठिममज्झिमगेविज्जगदेवा णं भंते ! केवतिकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं तेवीसाए पक्खाणं उक्कोसेणं चउवीसाए पक्खाणं जाव नीससंति वा, हिट्ठिमउवरिमगेविज्जगा णं देवा णं भंते ! केवतिकालस्स जाव नीससंति वा ?, गोयमा जहन्नेणं चउवीसाए पक्खाणं उक्कोसेणं पणवीसाए पक्खाणं जाव नीससंति वा, मज्झिमहिट्ठिमगेविज्जगा णं देवा णं भंते ! केवइकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं पणवीसाए पक्खाणं उक्कोसेणं छव्वीसाए पक्खाणं जाव नीससंति वा ।। मज्झिममज्झिमगेविज्जगा णं देवा णं भंते ! केवइकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं छव्वीसाए पक्खाणं उक्कोसेणं सत्तावीसाए पक्खाणं जाव नीससंति वा, मज्झिमउवरिमगेविज्जगा णं देवा णं भंते ! केवइकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं सत्तावीसाए पक्खाणं उक्कोसेणं अट्ठावीसाए पक्खाणं जाव नीससंति वा, उवरिमहेट्ठिमगेविज्जगा णं देवा णं भंते ! केवइकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं अट्ठावीसाए पक्खाणं उक्कोसेणं एगूणतीसाए पक्खाणं जाव नीससंति वा, उवरिममज्झिमगेविज्जगा णं देवा णं भंते ! केवइकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं एगूणतीसाए पक्खाणं उक्कोसेणं तीसाए पक्खाणं जाव नीससंति वा, उवरिमउवरिमगेविज्जगा णं देवा णं भंते ! केवइकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं तीसाए पक्खाणं उक्कोसेणं

एकतीसाए पक्खाणं जाव नीससंति वा ॥ विजयविजयंतजयंतअपराजितविमाणेसु णं देवा णं भंते ! केवतिकालस्स जाव नीससंति वा ?, गोयमा ! जहन्नेणं एकतीसाए पक्खाणं उक्कोसेणं तेत्तीसाए पक्खाणं जाव नीससंति वा, सव्वट्ठगसिद्धदेवा णं भंते ! केवतिकालस्स जाव नीससंति वा ?, गोयमा ! अजहन्नमणुक्कोसेणं तेत्तीसाए पक्खाणं जाव नीससंति वा ॥ ( सूत्रं १४६ ) इति पन्नवणाए भगवईए सत्तमं ऊसासपयं समत्तं ७ ॥

'नेरइया णं भंते !' इत्यादि, नैरयिका णमिति वाक्यालङ्कारे भदन्त ! 'केवइकालस्स' इति प्राकृतशैल्या पञ्चम्यर्थे वा तृतीयार्थे वा षष्ठी ततोऽयमर्थः—कियतः कालात् कियता वा कालेन 'आणमंति' आनन्ति 'अन् प्राणने' इति धातुपाठात् मकारोऽलाक्षणिकः, एवमन्यत्रापि यथायोगं परिभावनीयं, 'पाणमंति वा' प्राणन्ति वाशब्दौ समुच्चयार्थौ, एतदेव पदद्वयं क्रमेणार्थतः स्पष्टयति—'ऊससंति वा नीससंति वा' यदेवोक्तमानन्ति तदेवोक्तमुच्छ्वसन्ति तथा यदेवोक्तं प्राणन्ति तदेवोक्तं निःश्वसन्ति, अथवा आनमन्ति प्राणमन्ति इति 'णम् प्रह्वत्वे' इत्यस्य द्रष्टव्यं, धातूनामनेकार्थतया श्वसनार्थत्वस्याप्यविरोधः, अपरे आचक्षते—आनन्ति प्राणन्तीत्यनेनान्तः स्फुरन्ती उच्छ्वासनिःश्वासक्रिया परिगृह्यते उच्छ्वसन्ति निःश्वसन्तीत्यनेन तु बाह्या, एवं गौतमेन प्रश्ने कृते भगवानाह—गौतम ! सततमविरहितं, अतिदुःखिता हि नैरयिकाः, दुःखितानां च निरन्तरमुच्छ्वासनिःश्वासौ, तथा लोके दर्शनात्, तच्च सततं प्रायोवृत्त्याऽपि स्यादत आह—'संतयामेव' सततमेव—अनवरतमेव, नैकोऽपि समयस्तद्विरहकालः, दीर्घत्वं

प्राकृतत्वात्, आनमन्तीत्यादेः पुनरुच्चारणं शिष्यवचने आदरोपदर्शनार्थं, गुरुभिराद्रियमाणवचना हि शिष्याः सन्तोषवन्तो भवन्ति, तथा च सति पौनःपुन्येन प्रश्नश्रवणार्थनिर्णयादिषु घटन्ते लोके चाऽऽदेयवचना भवन्ति एवं प्रभूतभव्योपकारस्तीर्थाभिवृद्धिश्च । असुरकुमारसूत्रे 'उक्कोसेणं सातिरेगस्स पक्खस्स' इति, इह देवेषु यस्य यावन्ति सागरोपमाणि स्थितिस्तस्य तावत्पक्षप्रमाण उच्छ्वासनिःश्वासक्रियाविरहकालः, असुरकुमाराणां चोत्कृष्टा स्थितिरेकं सातिरेकं सागरोपमं 'चमरबलि सारमहिय'मिति वचनात् ततः 'सातिरेगस्स पक्खस्स' इत्युक्तं, सातिरेकात्पक्षादूर्ध्वमुच्छ्वसन्तीत्यर्थः, पृथिवीकायिकसूत्रे 'वेमायाए' इति विषमा मात्रा विमात्रा तया, किमुक्तं भवति ?—अनियतविरहकालप्रमाणा तेषामुच्छ्वासनिःश्वासक्रिया, तथा देवेषु यो यथा महायुः स तथा सुखी, सुखितानां च यथोत्तरं महानुच्छ्वासनिःश्वासक्रियाविरहकालः, दुःखरूपत्वादुच्छ्वासनिःश्वासक्रियायाः, ततो यथा यथाऽऽयुषः सागरोपमवृद्धिस्तथा तथोच्छ्वासनिःश्वासक्रियाविरहप्रमाणस्यापि पक्षवृद्धिः । इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां सप्तममुच्छ्वासाख्यं पदं समाप्तं ॥

॥ इति श्रीमन्मलयगिर्याचार्यविरचितवृत्तियुतं सप्तममुच्छ्वासपदं समाप्तम् ॥

## अथ अष्टमं संज्ञाख्यं पदं प्रारभ्यते ।

तदेवं व्याख्यातं सप्तमं पदं, इदानीमष्टममारभ्यते, तस्य चायमभिसम्बन्धः, इहानन्तरपदे सत्त्वानामुच्छ्वासपर्यासिनामकर्मयोगाश्रया क्रिया विरहाविरहकालप्रमाणेनोक्ता, सम्प्रति वेदनीयमोहनीयोदयाश्रयान् ज्ञानावरणदर्शनावरणक्षयोपशमाश्रयांश्चात्मपरिणामविशेषानधिकृत्य प्रश्नसूत्रमाह—

कइ णं भंते ! सन्नाओ पन्नत्ताओ ?, गोयमा ! दस सन्नाओ पन्नत्ताओ, तंजहा–आहारसन्ना भयसन्ना मेहुणसन्ना परिग्गहसन्ना कोहसन्ना माणसन्ना मायासन्ना लोहसन्ना लोयसन्ना ओघसन्ना ॥ नेरइयाणं भंते ! कति सन्नाओ पन्नत्ताओ ?, गोयमा ! दस सन्नाओ पन्नत्ताओ, तंजहा–आहारसन्ना जाव ओघसन्ना ॥ असुरकुमाराणं भंते ! कइ सन्नाओ पन्नत्ताओ ?, गोयमा ! दस सन्नाओ पन्नत्ताओ, तंजहा आहारसन्ना जाव ओघसन्ना, एवं जाव थणियकुमाराणं । एवं पुढविकाइयाणं जाव वेमाणियावसाणाणं नेतवं (सूत्रं १४७)। नेरइयाणं भंते ! किं आहारसन्नोवउत्ता भयसन्नोवउत्ता मेहुणसन्नोवउत्ता परिग्गहसन्नोवउत्ता ?, गोयमा ! ओसन्नं कारणं पडुच्च भयसन्नोवउत्ता, संतइभावं पडुच्च आहारसन्नोवउत्तावि जाव परिग्गहसन्नोवउत्तावि । एएसि णं भंते ! नेरइयाणं आहारसन्नोवउत्ताणं भयसन्नोवउत्ताणं मेहुणसन्नोवउत्ताणं परिग्गहसन्नोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सवत्थोवा नेरइया मेहुणसन्नोवउत्ता आहारसन्नो-

वउत्ता संखिज्जगुणा परिग्गहसन्नोवउत्ता संखिज्जगुणा भयसन्नोवउत्ता संखिज्जगुणा॥ तिरिक्खजोणियाणं भंते! किं आहारसन्नोवउत्ता जाव परिग्गहसन्नोवउत्ता ?, गोयमा ! ओसन्नं कारणं पडुच्च आहारसन्नोवउत्ता संतइभावं पडुच्च आहारसन्नोवउत्तावि जाव परिग्गहसन्नोवउत्तावि, एएसि णं भंते ! तिरिक्खजोणियाणं आहारसन्नोवउत्ताणं जाव परिग्गहसन्नोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा तिरिक्खजोणिया परिग्गहसन्नोवउत्ता मेहुणसन्नोवउत्ता संखिज्जगुणा भयसन्नोवउत्ता संखिज्जगुणा आहारसन्नोवउत्ता संखिज्जगुणा ॥ मणुस्सा णं भंते ! किं आहारसन्नोवउत्ता जाव परिग्गहसन्नोवउत्ता ?, गोयमा ! ओसन्नं कारणं पडुच्च मेहुणसन्नोवउत्ता संततिभावं पडुच्च आहारसन्नोवउत्तावि जाव परिग्गहसन्नोवउत्तावि, एएसि णं भंते ! मणुस्साणं आहारसन्नोवउत्ताणं जाव परिग्गहसन्नोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा मणूसा भयसन्नोवउत्ता आहारसन्नोवउत्ता संखिज्जगुणा परिग्गहसन्नोवउत्ता संखिज्जगुणा मेहुणसन्नोवउत्ता संखिज्जगुणा ॥ देवा णं भंते ! किं आहारसन्नोवउत्ता जाव परिग्गहसन्नोवउत्ता ?, गोयमा ! ओसन्नं कारणं पडुच्च परिग्गहसन्नोवउत्ता संततिभावं पडुच्च आहारसन्नोवउत्तावि जाव परिग्गहसन्नोवउत्तावि, एएसि णं भंते ! देवाणं आहारसन्नोवउत्ताणं जाव परिग्गहसन्नोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा देवा आहारसन्नोवउत्ता भयसन्नोवउत्ता संखिज्जगुणा मेहुणसन्नोवउत्ता संखिज्जगुणा परिग्गहसन्नोवउत्ता संखेज्जगुणा (सूत्रं १४८) । इति पन्नवणाए भगवईए अट्ठमं सन्नापदं समत्तं ।

'कइ णं भंते ! सन्नाओ पन्नत्ताओ' इति कति—कियत्सङ्ख्या णमिति वाक्यालङ्कारे भदन्त ! सञ्ज्ञाः प्रज्ञप्ताः, तत्र संज्ञानं संज्ञा आभोग इत्यर्थः यदिवा सञ्ज्ञायतेऽनयाऽयं जीव इति सञ्ज्ञा उभयत्रापि वेदनीयमोहोदयाश्रिता ज्ञानावरणदर्शनावरणक्षयोपशमाश्रिता च विचित्राऽऽहारादिप्राप्तिक्रिया, सा चोपाधिभेदाद्दशविधा, तथा चाह— गौतम ! दशविधाः प्रज्ञप्ताः, तदेव दशविधत्वं नामग्राहमाह—'आहारसन्ना' इत्यादि, तत्र क्षुद्वेदनीयोदयात् या कवलाद्याहारार्थं तथाविधपुद्गलोपादानक्रिया साऽऽहारसंज्ञा, तस्या आभोगात्मिकत्वात्, यदिवा संज्ञायते जीवोऽनयेति, एवं सर्वत्रापि भावना कार्या, तथा भयमोहनीयोदयात् भयोद्भ्रान्तस्य दृष्टिवदनविकाररोमाञ्चोद्भेदादिक्रिया भयसंज्ञा, पुंवेदोदयान्मैथुनाय स्त्र्यालोकनप्रसन्नवदनसंस्तम्भितोरुवेपनप्रभृतिलक्षणक्रिया मैथुनसञ्ज्ञा, तथा लोभोदयात् प्रधानसंसारकारणाभिष्वङ्गपूर्विका सचित्तेतरद्रव्योपादानक्रिया परिग्रहसञ्ज्ञा, तथा क्रोधवेदनीयोदयात् तदावेशगर्भा पुरुषमुखवदनदन्तच्छदस्फुरणचेष्टा क्रोधसञ्ज्ञा, तथा मानोदयादहङ्कारात्मिका उत्सेकादिपरिणतिर्मानसञ्ज्ञा, मायावेदनीयेनाशुभसंक्लेशादनृतसंभाषणादिक्रिया मायासंज्ञा, तथा लोभवेदनीयोदयतो लालसत्वेन सचित्तेतरद्रव्यप्रार्थना लोभसञ्ज्ञा, तथा मतिज्ञानावरणकर्मक्षयोपशमनात् शब्दाद्यर्थगोचरा सामान्याववोधक्रिया ओघसंज्ञा, तथा तद्विशेषाववोधक्रिया लोकसञ्ज्ञा, एवं चेदमापतितं—दर्शनोपयोग ओघसञ्ज्ञा ज्ञानोपयोगो लोकसञ्ज्ञा, अन्ये त्वभिदधति—सामान्यप्रवृत्तिर्यथा वल्ल्या वृत्त्यारोहणमोघसञ्ज्ञा लोकस्य हेया प्रवृत्तिर्लोकसञ्ज्ञा, तदेवमेताः सुखप्र-

तिपत्तये स्पष्टरूपाः पञ्चेन्द्रियानधिकृत्य व्याख्याताः, एकेन्द्रियाणां त्वेता अव्यक्तरूपा अवगन्तव्याः, नैरयिकसूत्रे 'ओसन्नकारणं पडुच्च भयसन्नोवउत्ता' इति, तत्रोत्सन्नशब्देन बाहुल्यमुच्यते कारणशब्देन च बाह्यं कारणं, ततोऽयमर्थः—बाह्यकारणमाश्रित्य नैरयिका बाहुल्येन भयसञ्ज्ञोपयुक्ताः, तथाहि—सन्ति तेषां सर्वतः प्रभूतानि परमाधार्मिकायः-कवल्लीशक्तिकुन्तादीनि भयोत्पादकादीनि, 'संतइभावं पडुच्च' इति इहानन्तरोऽनुभवभावः सन्ततिभाव उच्यते, तत आन्तरमनुभवभावमपेक्ष्य नैरयिका आहारसञ्ज्ञोपयुक्ता अपि यावत्परिग्रहसञ्ज्ञोपयुक्ता अपि । अल्पबहुत्वचिन्तायां सर्वस्तोका मैथुनसंज्ञोपयुक्ताः, नैरयिका हि चक्षुर्निमीलनमात्रमपि न सुखिनः केवलमनवरतमतिप्रबलदुःखाग्निना संतप्यमानशरीराः, उक्तं च—"अच्छिनिमीलणमेत्तं नत्थि सुहं दुक्खमेव पडिवद्धं । नरए नेरइयाणं अहोनिसंपच्च-माणाणं ॥ १ ॥" ततो मैथुनेच्छा नैतेषां भवतीति, यदि परं क्वचित्कदाचित्केषांचित् भवति साऽपि च स्तोककाला इति पृच्छासमये स्तोका मैथुनसञ्ज्ञोपयुक्ताः, तेभ्यः सङ्ख्येयगुणा आहारसञ्ज्ञोपयुक्ताः, दुःखितानामपि प्रभूतानां प्रभूतकालं चाहारेच्छाया भावतः पृच्छासमये अतिप्रभूतानामाहारसञ्ज्ञोपयुक्तानां संभवात्, तेभ्यः सङ्ख्येयगुणाः परि-ग्रहसञ्ज्ञोपयुक्ताः, आहारेच्छा हि देहार्थमेव भवति परिग्रहेच्छा तु देहे प्रहरणादिषु च, प्रभूततरकालावस्थायिनी च परिग्रहेच्छा; ततः पृच्छासमयेऽतिप्रभूततराः परिग्रहसञ्ज्ञोपयुक्ता अवाप्यन्ते इति भवन्ति पूर्वेभ्यः सङ्ख्येयगुणाः,

१ अक्षिनिमीलनमात्रं नास्ति सुखं दुःखमेव प्रतिबद्धम् । नरके नैरयिकाणामहर्निशं पच्यमानानाम् ॥ १ ॥

तेभ्यो भयसञ्ज्ञोपयुक्ताः सङ्ख्येयगुणाः, नरकेषु हि नैरयिकाणां सर्वतो भयमामरणान्तभावि ततः पृच्छासमयेऽतिप्रभूततमा भयसञ्ज्ञोपयुक्ताः प्राप्यन्ते इति सङ्ख्येयगुणाः ॥ तिर्यक्पञ्चेन्द्रिया अपि बाह्यं कारणं प्रतीत्य बाहुल्येनाहारसञ्ज्ञोपयुक्ता भवन्ति न शेषसञ्ज्ञोपयुक्ताः, तथा प्रत्यक्षत एवोपलब्धेः, आन्तरमनुभवभावमाश्रित्याहारसञ्ज्ञोपयुक्ता अपि यावत्परिग्रहसञ्ज्ञोपयुक्ता अपि, अल्पबहुत्वचिन्तायां सर्वस्तोकाः परिग्रहसञ्ज्ञोपयुक्ताः, परिग्रहसञ्ज्ञायाः स्तोककालत्वेन पृच्छासमये तेषां स्तोकानामेवावाप्यमानत्वात्, तेभ्यो मैथुनसञ्ज्ञोपयुक्ताः सङ्ख्येयगुणाः मैथुनसञ्ज्ञोपयोगस्य प्रभूततरकालत्वात्, तेभ्योऽपि भयसञ्ज्ञोपयुक्ताः सङ्ख्येयगुणाः, सजातीयात्परजातीयाच्च तेषां भयसंभवतो भयोपयोगस्य च प्रभूततमकालत्वात् पृच्छासमये भयसञ्ज्ञोपयुक्तानामतिप्रभूततराणामवाप्यमानत्वात्, तेभ्यः सङ्ख्येयगुणाः आहारसञ्ज्ञोपयुक्ताः, प्रायः सततं सर्वेषामाहार(संज्ञा)संभवात्। मनुष्या बाह्यं कारणमधिकृत्य बाहुल्येन मैथुनसञ्ज्ञोपयुक्ताः स्तोका शेषसंज्ञोपयुक्ताः, सन्ततिभावमान्तरानुभवभावरूपं प्रतीत्याहारसञ्ज्ञोपयुक्ता अपि यावत्परिग्रहसञ्ज्ञोपयुक्ता अपि, अल्पबहुत्वचिन्तायां सर्वस्तोका भयसञ्ज्ञोपयुक्ताः, स्तोकानां स्तोककालं च भयसंज्ञासंभवात्, तेभ्य आहारसञ्ज्ञोपयुक्ताः सङ्ख्येयगुणाः, आहारसञ्ज्ञोपयोगस्य प्रभूततरकालभावात्, अत एव हेतोः तेभ्यः सङ्ख्येयगुणाः परिग्रहसंज्ञोपयुक्ताः, तेभ्यो मैथुनसंज्ञोपयुक्ताः सङ्ख्येयगुणाः, मैथुनसंज्ञाया अतिप्रभूततरकालं यावद् भावतः पृच्छासमये तेषामतिप्रभूततराणामवाप्यमानत्वात् ॥ तथा बाह्यं कारणमधिकृत्य बाहुल्येन देवाः परिग्रहसञ्ज्ञो-

पयुक्ताः, मणिकनकरत्नादीनां परिग्रहसंज्ञोपयोगहेतूनां तेषां सदा सन्निहितत्वात्, संततिभावं यथोक्तरूपं प्रतीत्य पुनराहारसंज्ञोपयुक्ता अपि यावत्परिग्रहसंज्ञोपयुक्ता अपि, अल्पबहुत्वचिन्तायां सर्वस्तोका आहारसंज्ञोपयुक्ताः, आहारेच्छाविरहकालस्यातिप्रभूततया आहारसंज्ञोपयोगकालस्य चातिस्तोकतया तेषां पृच्छासमये सर्वस्तोकानां तेषामवाप्यमानत्वात्, ततो भयसंज्ञोपयुक्ताः सङ्ख्येयगुणाः, भयसंज्ञायाः प्रभूतानां प्रभूतकालं च भावात्, तेभ्योऽपि मैथुनसंज्ञोपयुक्ताः सङ्ख्येयगुणाः, तेभ्यः परिग्रहसंज्ञोपयुक्ताः सङ्ख्येयगुणाः, जीवापेक्षया बहवो वक्तव्यास्ते च तथैव भाविता इति । इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायामष्टमं संज्ञाख्यं पदं समाप्तं ।

॥ इति श्रीमन्मलयगिर्याचार्यविहितवृत्तियुतमष्टमं संज्ञापदं समाप्तम् ॥

## अधुना नवमपदं प्रारभ्यते ।

तदेवं व्याख्यातमष्टमं पदं, अधुना नवममारभ्यते, तस्य चायमभिसंबन्धः—इहानन्तरपदे सत्त्वाना संज्ञापरिणामा उक्ताः, इह तु तेषामेव योनयः प्रतिपाद्यन्ते, तत्र चेदमादिसूत्रम्—

कतिविहा णं भंते ! जोणी पं०, गोयमा ! तिविहा जोणी पं०, तं०—सीता जोणी उसिणा जोणी सीतोसिणा जोणी । ( सूत्रं १४९ )। नेरइयाणं भंते ! किं सिता जोणी उसिणा जोणी सीतोसिणा जोणी ?, गोयमा ! सीतावि जोणी उसिणावि जोणी णो सीतोसिणा जोणी । असुरकुमाराणं भंते ! किं सिता जोणी उसिणा जोणी सीतोसिणा जोणी ?, गोयमा ! नो सीता जोणी नो उसिणा जोणी सीतोसिणा जोणी, एवं जाव थणियकुमाराणं । पुढविकाइयाणं भंते ! किं सीता जोणी उसिणा जोणी सीतोसिणा जोणी ?, गोयमा ! सितावि जोणी उसिणावि जोणी सीतोसिणावि जोणी, एवं आउकाउवणस्सइबेइंदियतेइंदियचउरिंदियाणवि पत्तेयं भाणियवं । तेउकाइयाणं णो सीता उसिणा णो सीउसिणा ॥ पंचिंदियतिरिक्खजोणियाणं भंते ! किं सीता जोणी उसिणा जोणी सीतोसिणा जोणी ?, गोयमा ! सीयावि जोणी उसिणावि जोणी सीतोसिणावि जोणी ॥ संमुच्छिमपंचिंदियतिरिक्खजोणियाणवि एवं चेव ॥ गब्भवक्कंतियपंचिंदियतिरिक्खजोणियाणं भंते ! किं सीता जोणी उसिणा जोणी सीतोसिणा जोणी ?, गोयमा ! णो सीता जोणी नो उसिणा जोणी सीतोसिणा जोणी ॥

मणुस्साणं भंते ! किं सिता जोणी उसिणा जोणी सीतोसिणा जोणी ?, गोयमा ! सीयावि जोणी उसिणावि जोणी सीतोसिणावि जोणी ॥ संमुच्छिममणुस्साणं भंते ! किं सीता जोणी उसिणा जोणी सीतोसिणा जोणी ?, गोयमा ! तिविहा जोणी ॥ गब्भवक्कंतियमणुस्साणं भंते ! किं सीता जोणी उसिणा जोणी सीतोसिणा जोणी ?, गोयमा ! णो सीता० णो उसिणा० सीतोसिणा ॥ वाणमंतरदेवाणं भंते ! किं सीता जोणी उसिणा जोणी सीतोसिणा जोणी ?, गोयमा ! णो सीता णो उसिणा, सीतोसिणा जोणी ॥ जोइसियवेमाणियाणवि एवं चेव । एएसि णं भंते ! सीतजोणियाणं उसिणजोणियाणं सीतोसिणजोणियाणं अजोणियाण य कयरे२हिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा जीवा सीतोसिणजोणिया उसिणजोणिया असंखेज्जगुणा अजोणिया अणंतगुणा सीतजोणिया अणंतगुणा ॥ ( सूत्रं १५० ) ।

'कतिविहा णं भंते ! जोणी' इत्यादि, कतिविधा—कतिप्रकारा णमिति पूर्ववत् भदन्त ! योनिः प्रज्ञप्ता ?, अथ योनिरिति कः शब्दार्थः ?, उच्यते, "यु मिश्रणे" युवन्ति तैजसकार्मणशरीरवन्तः सन्त औदारिकादिशरीरप्रायोग्यपुद्गलस्कन्धसमुदायेन मिश्रीभवन्त्यस्यामिति योनिः—उत्पत्तिस्थानं, औणादिको निप्रत्ययः, भगवानाह—गौतम ! त्रिविधा योनिः प्रज्ञप्ता, तद्यथा—शीता उष्णा शीतोष्णा, तत्र शीतस्पर्शपरिणामा शीता उष्णस्पर्शपरिणामा उष्णा शीतोष्णरूपोभयस्पर्शपरिणामा शीतोष्णा, तत्र नैरयिकाणां द्विविधा योनिः—शीता उष्णा च, न तृतीया शीतोष्णा, कस्यां पृथिव्यां का योनिरिति चेत्, उच्यते, रत्नप्रभायां शर्कराप्रभायां वालुकाप्रभायां च यानि नैरयिकाणामुपपा-

तक्षेत्राणि तानि सर्वाण्यपि शीतस्पर्शपरिणामपरिणतानि, उपपातक्षेत्रव्यतिरेकेण चान्यत्सर्वमपि तिसृष्वपि पृथिवीपूष्णस्पर्शपरिणामपरिणतं तेन तत्रत्या नैरयिकाः शीतयोनिका उष्णां वेदनां वेदयन्ते, पङ्कप्रभायां बहून्युपपातक्षेत्राणि शीतस्पर्शपरिणामपरिणतानि स्तोकान्युष्णस्पर्शपरिणामपरिणतानि येषु च प्रस्तटेषु येषु च नरकावासेषु शीतस्पर्शपरिणामान्युपपातक्षेत्राणि तेषु तद्व्यतिरेकेणान्यत्सर्वमुष्णस्पर्शपरिणामं येषु च प्रस्तटेषु येषु च नरकावासेषु उष्णस्पर्शपरिणामानि उपपातक्षेत्राणि तेषु तद्व्यतिरेकेणान्यत्सर्वं शीतस्पर्शपरिणामं तेन तत्रत्या बहवो नैरयिकाः शीतयोनिका उष्णां वेदनां वेदयन्ते स्तोका उष्णयोनिकाः शीतवेदनामिति । धूमप्रभायां बहून्युपपातक्षेत्राणि उष्णस्पर्शपरिणामपरिणतानि स्तोकानि शीतस्पर्शपरिणामानि, येषु च प्रस्तटेषु येषु च नरकावासेषु चोष्णस्पर्शपरिणामपरिणतानि उपपातक्षेत्राणि तेषु तद्व्यतिरेकेणान्यत्सर्वं शीतपरिणामं, येषु च शीतस्पर्शपरिणामान्युपपातक्षेत्राणि तेष्वन्यदुष्णस्पर्शपरिणामं, तेन तत्रत्या बहवो नारका उष्णयोनिकाः शीतवेदनां वेदयन्ते स्तोकाः शीतयोनिका उष्णवेदनामिति । तमःप्रभायां तमस्तमःप्रभायां चोपपातक्षेत्राणि सर्वाण्यप्युष्णस्पर्शपरिणामपरिणतानि, तद्व्यतिरेकेण चान्यत्सर्वं तत्र शीतस्पर्शपरिणामं, तेन तत्रत्या नारका उष्णयोनिकाः शीतवेदनां वेदयितार इति । भवनवासिनां गर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रियगर्भव्युत्क्रान्तिकमनुष्याणां व्यन्तरज्योतिष्कवैमानिकानां चोपपातक्षेत्राणि शीतोष्णरूपोभयस्पर्शपरिणतानि तेन तेषां योनिरुभयस्वभावा न शीता नाप्युष्णा । एकेन्द्रियाणामप्कायिकवर्जानां

द्वित्रिचतुरिन्द्रियसंमूर्च्छिमतिर्यक्पञ्चेन्द्रियसंमूर्च्छिममनुष्याणां चोपपातस्थानानि शीतस्पर्शान्युष्णस्पर्शान्युभयस्पर्शान्यपि भवन्तीति तेषां त्रिविधा योनिः। तेजःकायिका उष्णयोनिकाः (तथा अप्कायिकाः शीतयोनिकाः) तथा प्रत्यक्षत उपलब्धेः। अल्पबहुत्वचिन्तायां सर्वस्तोकाः शीतोष्णयोनयः—शीतोष्णरूपोभययोनिकाः, भवनवासिगर्भजतिर्यक्पञ्चेन्द्रियगर्भजमनुष्यव्यन्तरज्योतिष्कवैमानिकानामेवोभययोनिकत्वात्, तेभ्योऽसङ्ख्येयगुणा उष्णयोनिकाः, सर्वेषां सूक्ष्मबादरभेदभिन्नानां तेजःकायिकानां प्रभूततराणां नैरयिकाणां कतिपयानां पृथिव्यब्वायुप्रत्येकवनस्पतीनां चोष्णयोनिकत्वात्, अयोनिका अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यः शीतयोनिका अनन्तगुणाः, अनन्तकायिकानां सर्वेषामपि शीतयोनिकत्वात्, तेषां च सिद्धेभ्योऽपि अनन्तगुणत्वात्। भूयः प्रकारान्तरेण योनीः प्रतिपिपादयिषुराह—

कतिविहा णं भंते! जोणी पं० ?, गोयमा! तिविहा जोणी प०, तं०—सच्चित्ता अच्चित्ता मीसिया। नेरइयाणं भंते! किं सच्चित्ता जोणी अच्चित्ता जोणी मीसिया जोणी ?, गोयमा! नो सच्चित्ता जोणी अच्चित्ता जोणी नो मीसिया जोणी। असुरकुमाराणं भंते! किं सच्चित्ता जोणी अच्चित्ता जोणी मीसिया जोणी ?, गोयमा! नो सच्चित्ता जोणी अच्चित्ता जोणी नो मीसिया जोणी, एवं जाव थणियकुमाराणं। पुढवीकाइआणं भंते! किं सच्चित्ता जोणी अच्चित्ता जोणी मीसिया जोणी ?, गोयमा! सच्चित्ता जोणी अच्चित्ता जोणी मीसियावि जोणी, एवं जाव चउरिंदियाणं॥ संमुच्छिमपंचेंदियतिरिक्ख-

जोणियाणं संमुच्छिममणुस्साण य एवं चेव । गब्भवक्कंतियपंचिंदियतिरिक्खजोणियाणं गब्भवक्कंतियमणुस्साण य नो सचित्ता नो अचित्ता मीसिया जोणी । वाणमंतरजोइसियवेमाणियाणं जहा असुरकुमाराणं । एतेसि णं भंते ! जीवाणं सचित्तजोणीणं अचित्तजोणीणं मीसजोणीणं अजोणीण य कयरे २ हिंतो अ० व० तु० वि० ?, गोयमा ! सव्वत्थोवा जीवा मीसजोणिया अचित्तजोणिया असंखेज्जगुणा, अजोणिया अणंतगुणा, सचित्तजोणिया अणंतगुणा । (सूत्रं १५१)।

'कतिविहा णं भंते ! जोणी पन्नत्ता' इत्यादि, सचित्ता जीवप्रदशसंबद्धा, अचित्ता सर्वथा जीवविप्रमुक्ता, मिश्रा जीवविप्रमुक्ताविप्रमुक्तस्वरूपा । तत्र नैरयिकाणां यदुपपातक्षेत्रं तन्न केनचिज्जीवेन परिगृहीतमिति तेपामचित्ता योनिः, यद्यपि सूक्ष्मैकेन्द्रियाः सकललोकव्यापिनस्तथाऽपि न तत्प्रदेशैरुपपातस्थानपुद्गला अन्योऽन्यानुगमसंबद्धा इत्यचित्तैव तेषां योनिः । एवमसुरकुमारादीनां भवनपतीनां व्यन्तरज्योतिष्कवैमानिकानां चाचित्ता योनिर्भावनीया । पृथिवीकायिकादीनां संमूर्च्छिममनुष्यपर्यन्तानामुपपातक्षेत्रं जीवैः परिगृहीतमपरिगृहीतमुभयस्वभावं च संभवतीति त्रिविधाऽपि योनिः, गर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रियाणां गर्भव्युत्क्रान्तिकमनुष्याणां(च)यत्रोत्पत्तिस्तत्राचित्ता अपि शुक्रशोणितादिपुद्गलाः सन्तीति मिश्रा तेषां योनिः । अल्पबहुत्वचिन्तायां सर्वस्तोका जीवा मिश्रयोनिकाः, गर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रियमनुष्याणामेव मिश्रयोनिकत्वात्, तेभ्योऽचित्तयोनिका असङ्ख्येयगुणाः, नैरयिकदेवानां कतिपयानां च प्रत्येकं पृथिव्यप्तेजोवायुप्रत्येकवनस्पतिद्वित्रिचतुरिन्द्रियसंमूर्च्छिमतिर्यक्पञ्चेन्द्रियसंमूर्च्छिममनुष्याणामचि-

त्तयोनिकत्वात्, तेभ्योऽप्ययोनिका अनन्तगुणाः, सिद्धानामनन्तत्वात्, तेभ्यः सचित्तयोनिका अनन्तगुणाः, निगोदजीवानां सचित्तयोनिकत्वात् तेषां च सिद्धेभ्योऽप्यनन्तगुणत्वात्। भूयोऽपि प्रकारान्तरेण योनीः प्रतिपादयितुकाम आह—

कइविहा णं भंते! जोणी पं० ?, गोयमा! तिविहा जोणी प०, तं०—संवुडा जोणी वियडा जोणी संवुडवियडा जोणी। नेरइयाणं भंते! किं संवुडा जोणी वियडा जोणी संवुडवियडा जोणी ?, गोयमा! संवुडजोणी, नो वियडजोणी नो संवुडवियडजोणी, एवं जाव वणस्सइकाइयाणं। बेइंदियाणं पुच्छा, गोयमा! नो संवुडजोणी वियडजोणी नो संवुडवियडजोणी। एवं जाव चउरिंदियाणं। संमुच्छिमपंचिंदियतिरिक्खजोणियाणं संमुच्छिममणुस्साण य एवं चेव। गब्भवक्कंतियपंचिंदियतिरिक्खजोणिय०गब्भवक्कंतियमणुस्साण य नो संवुडा जोणी नो वियडा जोणी संवुडवियडा जोणी। वाणमंतरजोइसियवेमाणियाणं जहा नेरइयाणं। एतेसि णं भंते! जीवाणं संवुडजोणियाणं वियडजोणियाणं संवुडवियडजोणियाणं अजोणियाण य कयरे २ हिंतो अ० ब० तु० वि० ?, गोयमा! सव्वत्थोवा जीवा संवुडवियडजोणिया वियडजोणिया असंखिज्जगुणा अजोणिया अणंतगुणा संवुडजोणिया अणंतगुणा ॥ ( सूत्रं १५२ )

'कइविहा णं भंते! जोणी पन्नत्ता' इत्यादि, तत्र नारकाणां संवृता योनिः, नरकनिष्कुटानां नारकोत्पत्तिस्थानानां संवृतगवाक्षकल्पत्वात्, तत्र च जाताः सन्तो नैरयिकाः प्रवर्द्धमानमूर्तयस्तेभ्यः पतन्ति, शीतेभ्य उष्णेषु

उष्णेभ्यः शीतेष्विति, भवनपतिव्यन्तरज्योतिष्कवैमानिकानामपि संवृता योनिः, तेषां देवशयनीये देवदूष्यान्तरिते उत्पादात् "देवसयणिज्जंसि देवदूसंतरिए अंगुलासंखेज्जइभागमेत्ताए सरीरोगाहणाए उववज्जइ" इति वचनात्, एकेन्द्रिया अपि संवृतयोनिकाः, तेषामपि योनेः स्पष्टमनुपलक्ष्यमानत्वात्, द्वीन्द्रियादीनां चतुरिन्द्रियपर्यन्तानां संमूर्च्छिमतिर्यक्पञ्चेन्द्रियसंमूर्च्छिममनुष्याणां च विवृता योनिः, तेषामुत्पत्तिस्थानस्य जलाशयादेः स्पष्टमुपलभ्यमानत्वात्, गर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रियगर्भव्युत्क्रान्तिकमनुष्याणां च संवृतविवृता योनिः, गर्भस्य संवृतविवृतरूपत्वात्, गर्भो ह्यन्तः स्वरूपतो नोपलभ्यते बहिस्तूदरवृद्ध्यादिनोपलक्ष्यते इति । अल्पबहुत्वचिन्तायां सर्वस्तोकाः संवृतविवृतयोनिकाः, गर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रियमनुष्याणामेव संवृतविवृतयोनिकत्वात्, तेभ्यो विवृतयोनिका असंख्येयगुणाः, द्वीन्द्रियादीनां चतुरिन्द्रियपर्यवसानानां संमूर्च्छिमतिर्यक्पञ्चेन्द्रियसंमूर्च्छिममनुष्याणां च विवृतयोनिकत्वात्, तेभ्योऽयोनिका अनन्तगुणाः सिद्धानामनन्तत्वात्, तेभ्यः संवृतयोनिका अनन्तगुणाः, वनस्पतीनां संवृतयोनिकत्वात्, तेषां च सिद्धेभ्योऽप्यनन्तगुणत्वात् ॥ सम्प्रति मनुष्ययोनिविशेषप्रतिपादनार्थमाह—

कइविहा णं भंते ! जोणी पं० ?, गोयमा ! तिविहा जोणी पं०, तं०—कुम्मुण्णया संखावत्ता वंसीपत्ता, कुम्मुण्णया णं जोणी उत्तमपुरिसमाऊणं, कुम्मुण्णयाए णं जोणीए उत्तमपुरिसा गब्भे वक्कमंति तं०—अरहंता चक्कवट्टी बलदेवा वासु-

देवा । संखावत्ता णं जोणी इत्थीरयणस्स, संखावत्ताए जोणीए बहवे जीवा य पोग्गला य वक्कमंति विउक्कमंति चयंति उवचयंति, नो चेव णं णिप्फज्जंति । वंसीपत्ता णं जोणी पिहुजणस्स, वंसीपत्ताए णं जोणीए पिहुजणे गब्भे वक्कमंति । ( सूत्रं १५३ ) पन्नवणाए नवमं जोणीपदं समत्तं ९ ॥

'कइविहा णं भंते ! जोणी पन्नत्ता' इत्यादि, कूर्मपृष्ठमिवोन्नता कूर्मोन्नता, शङ्खस्येवावर्तो यस्याः सा शङ्खावर्ता, संयुक्तवंशीपत्रद्वयाकारत्वाद् वंशीपत्रा, शेषं सुगमं, नवरं शङ्खावर्तायां योनौ बहवो जीवा जीवसंबद्धा पुद्गलाश्चा-वक्रमन्ते—आगच्छन्ति व्युत्क्रामन्ति—गर्भतयोत्पद्यन्ते, तथा चीयन्ते—सामान्यतश्चयमागच्छन्ति, उपचीयन्ते—विशेषत उपचयमायान्ति, परं न निष्पद्यन्ते, अतिप्रबलकामाग्निपरितापतो ध्वंसगमनादिति वृद्धप्रवादः ॥ इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां योन्याख्यं नवमं पदं समाप्तम् ।

॥ इति श्रीमन्मलयगिर्याचार्यविहितवृत्तियुतं नवमं योनिपदं समाप्तम् ॥

## दशमं चरमाचरमपदम् ।

तदेवं व्याख्यातं नवमं पदं, इदानीं दशममारभ्यते, तस्य चायमभिसंबन्धः—इहानन्तरपदे सत्त्वानां योनयः प्रतिपादिताः, अस्मिंश्च यदुपपातक्षेत्रं रत्नप्रभादि तस्य चरमाचरमविभागप्रदर्शनं क्रियते, तत्र चेदमादिसूत्रम्—

कति णं भंते ! पुढवीओ पं० ?, गोयमा ! अट्ठ पुढवीओ पं०, तं०—रयणप्पभा सक्करप्पभा वालुयप्पभा पंकप्पभा धूमप्पभा तमप्पभा तमतमप्पभा ईसीपब्भारा ॥ इमा णं भंते ! रयणप्पभा पुढवी किं चरमा अचरमा चरमाइं अचरमाइं चरमंतपदेसा अचरमंतपदेसा ?, गोयमा ! इमा णं रयणप्पभा पुढवी नो चरमा नो अचरमा नो चरमातिं नो अचरमातिं नो चरमंतपदेसा नो अचरमंतपदेसा नियमा चरमं चरमाणि य चरमंतपदेसा य अचरमंतपदेसा य, एवं जाव अधेसत्तमा पुढवी, सोहम्माती जाव अणुत्तरविमाणाणं, एवं चेव ईसीपब्भाराविं, एवं चेव लोगेवि, एवं चेव अलोगेवि । (सूत्रं १५४)

'कति णं भंते ! पुढवीओ पण्णत्ताओ' इत्यादि सुगमं, नवरमीषत्प्राग्भारा पञ्चचत्वारिंशद्योजनलक्षायामविष्कम्भप्रमाणा शुद्धस्फटिकसंकाशा सिद्धशिला । 'इमा णं भंते ! रयणप्पभा पुढवी किं चरमा अचरमे'त्यादि पृच्छा, अथ कथं चरमाचरमपरिभाषा ?, उच्यते, चरमं नाम पर्यन्तवर्ति, तच्चरमत्वमापेक्षिकं, अन्यापेक्षया तस्य भावात्, यथा पूर्वशरीरापेक्षया चरमशरीरमिति, अचरमं अप्रान्तं मध्यवर्तीतियावत्, तदपि चापेक्षिकं, तस्य चरमापेक्षया

भावात्, यथा तथाविधान्यशरीरापेक्षया मध्यशरीरमचरमशरीरं, तदेवं चरमाऽचरमेत्येकवचनान्तः प्रश्नः कृतः, सम्प्रति बहुवचनान्तमाह—'चरमाइं अचरमाइं' इति, एतानि चत्वारि प्रश्नसूत्राणि तथाविधैकत्वपरिणामविशिष्टद्रव्यविषयाणि कृतानि, सम्प्रति प्रदेशानधिकृत्य प्रश्नसूत्रद्वयमाह—'चरमंतपएसा य अचरमंतपएसा य' इति, चरमाण्येवान्तवर्तित्वात् अन्ताश्चरमान्तास्तत्प्रदेशाश्च चरमान्तप्रदेशाः, अचरममेव कस्याप्यपेक्षयाऽनन्तवर्तित्वादन्तः अचरमान्तस्तत्प्रदेशा अचरमान्तप्रदेशाः। तदेवं षट्सु प्रश्नेषु कृतेषु भगवानाह—गौतम! सा रत्नप्रभा पृथिवी न चरमा, चरमत्वं ह्यापेक्षिकमित्युक्तं, न चात्रान्यदपेक्षणीयमस्ति, केवलाया एव तदन्यनिरपेक्षायाः पृष्टत्वात्, नाप्यचरमा, तत एव हेतोः, तथाहि—अचरमत्वमपि आपेक्षिकं, न चात्रान्यदपेक्षणीयमस्तीति, किमुक्तं भवति?—इयं रत्नप्रभा पृथिवी न पश्चिमा नापि मध्यमा, तदन्यस्यापेक्षणीयस्याविवक्षणादिति, अत एव न चरमाणि, चरमत्वव्यपदेशस्यैवासंभवतस्तद्विषयबहुवचनासंभवात्, तथाहि—यदा तस्याश्चरमत्वव्यपदेश एवोक्तयुक्तेर्नोपपद्यते तदा कथं तद्विषयं बहुवचनमुपपत्तुमर्हतीति?, एवमचरमाण्यपि प्रतिषेधनीयानि, प्रागुक्तयुक्तेरचरमत्वव्यपदेशस्यासंभवात्, तथा न च चरमान्तप्रदेशा नाप्यचरमान्तप्रदेशाः, उक्तयुक्त्या चरमत्वस्याचरमत्वस्य चासंभवतस्तत्प्रदेशकल्पनाया अप्यसंभवात्, यद्येवं तर्हि किंस्वरूपा सा? इत्यत आह—'नियमाद्' नियमेनाचरमं चरमाणि च, किमुक्तं भवति?—यदीयमखण्डरूपा विवक्षितत्वात् (क्ष्य) पृच्छ्यते तदा यथोक्तभङ्गानामेकेनापि भङ्गेन व्यपदेशो न भवति, यदा त्वसङ्ख्येय-

प्रदेशावगाढेत्यनेकावयवविभागात्मिका विवक्ष्यते तदा यथोक्तनिर्वचनविषया भवति, तथाहि—रत्नप्रभा पृथिवी तावदनेन प्रकारेण व्यवस्थिता, स्थापना चेयं□ । एवमवस्थिताया अस्या यानि प्रान्तेष्ववस्थितानि खण्डानि प्रत्येकं तथाविधविशिष्टैकत्वपरिणामपरिणतानि तानि चरमाणि, यत्पुनर्मध्ये महद्रत्नप्रभायाः खण्डं तत्तथाविधैकत्वपरिणामत्वादेकत्वेन विवक्षितमित्यचरमं, उभयसमुदायरूपा चेयं, अन्यथा तदभावप्रसङ्गात्, तदेवमवयवावयविरूपतया चिन्तायामचरमं चरमाणि चेत्यखण्डैकनिर्वचनविषया प्रतिपादिता, यदा पुनः प्रदेशचिन्ता क्रियते तदैवं निर्वचनम्—चरमान्तप्रदेशाश्च अचरमान्तप्रदेशाश्च, तथाहि—ये बाह्यखण्डेषु गताः प्रदेशास्ते चरमान्तप्रदेशाः, ये पुनर्मध्यैकखण्डगताः प्रदेशास्ते अचरमान्तप्रदेशाः, अन्ये तु व्याचक्षते—चरमाणि नाम तथाविधप्रविष्टेतरप्रान्तैकप्रादेशिकश्रेणिपटलरूपाणि, मध्यभागोऽचरम इति, तदपि समीचीनं, दोषाभावात्, चरमान्तप्रदेशा यथोक्तरूपप्रान्तैकप्रादेशिकश्रेणिपटलगताः प्रदेशाः, अचरमान्तप्रदेशा मध्यभागगताः प्रदेशाः, अनेन निर्वचनसूत्रेण एकान्तदुर्नयनिरोधप्रधानेन अवयवावयविरूपंरत्नप्रभादिकं वस्तु तयोश्चावयवावयविनोर्भेदाभेद इत्यावेदितं, यथा चावयवावयविरूपतायां न परोक्तदूषणावकाशस्तथा धर्मसंग्रहणिटीकायां बाह्यवस्तुप्रतिष्ठाऽवसरे प्रतिपादितमिति ततोऽवधार्यं । 'एवं जाव अहेसत्तमाए पुढवी'त्यादि, यथा रत्नप्रभा पृथिवी प्रश्ननिर्वचनाभ्यामुक्ता एवं शर्कराद्या अपि पृथिव्यः सौधर्मादीनि च विमानानि अनुत्तरविमानपर्यवसानानि ईषत्प्राग्भारा लोकश्च वक्तव्यः । सूत्रपाठोऽपि

१०चरमाचरमपदे रत्नप्रभादीना चरमतादि सू॰ १५४

सुगमत्वात्स्वयं परिभावनीयः, स चैवम्—'सक्करप्पभा णं भंते ! पुढवी किं चरमा अचरमा चरमाणि अचरमाणि' इत्यादि । एवं 'अलोगेवि' इति, एवम्—उक्तेन प्रकारेणालोकोऽपि वक्तव्यः, स चैवम्—"अलोए णं भंते ! किं चरमे अचरमे" इत्यादि प्रश्नसूत्रं तथैव निर्वचनसूत्रं 'गोयमा ! अचरमे चरमाणि य चरमंतपदेसा य अचरमंतपदेसा य' तत्र चरमाणि यानि खण्डानि लोकनिष्कुटेषु प्रविष्टानि शेषमन्यत्सर्वमचरमं, चरमखण्डगताः प्रदेशाः चरमान्तप्रदेशाः अचरमखण्डगताः प्रदेशा अचरमान्तप्रदेशाः ॥ सम्प्रत्येतेषु रत्नप्रभादिषु प्रत्येकं चरमाचरमादिगतमल्पबहुत्वमभिधित्सुरिदमाह—

इमीसे णं भंते ! रयणप्पभाए पुढवीए अचरमस्स य चरमाण य चरमंतपएसाण य अचरमंतपएसाण य दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे २ हिंतो अ० व० तु० वि० ?, गोयमा ! सव्वत्थोवा इमीसे रयणप्पभाए पुढवीए दव्वट्ठयाए एगे अचरमे चरमाइं असंखिज्जगुणाइं, अचरमं चरमाणि य दोवि विसेसाहिआ, पएसट्ठयाए सव्वत्थोवा इमीसे रयणप्पभाए पुढवीए चरमन्तपदेसा, अचरमंतपदेसा असंखेज्जगुणा, चरमंतपदेसा य अचरमंतपदेसा य दोवि विसेसाहिआ, दव्वट्ठपएसट्ठयाए सव्वत्थोवा इमीसे रयणप्पभाए पुढवीए दव्वट्ठयाए एगे अचरिमे, चरिमाइं असंखेज्जगुणाइं, अचरिमं चरिमाणि य दोवि विसेसाहिआ, चरमंतपएसा असंखेज्जगुणा, अचरमंतपएसा असंखिज्जगुणा, चरमंतपएसा य अचरमंतपएसा य दोवि विसेसाहिआ, एवं जाव अहेसत्तमाए सोहम्मस्स जाव लोगस्स एवं चेव । (सूत्रं १५५) अलोगस्स णं

भंते! अचरमस्स य चरमाण य चरमन्तपदेसाण य अचरमन्तपदेसाण य दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे २ हिंतो अ० ब० तु० वि० ?, गोयमा! सव्वत्थोवे अलोगस्स दव्वट्ठयाए एगे अचरमे चरमाइं असंखिज्जगुणाइं अचरमं चरमाणि य दोवि विसेसाहियाइं, पएसट्ठयाए सव्वत्थोवा अलोगस्स चरमन्तपदेसा अचरमन्तपएसा अणन्तगुणा चरमन्तपदेसा य अचरमन्तपदेसा य दोवि विसेसाहिया, दव्वट्ठपएसट्ठयाए सव्वत्थोवे अलोगस्स एगे अचरमे चरमाइं असंखेज्जगुणाइं अचरमं च चरमाणि य दोवि विसेसाहियाइं, चरमन्तपएसा असंखेज्जगुणा, अचरमन्तपएसा अणन्तगुणा, चरमन्तपएसा य अचरमन्तपएसा य दोवि विसेसाहिया॥ लोगालोगस्स णं भंते! अचरमस्स य चरमाण य चरमन्तपएसाण य अचरमन्तपएसाण य दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे २ हिंतो अ० ब० तु० वि० ?, गोयमा! सव्वत्थोवे लोगालोगस्स दव्वट्ठयाए एगमेगे अचरमे, लोगस्स चरमाइं असंखेज्जगुणाइं, अलोगस्स चरमाइं विसेसाहियाइं, लोगस्स (य) अलोगस्स य अचरमं य चरमाणि य दोवि विसेसाहियाइं, पएसट्ठयाते सव्वत्थोवा लोगस्स चरमन्तपदेसा, अलोगस्स चरमन्तपदेसा विसेसाहिआ, लोगस्स अचरमन्तपएसा असंखेज्जगुणा, अलोगस्स अचरमन्तपएसा अणन्तगुणा, लोगस्स य अलोगस्स य चरमन्तपदेसा च अचरमन्तपदेसा य दोवि विसेसाहिया। दव्वट्ठपएसट्ठयाए सव्वत्थोवे लोगालोगस्स दव्वट्ठयाए एगमेगे अचरमे, लोगस्स चरमाइं असंखेज्जगुणाइं, अलोगस्स चरमाइं विसेसाहियाइं, लोगस्स य अलोगस्स य अचरमं चरमाणि य दोवि विसेसाहियाइं, लोगस्स चरमन्तपदेसा असंखेज्जगुणा, अलोगस्स य चरमन्तपएसा विसेसाहिया, लोगस्स

अचरमन्तपएसा असंखेज्जगुणा, अलोगस्स अचरमंतपएसा अणंतगुणा, लोगस्स य अलोगस्स य चरमन्तपएसा य अचरमन्तपएसा य दोवि विसेसाहिया, सवदवा विसेसाहिया, सवपएसा अणंतगुणा, सवपज्जवा अणंतगुणा। ( सूत्रं १५६ )

'इमीसे णं भंते ! रयणप्पभाए पुढवीए अचरमस्स य चरमाणय' इत्यादि प्रश्नसूत्रं सुगमं, निर्वचनसूत्रे सर्वस्तोकं द्रव्यार्थतया अस्या रत्नप्रभायाः पृथिव्या अचरमखण्डं, कस्मात् ? इति चेत्, अत आह—एकं, "निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शनम्" इति न्यायादत्र हेतौ प्रथमा, ततोऽयमर्थः—यस्मात्तथाविधैकस्कन्धपरिणामपरिणतत्वादेकं ततः स्तोकं, तस्माद् यानि चरमाणि खण्डानि तान्यसंख्येयगुणानि, तेषामसङ्ख्यातत्वात्, अथाचरमं चरमाणि च समुदितानि चरमाणां तुल्यानि विशेषाधिकानि वा ? इति शङ्कायामाह—अचरमं चरमाणि च समुदितानि विशेषाधिकानि, तथाहि—यदचरमं द्रव्यं तत् चरमद्रव्येषु प्रक्षिप्तं, ततश्चरमेभ्य एकेनाधिकत्वात् विशेषाधिकसमुदायो भवति। प्रदेशार्थत्वचिन्तायां सर्वस्तोकाश्चरमान्तप्रदेशाः, यतश्चरमखण्डानि मध्यखण्डापेक्षयाऽतिसूक्ष्माणि, ततस्तेषामसङ्ख्येयगुणानामपि ये प्रदेशास्ते मध्यखण्डगतप्रदेशापेक्षया सर्वस्तोकाः, तेभ्योऽचरमप्रदेशा असङ्ख्येयगुणाः, अचरमखण्डस्यैकस्यापि चरमखण्डसमुदायापेक्षया क्षेत्रतोऽसङ्ख्येयगुणत्वात्, चरमान्तप्रदेशा अचरमान्तप्रदेशाश्च द्वयेऽपि समुदिता अचरमान्तप्रदेशेभ्यो विशेषाधिकाः, कथमिति चेत्, उच्यते, इह चरमान्तप्रदेशा अचरमान्तप्रदेशापेक्षया असङ्ख्येयभागप्रमाणाः, ततोऽचरमान्तप्रदेशेषु चरमान्तप्रदेशप्रक्षेपेऽपि तेऽचरमान्तप्रदेशेभ्यो

विशेषाधिका एव भवन्ति, द्रव्यार्थप्रदेशार्थचिन्तायां 'अचरमं चरमाणि य दो विसेसाहियाइं चरमन्तपएसा असंखेज्जगुणा' इति अचरमचरमसमुदायाच्चरमान्तप्रदेशा असङ्ख्येयगुणाः, कथं ?, उच्यते, इह यदचरमखण्डं तदसङ्ख्येयप्रदेशावगाढमपि द्रव्यार्थतया एकं, चरमेषु पुनः खण्डेषु प्रत्येकमसङ्ख्येयाः प्रदेशाः, ततो भवन्ति चरमाचरमद्रव्यसमुदायादसङ्ख्येयगुणाश्चरमान्तप्रदेशाः, तेभ्योऽप्यचरमान्तप्रदेशा असङ्ख्येयगुणाः, तेभ्योऽपि चरमाचरमप्रदेशाः समुदिता इति पूर्ववत् । अलोकसूत्रे प्रदेशार्थतायां सर्वस्तोका अलोकस्य चरमान्तप्रदेशाः, लोकनिष्कुटेष्वेवान्तस्तेषां भावात्, तेभ्योऽचरमान्तप्रदेशा अनन्तगुणाः, अलोकस्यानन्तत्वात्, चरमान्तप्रदेशा अचरमान्तप्रदेशाश्च समुदिता विशेषाधिकाः, चरमान्तप्रदेशा ह्यचरमान्तप्रदेशापेक्षया अनन्तभागकल्पाः, ततस्तेषामचरमान्तप्रदेशराशौ प्रक्षेपेऽपि ते अचरमान्तप्रदेशेभ्यो विशेषाधिका एव भवन्ति । सम्प्रति लोकालोकसमुदायविषयं प्रश्नसूत्रमाह—'लोगालोगस्स णं भंते ! अचरमस्स य चरमाण य' इत्यादि प्रश्नसूत्रं सुगमं, निवर्चनमाह—'गोयमे'त्यादि, गौतम ! लोकस्य अलोकस्य च यदेकैकं चरमखण्डं तत्स्तोकं, एकत्वात्, तेभ्यो लोकस्य चरमखण्डद्रव्याण्यसङ्ख्येयगुणानि, तेषामसङ्ख्यातत्वात्, तेभ्योऽप्यलोकस्य चरमखण्डानि विशेषाधिकानि, कथमिति चेत्, उच्यते, इह यद्यपि लोकस्य चरमखण्डानि तत्त्वतोऽसङ्ख्येयानि तथापि प्रागुपदर्शितपृथिवीन्यासपरिकल्पनया तान्यष्टौ परिकल्प्यन्ते, तद्यथा—एकैकं चतसृषु दिक्षु एकैकं च विदिक्ष्विति, अलोकचरमखण्डानि तन्न्यासपरिकल्पनया परिगण्यमानानि द्वादश, तद्यथा—

एकैकं चतसृषु दिक्षु द्वे द्वे विदिक्ष्विति, द्वादश चाष्टभ्यो न द्विगुणानि न त्रिगुणानि च, किन्तु विशेषाधिकानि, तेभ्योऽलोकस्य चरमखण्डेभ्यो लोकालोकस्य चरमाचरमखण्डानि समुदितानि विशेषाधिकानि, तथाहि—लोकस्य चरमखण्डानि प्रागुक्तपरिकल्पनया अष्टौ एकमचरमखण्डमित्युभयमीलने नव, अलोकस्यापि चरमाचरमखण्डानि समुदितानि त्रयोदश, उभयेषामेकत्र मीलनेन द्वाविंशतिः, सा च द्वादशभ्यो न द्विगुणा नापि त्रिगुणा किन्तु विशेषाधिकेति अलोकस्य चरमखण्डेभ्यो लोकालोकचरमाचरमखण्डानि समुदितानि विशेषाधिकानि। प्रदेशार्थताचिन्तायां सर्वस्तोका लोकस्य चरमान्तप्रदेशाः, अष्टखण्डसत्कानामेव प्रदेशानां भावात्, तेभ्योऽलोकस्य चरमान्तप्रदेशा विशेषाधिकाः, तेभ्योऽपि लोकस्य अचरमान्तप्रदेशा असङ्ख्येयगुणाः, क्षेत्रस्यातिप्रभूततया तत्प्रदेशानामप्यतिप्रभूतत्वात्, तेभ्योऽप्यलोकस्याचरमान्तप्रदेशा अनन्तगुणाः, क्षेत्रस्यानन्तगुणत्वात्, तेभ्योऽपि लोकस्य चरमान्तप्रदेशा अचरमान्तप्रदेशा अलोकस्यापि चरमान्तप्रदेशा अचरमान्तप्रदेशाः समुदिता विशेषाधिकाः, कथमिति चेत्, उच्यते, इहालोकस्याचरमान्तप्रदेशराशौ लोकस्य चरमाचरमान्तप्रदेशा अलोकस्य चरमान्तप्रदेशाश्च प्रक्षिप्यन्ते, ते च सर्वसङ्ख्ययाऽप्यसङ्ख्येया(ऽसंख्यया)श्चानन्तराश्यपेक्षयाऽतिस्तोका इति प्रक्षेपेऽपि तेऽलोकस्याचरमान्तप्रदेशेभ्यो विशेपाधिका एव। एतदनुसारेण द्रव्यार्थप्रदेशार्थचिन्तासूत्रमपि स्वयं परिभावनीयं, नवरं लोकालोकचरमाचरमखण्डेभ्यो लोकस्य चरमान्तप्रदेशा असङ्ख्येयगुणा इति, लोकस्य किल चरमाणि खण्डान्यष्टौ, एकैकस्मिंश्च खण्ड-

देशे खण्डप्रदेशा असङ्ख्येया लोकालोकचरमाचरमखण्डानि च समुदितानि द्वाविंशतिः, ततो घटन्ते लोकालोकचरमाचरमखण्डेभ्यो लोकस्य चरमान्तप्रदेशा असङ्ख्येयगुणाः, शेषपदभावना प्राग्वत्, 'सव्वदव्वा विसेसाहिया' इति लोकालोकचरमाचरमान्तप्रदेशेभ्यः सर्वद्रव्याणि विशेषाधिकानि, अनन्तानन्तसङ्ख्यानां जीवानां तथा परमाण्वादीनामनन्तपरमाण्वात्मकस्कन्धपर्यन्तानां प्रत्येकानामनन्तसङ्ख्यानां पृथक् पृथक् द्रव्यत्वात्, तेभ्योऽपि सर्वप्रदेशा अनन्तगुणाः, तेभ्योऽपि सर्वपर्याया अनन्तगुणाः, प्रतिप्रदेशं स्वपरभेदभिन्नानां पर्यायाणामानन्त्यात् । तदेवं रत्नप्रभादिकं चरमाचरमभेदतश्चिन्तितं, इदानीं परमाण्वादिकं चिन्तयन्नाह—

परमाणुपोग्गले णं भंते ! किं चरिमे १ अचरिमे २ अवत्तव्वए ३ चरमाइं ४ अचरमाइं ५ अवत्तव्वयाइं ६ उदाहु चरिमे य अचरिमे य ७ उदाहु चरमे य अचरमाइं ८ उदाहु चरमाइं अचरमे य ९ उदाहु चरमाइं च अचरमाइं च १० पढमा चउभंगी उदाहु चरिमे य अवत्तव्वए य ११ उदाहु चरमे य अवत्तव्वयाइं च १२ उदाहु चरमाइं च अवत्तव्वए य १३ उदाहु चरमाइं च अवत्तव्वयाइं च १४ बीया चउभंगी उदाहु अचरिमे य अवत्तव्वए य १५ उदाहु अचरमे य अवत्तव्वयाइं च १६ उदाहु अचरमाइं च अवत्तव्वए य १७ उदाहु अचरमाइं च अवत्तव्वयाइं च १८ तइया चउभंगी उदाहु चरमे य अचरमे य अवत्तव्वए य १९ उदाहु चरमे य अचरमे य अवत्तव्वयाइं च २० उदाहु चरमे च अचरमाइं च अवत्तव्वए य २१ उदाहु चरमे य अचरमाइं च अवत्तव्वयाइं च २२ उदाहु चरमाइं च अचरमे य अवत्तव्वए य २३ उदाहु चरमाइं च अचरमे य अवत्तव्वयाइं (च) २४ उदाहु चरमाइं च अचरमाइं च

अवत्तव्वए य २५ उदाहु चरमाइं च अचरमाइं च अवत्तव्वयाइं च २६, एते छव्वीसं भंगा, गोयमा ! परमाणुपोग्गले नो चरमे नो अचरमे नियमा अवत्तव्वए, सेसा भंगा पडिसेहेयव्वा ॥ ( सूत्रं १५७ ) दुपएसिए णं भंते ! खंधे पुच्छा, गोयमा ! दुपएसिए खंधे सिय चरमे नो अचरमे सिय अवत्तव्वए, सेसा भंगा पडिसेहेयव्वा ॥ तिपएसिए णं भंते ! खंधे पुच्छा, गोयमा ! तिपएसिए खंधे सिय चरमे, नो अचरमे, सिय अवत्तव्वए, नो चरमाइं, नो अचरमाइं, नो अवत्तव्वयाइं, नो चरमे य अचरमे य, नो चरमे य अचरमाइं, सिय चरमाइं च अचरमे य, नो चरमाइं च अचरमाइं च, सिय चरमे य अवत्तव्वए य, सेसा भंगा पडिसेहेयव्वा । चउपएसिए णं भंते ! खंधे पुच्छा, गोयमा ! चउपएसिए णं खंधे सिय चरमे १ नो अचरमे २ सिय अवत्तव्वए ३ नो चरमाइं ४ नो अचरमाइं ५ नो अवत्तव्वयाइं ६ नो चरमे य अचरमे य ७ नो चरमे य अचरमाइं च ८ सिय चरमाइं अचरिमे य ९ सिय चरमाइं च अचरमाइं च १० सिय चरमे य अवत्तव्वए य ११ सिय चरमे य अवत्तव्वयाइं च १२ नो चरमाइं च अवत्तव्वए य १३ नो चरमाइं च अवत्तव्वयाइं च १४ नो अचरमे य अवत्तव्वए य १५ नो अचरमे य अवत्तव्वयाइं च १६ नो अचरमाइं च अवत्तव्वए अ १७ नो अचरिमाइं च अवत्तव्वयाइं च १८ नो चरमे य अचरिमे य अवत्तव्वए य १९ नो चरिमे य अचरिमे य अवत्तव्वयाइं च २० नो चरमे य अचरमाइं च अवत्तव्वए य २१ नो चरमे य अचरमाइं च अवत्तव्वयाइं च २२ सिय चरमाइं च अचरिमे य अवत्तव्वए य २३ । सेसा भंगा पडिसेहेयव्वा ॥ पंचपएसिए णं भंते ! खंधे पुच्छा, गोयमा ! पंचपएसिए खंधे सिय चरमे १ नो अचरमे २ सिय अवत्तव्वए ३ णो चरमाइं ४ णो अचरमाइं ५ नो अवत्तव्वयाइं ६ सिय चरमे य अचरमे य ७ नो चरमे य अचरमाइं च ८ सिय चर-

माइं च अचरमे य ९ सिय चरमाइं च अचरमाइं च १० सिय चरमे य अवत्तवए य ११ सिय चरमे य अवत्तवयाइं च १२ सिय चरमाइं च अवत्तवए य १३ नो चरमाइं च अवत्तवयाइं च १४ नो अचरमे य अवत्तवए य १५ नो अचरमे य अवत्तवयाइं च १६ नो अचरमाइं च अवत्तवए य १७ नो अचरमाइं च अवत्तवयाइं च १८ नो चरमे य अचरमे य अवत्तवए य १९ नो चरमे य अचरमे य अवत्तवयाइं च २० नो चरमे य अचरमाइं च अवत्तवए य २१ नो चरमे य अचरमाइं च अवत्तवयाइं च २२ सिय चरमाइं च अचरमे य अवत्तवए य २३ सिय चरमाइं च अचरमे य अवत्तवयाइं च २४ सिय चरमाइं च अचरमाइं च अवत्तवए य २५ नो चरमाइं च अचरमाइं च अवत्तवयाइं च २६। छप्पएसिए णं भंते! पुच्छा, गोयमा! छप्पएसिए णं खंधे सिय चरमे १ नो अचरमे २ सिय अवत्तवए ३ नो चरमाइं ४ नो अचरमाइं ५ नो अवत्तवयाइं ६ सिय चरमे य अचरमे य ७ सिय चरमे य अचरमाइं च ८ सिय चरमाइं च अचरमे य ९ सिय चरमाइं च अचरमाइं च १० सिय चरमे य अवत्तवए अ ११ सिय चरमे य अवत्तवयाइं च १२ सिय चरमाइं च अवत्तवए अ १३ सिय चरमाइं च अवत्तवयाइं च १४ नो अचरमे य अवत्तवए य १५ नो अचरमे य अवत्तवयाइं च १६ नो अचरमाइं च अवत्तवए य १७ नो अचरमाइं च अवत्तवयाइं च १८ सिय चरमे य अचरमे य अवत्तवए य १९ नो चरमे य अचरमे य अवत्तवयाइं च २० नो चरमे य अचरमाइं च अवत्तवए य २१ नो चरमे य अचरमाइं च अवत्तवयाइं च २२ सिय चरमाइं च अचरमे य अवत्तवए य २३ सिय चरमाइं च अचरमे य अवत्तवयाइं च २४ सिय चरमाइं च अचरमाइं च अवत्तवए य २५ सिय चरमाइं च अचरमाइं च अवत्तवयाइं च २६। सत्तपएसिए णं भंते! खंधे पुच्छा, गोयमा! सत्तपएसिए णं खंधे

१०चरमाचरमपदे द्विप्रदेशादीनां चरमादितासू. १५८

सिय चरिमे १ णो अचरिमे २ सिय अवत्तवए ३ णो चरिमाइं ४ णो अचरिमाइं ५ णो अवत्तवयाइं ६ सिय चरमे य अचरमे य ७ सिय चरमे य अचरमाइं च ८ सिय चरमाइं च अचरमे य ९ सिय चरमाइं च अचरमाइं च १० सिय चरमे य अवत्तवए य ११ सिय चरमे य अवत्तवयाइं च १२ सिय चरमाइं च अवत्तवए य १३ सिय चरमाइं च अवत्तवयाइं च १४ णो अचरमे य अवत्तवए य १५ णो अचरमे य अवत्तवयाइं च १६ णो अचरमाइं च अवत्तवए य १७ णो अचरमाइं च अवत्तवयाइं च १८ सिय चरमे य अचरमे य अवत्तवए य १९ सिय चरमे य अचरमे य अवत्तवयाइं च २० सिय चरमे य अचरिमाइं च अवत्तवए अ २१ णो चरिमे य अचरिमाइं च अवत्तवयाइं च २२ सिय चरमाइं च अचरमे य अवत्तवए य २३ सिय चरमाइं च अचरमे य अवत्तवयाइं च २४ सिय चरमाइं च अचरमाइं च अवत्तवए य २५ सिय चरमाइं च अचरमाइं च अवत्तवयाइं च २६। अट्ठपएसिए णं भंते! खंधे पुच्छा, गोयमा! अट्ठपएसिए खंधे सिय चरमे १ नो अचरमे २ सिय अवत्तवए ३ नो चरमाइं ४ नो अचरमाइं ५ नो अवत्तवयाइं ६ सिय चरिमे य अचरिमे य ७ सिय चरिमे य अचरिमाइं च ८ सिय चरिमाइं च अचरिमे य ९ सिय चरमाइं च अचरमाइं च १० सिय चरमे य अवत्तवए य ११ सिय चरमे य अवत्तवयाइं च १२ सिय चरिमाइं च अवत्तवए य १३ सिय चरिमाइं च अवत्तवयाइं च १४ णो अचरिमे य अवत्तवए य १५ णो अचरिमे य अवत्तवयाइं च १६ णो अचरिमाइं च अवत्तवए य १७ णो अचरिमाइं च अवत्तवयाइं च १८ सिय चरिमे य अचरिमे य अवत्तवए य १९ सिय चरिमे य अचरिमे य अवत्तवयाइं च २० सिय चरिमे य अचरिमाइं च अवत्तवए अ २१ सिय चरिमे य अचरिमाइं च अवत्तवयाइं च २२ सिय चरिमाइं च अचरिमे य

अवत्तव्वए अ २३ सिय चरिमाइं च अचरिमे य अवत्तव्वयाइं च २४ सिय चरिमाइं च अचरिमाइं च अवत्तव्वए य २५ सिय चरिमाइं च अचरिमाइं च अवत्तव्वयाइं च २६ । संखेज्जपएसिए असंखेज्जपएसिए अणंतपएसिए खंधे०, जहेव अट्ठपएसिए तहेव पत्तेयं भाणियव्वं ।—परमाणुम्मि य तइओ पढमो तइओ य होंति दुपएसे । पढमो तइओ नवमो एक्कारसमो य तिपएसे ॥१॥ पढमो तइओ नवमो दसमो एक्कारसो य बारसमो । भंगा चउप्पएसे तेवीसइमो य बोद्धव्वो ॥२॥ पढमो तइओ सत्तमनवदसइक्कारबारतेरसमो । तेवीसचउवीसो पणवीसइमो य पंचमए ॥३॥ बिचउत्थपंचछट्ठं पनरस सोलं च सत्तरट्ठारं । वीसेक्कवीस बावीसगं च वज्जेज्ज छट्ठंमि ॥४॥ बिचउत्थपंचछट्ठं पण्णर सोलं च सत्तरट्ठारं । बावीसइमविहूणा सत्तपदेसंमि खंधम्मि ॥५॥ बिचउत्थ पंचछट्ठं पण्णर सोलं च सत्तरट्ठारं । एते वज्जिय भंगा सेसा सेसेसु खंधेसु ॥ ( सूत्रं १५८ )

'परमाणुपोग्गले णं भंते !' इत्यादि, अत्र प्रश्नसूत्रे षड्विंशतिर्भङ्गाः, यतस्त्रीणि पदानि चरमाचरमावक्तव्यलक्षणानि, तेषां चैकैकसंयोगे प्रत्येकमेकवचनास्त्रयो भङ्गाः, तद्यथा—चरमोऽचरमोऽवक्तव्यकः, त्रयो बहुवचनेन, तद्यथा—चरमाणि १ अचरमाणि २ अवक्तव्यानि ३, सर्वसङ्ख्यया षट्, द्विकसंयोगास्त्रयः, तद्यथा—चरमाचरमपदयोरेकः चरमावक्तव्यकपदयोर्द्वितीयः अचरमावक्तव्यकपदयोस्तृतीयः, एकैकस्मिन् चत्वारो भङ्गाः, तत्र प्रथमे द्विकसंयोगे एवं—चरमश्चाचरमश्च, चरमश्चाचरमाश्च, चरमाश्चाचरमश्च, चरमाश्चाचरमाश्च, स्थापना । एवमेव चतुर्भङ्गी चरमावक्तव्यपदयोः, एवमेवाचरमावक्तव्यपदयोः, सर्वसङ्ख्यया द्विकसंयोगे द्वादश भङ्गाः, त्रिकसंयोगे एकवचनबहुवचनाभ्यामष्टौ,

स्थापना*— । सर्वसंकलनया षड्विंशतिः । अत्र निर्वचनमाह—'परमाणुपोग्गले नो चरमे' इत्यादि, परमाणुपुद्गलश्चरमो न भवति, चरमत्वं ह्यन्यापेक्षं, न चान्यदपेक्षणीयमस्ति तस्य, अविवक्षणात्, न च सांशः परमाणुर्येनांशापेक्षया चरमत्वं प्रकल्प्येत, निरवयवत्वात् (तस्य), तस्मान्न चरमो, नाप्यचरमः, निरवयवतया मध्यत्वायोगात्, किन्त्ववक्तव्यः, चरमाचरमव्यपदेशकारण[तः] शून्यतया चरमशब्देनाचरमशब्देन वा व्यपदेष्टुमशक्यत्वात्, वक्तुं शक्यं हि वक्तव्यं, यत्तु चरमशब्देन अचरमशब्देन वा स्वस्वनिमित्तशून्यतया वक्तुमशक्यं तदवक्तव्यमिति स्थापना— । शेषास्तु भङ्गाः प्रतिषेध्याः, परमाणौ तेषामसंभवात्, वक्ष्यति च–"परमाणुंमि य तइओ" अस्यायमर्थः—परमाणौ–परमाणुचिन्तायां तृतीयो भङ्गः परिग्राह्यः, शेषास्तु निरवयवत्वेन प्रतिषेध्याः । 'दुपएसिए णं भंते !' इत्यादि प्रश्नसूत्रं प्राग्वत्, निर्वचनमाह—'सिय चरमे नो अचरमे सिय अवत्तव्वए' इत्यादि, द्विप्रदेशिकः स्कन्धः स्यात्–कदाचित् चरमः, कथमिति चेत्, उच्यते, इह यदा द्विप्रदेशिकः स्कन्धो द्वयोराकाशप्रदेशयोरवगाढो भवति समश्रेण्या व्यवस्थिततया, स्थापना—तदा एकोऽपि परमाणुरपरपरमाण्वपेक्षया चरमः, अपरोऽप्यपरपरमाण्वपेक्षया चरम इति चरमः, अचरमस्तु न भवति, सर्वद्रव्याणामपि केवलाचरमत्वस्यायोगात्, यदा तु स एव द्विप्रदेशिकः स्कन्धः एकस्मिन्नाकाशप्रदेशे अवगाहते तदा स तथाविधैकत्वपरिणामपरिणततया परमाणुवत् चरमाचरमव्यपदेशकारणशून्यत्वान्न चरमशब्देन व्यपदेष्टुं शक्यते नाप्यचरमशब्देनेति अवक्तव्यः, शेषास्तु भङ्गाः प्रतिषेध्याः, तथा च वक्ष्यति "पढमो

तइओ य होइ दुपएसे" अस्यायमर्थः–द्विप्रदेशिके स्कन्धे प्रथमो भङ्गः–चरम इति, तृतीयः–अवक्तव्य इति भवति, शेषास्तु प्रतिषेध्याः, असंभवात्, स चासंभवः सुप्रतीत एव । 'तिपएसिए णं भंते ! खंधे' इत्यादि प्रश्नसूत्रं प्राग्वत्, निर्वचनं 'गोयमा ! सिय चरमे' इत्यादि, इह यदा त्रिप्रदेशिकः स्कन्धो द्वयोराकाशप्रदेशयोः समश्रेण्या व्यवस्थितयोरेवमवगाढो भवति, स्थापना—,तदाऽसौ चरमः, सा चरमत्वभावना द्विप्रदेशिकस्कन्धवद् भावनीया, अचरमप्रतिषेधः प्राग्वत्, 'स्यादवक्तव्य' इति यदा स एव त्रिप्रदेशिकः स्कन्ध एकस्मिन्नाकाशप्रदेशेऽवगाहते तदा परमाणुवत् चरमाचरमव्यपदेशकारणशून्यतया चरमाचरमशब्दाभ्यां व्यपदेष्टुमशक्यत्वात् अवक्तव्यः, चतुर्थादयोऽष्टमपर्यन्ताः प्रतिषेध्याः, असंभवात्, असंभवस्तु सुप्रतीतत्वात् स्वयमुपयुज्य वक्तव्यः, नवमस्तु ग्राह्यः, तथा चाह— 'सिय चरमाइं च अचरमे य' प्राकृते द्वित्वेऽपि बहुवचनं, ततोऽयमर्थः—स्यात्–कदाचिदयं भङ्गः–चरमौ अचरमश्च, तत्र यदा स त्रिप्रदेशिकः स्कन्धः त्रिष्वाकाशप्रदेशेषु समश्रेण्या व्यवस्थितेष्वेवमवगाहते, स्थापना—,तदाऽऽदिमान्तिमौ द्वौ परमाणू पर्यन्तवर्तित्वाच्चरमौ मध्यमस्तु मध्यवर्तित्वादचरम इति, दशमस्तु प्रतिषेध्यः, स्कन्धस्य त्रिप्रदेशिकतया चरमाचरमशब्दयोर्बहुवचननिमित्तासंभवात्, एकादशस्तु ग्राह्यः, तथा चाह—'सिय चरमे य अवत्तवए य' स्यात्—कदाचिदयं भङ्गश्चरमश्चावक्तव्यश्च, तत्र यदा स त्रिप्रदेशिकः समश्रेण्या विश्रेण्या चैवमवगाहते स्थापना—,तदा द्वौ परमाणू समश्रेण्या व्यवस्थिताविति द्विप्रदेशावगाढद्विप्रदेशस्कन्धवच्चरमव्यपदेशकारणभावतश्च-

रमः, एकश्च परमाणुर्विश्रेणिस्थश्चरमाचरमशब्दाभ्या व्यपदेष्टुमशक्य इत्यवक्तव्यः, शेषास्तु भङ्गाः सर्वेऽपि प्रतिषेध्याः, वक्ष्यति च "पढमो तइओ नवमो इक्कारसमो य तिपएसे" अस्यायमर्थः—त्रिप्रदेशे स्कन्धे प्रथमो भङ्गश्चरम इति, तृतीयोऽवक्तव्य इति, नवमश्चरमौ चाचरमश्च, एकादशश्चरमश्चावक्तव्यश्चेति भवति, शेषा भङ्गा न घटन्ते ॥ 'चउपएसिए णं भंते ! खंधे' इत्यादि प्रश्नसूत्रं प्राग्वत्, निर्वचनमाह—'गोयमा ! सिय चरमे' इत्यादि, अत्र प्रथमतृतीयनवमदशमैकादशद्वादशत्रयोविंशतितमरूपाः सप्त भङ्गा ग्राह्याः, शेषाः प्रतिषेध्याः, तत्र प्रथमभङ्गोऽयम्—'स्याच्चरम' इति, इह यदा चतुष्प्रदेशकः स्कन्धो द्वयोराकाशप्रदेशयोः समश्रेण्या व्यवस्थितयोरेवमवगाहते स्थापना—, तदा चरमः, सा च चरमत्वभावना समश्रेण्या व्यवस्थितद्विप्रदेशावगाढद्विप्रदेशस्कन्धवद् भावनीया, तृतीयो भङ्गः स्यादवक्तव्य इति, स चैवं—यदा स एव चतुष्प्रदेशकः स्कन्ध एकस्मिन्नाकाशप्रदेशेऽवगाहते स्थापना—, तदा परमाणुवदवक्तव्यः, नवमः 'स्याच्चरमौ चाचरमश्च' स चैवं—यदा स चतुष्प्रदेशात्मकः स्कन्धः त्रिष्वाकाशप्रदेशेष्वेवमवगाहते, स्थापना—, तदा आद्यन्तप्रदेशावगाढौ चरमौ मध्यप्रदेशावगाढस्त्वचरमः, दशमः स्याच्चरमौ चाचरमौ च, तत्र यदा चतुष्प्रदेशात्मकः स्कन्धः समश्रेण्या व्यवस्थितेषु चतुर्ष्वाकाशप्रदेशेषु एवमवगाहते, स्थापना—, तदाऽऽद्यन्तद्विप्रदेशावगाढौ द्वौ परमाणू चरमौ द्वयोस्तु मध्यमयोराकाशप्रदेशयोरवगाढौ द्वौ परमाणू अचरमाविति, एकादशः स्याच्चरमश्चावक्तव्यश्च, स चैवं—, यदा स चतुष्प्रदेशकः स्कन्धः त्रिष्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते

स्थापना—, तदा समश्रेणिव्यवस्थितद्विप्रदेशावगाढास्त्रयः परमाणवो द्विप्रदेशावगाढद्विप्रदेशस्कन्धवत् चरमः एकश्च विश्रेणिस्थः परमाणुरिव चरमाचरमशब्दाभ्यां व्यपदेष्टुमशक्यत्वात् अवक्तव्य इति, द्वादशः स्याच्चरमश्चावक्तव्यौ च, स चैवं—,यदा स चतुष्प्रदेशात्मकः स्कन्धश्चतुर्ष्वाकाशप्रदेशेषु एवमवगाहते—द्वौ परमाणू द्वयोः समश्रेण्या व्यवस्थितयोराकाशप्रदेशयोः द्वौ परमाणू द्वयोर्विश्रेण्या व्यवस्थितयोः, स्थापना—, तदा द्वौ परमाणू समश्रेण्या व्यवस्थितौ द्विप्रदेशावगाढद्विप्रदेशस्कन्धवत् चरमः द्वौ च परमाणू विश्रेणिव्यवस्थितौ केवलपरमाणुवच्चरमाचरमशब्दाभ्यां व्यपदेष्टुमशक्यावित्यवक्तव्यौ, त्रयोविंशतितमः स्याच्चरमौ चाचरमश्चावक्तव्यश्च, कथमिति चेद्, उच्यते, इह यदा स चतुष्प्रदेशकः स्कन्धः चतुर्ष्वाकाशप्रदेशेष्वेवमवगाहते—त्रयः परमाणवस्त्रिषु समश्रेण्या व्यवस्थितेष्वाकाशप्रदेशेषु एको विश्रेणिस्थे प्रदेशे, स्थापना—,तदा त्रिषु परमाणुषु समश्रेणिव्यवस्थितेषु मध्ये आद्यन्तौ परमाणू पर्यन्तवर्तित्वाच्चरमौ मध्यमस्त्वचरमः विश्रेणिस्थस्त्ववक्तव्य इति, वक्ष्यति च—"पढमो तइओ नवमो दसमो इक्कारसो य बारसमो। भङ्गा चउप्पएसे तेवीसइमो य बोद्धव्वो ॥ १ ॥" गतार्था ॥ 'पंचपएसिए णं भंते !' इत्यादि प्रश्नसूत्रं प्राग्वत्, निर्वचनमाह—'गोयमा ! सिय चरमे' इत्यादि, इह प्रथमतृतीयसप्तमनवमदशमैकादशद्वादशत्रयोदशत्रयोविंशतितमचतुर्विंशतितमपञ्चविंशतितमरूपा एकादश भङ्गा ग्राह्याः, शेषाः प्रतिषेध्याः, वक्ष्यति च—"पढमो तइओ सत्तम नवदसइक्कारबारतेरसमो। तेवीसचउवीसा पणवीसइमो य पंचमए ॥ १ ॥" तत्रायं प्रथमो भङ्गः—स्याच्चरम

इति, इह यदा पञ्चप्रदेशात्मकः स्कन्धो द्वयोराकाशप्रदेशयोः समश्रेण्या व्यवस्थितयोरेवमवगाहते, त्रयः परमाणव एकस्मिन्नाकाशप्रदेशे द्वौ द्वितीये, स्थापना[13]—, तदा द्विप्रदेशावगाढद्विप्रदेशकस्कन्धवच्चरमः, तृतीयोऽवक्तव्यः, स चैवं— यदा स पञ्चप्रदेशात्मकः स्कन्धः एकस्मिन् आकाशप्रदेशे अवगाहते, स्थापना[14]—,तदा स परमाणुवदवक्तव्यः, ससमः स्याच्चरमश्चाचरमश्च, स चैवम्— यदा स पञ्चप्रदेशकः स्कन्धः पञ्चस्वाकाशप्रदेशेष्वेवमवगाहते, स्थापना[15]—,तदा ये चरमाश्चत्वारः परमाणवस्तेषामेकसंबन्धिपरिणामपरिणतत्वादेकवर्णत्वादेकगन्धत्वादेकरसत्वादेकस्पर्शत्वाच्चैकत्वव्यपदेशे चरम इति व्यपदेशः, मध्यस्तु परमाणुर्मध्यवर्तित्वादचरम इति, नवमः चरमौ चाचरमश्च, तत्र यदा स पञ्चप्रदेशकः स्कन्धस्त्रिष्वाकाशप्रदेशेषु समश्रेण्या व्यवस्थितेष्वेवमवगाहते द्वौ—परमाणू आद्ये आकाशप्रदेशे द्वावन्ते एको मध्ये, स्थापना[16]—,तदाऽऽद्यप्रदेशावगाढौ द्वौ चरमो द्वावन्त्यप्रदेशावगाढौ चरम इति चरमौ मध्यस्तु मध्यवर्त्तित्वादचरमः, दशमः चरमौ चाचरमौ च, तत्र यदा स पञ्चप्रदेशात्मकः स्कन्धश्चतुर्ष्वाकाशप्रदेशेषु समश्रेण्या व्यवस्थितेष्वेवमवगाहते—त्रयः परमाणवस्त्रिष्वाकाशप्रदेशेषु एकस्मिन् द्वाविति, स्थापना[17]—, तदा आद्यप्रदेशवर्ती परमाणुश्चरमः, द्वौ चान्त्यप्रदेशवर्तिनौ चरम इति चरमौ द्वौ च मध्यवर्तित्वादचरमौ, एकादशः चरमश्चावक्तव्यः, कथमिति चेत् ?, उच्यते, यदा स पञ्चप्रदेशात्मकस्त्रिष्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते—द्वौ द्वौ परमाणू द्वयोराकाशप्रदेशयोः समश्रेण्या व्यवस्थितयोः एको विश्रेणिस्थः, स्थापना[18]—, तदा चत्वारः परमाणवो द्विप्रदेशावगाहित्वात्

द्विप्रदेशावगाढद्विप्रदेशस्कन्धवच्चरम एकश्च विश्रेणिस्थः परमाणुरवक्तव्यः, द्वादशः चरमश्चावक्तव्यौ च, तत्र यदा स पञ्चप्रदेशात्मकः स्कन्धश्चतुर्ष्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते–द्वौ परमाणू द्वयोराकाशप्रदेशयोः समश्रेण्या व्यवस्थितयोरेको विश्रेणिस्थे द्वौ चान्यस्मिन् विश्रेणिस्थे, स्थापना—, तदा द्वौ परमाणू समश्रेणिव्यवस्थितद्विप्रदेशावगाढौ द्विप्रदेशावगाढद्विप्रदेशस्कन्धवच्चरमः एको द्वौ च विश्रेणिस्थपृथगेकैकाकाशप्रदेशावगाढौ चावक्तव्यौ, त्रयोदशः चरमौ चावक्तव्यश्च, तत्र यदा स पञ्चप्रदेशावगाढः पञ्चस्वाकाशप्रदेशेष्वेवमवगाहते—द्वौ परमाणू उपरि द्वयोराकाशप्रदेशयोः समश्रेण्या व्यवस्थितयोरवगाढौ द्वौ च द्वयोस्तथैवाधः एकः पर्यन्ते मध्यसमे, स्थापना—,तदा द्वावुपरितनौ द्विप्रदेशावगाढद्व्यणुकस्कन्धवच्चरमः द्वौ चाधस्तनौ चरम इति चरमौ एकश्च केवलः परमाणुरिवावक्तव्य इति, त्रयोविंशतितमः चरमौ चाचरमश्चावक्तव्यश्च, स चैवं–यदा पञ्चप्रदेशकः स्कन्धश्चतुर्ष्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते–त्रिष्वाकाशप्रदेशेषु समश्रेण्या व्यवस्थितेष्वाद्ये एकः परमाणुः मध्ये द्वौ अन्ते एकः चतुर्थेऽपि विश्रेणिस्थ एकः, स्थापना—,तदा त्रिष्वाकाशप्रदेशेषु मध्ये आद्यन्तप्रदेशावगाढौ चरमौ मध्यप्रदेशवर्ती तु द्व्यणुको मध्यवर्तित्वादचरमो विश्रेणिस्थश्चावक्तव्य इति, चतुर्विंशतितमः चरमौ चाचरमश्चावक्तव्यौ च, कथमिति चेत्, उच्यते, स एव यदा पञ्चप्रदेशकः स्कन्धः पञ्चस्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते–त्रयः परमाणवस्त्रिष्वाकाशप्रदेशेषु समश्रेणिव्यवस्थितेषु द्वयोराकाशप्रदेशयोः परमाण्वोर्विश्रेणिस्थयोः, स्थापना—,तदा त्रिष्वाकाशप्रदेशेषु मध्ये

१०चरमाचरमपदे परमाण्वादीनां चरमात्वादि

द्वावाद्यन्तप्रदेशवर्तिनौ चरमौ मध्यश्चाचरमो द्वौ च विश्रेणिस्थाववक्तव्यौ, पञ्चविंशतितमः चरमौ चाचरमौ चावक्तव्यश्च, स चैवं—यदा पञ्चप्रदेशकः स्कन्धः पञ्चस्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते—चत्वारश्चतुर्ष्वाकाशप्रदेशेषु समश्रेणिव्यवस्थितेषु एको विश्रेणिस्थः, स्थापना[23]—,तदा चतुर्ष्वाकाशप्रदेशेषु मध्ये द्वावाद्यन्तप्रदेशवर्तिनौ चरमौ द्वौ च मध्यवर्तिनावचरमौ एको विश्रेणिस्थोऽवक्तव्यः। 'छप्पएसिए णं भंते !' इत्यादि प्रश्नसूत्रं प्राग्वत्, निर्वचनं 'गोयमा ! सिय चरमे' इत्यादि, इह द्वितीयचतुष्पञ्चमषष्ठपञ्चदशषोडशसप्तदशाष्टादशविंशतितमैकविंशतितमद्वाविंशतितमरूपा एकादश भङ्गाः प्रतिषेध्याः, वक्ष्यति च—"बिचउत्थपञ्चछट्ठं पन्नरसोलं सत्तरट्ठारं। वीसेक्कवीस बावीसगं च वज्जेज्ज छट्ठंमि ॥ १ ॥" शेषास्त्वेकादयः परिग्राह्याः, घटमानत्वात्, तत्र यथा द्व्यादयो न घटन्ते एकादयस्तु घटन्ते तथा भाव्यन्ते—इह यदा षट्प्रदेशकः स्कन्धो द्वयोराकाशप्रदेशयोः समश्रेण्या व्यवस्थितयोरेवमवगाहते—एकस्मिन्नाकाशप्रदेशे त्रयः परमाणवोऽपरस्मिन्नपि त्रय इति, स्थापना[24]—,तदा द्विप्रदेशावगाढद्विप्रदेशस्कन्धवच्चरमः, अचरमलक्षणस्तु द्वितीयो भङ्गो न घटते, चरमरहितस्य केवलस्याचरमस्यासंभवात्, न खलु प्रान्ताभावे मध्यं भवतीति भावनीयमेतत्, तृतीयोऽवक्तव्यलक्षणः, स चैवं—यदा स षट्प्रदेशात्मकः स्कन्धः एकस्मिन्नाकाशप्रदेशेऽवगाहते, स्थापना[25]—,तदा परमाणुवच्चरमाचरमशब्देन व्यपदेष्टुमशक्यत्वादवक्तव्यः, चतुर्थश्चरमाणीति पञ्चमोऽचरमाणीति षष्ठोऽवक्तव्यानीति पञ्चदशोऽचरमश्चावक्तव्यश्च षोडशोऽचरमश्चावक्तव्यानि च सप्तदशोऽचरमाणि चावक्त-

व्यश्च अष्टादशोऽचरमाणि चावक्तव्यानि चेत्येते सप्त भङ्गा ओघत एव न संभवन्ति, तथाप्रकाराणा द्रव्याणामेवासंभवात्; न ह्येवं जगति केवलानि चरमादीनि द्रव्याणि संभवन्ति, असंभवश्च प्रागुक्तभावनानुसारेण सुगमत्वात्स्वयं भावनीयः, सप्तमश्च चरमश्चाचरमश्चेत्येवंरूप एव, यदा स षट्प्रदेशात्मकः स्कन्धः पञ्चस्वाकाशप्रदेशेष्वेकपरिक्षेपेण व्यवस्थितेष्वेवमवगाहते, स्थापना[३६]—,द्वौ परमाणू मध्यप्रदेशे एकैकः शेषेपु, तदा तेषां चतुर्णां परमाणूनामेकसंबन्धिपरिणामपरिणतत्वादेकवर्णत्वादेकगन्धत्वादेकरसत्वादेकस्पर्शत्वाच्चैकत्वव्यपदेशः एकत्वव्यपदेशत्वाच्चरम इति व्यपदेशः, यौ तु द्वौ परमाणू मध्ये तावेकत्वपरिणामपरिणतावित्यचरमः, अष्टमश्चरमश्चाचरमौ च, तत्र यदा स एव षट्प्रदेशात्मकः स्कन्धः षट्सु प्रदेशेषु एकपरिक्षेपेणैकाधिकमेवमवगाहते, स्थापना[३७]—,तदा पर्यन्तवर्तिनः परिक्षेपेणावस्थिताश्चत्वारः परमाणवः प्रागुक्तयुक्तेरेकश्चरमः, द्वौ मध्यवर्तिनावचरमाविति, अन्ये त्वभिदधति—चतुर्णां परमाणूनां क्षेत्रप्रदेशान्तरव्यवहिताधिकत्वपरिणामो न भवति तदभावाच्च नैष भङ्ग उपपद्यते, प्रतिषिद्धश्च सूत्रे, यतो वक्ष्यति—"विचउत्थपंचछट्ठ"मिति प्राकृतशैल्या 'छट्ठ' 'अट्ठ' इत्येतयोः पदयोर्निर्देशः, ततोऽयमर्थः—षष्ठमष्टमं च वर्जयित्वेति, अथ नामैवंरूपोऽपि भङ्गो भवति तदेवं गम्यते—ये एकवेष्टका अव्यवधानेन चत्वारः परमाणवस्ते तथाविधैकत्वपरिणामपरिणतत्वाच्चरमः, तस्मादधिकोऽपि समश्रेण्यैव प्रतिबद्धत्वान्न तदतिरिक्त इति सोऽपि तस्मिन्नेव चरमे गण्यते इत्येकं चरमं, पुनश्च योऽधिकमध्ये व्यवस्थित इति स मध्यवर्तित्वादनेकपरिणामित्वाच्च वस्तुनोऽचरमोऽपि ततोऽ( तश्चरमा )

चरमावित्यपि भवति, अत्रापि न कश्चिद् विरोधः, तत्त्वं पुनः केवलिनो विदन्ति, नवमश्चरमौ चाचरमश्च, यदा स
एव षट्प्रदेशकः स्कन्धस्त्रिष्वाकाशप्रदेशेषु समश्रेण्या व्यवस्थितेष्वेवमवगाहते—एकैकस्मिन्नाकाशप्रदेशे द्वौ द्वौ परमाणू
इति, स्थापना[28]—,तदाऽऽद्यप्रदेशवर्तिनौ द्वौ परमाणू चरमः द्वावन्त्यप्रदेशवर्तिनौ चरम इति चरमौ, द्वौ तु मध्यप्रदेश-
वर्तिनौ एकोऽचरम इति, दशमश्चरमौ चाचरमौ च, स चैवं—यदा स षट्प्रदेशकः स्कन्धश्चतुर्ष्वाकाशप्रदेशेषु सम-
श्रेण्या व्यवस्थितेष्वेवमगाहते–द्वावाद्ये प्रदेशे द्वौ द्वितीये एकस्तृतीये एकश्चतुर्थे इति, स्थापना[29]—,तदा द्वौ परमाणू
प्रथमप्रदेशवर्तिनावेकश्चरमः एकोऽन्त्यप्रदेशवर्ती चरम इति चरमौ द्वौ परमाणू द्वितीयप्रदेशवर्तिनावेकोऽचरमः एक-
स्तृतीयप्रदेशवर्ती अचरम इत्यचरमावपि द्वौ, एकादशश्चरमश्चावक्तव्यश्च, स चैवं—यदा स एव षट्प्रदेशात्मकः
स्कन्धस्त्रिष्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते—द्वावाद्ये प्रदेशे द्वौ समश्रेण्या व्यवस्थिते द्वितीये प्रदेशे
द्वौ विश्रेणिस्थे तृतीये प्रदेशे, स्थापना[30]—,तदा द्विप्रदेशावगाढाश्चत्वारः परमाणवः समश्रेणिव्यवस्थितद्विप्रदेशावगाढद्व्य-
णुकस्कन्धवदेकश्चरमः द्वौ च विश्रेणिस्थप्रदेशावगाढौ परमाणुवदेकोऽवक्तव्यः, द्वादशश्चरमश्चावक्तव्यौ च, तत्र यदा स
षट्प्रदेशात्मकः स्कन्धश्चतुर्ष्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते—द्वौ परमाणू प्रथमे प्रदेशे द्वौ समश्रेणि-
व्यवस्थिते द्वितीये प्रदेशे एकः ततः परमुपरि तृतीये प्रदेशे एकश्चाधश्चतुर्थे इति, स्थापना[31]—,तदा चत्वारः परमा-
णवो द्विप्रदेशावगाढाः पूर्ववदेकश्चरमः द्वौ च विश्रेणिस्थप्रदेशद्वयावगाढावक्तव्याविति, त्रयोदशश्चरमौ चावक्तव्यश्च,

यदा स एव षट्प्रदेशकः स्कन्धः पञ्चस्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते–द्वौ परमाणू द्वयोराकाशप्रदेशयोः समश्रेणिव्यवस्थितयोः द्वौ तयोरेवाधः समश्रेणिव्यवस्थितयोराकाशप्रदेशयोः श्रेणिद्वयमध्यभागसमश्रेणिस्थे चैकस्मिन्नाकाशप्रदेशे द्वाविति, स्थापना[32]—,तदा द्विप्रदेशावगाढद्व्यणुकस्कन्धवदुपरितनद्विप्रदेशावगाढौ द्वौ परमाणू एकश्चरमो द्वावधस्तनाविति चरमौ, द्वावेकप्रदेशावगाढौ परमाणुवदेकोऽवक्तव्यः, चतुर्दशश्चरमौ चावक्तव्यौ च, तत्र यदा स एव षट्प्रदेशकः स्कन्धः षट्स्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते—द्वौ परमाणू द्वयोराकाशप्रदेशयोः समश्रेण्या व्यवस्थितयोः द्वौ तयोरेवाधः समश्रेणिव्यवस्थितयोराकाशप्रदेशयोः एकः श्रेणिद्वयमध्यभागसमश्रेणिस्थे प्रदेशे, एक उपरितनयोर्द्वयोर्विश्रेणिस्थे, स्थापना[33]—,तदा द्वावुपरितनावेकश्चरमो द्वावधस्तनाविति चरमौ द्वौ चावक्तव्याविति, एकोनविंशतितमश्चरमश्चाचरमश्चावक्तव्यः, स चैवं—यदा स षट्प्रदेशकः स्कन्धः षट्स्वाकाशप्रदेशेषु एकपरिक्षेपेण विश्रेणिस्थैकाधिकमवगाहते, स्थापना[34]—,तदा एकवेष्टकाश्चत्वारः परमाणवः प्रागुक्तयुक्तेरेकश्चरम एकोऽचरमो मध्यवर्ती एकोऽवक्तव्यः, यश्च विंशतितमश्चरमश्चाचरमश्चावक्तव्यौ च, स्थापना[35]—,स सप्तप्रदेशकस्यैवोपपद्यते न षट्प्रदेशकस्य, योऽप्येकविंशतितमश्चरमश्चाचरमौ चावक्तव्यश्च, स्थापना[36]—,सोऽपि सप्तप्रदेशकस्यैव न षट्प्रदेशकस्य, यस्तु द्वाविंशतितमश्चरमश्चाचरमौ चावक्तव्यौ च, स्थापना[37]—,सोऽष्टप्रदेशकस्यैवेति, त्रयोऽप्येते विंशत्यादयोऽत्र प्रतिषिद्धाः, यश्च त्रयोविंशतितमश्चरमौ चाचरमश्चावक्तव्यः, स एवं—यदा स एव षट्प्रदेशकः स्कन्ध-

श्चतुर्ष्वाकाशप्रदेशेष्वेवमवगाहते—द्वौ द्वौ परमाणू द्वयोराकाशप्रदेशयोः एकस्तयोरेव समश्रेणिस्थे तृतीये आकाशप्रदेशे एको विश्रेणिस्थे इति, स्थापना[३८]—,तदा आद्यप्रदेशावगाढौ द्वौ परमाणू चरमस्तृतीयप्रदेशावगाढश्चरम इति द्वौ चरमौ द्वितीयप्रदेशावगाढौ द्वौ परमाणू चरमो विश्रेणिस्थोऽवक्तव्यः, चतुर्विंशतितमः चरमौ चाचरमश्चावक्तव्यौ च, तत्र यदा स एव षट्प्रदेशात्मकः स्कन्धः पञ्चस्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते—त्रिष्वाकाशप्रदेशेषु समश्रेण्या व्यवस्थितेष्वाद्ये एकः द्वितीये एकः तृतीये द्वौ द्वयोर्विश्रेणिस्थयोरेकैक इति, स्थापना[३९]—,तदा आद्यन्तप्रदेशावगाढौ चरमौ मध्यावगाढोऽचरमः विश्रेणिस्थप्रदेशद्वयावगाढौ अवक्तव्यौ, पञ्चविंशतितमः चरमौ चाचरमौ चावक्तव्यश्च, यदा स एव षट्प्रदेशात्मकः स्कन्धः पञ्चसु प्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते—चतुर्ष्वाकाशप्रदेशेषु समश्रेणिव्यवस्थितेष्वाद्यप्रदेशत्रये एकैकश्चतुर्थे द्वौ पञ्चमे विश्रेणिस्थे एकः, स्थापना[४०]—, तदा आद्यन्तप्रदेशवर्तिनौ चरमौ मध्यप्रदेशद्वयवर्तिनौ द्वावचरमौ विश्रेणिप्रदेशस्थ एकोऽवक्तव्यः, षड्विंशतितमः चरमौ चाचरमौ चावक्तव्यौ च, स चैवं—यदा स षट्प्रदेशकः स्कन्धः षट्स्वाकाशप्रदेशेषु समश्रेण्या विश्रेण्या चैवमवगाहते—स्थापना[४१]—,तदा आद्यन्तप्रदेशावगाढौ द्वौ चरमौ द्वौ मध्यप्रदेशावगाढावचरमौ द्वौ च विश्रेणिस्थप्रदेशद्वयावगाढाववक्तव्याविति । 'सत्तपएसिए णं भंते ! खंधे' इत्यादि प्रश्नसूत्रं प्राग्वत्, निर्वचनमाह—'गोयमा ! सत्तपएसिए णं खंधे सिय चरमे नो अचरमे' इत्यादि, इह द्वितीयचतुर्थपञ्चमषष्ठपञ्चदशषोडशसप्तदशाष्टादशद्वाविंशतितमरूपा नव

* चिह्नात् परतोऽङ्कानुक्रमेण स्थापनाः प्राग् निर्दिष्टाः ।

पत्रं २३५ पृष्ठे १ एक वहुत्वे ६
१ चरमं ४ चरमाणि
२ अचरमं ५ अचरमाणि
३ अवक्तव्यं ६ अवक्तव्यानि
द्विके १२

चरमाचरमयोः चतुर्भङ्गी
चरमं अचरमं
चरमं अचरमाणि
चरमाणि अचरमं
चरमाणि अचरमाणि

चरमावक्तव्ययोः ४
चरमं अवक्तव्यं
चरमं अवक्तव्यानि
चरमाणि अवक्तव्यं

चरमाणि अवक्तव्यानि

अचरमावक्तव्ययोः ४
अचरमं अवक्तव्यं
अचरमं अवक्तव्यानि
अचरमाणि अवक्तव्यं
अचरमाणि अवक्तव्यानि

त्रिके ८

| | | |
|---|---|---|
| च. १ | अच. १ | अव. १ |
| च. १ | अच. १ | अव. ३ |
| च. १ | अच. ३ | अव. १ |
| च. १ | अच. ३ | अव. ३ |
| च. ३ | अच. १ | अव. १ |
| च. ३ | अच. १ | अव. ३ |
| च. ३ | अच. ३ | अव. १ |
| च. ३ | अच. ३ | अव. ३ |

सर्वाग्रं २६

| | | | |
|---|---|---|---|
| | १४ | २६ | ३६ |
| १ | १५ | २७ | ३७ |
| २ | १६ | २८ | ३८ |
| ३ | १७ | २९ | ३९ |
| ४ | १८ | ३० | ४० |
| ५ | १९ | ३१ | ४१ |
| ६ | २० | ३२ | |
| ७ | २१ | ३३ | |
| ८ | २२ | ३४ | |
| ९ | २३ | ३५ | |
| १० | २४ | | |
| ११ | २५ | | |
| १२ | | | |
| १३ | | | |

भङ्गाः प्रतिषेध्याः, शेषा उपादेयाः, वक्ष्यति च–"बिचउत्थपंचछट्ठं पन्नरसोलं च सत्तरट्ठारं। वज्जिय वावीसइमं सेसा भंगा उ सत्तमए ॥ १ ॥" तत्र द्व्यादीनामष्टादशपर्यन्तानां प्रतिषेधकारणं प्रागुक्तमनुसर्तव्यं न केवलमत्र किन्तु सर्वेष्वप्युत्तरेषु स्कन्धेषु, यस्तु द्वाविंशतितमः सोऽष्टप्रदेशकस्यैव घटते न सप्तप्रदेशकस्येत्युक्तं प्राक्, तत इह प्रतिषेधः, शेषास्तु प्रथमादयः षड्विंशतितमपर्यन्ताः सप्तदश भङ्गाः षट्प्रदेशकस्कन्धस्येव भावनीयाः, केवलं विनेयजनानुग्रहाय स्थापनामात्रेणोपदर्श्यन्ते—प्रथमो भङ्गश्चरमभङ्गः तृतीयोऽवक्तव्यः सप्तमश्चरमश्चाचरमश्च अष्टमश्चरमश्चाचरमौ च नवमश्चरमौ चाचरमश्च दशमश्चरमौ चाचरमौ च एकादशश्चरमश्चावक्तव्यश्च द्वादशश्चरमश्चावक्तव्यौ च त्रयोदशश्चरमौ चावक्तव्यश्च चतुर्दशश्चरमौ चावक्तव्यौ च एकोनविंशतितमश्चरमश्चाचरमश्चावक्तव्यश्च विंशतितमश्चरमश्चाचरमश्चावक्तव्यौ च एकविंशतितमश्चरमश्चाचरमौ चावक्तव्यश्च त्रयोविंशतितमश्चरमौ चाचरमश्चावक्तव्यश्च चतुर्विंशतितमश्चरमौ चाचरमश्चावक्तव्यश्च पञ्चविंशतितमश्चरमौ चाचरमौ चावक्तव्यश्च षड्विंशतितमश्चरमौ चाचरमौ चावक्तव्यौ च । इह यस्मात्सप्तप्रादेशिकः स्कन्ध एकस्मिन्नाकाशप्रदेशेऽवगाहते द्वयोरपि त्रिष्वपि

यावत्सप्तस्वपि तत एवं भङ्गाः संभवन्ति ॥ 'अट्ठपएसिए णं भंते! खंधे' इत्यादि प्रश्नसूत्रं प्राग्वत्, निर्वचनसूत्रं 'अट्ठपएसिए णं खंधे सिय चरमे' इत्यादि, अत्र द्वितीयचतुर्थपञ्चमषष्ठपञ्चदशषोडशसप्तदशाष्टादशरूपा अष्टौ भङ्गाः प्रतिषेध्याः, शेषा ग्राह्याः, वक्ष्यति च—'बिचउत्थपंचछट्ठं पन्नर सोलं च सत्तरऽट्ठारं। एए वज्जिय भंगा सेसा सेसेसु खंधेसु ॥ १ ॥" सुगमा, नवरं 'सेसा सेसेसु खंधेसु' इति शेषाः भङ्गाः शेषेषु सप्तप्रदेशकात् स्कन्धादितरेषु—अष्टप्रदेशादिकेषु सर्वेषु स्कन्धेषु द्रष्टव्याः, अन्ये त्वेवमुत्तरार्द्धं पठन्ति—"एए वज्जिय भंगा तेण परमवट्ठिया सेसा" सुगमं, ते च प्रथमादयो भङ्गाः षड्विंशतिपर्यन्ता अष्टादश भावनातः स्थापनातश्च प्राग्वद् भावनीयाः, नवरं 'चरमश्चाचरमौ चावक्तव्यौ च' इत्येवंरूपो द्वाविंशतितमो भङ्गः स्थापनात एवं । अथ द्विप्रदेशकादिषु स्कन्धेषु अवक्तव्यौ इत्येवंरूपः षष्ठो भङ्गः कस्मात्प्रतिषिध्यते ?, तस्यापि युक्तितः संभवभावात्, तथाहि—यदैकः परमाणुरेकस्मिन्नाकाशप्रदेशे द्वितीयो विश्रेणिस्थे प्रदेशे, स्थापना— तथा एकोऽप्यवक्तव्यो द्वितीयोऽप्यवक्तव्य इति भवत्यवक्तव्याविति भङ्गः, त्रिप्रदेशकचिन्तायामेकस्मिन्नेकः परमाणुः अपरस्मिन् द्वौ चतुष्प्रदेशकचिन्तायां प्रत्येकं द्वौ द्वौ परमाणू इत्यादि, सत्यमेतत्, केवलमेवंरूपं जगति द्रव्यमेव नास्ति, कथमेतदवसितम्? इति चेत्, उच्यते, अत एव प्रतिषेधवचनात्, यदि हि तथारूपं द्रव्यं संभवेद् नाचार्यः प्रतिषेधं कुर्यादिति, यदिवा संभवेऽपि जातिपरनिर्देशात् तृतीयभङ्गक एवान्तर्भावो वेदितव्यः । यथा चाष्टप्रदेशके स्कन्धे

भङ्गाः प्रतिषेध्या विधेयाश्चोक्तास्तथा संख्यातप्रदेशके असंङ्ख्यातप्रदेशके च प्रत्येकं वक्तव्याः, तथा चाह—'संखेज्जपएसिए असंखेज्जपएसिए' इत्यादि, पाठसिद्धं, नवरमियं सर्वत्र भावना—यस्मादेकादिष्वप्याकाशप्रदेशेष्वष्टप्रदेशकादीनां स्कन्धानामवगाहो भवति तथा(तो)घटन्ते यथोक्ताः सर्वेऽपि भङ्गाः, नन्वसंख्यातप्रदेशात्मकस्यानन्तप्रदेशात्मकस्य च स्कन्धस्य कथमेकस्मिन्नाकाशप्रदेशेऽवगाहः ?, उच्यते, [तथा] तथामाहात्म्यात्, न चैतदनुपपन्नं, युक्तितः सम्भाव्यमानत्वात्, तथाहि—अनन्तानन्ता द्विप्रदेशकाः स्कन्धा यावदनन्तानन्ताः संख्येयप्रदेशात्मकाः अनन्तानन्ता असंख्येयप्रदेशात्मकाः स्कन्धा अनन्तानन्ता अनन्तप्रदेशात्मकाः, लोकश्च सर्वात्मनाऽप्यसंख्येयप्रदेशात्मकस्ते च सर्वेऽपि लोक एवावगाढा नालोके, ततोऽवसीयते सन्त्येकस्मिन्नप्याकाशप्रदेशेऽवगाढा वहवः परमाणवो वहवो द्विप्रदेशकाः स्कन्धाः यावद्वहवोऽनन्तप्रदेशात्मकाः स्कन्धाः, तथा चात्र पूर्वसूरयः प्रदीपदृष्टान्तमुपवर्णयन्ति—यथैकस्य प्रदीपस्य गृहमध्ये प्रज्वलितस्य प्रभापरमाणवः सर्वमेव गृहं प्राप्नुवन्ति तथा प्रत्येकं प्रदीपसहस्रस्यापि, न च प्रतिप्रदीपं प्रभापरमाणवो न भिन्नाः, प्रतिप्रदीपे पुरुषस्य मध्यस्थितस्य छायादिदर्शनात्, ततो यथैते स्थूला अपि प्रदीपप्रभापरमाणवः एकस्मिन्नप्याकाशप्रदेशे वहवो मान्ति तथा परमाण्वादयोऽपीति न कश्चिद्दोषः, आकाशस्य तथा तथाऽवकाशदानस्वभावतया वस्तूनां च विचित्रपरिणमनस्वभावतया विरोधाभावात्, सम्प्रति परमाण्वादिषु ये भङ्गा ग्राह्याः ये च षष्ठादिषु न ग्राह्यास्तत्सङ्ग्राहिकाः संग्रहणिगाथा आह—'परमाणुंमि य तइओ' इत्यादि,

पाठसिद्धं, भावितार्थत्वात्, नवरं षट्प्रदेशादिचिन्तायां प्रतिषेध्या भङ्गाः स्तोका इति लाघवार्थं त एव संगृहीताः। इहानन्तरं स्कन्धाना चरमाचरमादिवक्तव्यतोक्ता, स्कन्धाश्च यथायोगं परिमण्डलादिसंस्थानवन्तो भवन्ति इत्यतः संस्थानवक्तव्यतामाह—

कइ णं भंते! संठाणा पं०, गो० पंच संठाणा पं०, तं०—परिमंडले वट्टे तंसे चउरंसे आयते य। परिमंडला णं भंते! संठाणा किं संखेज्जा असंखेज्जा अणंता?, गो०! नो संखिज्जा नो असंखेज्जा अणंता, एवं जाव आयता। परिमंडले णं भंते! संठाणे किं संखेज्जपएसिए असंखेज्जपदेसिए अणंतपदेसिए?, गो०! सिय संखेज्जपएसिए सिय असंखेज्जपएसिए सिय अणंतपदेसिए एवं जाव आयते। परिमंडले णं भंते! संठाणे संखेज्जपएसिए किं संखेज्जपएसोगाढे असंखेज्जपएसोगाढे अणंतपएसोगाढे?, गो०! संखेज्जपएसोगाढे नो असंखेज्जपएसोगाढे नो अणंतपएसोगाढे, एवं जाव आयते, परिमंडले णं भंते! संठाणे असंखेज्जपएसिए किं संखेज्जपएसोगाढे असंखेज्जपएसोगाढे अणंतपएसोगाढे?, गो०! सिय संखेज्जपएसोगाढे सिय असंखेज्जपएसोगाढे नो अणंतपएसोगाढे एवं जाव आयते, परिमंडले णं भंते! संठाणे अणंतपएसिए किं संखेज्जपएसोगाढे असंखेज्जपएसोगाढे अणंतपएसोगाढे?, गो०! सिय संखेज्जपएसोगाढे सिय असंखेज्जपएसोगाढे नो अणंतपएसोगाढे, एवं जाव आयते। परिमंडले णं भंते! संठाणे संखेज्जपएसिए संखेज्जपएसोगाढे किं चरमे अचरमे चरमाइं अचरमाइं चरमंतपएसा अचरमंतपएसा?, गो०! परिमंडले णं संठाणे संखेज्जपएसिए संखेज्जपएसोगाढे

नो चरमे नो अचरमे नो चरमाइं नो अचरमाइं नो चरमंतपएसा नो अचरमंतपएसा, नियमं अचरमं चरमाणि य चरमं-
तपएसा य अचरमंतपएसा य, एवं जाव आयते, परिमंडले णं भंते ! संठाणे असंखेज्जपएसिए संखेज्जपएसोगाढे किं
चरमे० पुच्छा, गो० ! असंखेज्जपएसिए संखेज्जपएसोगाढे जहा संखेज्जपएसिए, एवं जाव आयते, परिमंडले णं भंते !
संठाणे असंखेज्जपएसिए असंखेज्जपएसोगाढे किं चरमे पुच्छा, गो० ! असंखिज्जपएसिए असंखिज्जपएसोगाढे नो चरमे
जहा संखेज्जपदेशोगाढे एवं जाव आयते, परिमंडले णं भंते ! संठाणे अणंतपएसिए संखिज्जपएसोगाढे किं चरमे०
पुच्छा, गो० ! तहेव जाव आयते, अणंतपएसिए असंखेज्जपएसोगाढे जहा संखेज्जपएसोगाढे, एवं जाव आयते। परिमंडल-
स्स णं भंते! संठाणस्स संखेज्जपएसियस्स संखेज्जपएसोगाढस्स अचरिमस्स य चरिमाण य चरमंतपदेसाण य अचरमंतपए-
साण य दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे२हिंतो अ० ब० तु० वि० ?, गो०! सव्वत्थोवे परिमंडलस्स संठाण-
स्स संखेज्जपएसियस्स संखेज्जपएसोगाढस्स दव्वट्ठयाए एगे अचरिमे चरिमाइं संखेज्जगुणाइं अचरमं चरमाणि य दोऽवि
विसेसाहियार्ति पदेसट्ठयाए सव्वत्थोवा परिमंडलस्स संठाणस्स संखिज्जपएसियस्स संखेज्जपएसोगाढस्स चरमंतपएसा अच-
रमंतपएसा संखेज्जगुणा चरमंतपएसा य अचरमंतपएसा य दोऽवि विसेसाहिया दव्वट्ठपएसट्ठयाए सव्वत्थोवे परिमंडलस्स
संठाणस्स संखेज्जपएसियस्स संखेज्जपएसोगाढस्स दव्वट्ठयाए एगे अचरिमे चरिमाइं संखेज्जगुणार्ति अचरमं च चरमाणि
य दोवि विसेसाहियार्ति चरमंतपएसा संखेज्जगुणा अचरिमंतपएसा संखेज्जगुणा चरिमंतपएसा य अचरमंतपएसा य दोवि
विसेसाहिया एवं वट्टतंसचउरंसायएसुवि जोएयव्वं । परिमंडलस्स णं भंते ! संठाणस्स असंखेज्जपएसियस्स संखेज्जपए-

सोगाढस्स अचरमस्स चरमाण य चरमंतपएसाण य अचरमंतपएसाण य दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे-२ हिंतो अ० व० तु० वि० ?, गो० ! सव्वत्थोवे परिमंडलस्स संठाणस्स असंखेज्जपएसिअस्स संखेज्जपएसोगाढस्स दव्वट्ठयाए एगे अचरमे चरमातिं संखेज्जगुणातिं, अचरमं च चरमाणि य दोवि विसेसाहियातिं पदेसट्ठयाते सव्वत्थोवा परिमंडलसंठाणस्स असंखेज्जपएसियस्स संखेज्जपएसोगाढस्स चरमंतपएसा अचरमंतपएसा संखिज्जगुणा चरमंतपएसा य अचरमंतपएसा य दोवि विसेसाहिया दव्वट्ठपएसट्ठयाए सव्वत्थोवे परिमंडलस्स संठाणस्स असंखेज्जपएसियस्स संखेज्जपएसोगाढस्स दव्वट्ठयाए एगे अचरिमे चरमातिं संखेज्जगुणातिं अचरमं च चरमाणि य दोवि विसेसाहियातिं चरमंतपएसा संखेज्जगुणा अचरमंतपएसा संखेज्जगुणा चरमंतपएसा य अचरमंतपएसा य दोवि विसेसाहिया, एवं जाव आयते। परिमंडलस्स णं भंते! संठाणस्स असंखेज्जपएसियस्स असंखेज्जपएसोगाढस्स अचरमस्स चरमाण य चरमंतपएसाण य अचरमंतपएसाण य दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कयरे२हिंतो अ० व० तु० वि० ?, गो० ! जहा रयणप्पभाए अप्पाबहुयं तहेव निरवसेसं भाणियव्वं, एवं जाव आयते। परिमंडलस्स णं भंते! संठाणस्स अणंतपएसियस्स संखेज्जपएसोगाढस्स अचरिमस्स य ४ दव्वट्ठयाए ३ कयरे२हिंतो अ० व० तु० वि० ?, गो० ! जहा संखेज्जपएसिअस्स संखेज्जपएसोगाढस्स, नवरं संकमेणं अणंतगुणा, एवं० जाव आयए, परिमंडलस्स णं भंते! संठाणस्स अणंतपएसियस्स असंखेज्जपएसोगाढस्स अचरमस्स य जहा रयणप्पभाए, नवरं संकमे अणंतगुणा, एवं जाव आयते (सूत्रं १५९) ॥

'कइ णं भंते ! संठाणा पं०' इत्यादि सुगमं, परिमण्डलादीनां संस्थानानां स्वरूपस्याधः प्रथमपद एव सविस्तरं प्ररूपितत्वात् शेषं पाठसिद्धं, नवरं 'परिमंडले णं भंते ! संठाणे संखेज्जपएसिए किं संखेज्जपएसोगाढे पुच्छा, गो० ! संखेज्जपएसोगाढे नो असंखेज्जपएसोगाढे नो अणंतपएसोगाढे' इति यस्मात् तस्य सङ्ख्येया एव प्रदेशास्ततः कथमसङ्ख्येयेष्वनन्तेषु वा प्रदेशेष्ववगाहते इति, असङ्ख्यातप्रदेशात्मकमनन्तप्रदेशात्मकं वा पुनः परिमण्डलसंस्थानं सङ्ख्येयेष्वसङ्ख्येयेषु वा प्रदेशेष्ववगाहते विरोधाभावान्नानन्तप्रदेशेषु असङ्ख्यातप्रदेशात्मकस्यानन्तेषु प्रदेशेष्ववगाहना-विरोधात्, अनन्तप्रदेशात्मकस्यापि विरोध एव, यस्माल्लोकोऽप्यसङ्ख्यातप्रदेशात्मक एव, लोकादन्यत्र च पुद्गलानां गत्यसम्भवः, तस्मादनन्तप्रदेशिकमप्यसङ्ख्येयेषु प्रदेशेष्ववगाहते नानन्तेषु, एवं वृत्तादीन्यपि संस्थानानि प्रत्येकं भावनीयानि, सङ्ख्यातप्रदेशासङ्ख्यातप्रदेशानन्तप्रदेशपरिमण्डलादिसंस्थानचरमाचरमादिचिन्तायां निर्वचनसूत्राणि रत्नप्रभाया इव प्रत्येतव्यानि, अनेकावयवाविभागात्मकत्वविवक्षायामचरमं च चरमाणि चेति निर्वचनं प्रदेशविवक्षायां चरमान्तप्रदेशाश्चाचरमान्तप्रदेशाश्च । सम्प्रति सङ्ख्यातप्रदेशस्य सङ्ख्यातप्रदेशावगाढस्य परिमण्डलादेश्चरमाचरमादि-विषयमल्पबहुत्वमभिधित्सुराह—'परिमंडलस्स णं भंते !' इत्यादि, सुगमं नवरं द्रव्यार्थताचिन्तायां 'चरमाणि संखे-ज्जगुणाइं' इति सर्वात्मना परिमण्डलसंस्थानस्य सङ्ख्यातप्रदेशात्मकत्वात्, असङ्ख्यातप्रदेशस्यासङ्ख्यातप्रदेशावगाढस्या-ल्पबहुत्वं रत्नप्रभाया इव भावनीयं, अनन्तप्रदेशकस्याप्यसङ्ख्यातप्रदेशावगाढस्य, नवरं 'सङ्कमे अनन्तगुणा' इति

क्षेत्रचिन्तातो यदा द्रव्यचिन्तां प्रति सङ्क्रमणं तदा तानि चरमाण्यनन्तगुणानि वक्तव्यानि, तद्यथा—'सव्वत्थोवे एगे अचरमे चरमाइं खेत्ततो असंखेज्जगुणाइं दव्वओ अणंतगुणाइं अचरमं चरमाणि य दोवि विसेसाहियाइं' इति ॥ तदेवं संस्थानान्यपि चरमाचरमादिविभागेन चिन्तितानि, सम्प्रति जीवादीन् चरमाचरमविभागेन चिन्तयति,

जीवे णं भंते ! गतिचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, नेरइए णं भंते ! गतिचरमेणं किं चरिमे अचरिमे ?, गो० ! सिय चरमे सिय अचरमे एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! गतिचरमेणं किं चरिमा अचरिमा ?, गो० ! चरिमावि अचरिमावि, एवं निरंतरं जाव वेमाणिया । नेरइए णं भंते ! ठितीचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! ठितीचरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं निरंतरं जाव वेमाणिया। नेरइया णं भंते ! भवचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! भवचरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं निरंतरं जाव वेमाणिया । नेरइए णं भंते ! भासाचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! भासाचरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं जाव एगिंदियवज्जा, निरंतरं जाव वेमाणिया । नेरइए णं भंते ! आणापाणुचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! आणापाणुचरमेणं किं चरमा अच-

रमा ?, गो० ! चरमावि अचरमावि, एवं निरंतरं जाव वेमाणिया । नेरइए णं भंते ! आहारचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! आहारचरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं निरंतरं जाव वेमाणिया । नेरइए णं भंते ! भावचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! भावचरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं निरंतरं जाव वेमाणिया । नेरइए णं भंते ! वण्णचरमेणं किं चरमे अचरमे !, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! वण्णचरमेणं किं चरमा अचरमा ?, गो० ! चरिमावि अचरिमावि, एवं निरंतरं जाव वेमाणिया । नेरइए णं भंते ! गंधचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! गंधचरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं निरंतरं जाव वेमाणिया । नेरइए णं भंते ! रसचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! रसचरमेणं कि चरमा अचरमा ?, गो० ! चरमावि अचरमावि, एवं निरंतरं जाव वेमाणिया । नेरइए णं भंते ! फासचरमेणं किं चरमे अचरमे ?, गो० ! सिय चरमे सिय अचरमे, एवं निरंतरं जाव वेमाणिए, नेरइया णं भंते ! फासचरमेणं किं चरमा अचरमा ?, गो० ! चरमावि अचरमावि एवं जाव वेमाणिया । संगहणिगाहा—"गतिठिइभवे य भासा आणापाणुचरमे य बोद्धवा । आहारभावचरमे वण्णरसे गंधफासे य ॥ १ ॥"
दसमं चरमपदं समत्तं ( सूत्रम् १६० ) ॥

'जीवे णं भंते! गइचरमेणं किं चरमे?' इत्यादि, गतिपर्यायरूपं चरमं गतिचरमं तेन जीवो भदन्त! चिन्त्यमानः किं चरमः अचरमः?, भगवानाह—हे गौतम! स्यात् चरमः स्यादचरमः, कश्चिच्चरमः कश्चिदचरम इत्यर्थः, तत्र यः पृच्छासमये सामर्थ्यान्मनुष्यगतिरूपे पर्याये वर्त्तमानोऽनन्तरं न किमपि गतिपर्यायमवाप्स्यति, किन्तु मुक्त एव भविता स गतिचरमः, शेषस्त्वगतिचरम इति, 'नेरइए णं भंते! गइचरमे' इत्यादि, नैरयिको भदन्त! गतिचरमेण सामर्थ्यान्नरकगतिपर्यायरूपेण चरमेण चिन्त्यमानः किं चरमः अचरमो वा?, भगवानाह—गौतम! स्याच्चरमः स्यादचरमो, नरकगतिपर्यायादुद्धृतो न भूयोऽपि नरकगतिपर्यायमनुभविष्यति स चरमः शेषस्त्वचरमः, एवं चतुर्विंशतिदण्डकक्रमेण निरन्तरं तावद् वक्तव्यं यावद् वैमानिको—वैमानिकसूत्रं, बहुवचनदण्डकसूत्रे निर्वचनं 'चरमावि अचरमावि' इति, पृच्छासमये ये केचन नैरयिकास्तेषां मध्येऽवश्यं केचन नैरयिकगतिपर्यायेण चरमा इतरे त्वचरमास्तत एकमेवेदमत्र निर्वचनं—चरमा अपि अचरमा अपि, एवं सर्वस्थानेष्वपि तां तां गतिमधिकृत्य भावनीयं। 'नेरइए णं भंते! ठिइचरमेणं' इत्यादि, नैरयिको भदन्त! तत्रैव नरकेषु चरमसमये स्थितिपर्यायरूपेण चरमेण चिन्त्यमानः किं चरमोऽचरमो वा?, भगवानाह—स्याच्चरमः स्यादचरमः, किमुक्तं भवति?—यो भूयोऽपि नरकमागत्य स्थितिचरमसमयं प्राप्स्यति सोऽचरमः शेषस्तु चरमः, एवं निरन्तरं यावद् वैमानिकः, बहुत्वदण्डकचिन्तायां 'चरमावि अचरमावि' इति, इह ये पृच्छासमये स्थितिचरमसमये वर्त्तन्ते, ते चिन्त्यन्ते इत्येतन्न, अन्यथा उद्वर्त्तनाया विरह-

स्यापि सम्भवात् एकादीनामपि चोद्वर्त्तनाया भावात् 'चरमावि अचरमावी'त्युभयत्राप्यवश्यंभाविना बहुवचनेन निर्वचनं नोपपद्यते, किन्तु ये पृच्छासमये वर्त्तन्ते ते क्रमेण स्वस्वस्थितिचरमसमयं प्राप्ताः सन्तस्तेन रूपेण चरमा अचरमा वा इत्येतच्चिन्तनेन उपपद्यते यथोक्तं निर्वचनमिति, भवचरमसूत्रं गतिचरमसूत्रवत्, 'नेरइए णं भंते ! भासाचरमेण'मित्यादि, भाषाचरमं चरमभाषा, ततोऽयमर्थः—नैरयिको भदन्त ! चरमया भाषया किं चरमोऽचरमो वा ?, शेषं सुगमं, बहुवचनसूत्रे प्रश्नभावार्थो—ये पृच्छासमये नारका ते स्वकालक्रमेण चरमां भाषां प्राप्ताः सन्तः तया चरमया भाषया चरमा अचरमा वा इति, ततो निर्वचनसूत्रमप्युपपन्नं, एवमुच्छ्वासाहारसूत्रे अपि भावनीये, भाव औदयिकः, शेषं सुगमं ॥ इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां दशमं चरमाख्यं पदं समाप्तम् ॥ १० ॥

## एकादशं भाषापदम् ।

तदेवं व्याख्यातं दशमं पदं, इदानीमेकादशमारभ्यते, तस्य चायमभिसम्बन्धः, इहानन्तरपदे सत्त्वानां यदुपपातक्षेत्रं रत्नप्रभादि तस्य चरमाचरमविभागः प्रतिपादितः, इह [सत्या १ मृषा २ सत्यामृषा ३ असत्यामृषा ४] भाषापर्यासानां सत्यादिभाषाविभागोपदर्शनं क्रियते, तत्र चेदमादिसूत्रम्—

से णूणं भंते ! मण्णामीति ओहारिणी भासा चिंतेमीति ओहारिणी भासा अह मण्णामीति ओधारिणी भासा अह चिंतेमीति ओधारणी भासा तह मण्णामीति ओधारिणी भासा तह चिंतेमीति ओहारिणी भासा ?, हंता गो० ! मण्णामीति ओधारिणी भासा चिंतेमीति ओधारिणी भासा अह मण्णामीति ओधारिणी भासा अह चिंतेमीति ओधा० तह मण्णामीति ओधा० तह चिंतेमीति ओधा०, ओहारिणी णं भंते ! भासा किं सच्चा मोसा सच्चामोसा असच्चामोसा ?, गो० ! सिय सच्चा सिय मोसा सिय सच्चामोसा सिय असच्चामोसा, से केणट्ठेणं भंते ! एवं वुच्चति–ओधारिणी णं भासा सिय सच्चा सिय मोसा सिय सच्चामोसा सिय असच्चामोसा?, गो० ! आराहिणी सच्चा विराहिणी मोसा आराहणविराहिणी सच्चामोसा जाणेव आराहणी णेव विराहिणी णेवाराहणविराहिणी सा असच्चामोसा णामं सा चउत्थी भासा, से तेणट्ठेणं गोयमा ! एवं वुचति—ओहारिणी णं भासा सिय सच्चा सिय मोसा सिय सच्चामोसा सिय असच्चामोसा ( सूत्रं १६१ ) ॥

'से णूणं भंते ! मण्णामि इति ओहारिणी भासा' इत्यादि, सेशब्दो अथशब्दार्थः, स च वाक्योपन्यासे, नूनमुपमानावधारणतर्कप्रश्नहेतुषु इहावधारणे, भदन्त ! इत्यामन्त्रणे, मन्ये—अवबुध्ये इति–एवं, यदुत अवधारणी भाषा अवधार्यते—अवगम्यतेऽर्थोऽनयेत्यवधारणी—अवबोधबीजभूता इत्यर्थः, भाष्यते इति भाषा, तद्योग्यतया परिणामितनिसृज्यमानद्रव्यसंहतिः, एष पदार्थः, वाक्यार्थः पुनरयं—अथ भदन्त ! एवमहं मन्ये, यदुतावश्यमवधारणी भाषेति, न चैतत् सकृत् अनालोच्यैव मन्ये, किन्तु चिन्तयामि युक्तिद्वारेणापि परिभावयामीति—एवं

यदुत अवधारणीयं भाषेति, एवमात्मीयमभिप्रायं भगवते निवेद्याधिकृतार्थविनिश्चयनिमित्तमेवं भगवन्तं पृच्छति— 'अह मण्णामी इइ ओहारिणी भासा' इति, 'अथ–प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासप्रतिवचनसमुच्चयेषु' इह प्रश्ने, काक्वा चास्य सूत्रस्य पाठस्ततोऽयमर्थः—अथ–भगवन्नेवमहं मन्ये एवमहं मननं कुर्यां, यथा–अवधारणी भाषेति, द्वितीयाभिप्रायनिवेदनमधिकृत्य प्रश्नमाह—'अह चिंतेमी ओहारिणी भासा' इति, अथ भगवन् ! एवमहं चिन्तयामि ?—एवमहं चिन्तनं कुर्यां, यदुतावधारिणी भाषेति निरवद्यमेतदित्यभिप्रायः, सम्प्रति पृच्छासमयात् यथा पूर्वं मननं चिन्तनं वा कृतवानिदानीमपि पृच्छासमये तथैव मननं चिन्तनं वा करोमि नान्यथेति भगवतो ज्ञानेन संवादयितुकामः पृच्छति–'तह मन्नामी इति ओहारिणी भासा तह चिंतेमीति ओहारिणी भासा' इति, 'तथेति समुच्चयनिर्देशावधारणसादृश्यप्रश्नेषु' इह निर्देशे, काक्वा चास्यापि पाठः, ततः प्रश्नार्थत्वावगतिः, भगवन् ! यथा पूर्वं मतवानिदानीमप्यहं तथा मन्ये इति—एवं यदुत अवधारिणी भाषेति, किमुक्तं भवति ?—नेदानीन्तनमननस्य पूर्वमननस्य च मदीयस्य कश्चिद्विशेषोऽस्त्येतत् भगवन्निति, तथा यथा पूर्वं भगवन् ! चिन्तितवान् इदानीमप्यहं तथा चिन्तयामि इति—एवं यदुत अवधारणी भाषेति, अस्त्येतदिति ?, एवं गौतमेनाभिप्रायनिवेदने प्रश्ने च कृते भगवानाह—'हंता गोयमा ! मन्नामी इति ओहारिणी भासा' इति, 'हन्तेति सम्प्रेषणप्रत्यवधारणविवादेषु' इह प्रत्यवधारणे, मन्नामी इत्यादीनि क्रियापदानि प्राकृतशैल्या छान्दसत्वाच्च युष्मदर्थेऽपि प्रयुज्यन्ते, ततोऽ-

यमर्थः–हन्त गौतम ! मन्यसे त्वं यदुत अवधारणी भापेति जानाम्यहं केवलज्ञानेनेदमित्यभिप्रायः, तथा चिन्तयसि त्वमित्येवं यदुतावधारणी भापेति इदमप्यहं वेद्मि केवलित्वात्, 'अह मन्नामी इति ओहारिणी भासा' इति अथेत्यानन्तर्ये, मत्सम्मतत्वात्, ऊर्द्धं निःशङ्कं मन्यस्व, इति–एवं यदुतावधारिणी भापेति, अथ इत ऊर्द्धं निःशङ्कं चिन्तय इति–एवं यदुतावधारणी भापेति, अतीवेदं साध्वनवद्यमित्यभिप्रायः, तथा तथा—अविकलं परिपूर्णं मन्यस्व इति–एवं यदुतावधारणी भापेति यथा पूर्वं मतवान्, किमुक्तं भवति ?–यथा त्वया पूर्वं मननं कृतमिदानीमपि मत्सम्मतत्वात् सर्वं तथैव मन्यस्व मा मनागपि शङ्कां कार्पीरिति, तथा तथा—अविकलं परिपूर्णं चिन्तय इति—एवं यदुत अवधारिणी भापेति, यथा पूर्वं चिन्तितवान्, मा मनागपि शङ्किष्ठा इति, तदेवं भापा अवधारणीति निर्णीतमिदानीमियमवधारिणी भापा सत्या उत मृपेत्यादिनिर्णयार्थं पृच्छति—'ओहारिणी णं भंते !' इत्यादि, अवधारिणी–अवबोधवीजभूता, णमिति प्राग्वत्, भदन्त ! भापा किं सत्या मृपा सत्यामृपा असत्यामृपा ? इति, तत्र सन्तो—मुनयस्तेपामेव भगवदाज्ञासम्यगाराधकतया परमशिष्टत्वात् सद्भ्यो हिता—इहपरलोकाराधकत्वेन मुक्तिप्रापिका सत्या, युगादिपाठाभ्युपगमात् यः प्रत्ययः, यद्वा यो यस्मै हितः स तत्र साधुरिति सत्सु साध्वी सत्या, 'तत्र साधा–' विति यः प्रत्ययः, यदिवा सन्तो—मूलोत्तरगुणास्तेपामेव जगति मुक्तिपदप्रापकतया परमशोभनत्वात् अथवा सन्तो—विद्यमानास्ते च भगवदुपदिष्टा एव जीवादयः पदार्थाः अन्येपां कल्पनामात्ररचितसत्ताकतया तत्त्वतोऽस-

त्वात् तेभ्यो हिता तेषु साध्वी वा यथावस्थितवस्तुतत्त्वप्ररूपणेन सत्या, विपरीतस्वरूपा मृषा, उभयस्वभावा सत्यामृषा, या पुनस्तिसृष्वपि भाषास्वनधिकृता—तल्लक्षणायोगतस्तत्रानन्तर्भाविनी सा आमन्त्रणाज्ञापनादिविषया असत्यामृषा, उक्तं च—"सच्चा हिया सयामिह संतो मुणयो गुणा पयत्था वा । तव्विवरीया मोसा मीसा जा तदुभयसहावा ॥ १ ॥ अणहिगया जा तीसुवि सद्दो च्चिय केवलो असच्चमुसा" इति, भगवानाह—'गौतम ! सिय सच्चा' इत्यादि, स्यात् सत्या सत्याऽपि भवतीत्यर्थः, एवं स्यादसत्या स्यात्सत्यामृषा स्यादसत्यामृषेति, अत्रैवार्थे प्रश्नमाह—'से केणट्ठेणं भंते !' इत्यादि, सुगमं, भगवानाह—गौतम ! आराधनी सत्या, इह विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठापनबुद्ध्या या सर्वज्ञमतानुसारेण भाष्यते अस्त्यात्मा सदसन्नित्यानित्याद्यनेकधर्मकलापालिङ्गित इत्यादि सा यथावस्थितवस्त्वभिधायिनी आराध्यते मोक्षमार्गोऽनयेत्याराधनी, आराधिनीत्वात् सत्येति, विराधिनी मृषेति, विराध्यते मुक्तिमार्गोऽनयेति विराधिनी, विप्रतिपत्तौ सत्यां वस्तुप्रतिष्ठाशया सर्वज्ञमतप्रातिकूल्येन या भाष्यते यथा नास्त्यात्मा एकान्तनित्यो वेत्यादि तथा सत्याऽपि परपीडोत्पादिका सा विपरीतवस्त्वभिधानात् परपीडाहेतुत्वाद्वा मुक्तिविराधनाद्विराधनी विराधिनीत्वाच्च मृषेति, या तु किञ्चन नगरं पत्तनं वाऽधिकृत्य पञ्चसु दारकेषु जातेष्वेवमभिधीयते, यथाऽस्मिन् अद्य दश दारका जाता इति सा परिस्थूरव्यवहारनयमतेन आराधनविराधिनी, इयं हि पञ्चानां दारकाणां यज्जन्म तावताऽंशेन संवादनसम्भवादाराधिनी, दश न पूर्यन्ते इत्येतावताऽंशेन विसंवादसम्भवात् विरा-

धिनी, आराधिनी चासौ विराधिनी च आराधनविराधिनी, कर्म्मधारयत्वात् पुंवद्भावः, आराधनविराधिनीत्वाच्च सत्यामृषा, या तु नैवाराधनी तल्लक्षणविगमात् नापि विराधिनी विपरीतवस्त्वभिधानाभावात् परपीडाहेतुत्वाभावाच्च नाप्याराधनविराधिनी एकदेशसंवादविसंवादाभावात्, हे साधो ! प्रतिक्रमणं कुरु स्थण्डिलानि प्रत्युपेक्षस्वेत्यादिव्यवहारपतिता आमन्त्रिण्यादिभेदभिन्ना सा असत्यामृषा नाम चतुर्थी भाषा, 'से एएणट्ठेण'मित्याद्युपसंहारवाक्यं ॥ इह यथावस्थितवस्तुतत्त्वाभिधायिनी भाषा आराधिनीत्वात् सत्येत्युक्तं, ततः संशयापन्नस्तदपनोदाय पृच्छति—

अह भंते ! गाओ मिया पसू पक्खी पण्णवणी णं एसा भासा ण एसा भासा मोसा ?, हंता गो० ! जा य गाओ मिया पसू पक्खी पण्णवणी णं एसा भासा, [पण्णवणी] ण एसा भासा मोसा, अह भंते ! जा य इत्थीवऊ जा य पुरिसवऊ जा य णपुंसगवऊ पण्णवणी णं एसा भासा ण एसा भासा मोसा?, हंता गो० ! जा य इत्थीवऊ जा य पुमवऊ जा य नपुंसगवऊ पण्णवणी णं एसा भासा न एसा भासा मोसा, अह भंते ! जा य इत्थिआणमणी जा य पुमआणवणी जा य नपुंसगआणमणी पण्णवणी णं एसा भासा ण एसा भासा मोसा ?, हंता गो० ! जा य इत्थिआणवणी जा य पुमआणवणी जा य नपुंसगआणवणी पण्णवणी णं एसा भासा न एसा भासा मोसा । अहं भंते ! जा य इत्थिपण्णवणी जा य पुमपण्णवणी जा य नपुंसगपण्णवणी पण्णवणी णं एसा भासा ण एसा भासा मोसा ?, हंता गो० ! जा य इत्थिपण्णवणी जा य पुमपण्णवणी जा य नपुंसगपण्णवणी, पण्णवणी णं एसा भासा ण एसा भासा मोसा, अह भंते ! जा जायीति इत्थिवऊ

जातीइ पुमवऊ जातीति णपुंसगवऊ पण्णवणी णं एसा भासा ण एसा भासा मोसा ?, हंता ! गो० ! जातीति इत्थिवऊ जाईति पुमवऊ जातीति णपुंसगवऊ पण्णवणी णं एसा भासा न एसा भासा मोसा। अह भंते ! जा जातीइ इत्थियाणमणी जाइत्ति पुमआणवणी जातीति णपुंसगाणमणी पण्णवणी णं एसा भासा न एसा भासा मोसा ?, हंता ! गो० ! जातीति इत्थिआणमणी जातीति पुमआणवणी जातीति णपुंसगाणमणी पण्णवणी णं एसा भासा ण एसा भासा मोसा। अह भंते ! जातीति इत्थिपण्णवणी जातीति पुमपण्णवणी जातीति णपुंसगपण्णवणी पण्णवणी णं एसा भासा न एसा भासा मोसा ?, हंता ! गो० ! जातीति इत्थिपण्णवणी जाईति पुमपण्णवणी जाईति णपुंसगपण्णवणी पण्णवणी णं एसा भासा ण एसा भासा मोसा ( सूत्रं १६२ )

'अह भंते! गाओ मिया' इत्यादि, अथ भदन्त! गावः प्रतीताः, मृगा अपि प्रतीताः, पशवः—अजाः, पक्षिणोऽपि प्रतीताः, प्रज्ञापनी प्रज्ञाप्यतेऽर्थोऽनयेति प्रज्ञापनी, किं अर्थप्रतिपादनी ?, प्ररूपणीयेतियावत्, णमिति वाक्यालङ्कारे, एषा भाषा सत्या नैषा भाषा मृषेति, इयमत्र भावना—गाव इति भाषा गोजातिं प्रतिपादयति, जातौ च त्रिलिङ्गा अप्यर्था अभिधेयाः, लिङ्गत्रयस्यापि जातौ सम्भवात्, एवं मृगपशुपक्षिष्वपि भावनीयं, न चैते शब्दास्त्रिलिङ्गाभिधायिनस्तथाप्रतीतेरभावात् किन्तु पुंल्लिङ्गगर्भास्ततः संशयः किमियं प्रज्ञापनी किं वा नेति ?, भगवानाह—'हंता गोयमा !' हन्तेत्यवधारणे, गौतम ! इत्यामन्त्रणे, गाव इत्यादिका भाषा प्रज्ञापनी, तदर्थकथनाय प्ररूपणीया, यथा-

वस्थितार्थप्रतिपादकतया सत्यत्वात्, तथापि जात्यभिधायिनीयं भाषा, जातिंश्च त्रिलिङ्गार्थसमवायिनी, ततो जात्यभिधानेन त्रिलिङ्गा अपि यथासम्भवं विशेषा अभिहिता भवन्तीति भवति यथावस्थितार्थाभिधानादियं प्रज्ञापनी भाषेति, यदप्युक्तम्—किन्तु पुंलिङ्गगर्भा इति, तत्र शब्दे लिङ्गव्यवस्था लक्षणवशात्, लक्षणं च 'स्त्रीपुंनपुंसकसहोक्तौ परं' तथा 'ग्राम्याशिशुद्विखुरसङ्घे स्त्री प्राय' इत्यादि, ततो भवेत् क्वचित् शब्दे लक्षणवशात् स्त्रीत्वं क्वचित् पुंस्त्वं क्वचित् नपुंसकत्वं वा, परमार्थतः पुनः सर्वोऽपि जातिशब्दस्त्रिलिङ्गानप्यर्थान् तत्तद्देशकालप्रस्तावादिसामर्थ्यवशादभिधत्ते इति न कश्चिद्दोषः, न चेयं परपीडाजनिका नापि विप्रतारणादिदुष्टविवक्षासमुत्था ततो न मृषेति प्रज्ञापनी। 'अह भंते! जा य इत्थिवऊ' इत्यादि, अथेति प्रश्ने भदन्त! इत्यामन्त्रणे, या च स्त्रीवाक्—स्त्रीलिङ्गप्रतिपादिका भाषा खट्वा लतेत्यादिलक्षणा या पुरुषवाक् घटः पट इत्यादिरूपा या च नपुंसकवाक् कुड्यं काण्डमित्यादिलक्षणा प्रज्ञापनीयं भाषा नैषा भाषा मृषेति?, किमत्र संशयकारणं येनेत्थं पृच्छति? इति चेत्, उच्यते, इह खट्वाघटकुड्यादयः शब्दाः यथाक्रमं स्त्रीपुंनपुंसकलिङ्गाभिधायिनः, स्त्रीपुंनपुंसकानां च लक्षणमिदम्—"योनिर्मृदुत्वमस्थैर्यं, मुग्धता क्लीवता स्तनौ। पुंस्कामितेति लिङ्गानि, सप्त स्त्रीत्वे प्रचक्षते॥१॥ मेहनं खरता दार्ढ्यं, शौण्डीर्यं श्मश्रु धृष्टता। स्त्रीकामितेति लिङ्गानि, सप्त पुंस्त्वे प्रचक्षते॥२॥ स्तनादिश्मश्रुकेशादिभावाभावसमन्वितम्। नपुंसकं बुधाः प्राहुर्मोहानलसुदीपितम्॥३॥" तथाऽन्यत्राप्युक्तम्—"स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च, तत्र भावे नपुंसकम्॥१॥"

न चैवंरूपाणि स्त्र्यादिलक्षणानि खट्वादिषूपलभ्यन्ते, तथाहि—यद्येकैकावयवपृथक्करणेन सम्यग् निभालनं क्रियते तथापि न तेषां स्त्र्यादिलक्षणानां तत्रोपलम्भोऽस्ति ततः प्रज्ञापनीयं भाषा न वेति जातसंशयः तदपनोदाय पृच्छति, अत्र भगवानाह—'हंता गोयमे'त्यादि अक्षरगमनिका प्राग्वत्, भावार्थस्त्वयं—नेह शब्दप्रवृत्तिचिन्तायां यथोक्तानि स्त्र्यादिलक्षणानि स्त्रीलिङ्गादिशब्दाभिधेयानि किन्त्वभिधेयधर्मा इयमयमिदंशब्दव्यवस्थाहेतवः गुरूपदेशपारम्पर्यगम्याः स्त्रीलिङ्गादिशब्दाभिधेयाः, न चैते कल्पनामात्रं, वस्तुतस्तत्तच्छब्दाभिधेयतया परिणमनभावात्, तेषामभिधेयधर्माणां तत्त्वतस्तात्त्विकत्वात्, आह च शकटसूनुरपि—"अयमियमिदमितिशब्दव्यवस्थाहेतुरभिधेयधर्म उपदेशगम्यः स्त्रीपुंनपुंसकत्वानी"ति, व्यवस्थापितश्चायमर्थो विस्तरकेण स्वोपज्ञशब्दानुशासनविवरण इति, ततः शाब्दव्यवहारापेक्षया यथावस्थितार्थप्रतिपादनात् प्रज्ञापनीयं भाषा, दुष्टविवक्षातः समुत्पत्तेरभावात् परपीडाहेतुत्वाभावाच्च न मृषेति। 'अह भंते!' इत्यादि, अथ भदन्त! या च स्त्र्याज्ञापनी आज्ञाप्यते—आज्ञासम्पादने प्रयुज्यतेऽनया सा आज्ञापनी स्त्रिया आज्ञापनी स्त्र्याज्ञापनी, स्त्रिया आदेशदायिनीत्यर्थः, या च पुमाज्ञापनी नपुंसकाज्ञापनी, प्रज्ञापनीयं भाषा नैषा भाषा मृषेति ?, अत्रेदं संशयकारणं—किल सत्या भाषा प्रज्ञापनी भवति, इयं च भाषा आज्ञासम्पादनक्रियायुक्ताभिधायिनी, आज्ञाप्यमानश्च स्त्र्यादिः तथा कुर्यान्न वा ?, ततः संशयमापन्नो विनिश्चयाय पृच्छति, अत्र भगवानाह—'हंता गोयमा!' इत्यादि, अक्षरगमनिका सुगमा, भावार्थस्त्वयं—आज्ञापनी भाषा द्विधा—परलोका-

वाधिनी इतरा च, तत्र या स्वपरानुग्रहबुद्ध्या शाठ्यमन्तरेण आमुष्मिकफलसाधनाय प्रतिपन्नैहिकालम्बनप्रयोजना विवक्षितकार्यप्रसाधनसामर्थ्ययुक्ता विनीतस्त्र्यादिविनेयजनविषया सा परलोकाबाधिनी एषैव च साधूना प्रज्ञापनी परलोकाबाधनात्, इतरा त्वितरविषया, सा च स्वपरसङ्क्लेशजननात् मृषेत्यप्रज्ञापनी साधुवर्गस्य, उक्तं च—"अविणी-यमाणवंतो किलिस्सई भासई मुसं तह य। घंटालोहं नाउं को कडकरणे पवत्तेज्जा ? ॥ १ ॥" क्रिया हि द्रव्यं विनमयति नाद्रव्यमित्यभिप्रायः। 'अह भंते ! जा य इत्थिपण्णवणी' इत्यादि अथ भदन्त ! या च भाषा स्त्रीप्रज्ञापनी—स्त्रीलक्षणप्रतिपादिका, 'योनिर्मृदुत्वमस्थैर्यं मुग्धते'त्यादिरूपा, या च पुंप्रज्ञापनी—पुरुषलक्षणप्रतिपादिका 'मेहनं खरता दार्ढ्यं' इत्यादिरूपा या च [ ग्रं० ६००० ] नपुंसकप्रज्ञापनी—नपुंसकलक्षणाभिधायिनी 'स्तनादि-श्मश्रुकेशादिभावाभावसमन्वितमित्यादिलक्षणा प्रज्ञापनीयं भाषा नैषा भाषा मृषेति ?, कोऽत्राभिप्राय इति चेत्, उच्यते, इह स्त्रीलिङ्गादयः शब्दाः शाब्दव्यवहारबलादन्यत्रापि प्रवर्त्तन्ते, यथा खट्वाघटकुड्यादयः खट्वादिष्वर्थेषु, न खलु तत्र यथोक्तानि स्त्र्यादिलक्षणानि सन्ति यथोक्तं प्राक्, ततः किमियमव्यापकत्वात् स्त्र्यादिलक्षणप्रतिपादिका भाषा न वक्तव्या आहोश्वित् वक्तव्येति संशयापन्नः पृष्टवान्, अत्र भगवानाह—'हंता गोयमे'त्यादि, अक्षरगमनिका सुप्रतीता, भावार्थस्त्वयं—इह स्त्र्यादिलक्षणं द्विधा—शाब्दव्यवहारानुगतं वेदानुगतं च, तत्र यदा शाब्दव्य-

१ अविनीतमाज्ञापयन् क्लिश्यति भाषते मृषा तथा च। घण्टालोहं च ज्ञात्वा कः कटकरणे प्रवर्त्तेत ? ॥ १ ॥

भंते ! कति सरीरया पण्णत्ता ?, गो० ! तओ सरीरया पं०, तं०—वेउविए तेयए कम्मए, एवं असुरकुमाराणवि जाव थणियकुमाराणं । पुढविकाइयाणं भंते ! कति सरीरया पं० ?, गो० ! तओ सरीरया पं०, तं०—ओरालिए तेयए कम्मए, एवं वाउकाइयवज्जं जाव चउरिंदियाणं, वाउकाइयाणं भंते ! कति सरीरया पं० ?, गो० ! चत्तारि सरीरया, पं०, तं०—ओरालिए वेउविते तेयए कम्मए, एवं पंचिंदियतिरिक्खजोणियाणवि, मणुस्साणं भंते ! कति सरीरया पं० ?, गो० ! पंच सरीरया पं०, तं०—ओरालिए वेउविते आहारए तेयए कम्मए, वाणमंतरजोइसियवेमाणियाणं, जहा नारगाणं (सूत्रं १७६)

'कइ णं भंते ! सरीरा पण्णत्ता' इत्यादि, उत्पत्तिसमयादारभ्य प्रतिक्षणं शीर्यन्ते इति शरीराणि, तानि भदन्त ! कति—कियत्सङ्ख्याकानि, णमिति वाक्यालङ्कारे, प्रज्ञप्तानि, भगवानाह—पञ्च शरीराणि प्रज्ञप्तानि, तान्येव नामत आह—'ओरालिए' इत्यादि, अमीषां शब्दार्थमात्रमग्रे वक्ष्यामस्तथाऽपि स्थानाशून्यार्थं किञ्चिदुच्यते—उदारं—प्रधानं, प्राधान्यं चास्य तीर्थकरगणधरशरीरापेक्षया, ततोऽन्यस्यानुत्तरसुरशरीरस्याप्यनन्तगुणहीनत्वात्, अथवा ओरालं नाम विस्तरवत्, विस्तरवत्ता चास्यावस्थितस्वभावस्य सातिरेकयोजनसहस्रमानत्वात्, वैक्रियं चैतावदवस्थितप्रमाणं न लभ्यते, उत्कर्षतोऽप्यवस्थितप्रमाणस्य पञ्चधनुःशतप्रमाणत्वात्, तच्च तावत्प्रमाणं सप्तम्यां नान्यत्र, यत्तूत्तरवैक्रियं योजनलक्षप्रमाणं न तदवस्थितमाभववर्त्तित्वाभावात्, ततो न तदपेक्षा, आह च चूर्णिकृत्—"ओरालं नाम वित्थरालं विसालंति जं भणियं होइ, कहं ?, साइरेगजोयणसहस्समवट्ठियप्पमाणमोरालियं अन्नमेद्दहमेत्तं नत्थित्ति,

विउव्वियं होज्जा तं तु अणवट्ठियप्पमाणं, अवट्ठियं पुण पंच धणुसयाइं अहेसत्तमाए, इमं पुण अवट्ठियप्पमाणं साइरेगं जोयणसहस्सं वनस्पतीना''मिति, अथवा उरलं—विरलप्रदेशं न तु घनं स्वल्पप्रदेशोपचितत्वात् बृहत्त्वाच्च भेण्डवत्, यदिवा ओरालं—समयपरिभाषया मांसास्थिस्नाय्वाद्यवबद्धं, सर्वत्र स्वार्थिक इकप्रत्ययः, इहोदारमेव औदारिकं, पृषोदरादित्वादिष्टरूपनिष्पत्तिः, प्राकृतत्वात् ओरालियमिति, उक्तं च—''तत्थोदारमुरालं उरलं ओरालमेव विण्णेयं। ओरालियंति पढमं पडुच्च तित्थेसरसरीरं ॥ १ ॥ भण्णइ य तहोरालं वित्थरवंतं वणस्सइं पप्प। पगईए नत्थि अण्णं एद्दहमित्तं विसालंति ॥ २ ॥ उरलं थेवपएसोवचियंति महल्लगं जहा भिण्डं। मंसट्ठिण्हारुवद्धं ओरालं समयपरिभासा ॥ ३ ॥'' १। तथा विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियं, उक्तं च—''विविहा विसिट्ठगा वा किरिया तीए उ जं भवं तमिह। वेउव्वियं तयं पुण नारगदेवाण पगईए ॥ १ ॥'' अथवा वैकुर्विकमिति शब्दसंस्कारः, तत्र विकुर्व इति सिद्धान्तप्रसिद्धोऽयं धातुः, विकुर्वणं विकुर्वः विविधा क्रिया इत्यर्थः, तेन निर्वृत्तं वैकुर्विकं २, तथा चतुर्दशपूर्वविदा कार्योत्पत्तौ योगबलेनाह्रियते इत्याहारकं ३, तेजसो विकारस्तैजसं ४, कर्मणो जातं कर्मजमिति ५। नन्वौदारिकादीनां शरीराणामित्थमुपन्यासे किञ्चिदस्ति प्रयोजनमुत यथाकथञ्चिदेष प्रवृत्त इति ?, उच्यते, अस्तीति ब्रूमः, किं तदिति चेत्, उच्यते, परम्परप्रदेशसौक्ष्म्यं परम्परं वर्गणासु प्रदेशबाहुल्यं (च), तथा हि—औदारिकात् वैक्रियस्य प्रदेशसौक्ष्म्यं वैक्रियादप्याहारकस्य आहारकादपि तैजसस्य तैजसादपि कार्मणस्य, तथा

औदारिकात् वैक्रियस्य वर्गणासु प्रदेशबाहुल्यं वैक्रियादाहारकस्याहारकादपि तैजसस्य तैजसादपि कार्मणस्येति, एतान्येव शरीराणि नैरयिकादिषु सम्भवतश्चिन्तयति—'नेरइयाणं भंते ! केवइया सरीरा पण्णत्ता' इत्यादि, पाठसिद्धं, शरीराणि च जीवानां द्विविधानि, तद्यथा—बद्धानि मुक्तानि च, तत्र यानि चिन्ताकाले जीवैः परिगृहीतानि वर्त्तन्ते तानि बद्धानि, यानि च पूर्वभवेषु परित्यक्तानि तानि मुक्तानि, तेषां बद्धानां मुक्तानां च परिमाणमिदानीं द्रव्यक्षेत्रकालैः प्ररूपणीयं, तत्र द्रव्यैरभव्यादिभिः क्षेत्रेण श्रेणिप्रतरादिना कालेनावलिकादिना, तत्रौदारिकशरीरमधिकृत्याह—

केवइया णं भंते ! ओरालियसरीरया पं० ?, गो० ! दुविहा पं०, तं०—बद्धिल्लया य मुक्किल्लया य, तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो असंखेज्जा लोगा, तत्थ णं जे ते मुक्केल्लया ते णं अणंता अणंताहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो खेत्तओ अणंता लोगा अभवसिद्धिएहिंतो अणंतगुणा सिद्धा(ण)णंतभागो। केवतिया णं भंते ! वेउव्वियसरीरया पं० ?, गो० ! दुविहा पं०, तं०—बद्धेल्लया य मुक्केल्लगा य, तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो खेत्ततो असंखेज्जातो सेढीओ पयरस्स असंखेज्जतिभागो, तत्थ णं जे ते मुक्केल्लगा ते णं अणंता अणंताहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो जहा ओरालियस्स मुक्केल्लया तहेव वेउव्वियस्सवि भाणियव्वा। केवतिया णं भंते ! आहारगसरीरया पण्णत्ता ?,

गो० ! दुविहा, पं०, तं०—बद्धेल्लया य मुक्केल्लया य, तत्थ णं जे ते बद्धेल्लगा ते णं सिय अत्थि सिय नत्थि, जइ अत्थि जहण्णेणं एक्को वा दो वा तिण्णि वा उक्कोसेणं सहस्सपुहुत्तं, तत्थ णं जे ते मुक्केल्लया ते णं अणंता जहा ओरालियस्स मुक्किल्लया तहेव भाणितवा। केवइया णं भंते ! तेयगसरीरया पण्णत्ता ?, गो० ! दुविहा पण्णत्ता, तं०—बद्धेल्लगा य मुक्केल्लगा य, तत्थ णं जे ते बद्धेल्लगा ते णं अणंता अणंताहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो खेत्तओ अणंता लोगा दवओ सिद्धेहिंतो अणंतगुणा सवजीवाणंतभागूणा, तत्थ णं जे ते मुक्केल्लगा ते णं अणंता अणंताहिं उस्सप्पिणि-ओसप्पिणीहिं अवहीरंति कालतो खेत्ततो अणंता लोगा दवओ सवजीवेहिंतो अणंतगुणा जीववग्गस्साणंतभागे। एवं कम्मगसरीराणिवि भाणितवाणि ॥ ( सूत्रं १७७ )

'केवइया णं भंते ! ओरालियसरीरया पण्णत्ता' इत्यादि, इह प्राकृतलक्षणवशादिल्लप्रत्ययः कप्रत्ययश्च स्वार्थे ततो 'बद्धिल्लया' इति बद्धानीत्यर्थः, 'मुकिल्लया' इति मुक्तानीत्यर्थः, तत्र बद्धान्यसङ्ख्येयानि, असङ्ख्येयत्वमेव प्रथमतः कालतो निरूपयति—'असंखिज्जाहिं' इत्यादि, प्रतिसमयमेकैकशरीरापहारेण असङ्ख्येयाभिरुत्सर्पिण्यवसर्प्पिणीभिरनन्तयवशोऽपह्रियन्ते, किमुक्तं भवति ?—असङ्ख्येयासु उत्सर्पिण्यवसर्प्पिणीषु यावन्तः समयास्तावत्प्रमाणानि बद्धान्यौदारिकशरीराणि वर्त्तन्ते, इदं कालतः परिमाणं, क्षेत्रत आह—'खेत्तओ असंखेज्जा लोगा' इति, क्षेत्रतः परिसङ्ख्यानमसङ्ख्येया लोकाः, एतदुक्तं भवति—सर्वाण्यपि बद्धान्यौदारिकशरीराणि आत्मीयात्मीयावगाहनाभिराकाशप्रदेशेषु परस्परम- ॥२७०॥

पिण्डीभावेन क्रमेण स्थाप्यन्ते तदानीं तैरेवमास्तीर्यमाणैरसङ्ख्येया लोका अवाप्यन्ते, इह एकैकस्मिन्नभ्याकाशप्रदेशे एकैकौदारिकशरीरस्थापनया असङ्ख्येया लोका व्याप्यन्ते परं पूर्वाचार्या आत्मीयावगाहनास्थापनया प्ररूपणां कुर्वन्ति ततोऽपसिद्धान्तदोषो मा प्रापदित्यस्माभिरपि तथैव प्ररूपणा क्रियते, आह च चूर्णिकारोऽपि—"जइवि इक्केक्के पएसे सरीरमेगं ठविज्जइ तोऽवि असंखेज्जा लोगा भवंति किंतु अवसिद्धंतदोसपरिहरणत्थमप्पप्पणियाहिं ओगाहणाहिं ठविज्जंति" इति, आह—नन्वनन्ता जीवास्ततः कथमसङ्ख्येयान्यौदारिकशरीराणि ?, उच्यते, इह द्विविधा जीवाः—प्रत्येकशरीरिणोऽनन्तकायिकाश्च, तत्र ये ते प्रत्येकशरीरिणस्तेषां प्रतिजीवमेकैकौदारिकशरीरमन्यथा प्रत्येकशरीरत्वायोगात्, ये त्वनन्तकायिकास्तेषामनन्तानामनन्तानामेकैकमौदारिकशरीरमतः सर्वसङ्ख्ययापि असङ्ख्येयान्यौदारिकशरीराणि, मुक्तान्यौदारिकशरीराणि अनन्तानि, तच्चानन्तत्वं कालक्षेत्रद्रव्यैर्निरूपयति—'अणंताहिं' इत्यादि, कालतः परिमाणं प्रतिसमयमेकैकशरीरापहारेऽनन्ताभिरुत्सर्पिण्यवसर्प्पिणीभिः सर्वात्मनाऽपह्रियन्ते, किमुक्तं भवति ?—अनन्तासु उत्सर्प्पिण्यवसर्प्पिणीषु यावन्तः समयास्तावत्प्रमाणानीति, क्षेत्रतः परिमाणमनन्ता लोकाः, अनन्तेषु लोकप्रमाणेष्वाकाशखण्डेषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानीत्यर्थः, द्रव्यतः परिमाणमभवसिद्धिकेभ्यः—अभव्येभ्योऽनन्तगुणानि, यद्येवं तर्हि सिद्धराशिप्रमाणानि भविष्यन्ति तत आह—सिद्धानामनन्तभागः—अनन्तभागमात्राणि, ननु द्वयोरपि राश्योरभवसिद्धिकसिद्धिरूपयोर्मध्ये पठ्यन्ते प्रतिपतितसम्यग्दृष्टयः तत् किं तद्राशिप्रमाणानि

भवेयुः ?, उच्यते, यदि तत्प्रमाणानि स्युस्तर्हि तथैव निर्देशः क्रियेत, सुखप्रतिपत्तिकृतप्रतिज्ञा हि भगवन्त आर्यश्यामाः, ततस्तथा निर्देशाभावादवसीयते—न तद्राशिप्रमाणानि, ननु तर्हि तेषां प्रतिपतितसम्यग्दृष्टीनामधस्ताद् भवेयुरुपरि वा ?, उच्यते, कदाचिदधस्तात्कदाचिदुपरि कदाचित्तुल्यान्यपि अनियतप्रमाणत्वात्, ननु सर्वकालं तत्प्रमाणानीति, आह च चूर्णिकृत्—"तो किं परिवडियसम्मदिट्ठिरासिप्पमाणाइं होज्जा ते ?, तेसिं दोण्हवि रासीणं मज्झे पढिज्जंतित्तिकाउं ?, भण्णइ, जइ तप्पमाणाइं होंताइं तो तेसिं चेव निद्देसो होंतो तम्हा न तप्पमाणाइं, तो किं तेसिं हिट्ठा होज्जा उवरिं होज्जा ?, भन्नइ, कयाइ हेट्ठा कयाइ उवरिं होंति कयाइ तुल्लाइं न निच्चकालं तप्पमाणाइं" इति, अपरः प्राह—कथं मुक्तानि यथोक्तानन्तसङ्ख्यापरिमाणान्युपपद्यन्ते ?, यतो यदि तावदौदारिकादिशरीराणि यावदविकलानि तावद् गृह्यन्ते ततस्तेषामनन्तकालमवस्थानाभावादनन्तत्वं न घटते, यदि ह्यनन्तमपि कालमवस्थानं भवेत् ततोऽनन्तेन कालेन तत्तच्छरीरगणनादनन्तानि भवेयुः, यावताऽनन्तं कालमवस्थानं नास्ति, पुद्गलानामुत्कर्षतोऽप्यसङ्ख्येयकालावस्थानाभिधानात्, अथ च ये पुद्गला जीवैरौदारिकत्वेन गृहीत्वा मुक्ता अतीताद्धायां तेषां ग्रहणं तर्हि सर्वेऽपि पुद्गलाः सर्वैरपि जीवैः प्रत्येकमौदारिकत्वेन गृहीत्वा मुक्ता इति सर्वपुद्गलग्रहणमापन्नं, तथा च सति यदुक्तम्—अभवसिद्धिकेभ्योऽनन्तगुणानि सिद्धानामनन्तभागमात्राणीति तद् विरुध्यते, सर्वजीवेभ्योऽनन्तानन्तगुणकारेणानन्तगुणत्वस्य प्रसक्तत्वादिति चेत्, उच्यते, इह मुक्तानामौदारिकशरीराणां नाविकलानामेव केवलानां ग्रहणं

नाप्यौदारिकत्वेन गृहीत्वा मुक्ताः पुद्गलाः, तेषामुक्तदोषप्रसङ्गात्, किन्तु यच्छरीरमौदारिकं जीवेन गृहीत्वा मुक्तं तत् विशरारुभावं बिभ्राणमनन्तभेदभिन्नं भवति ते चानन्ता भेदा भवन्तो यावत्ते पुद्गला औदारिकपरिणामं न जहति तावत्प्रत्येकमौदारिकशरीरव्यपदेशं लभन्ते, ये पुनरौदारिकपरिणामं त्यक्तवन्तस्ते न गण्यन्ते, तत एवमेकस्यापि शरीरस्यानन्तानि शरीराणि जातानि, एवं सर्वशरीरेष्वपि भावनीयं, तथा च सत्येकैकस्य शरीरस्यानन्तभेदभिन्नत्वादेकस्मिन्नपि समये प्रभूतान्यनन्तानि शरीराण्यवाप्यन्ते, तेषां चासङ्ख्येयकालमवस्थानं, तेन चासङ्ख्येयेन कालेनान्यानि जीवैर्विप्रमुक्तान्यसङ्ख्येयान्यवाप्यन्ते, तान्यपि च प्रत्येकमनन्तभेदभिन्नानि, तेषु च मध्ये तावता कालेन यान्यौदारिकशरीरपरिणामं विजहति तानि परित्यज्यन्ते शेषाणि गण्यन्ते, तत एवं मुक्तानि यथोक्तप्रमाणानन्तसङ्ख्याकान्यौदारिकशरीराण्युपपद्यन्ते इति, न चैतत्स्वमनीषिकाविजृम्भितं, यत आह चूर्णिकृत्—"नवि अविगलाणमेव केवलाणंपि गहणं एयं न य ओरालियगहणमुक्काणं सव्वपुग्गलाणं, किन्तु जं सरीरमोरालिकं जीवेण मुक्कं तं चेव अणंतभेयभिन्नं [च] होइ जाव ते पुग्गला तं जीवनिव्वत्तियं ओरालियसरीरकायप्पओगं न मुंचंति न ताव अण्णपरिणामेण परिणमंति ताइं पत्तेयं सरीराइं भण्णंति, एवमेक्केक्कस्स ओरालियसरीरस्स अणंतभेयभिन्नत्तणओ अणंताइं चेव ओरालियसरीराइं भवंति" इत्यादि, आह—कथमेकैकशरीरद्रव्यदेशः शरीरत्वेन व्यवह्रियते ?, उच्यते, लवणदृष्टान्तेन, तथाहि—खार्यपि लवणमुच्यते द्रोणोऽपि लवणमाढकोऽपि लवणं यावदेकापि शर्करा लवणमेवमिहापि सकलमप्यौ-

दारिकशरीरमुच्यते तदर्द्धमपि तदेकदेशोऽपि यावदनन्तभागोऽपि शरीरमिति, कोऽत्राभिप्राय इति चेत् ?, उच्यते, इह यथा लवणपरिणामपरिणतः स्तोको वहुर्वा पुद्गलसङ्घातो लवणमुच्यते तथौदारिकशरीरयोग्यपुद्गलसङ्घातोऽपि औदारिकत्वेन परिणतः स्तोको वा वहुर्वा औदारिकशरीरव्यपदेशं लभते, अथवा भवति समुदायैकदेशेऽपि समुदायशब्दोपचारो, यथा—अङ्गुल्यग्रे स्पृष्टे स्पृष्टो मया देवदत्त इत्यादौ, तत उपचारान्न कश्चिद्दोषः, ननु यद्येवं कथं तान्यनन्तलोकाकाशप्रदेशप्रमाणान्यौदारिकशरीराण्येकस्मिन् लोकेऽवगाढानि ?, उच्यते, प्रदीपप्रकाशवत्, तथाहि—यथैकस्यापि प्रदीपस्यार्चींषि सकलभवनावभासीनि भवन्ति, अन्येषामनेकेषां प्रदीपानामर्चींषि तत्रैवानुप्रविशन्ति, परस्परमविरोधात्, तथौदारिकाण्यपि, एवं शेषशरीरेष्वपि मुक्तेष्वायोज्यं, ननु द्रव्यक्षेत्रे विहाय किमिति प्रथमतः कालेन प्ररूपणा कृता ?, उच्यते, कालान्तरावस्थायितया पुद्गलेषु शरीरोपचारो नान्यथा ततः कालो गरीयान् इति प्रथमतस्तेन प्ररूपणा । उक्तान्यौदारिकाणि, सम्प्रति वैक्रियसूत्रमाह—'केवइया णं भंते !' इत्यादि, वद्धान्यसङ्ख्येयानि, तत्र कालतः परिमाणं प्रतिसमयमेकैकशरीरापहारे सामस्त्येनासङ्ख्येयाभिरुत्सर्पिण्यवसर्पिणीभिरपहियन्ते, किमुक्तं भवति ?—असङ्ख्येयासूत्सर्पिण्यवसर्पिणीषु यावन्तः समयास्तावत्प्रमाणानीति, क्षेत्रतोऽसङ्ख्येयाः श्रेणयस्तासां श्रेणीनां परिमाणं प्रतरस्यासङ्ख्येयो भागः, किमुक्तं भवति ?—प्रतरस्यासङ्ख्येयतमे भागे यावत्यः श्रेणयस्तासु च श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानि वद्धानि वैक्रियशरीराणीति, अथ श्रेणिरिति किमभिधीयते ?, उच्यते, घनीकृ-

तस्य लोकस्य सर्वतः सप्तरज्जुप्रमाणस्यायामतः सप्तरज्जुप्रमाणा मुक्तावलिरिवैकाकाशप्रदेशपङ्क्तिः, कथं पुनर्लोको घनीक्रियते ?, कथं वा सप्तरज्जुप्रमाणो भवति इति चेत् ?, उच्यते, इह लोक ऊर्ध्वाधश्चतुर्दशरज्जुप्रमाणोऽधस्ताद्विस्तरतो देशोनसप्तरज्जुप्रमाणः एकरज्जुर्मध्यभागे ब्रह्मलोकप्रदेशे बहुमध्यदेशभागे पञ्चरज्जुरुपरि एका रज्जुर्लोकान्ते, रज्जोश्च परिमाणं स्वयम्भूरमणसमुद्रस्य पूर्ववेदिकान्तादारभ्यापरवेदिकान्तं यावत्, एवंप्रमाणस्य लोकस्य वैशाखस्थानस्थकटिस्थकरयुग्मपुरुषाकारस्य बुद्ध्या त्रसनाड्या दक्षिणभागवर्त्त्यधोलोकखण्डमधो देशोनत्रिरज्जुविस्तारमतिरिक्तसप्तरज्जूच्छ्रयं परिगृह्य त्रसनाड्या उत्तरपार्श्वे ऊर्ध्वाधोभागविपर्यासेन सङ्घात्यते—ऊर्ध्वभागोऽधः क्रियते अधोभागस्तूर्द्धमिति सङ्घात्यते इति, तत ऊर्द्धलोके त्रसनाड्या दक्षिणभागवर्त्तिनी ये द्वे खण्डे कूर्पराकारसंस्थिते प्रत्येकं देशोनार्द्धचतुष्टयरज्जूच्छ्रये ते बुद्ध्या समादाय वैपरीत्येनोत्तरपार्श्वे सङ्घात्येते, एवं च किं जातम् ?, अधस्तनं लोकार्धं देशोनचतूरज्जुविस्तारं सातिरेकसप्तरज्जूच्छ्रयं उपरितनमर्द्धं त्रिरज्जुविस्तारं देशोनसप्तरज्जूच्छ्रयं, तेन उपरितनमर्द्धं बुद्ध्या गृहीत्वाऽधस्तनस्यार्द्धस्योत्तरपार्श्वे सङ्घात्यते, तथा च सति सातिरेकसप्तरज्जूच्छ्रयो देशोनसप्तरज्जुविस्तारो घनो जातः, अतः सप्तरज्जूनामुपरि यदधिकं तत्परिगृह्य ऊर्द्धाध आयतमुत्तरपार्श्वे सङ्घात्यते, ततो विस्तरतोऽपि परिपूर्णाः सप्त रज्जवो भवन्ति, एवमेष लोको घनीक्रियते, घनीकृतश्च सप्तरज्जुप्रमाणो भवति, यत्र च क्वचन घनत्वेन सप्तरज्जुप्रमाणता न पूर्यते तत्र बुद्ध्या परिपूरणीयं, एतच्च पट्टिकादौ लिखित्वा दर्शयितव्यं, सिद्धान्ते च यत्र क्वचनापि

श्रेणेः प्रतरस्य वा ग्रहणं तत्र सर्वत्राप्येवं घनीकृतस्य लोकस्य सप्तरज्जुप्रमाणस्यावसातव्यं, मुक्तान्यौदारिकवद् भावनीयानि । आहारकविषयं सूत्रं 'केवइया णं भंते ! आहारगसरीरगा इत्यादि, 'वद्धानि सिय अत्थि सिय नत्थि' इति अस्तीति निपातो वहुवचनगर्भः कदाचित्सन्ति कदाचित् न सन्तीत्यर्थः, यस्मादन्तरमाहारकशरीरस्य जघन्यत एकः समयः उत्कर्षतः पण्मासाः, उक्तं च—"आहारगाइं लोए छम्मासे जा न होंतिवि कयाइ । उक्कोसेणं नियमा एकं समयं जहन्नेणं ॥ १ ॥" इति, यदापि भवन्ति तदाऽपि जघन्यतः एकं द्वे वा उत्कर्षतः सहस्रपृथक्त्वं, मुक्तान्यौदारिकवत् । तैजसविषयं सूत्रमाह—'केवइया णं भंते ! तेयगसरीरया' इत्यादि, तत्र वद्धान्यनन्तानि, अनन्तत्वं कालक्षेत्रद्रव्यैर्निरूपयति—'अणंताहिं' इत्यादि, कालतः परिमाणमनन्तोत्सर्प्पिण्यवसर्प्पिणीसमयप्रमाणानि क्षेत्रतोऽनन्तलोकप्रमाणाकाशखण्डप्रदेशपरिमाणानि, द्रव्यतः परिमाणं सिद्धेभ्योऽनन्तगुणानि, तैजसं हि शरीरं सर्वसंसारिजीवानां प्रत्येकं, संसारिणश्च जीवाः सिद्धेभ्योऽनन्तगुणाः, ततस्तैजसशरीराण्यपि सिद्धेभ्योऽनन्तगुणानि भवन्ति, 'सव्वजीवअणंतभागूणा' इति सर्वजीवानां योऽनन्ततमो भागस्तेनोनानि, इयमत्र भावना—सिद्धानां तैजसशरीरं न विद्यते, सर्वशरीरातीतत्वात् तेषां, सिद्धाश्च सर्वजीवानामनन्तभागे, ततस्तेनोनानि सर्वजीवानामनन्तभागोनानि भवन्ति, मुक्तानि अनन्तानि, तदेवानन्तत्वं कालक्षेत्रद्रव्यैः प्ररूपयति—'अणंताहिं' इत्यादि, कालक्षेत्रसूत्रे प्राग्वत्,

१ आहारकाणि लोके पण्मासान् यावन्न भवन्त्यपि कदाचित् । उत्कृष्टतो नियमादेकः समयो जघन्येन ॥ १ ॥

द्रव्यतः परिमाणं सर्वजीवेभ्योऽनन्तगुणानि, कथमिति चेत् ?, उच्यते, इह एकैकस्य संसारिजीवस्य एकैकं तैजसशरीरं, तानि च जीवैर्विप्रमुक्तानि सन्ति प्रागुक्तयुक्तेरनन्तभेदभिन्नानि भवन्ति, तेषां चासङ्ख्येयं कालं यावदवस्थानं, तावता च कालेन जीवैर्विप्रमुक्तान्यन्यानि तैजसशरीराणि प्रतिजीवमसङ्ख्येयानि अवाप्यन्ते, तेषामपि प्रत्येकं प्रागुक्तयुक्त्या अनन्तभेदभिन्नतेति भवन्ति सर्वजीवेभ्योऽनन्तगुणानि, तत्किं जीववर्गप्रमाणानि भवेयुरत आह—'जीववग्गस्स अणंतभागे' इति, जीववर्गस्यानन्तभागप्रमाणानि, जीववर्गप्रमाणानि कस्मान्न भवन्तीति चेत्, उच्यते, यदि एकैकस्य जीवस्य सर्वजीवराशिप्रमाणानि किञ्चित्समधिकानि वा भवेयुर्येन सिद्धानन्तभागपूरणं भवति ततो जीववर्गप्रमाणानि भवन्ति, वर्गो हि तेनैव राशिना तस्य राशेर्गुणने भवति, यथा चतुष्कस्य चतुष्केन गुणने षोडशात्मको वर्ग इति, न चैकैकस्य जीवस्य सर्वजीवप्रमाणानि किञ्चित्समधिकानि वा तैजसशरीराणि किन्त्वतिस्तोकानि, तान्यपि असङ्ख्येयकालावस्थायीनीति, तावता कालेन यान्यप्यन्यानि भवन्ति तान्यपि स्तोकानि, कालस्य स्तोकत्वात्, ततो जीववर्गप्रमाणानि न भवन्ति, किन्तु जीववर्गस्यानन्तभागमात्राणि, अनन्तभागप्रमाणतायां च पूर्वाचार्यप्रदर्शितमिदं निदर्शनं—सर्वजीवास्तत्त्ववृत्त्या अनन्ता अपि असत्कल्पनया दश सहस्राणि, तेषां च दशसहस्राणां वर्गो दश कोट्यः, तैजसशरीराणि च मुक्तान्यसत्कल्पनया दशलक्षप्रमाणानि, ततः सर्वजीवेभ्यः किल शतगुणानीति सर्वजीवेभ्योऽनन्तगुणान्युक्तानि, जीववर्गस्य च शततमे भागे वर्त्तन्ते, ततो जीववर्गस्यानन्तभागमात्राणि ।

एवं कार्मणशरीराण्यपि बद्धानि मुक्तानि च भावनीयानि, तैजसैः सह समानसङ्ख्यत्वात् । उक्तान्यौघिकानि पञ्चापि शरीराणि, सम्प्रति नैरयिकादिविशेषणविशेषितानि चिन्त्यन्ते—

नेरइयाणं भंते ! केवतिया ओरालियसरीरा पं० ?, गो० ! दुविहा पं०, तं०—बद्धेल्लगा य मुक्केल्लगा य, तत्थ णं जे ते बद्धेल्लगा ते णं णत्थि, तत्थ णं जे ते मुक्केल्लगा ते णं अणंता जहा ओरालियमुक्केल्लगा तहा भाणियवा । नेरइयाणं भंते ! केवइया वेउवियसरीरा पं० ?, गो० दु०, तं०—बद्धेल्लगा य मुक्केल्लगा य, तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा, असंखेज्जाहिं उस्सप्पिणिओसप्पिणिहिं अवहीरंति कालतो, खेत्ततो असंखिज्जाओ सेढीओ पयरस्स असंखेज्जइभागो, तासि णं सेढीणं विक्खंभसूई अंगुलपढमवग्गमूलं बितीयवग्गमूलपडुप्पण्णं अहवणं अंगुलबितीयवग्गमूलघणप्पमाणमेत्ताओ सेढीतो, तत्थ णं जे ते मुक्केल्लगा ते णं जहा ओरालियस्स मुक्केल्लगा तहा भाणियवा। नेरइयाणं भंते ! केवइआ आहारगसरीरा पं० ?, गो० ! दु०, तं०—बद्धे० मुक्के०, एवं जहा ओरालिए बद्धेल्लगा मुक्केल्लया य भणिया तहेव आहारगावि भाणियवा, तेयाकम्मगाइं जहा एएसिं चेव वेउवियाइं ( सूत्रं १७८ ) ।

'नेरइयाणं भंते !' इत्यादि, नैरयिकाणां बद्धान्यौदारिकशरीराणि न सन्ति, भवप्रत्ययतस्तेषामौदारिकशरीरासम्भवात्, मुक्तान्यौघिकमुक्तौदारिकशरीरवत्, वैक्रियाणि बद्धानि यावन्तो नैरयिकास्तावत्प्रमाणानि, तानि चासङ्ख्येयानि, तदेवासङ्ख्येयत्वं कालक्षेत्राभ्यां प्ररूपयति—'असंखेज्जाहिं' इत्यादि, कालतः परिमाणं प्रतिसमयमेकैकश-

रीरापहारे सामस्त्येनासङ्ख्येयाभिरुत्सर्प्पिण्यवसर्प्पिणीभिरपह्रियन्ते, किमुक्तं भवति ?—असङ्ख्येयासूत्सर्प्पिण्यवसर्प्पिणीषु यावन्तः समयास्तावत्प्रमाणानि, क्षेत्रतोऽसङ्ख्येयाः श्रेणयः, असङ्ख्येयासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानीति भावः, अथ प्रतरेऽपि सकले असङ्ख्येयाः श्रेणयो भवन्ति प्रतरस्यार्द्धभागे त्रिभागादौ च ततः कियत्सङ्ख्याकास्ताः श्रेणय इत्याशङ्कायां विशेषनिर्द्धारणार्थमाह—प्रतरस्यासङ्ख्येयभागः, किमुक्तं भवति ?—प्रतरस्यासङ्ख्येयतमे भागे यावत्यः श्रेणयस्तावत्यः परिगृह्यन्ते, इदमन्यद्विशेषतरपरिमाणं—'तासि णं सेढीणं विक्खंभसूई' इत्यादि, तासां श्रेणीनां विष्कम्भतो—विस्तारमधिकृत्य सूचिः—एकप्रादेशिकी श्रेणिरङ्गुलप्रथमवर्गमूलं द्वितीयवर्गमूलगुणितं, इयमत्र भावना—इह प्रज्ञापकेन घनीकृतः सप्तरज्जुप्रमाणो लोकः पट्टिकादौ स्थापनीयः, श्रेणिश्च रेखाकारेण दर्शनीया, दर्शयित्वा चैवं प्रमाणं वक्तव्यं—अङ्गुलप्रमाणमात्रस्य प्रदेशस्य क्षेत्रस्य यावान् प्रदेशराशिस्तस्यासङ्ख्येयानि वर्गमूलानि भवन्ति, तद्यथा—प्रथमं वर्गमूलं तस्यापि यद्वर्गमूलं तद् द्वितीयं वर्गमूलं तस्यापि यद् वर्गमूलं तत् तृतीयं वर्गमूलं एवमसङ्ख्येयानि वर्गमूलानि भवन्ति, तत्र प्रथमं यद्वर्गमूलं तद् द्वितीयेन वर्गमूलेन गुण्यते, गुणिते च सति यावन्तः प्रदेशा भवन्ति तावत्प्रदेशात्मिका सूचिर्बुद्ध्या क्रियते, कृत्वा च विष्कम्भतो दक्षिणोत्तरायततया स्थापनीया, तया च स्थाप्यमानया यावत्यः श्रेणयः स्पृश्यन्ते तावत्यः परिगृह्यन्ते, तत्रेदं निदर्शनम्—अङ्गुलमात्रक्षेत्रप्रदेशराशिस्तत्त्वतोऽसङ्ख्यातोऽप्यसत्कल्पनया षट्पञ्चाशदधिके द्वे शते कल्प्येते, तयोः प्रथमं वर्गमूलं षोडश द्वितीयं

चत्वारस्तृतीयं द्वौ, तत्र द्वितीयेन वर्गमूलेन चतुष्कलक्षणेन प्रथमं वर्गमूलं षोडशलक्षणं गुण्यते जाताः चतुःषष्टिः, एतावत्यः श्रेणयः परिगृह्यन्ते, अमुमेवार्थं प्रकारान्तरेण कथयति—'अहवण'मित्यादि अथवेति प्रकारान्तरे णमिति वाक्यालङ्कारे अङ्गुलमात्रक्षेत्रप्रदेशराशेर्द्वितीयस्य वर्गमूलस्यासत्कल्पनया चतुष्कलक्षणस्य यो घनस्तावत्प्रमाणाः, इह यस्य राशेर्यो वर्गः स तेन राशिना गुण्यते ततो घनो भवति, यथा द्विकस्याष्टौ, तथाहि—द्विकस्य वर्गश्चत्वारस्ते द्विकेन गुण्यन्ते जाता अष्टाविति, एवमिहापि चतुष्कस्य वर्गः षोडश ते चतुष्केन गुण्यन्ते ततश्चतुष्कस्य घनो भवति, तत्रापि सैव चतुःषष्टिरिति, प्रकारद्वयेऽप्यर्थाभेदः, इहायं गणितधर्मो यद्बहु स्तोकेन गुण्यते, ततः सूत्रकृता प्रकारद्वयमेवोपदर्शितं, अन्यथा तृतीयोऽपि प्रकारोऽस्ति 'अंगुलबिइयवग्गमूलं पढमवग्गमूलपडुप्पण्ण'मिति अन्ये त्वभिदधति—अङ्गुलमात्रक्षेत्रप्रदेशराशेः स्वप्रथमवर्गमूलेन गुणने यावान् प्रदेशराशिर्भवति तावत्प्रमाणया सूच्या यावत्यः स्पृष्टाः श्रेणयस्तावतीषु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानि नैरयिकाणां बद्धानि वैक्रियशरीराणीति, मुक्तान्यौदारिकवत् । आहारकाणि बद्धानि न सन्ति, तेषां तल्लब्ध्यसम्भवात् । मुक्तानि पूर्ववत्, तैजसकार्मणानि बद्धानि वैक्रियवत्, मुक्तानि पूर्ववत् ।

असुरकुमाराणं भंते ! केवइया ओरालियसरीरा पं० ?, गो० ! जहा नेरइयाणं ओरालियसरीरा भणिता तहेव एतेसिं भाणितवा, असुरकुमाराणं भंते ! केवइया वेउव्वियसरीरा पं० ?, गो० ! दुविहा पं०, तं०—बद्धेल्लगा य मुक्केल्लगा य, तत्थ णं

जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणीओसप्पिणीहिं अवहीरंति कालतो खेत्ततो असंखेज्जाओ सेढीतो पयरस्स असंखेज्जतिभागो तासि णं सेढीणं विक्खंभसूई अंगुलपढमवग्गमूलस्स संखेज्जतिभागो, तत्थ णं जे ते मुक्केल्लगा ते णं जहा ओरालियस्स मुक्केल्लगा तहा भाणियव्वा, आहारसरीरगा जहा एतेसिं चेव ओरालिया तहेव दुविहा भाणियव्वा, तेयाकम्मगसरीरा दुविहावि जहा एतेसिं चेव विउव्विया, एवं जाव थणियकुमारा ( सूत्रं १७९ ) पुढविकाइयाणं भंते ! केवइया ओरालियसरीरगा पं० ?, गो० ! दुविहा, पं०, तं०—बद्धेल्लगा य मुक्केल्लगा य, तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो, खेत्ततो असंखेज्जा लोगा, तत्थ णं जे ते मुक्केल्लगा ते णं अणंता अणंताहिं उस्सप्पिणिओस्सप्पिणीहिं अवहीरंति कालतो, खेत्ततो अणंता लोगा, अभवसिद्धिएहिंतो अणंतगुणा सिद्धाणं अणंतभागो, पुढविकाइयाणं भंते ! केवतिया वेउव्वियसरीरगा पण्णत्ता ?, गो० ! दु० पं०, तं०—बद्धे० मुक्के०, तत्थ णं जे ते बद्धेल्लगा ते णं णत्थि, तत्थ णं जे ते मुक्केल्लगा ते णं जहा एएसिं चेव ओरालिया तहेव भाणियव्वा, एवं आहारगसरीरावि, तेयाकम्मगा जहा एएसिं चेव ओरालिया, एवं आउकाइयतेउकाइयावि, वाउकाइयाणं भंते ! केवतिया ओरालियसरीरा पं० ?, गो० ! दु० पं०, तं०—बद्धे० मुक्के०, दुविहावि जहा पुढविकाइयाणं ओरालिया, वेउव्वियाणं पुच्छा, गो० ! दु० तं०—बद्धेल्लगा य मुक्केल्लगा य, तत्थ णं जे ते बद्धेल्लगा ते णं असंखेज्जा समए समए अवहीरमाणा २ पलितोवमस्स असंखेज्जइभागमेत्तेणं कालेणं अवहीरंति नो चेव णं अवहिया सिया, मुक्केल्लगा जहा पुढविकाइयाणं, आहारयतेयाकम्मा जहा पुढवीकाइयाणं, वणप्फइकाइयाणं जहा पुढविकाइयाणं णवरं तेयाकम्मगा जहा

ओहिया तेयाकम्मगा। बेइंदियाणं भंते! केवइया ओरालिया सरीरगा पं० ?, गो०! दु० तं०—बद्धे० मुक्के०, तत्थ
णं जे ते बद्धेल्लगा ते णं असंखेज्जा असंखेज्जाहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो खेत्ततो असंखेज्जाओ सेढीओ
पयरस्स असंखेज्जइभागो, तासिणं सेढिणं विक्खंभसूई असंखेज्जाओ जोयणकोडाकोडिओ असंखेज्जाइं सेढिवग्गमूलाइं।

असुरकुमाराणामौदारिकशरीराणि नैरयिकवत्, वैक्रियाणि बद्धान्यसङ्ख्येयानि, तदेवासङ्ख्येयत्वं कालक्षेत्राभ्यां
प्ररूपयति, तत्र कालसूत्रं प्राग्वत्, क्षेत्रतोऽसङ्ख्येयाः श्रेणयः, असङ्ख्येयासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमा-
णानीत्यर्थः, ताश्च श्रेणयः प्रतरस्यासङ्ख्येयो भागः, प्रतरासङ्ख्येयभागप्रमिता इत्यर्थः, तत्र नारकचिन्तायामपि
प्रतरासङ्ख्येयभागप्रमिता उक्ताः, ततो विशेषतरं परिमाणमाह—'तासि णं'मित्यादि, तासां श्रेणीनां परिमाणाय
या विष्कम्भसूचिः सा अङ्गुलमात्रक्षेत्रप्रदेशराशेः सम्बन्धिनः प्रथमवर्गमूलस्य सङ्ख्येयो भागः, किमुक्तं भवति ?—अङ्गु-
लमात्रक्षेत्रप्रदेशराशेरसत्कल्पनया षट्पञ्चाशदधिकशतद्वयप्रमाणस्य यत्प्रथमवर्गमूलं षोडशलक्षणं तस्य सङ्ख्येयतमे
भागे यावन्त आकाशप्रदेशा असत्कल्पनया पञ्च षड् वा तावत्प्रदेशात्मिका श्रेणिः परिमाणाय विष्कम्भसूचिरवसा-
तव्या, एवं च नैरयिकापेक्षयाऽमीषां विष्कम्भसूचिरसङ्ख्येयगुणहीना, तथाहि—नैरयिकाणां श्रेणिपरिमाणाय
विष्कम्भसूचिरङ्गुलप्रथमवर्गमूलं द्वितीयवर्गमूलप्रत्युत्पन्नं यावद् भवति तावत्प्रदेशात्मिका द्वितीयं च वर्गमूलं तत्त्वतो-
ऽसङ्ख्यातप्रदेशात्मकं ततोऽसङ्ख्येयगुणप्रथमवर्गमूलप्रदेशात्मिका नैरयिकाणां च सूचिरमीषां त्वङ्गुलप्रथमवर्गमूलसङ्ख्ये-

यभागप्रदेशात्मिकेति, युक्तं चैतत्, यस्मान्महादण्डके सर्वेऽपि भवनपतयो रत्नप्रभानैरयिकेभ्योऽप्यसङ्ख्येयगुणहीना उक्तास्ततः सर्वनैरयिकापेक्षया सुतरामसङ्ख्येयगुणहीना भवन्ति, मुक्तान्यौघिकमुक्तवत्, आहारकाणि नैरयिकवत्, तैजसकार्मणानि बद्धानि बद्धवैक्रियवत् मुक्तान्यौघिकमुक्तवत्, यथा चासुरकुमाराणामुक्तं तथा शेषाणामपि भवनपतीनां वाच्यं, यावत्स्तनितकुमाराणां। पृथिव्यप्तेजःसूत्रेषु बद्धान्यौदारिकशरीराणि असङ्ख्येयानि, तत्रापि कालतः परिमाणचिन्तायां प्रतिसमयमेकैकशरीरापहारे सामस्त्येनासङ्ख्येयाभिरुत्सर्प्पिण्यवसर्प्पिणीभिरपह्रियन्ते, क्षेत्रतः परिमाणचिन्तायामसङ्ख्येयालोकाः—आत्मीयावगाहनाभिरसङ्ख्येया लोका व्याप्यन्ते, मुक्तान्यौघिकमुक्तवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत् मुक्तान्यौघिकमुक्तवत्, वातकायस्याप्यौदारिकशरीराणि पृथिव्यादिवत्, वैक्रियाणि बद्धान्यसङ्ख्येयानि, तानि च प्रतिसमयमेकैकशरीरापहारे पल्योपमासङ्ख्येयभागेन निःशेषतोऽपह्रियन्ते, किमुक्तं भवति ?—पल्योपमासङ्ख्येयभागे यावन्तः समयास्तावत्प्रमाणानीति न पुनरभ्यधिकानि स्युः, तथाहि—वायुकायिकाश्चतुर्विधाः, तद्यथा—सूक्ष्मा बादराश्च, एकैके द्विधा—पर्याप्ता अपर्याप्ताश्च, तत्र बादरपर्याप्तव्यतिरिक्ताः शेषास्त्रयोऽपि प्रत्येकमसङ्ख्येयलोकाकाशप्रदेशप्रमाणाः, ये तु बादरपर्याप्तास्ते प्रतरासङ्ख्येयभागप्रमाणाः, तत्र त्रयाणां राशीनां वैक्रियलब्धिरेव नास्ति, बादरपर्याप्तानामपि सङ्ख्येयभागमात्राणां लब्धिः न शेषाणां, आह च चूर्णिकृत्—"तिण्हं ताव रासीणं वेउव्वियलद्धी चेव नत्थि, बायरपज्जत्ताणंपि संखेज्जइभागमेत्ताणं लद्धी अत्थि"त्ति, ततः पल्योपमासङ्ख्येयभागसमयप्र-

नाधिका इति, इह केचिदाचक्षते—सर्वे वायवो वैक्रियवमाणा एव पृच्छासमये वायवो वैक्रियवर्त्तिनोऽवाप्यन्ते र्त्तिन एव, अवैक्रियाणां चेष्टाया एवासम्भवात्, तदसमीचीनं, वस्तुगतेरपरिज्ञानात्, वायवो हि स्वभावाचलास्ततोऽवैक्रिया अपि ते वान्ति इति प्रतिपत्तव्यं, वाताद्वायुरिति व्युत्पत्तेः, आह च चूर्णिकृत्—"जेण सव्वेसु चेव लोगागासेसु चला वायवो वायंति तम्हा अवेउव्वियावि वाया वायंतीति घित्तव्व"मिति, मुक्तानि वैक्रियाण्यौघिकमुक्तवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत् मुक्तान्यौघिकमुक्तवत्, वनस्पतिकायिकचिन्तायामौदारिकाणि पृथिव्यादिवत्, तैजसकार्मणान्यौघिकतैजसकार्मणवत् । द्वीन्द्रियसूत्रे बद्धान्यौदारिकशरीराणि असङ्ख्येयानि, ततः कालतः परिमाणचिन्तायामसङ्ख्येयाभिरुत्सर्प्पिण्यवसर्पिणीभिरपह्रियन्ते—असङ्ख्यातासूत्सर्प्पिण्यवसर्प्पिणीपु यावन्तः समयास्तावत्प्रमाणानीति भावः, क्षेत्रतोऽसङ्ख्येयाः श्रेणयोऽसङ्ख्यातासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानीत्यर्थः, तासां श्रेणीनां परिमाणविशेषनिर्द्धारणार्थमाह—प्रतरासङ्ख्येयभागः प्रतरस्यासङ्ख्येयभागप्रमिता असङ्ख्येया श्रेणयः परिगृह्यन्ते इति भावः । प्रतरासङ्ख्येयभागो नैरयिकभवनपतीनामपि प्रतिपादितस्ततो विशेषतरपरिमाणनिरूपणार्थं सूचीमानमाह—'तासि णं सेढीण'मित्यादि, तासां श्रेणीनां परिमाणावधारणाय या विष्कम्भसूची सा असङ्ख्येया योजनकोटीकोट्यः असङ्ख्येययोजनकोटीकोटिप्रमाणा इत्यर्थः, अथवेदमन्यद्विशेषतः परिमाणं—'असंखेज्जाइं सेढिवग्गमूलाइं' इति, एकस्याः परिपूर्णायाः श्रेणेर्यः प्रदेशराशिस्तस्य प्रथमं वर्गमूलं द्वितीयं तृतीयं च वर्गमूलं यावदसङ्ख्येयतमं

वर्गमूलं एतानि सर्वाण्यप्येकत्र सङ्कल्प्यन्ते, तेषु च सङ्कलितेषु यावान् प्रदेशराशिर्भवति तावत्प्रदेशात्मिका विष्कम्भसूचिरवसेया, अत्र निदर्शनं—श्रेणौ किल प्रदेशा असङ्ख्याता अप्यसत्कल्पनया पञ्चषष्टिः सहस्राणि पञ्च शतानि षट्त्रिंशदधिकानि ६५५३६, तेषां प्रथमं वर्गमूलं द्वे शते षट्पञ्चाशदधिके २५६ द्वितीयं षोडश १६ तृतीयं चत्वारः ४ चतुर्थं द्वौ २, एतेषां च सङ्कलने जाते द्वे शते अष्टसप्तत्यधिके २७८, एतावता किलासत्कल्पनया प्रदेशानां सूचिरिति, अथैते द्वीन्द्रियाः किंप्रमाणाभिरवगाहनाभिरास्तीर्यमाणाः कियता कालेन सकलं प्रतरमापूरयन्ति ?, उच्यते, अङ्गुलासङ्ख्येयभागप्रमाणाभिरवगाहनाभिः प्रत्यावलिकाऽसङ्ख्येयभागमेकैकावगाहनारचनेनासङ्ख्येयाभिरुत्सर्प्पिण्यवसर्पिणीभिरापूर्यन्ते, इयमत्र भावना—एकैकस्मिन्नावलिकायाः असङ्ख्येयतमे भागे एकैका अङ्गुलासङ्ख्येयप्रमाणा अवगाहना रच्यते, ततोऽसङ्ख्येयाभिरुत्सर्प्पिण्यवसर्पिणीभिः सकलमपि प्रतरं द्वीन्द्रियशरीरैरापूर्यते, एतदेवापहारद्वारेण सूत्रकृदाह—

बेइंदियाणं ओरालियसरीरेहिं बद्धेल्लगेहिं पयरो अवहीरति, असंखेज्जाहिं उस्सप्पिणीओसप्पिणीहिं कालतो, खेत्ततो अंगुलपयरस्स आवलियाते य असंखेज्जतिभागपलिभागेणं, तत्थ णं जे ते मुक्केल्लगा ते जहा ओहिया ओरालियमुक्केल्लगा, वेउव्विया आहारगा य बद्धिल्लगा णत्थि, मुक्किल्लगा जहा ओहिया ओरालियमुक्केल्लगा, तेयाकम्मगा जहा एतेसिं चेव ओहिया ओरालिया, एवं जाव चउरिंदिया। पंचिंदियतिरिक्खजोणियाणं एवं चेव, नवरं वेउव्वियसरीरएसु इमो विसेसो पंचिंदियतिरिक्खजोणियाणं भंते ! केवइया वेउव्वियसरीरया पं०, गो० ! दु० पं०—बद्धे० मुक्के०, तत्थ णं जे ते बद्धेल्लया ते णं

असंखिज्ञा, जहा असुरकुमाराणं, णवरं तासि णं सेढीणं विक्खंभसूई अंगुलपढमवग्गमूलस्स असंखेज्जइभागो, मुकेल्लगा तहेव। मणुस्साणं भंते ! केवइया ओरालियसरीरगा पं० ?, गो० ! दु०, तं०—बद्धेल्लगा य मुक्के०, तत्थ णं जे ते बद्धेल्लगा ते णं सिय संखिज्जा सिय असंखिज्जा जहण्णपदे संखेज्ञा संखेज्जाओ कोडाकोडीओ तिजमलपयस्स उवरिं चउजमलपयस्स हिट्ठा, अहव णं छट्ठो वग्गो अहव णं छण्णउईछेयणगदाइरासी, उक्कोसपए असंखिज्ञा, असंखिज्जाहिं उस्सप्पिणिओसप्पिणीहिं अवहीरंति कालतो खेत्तओ रूवपक्खित्तेहिं मणुस्सेहिं सेढी अवहीरइ, तीसे सेढीए आकासखेत्तेहिं अवहारो मग्गिज्जइ असंखेज्ञा असंखेज्जाहिं उस्सप्पिणिओसप्पिणीहिं कालतो खेत्ततो अंगुलपढमवग्गमूलं तइयवग्गमूलपडुप्पण्णं, तत्थ णं जे ते मुकेल्लगा ते जहा ओरालिया ओहिया मुकेल्लगा, वेउवियाणं भंते ! पुच्छा, गो० ! दु०, तं०—बद्धे० मुक्के०, तत्थ णं जे ते बद्धेल्लगा ते णं संखिज्ञा, समए २ अवहीरमाणे २ संखेज्जेणं कालेणं अवहीरंति, नो चेव णं अवहीरिया सिया, तत्थ णं जे ते मुकेल्लगा ते णं जहा ओरालिया ओहिया, आहारगसरीरा जहा ओहिया, तेयाकम्मगा जहा एतेसिं चेव ओरालिया। वाणमंतराणं जहा नेरइयाणं ओरालिया आहारगा य, वेउवियसरीरगा जहा नेरइयाणं, नवरं तासि णं सेढीणं विक्खंभसूई संखेज्जजोअणसयवग्गपलिभागो पयरस्स, मुक्किल्लया जहा ओरालिया, आहारगसरीरा जहा असुरकुमाराणं तेयाकम्मया जहा एतेसि णं चेव वेउविता। तासिणं सेढीणं विक्खंभसूई विछप्पन्नंगुलसयवग्गपलिभागो पयरस्स, वेमाणियाणं एवं चेव, नवरं तासिणं सेढीणं विक्खंभसूई अंगुलबितीयवग्गमूलं तइयवग्गमूलपडुप्पन्नं अहवण्णं अंगुलतइयवग्गमूलघणप्पमाणमेत्ताओ सेढीओ, सेसं तं चेव ॥ ( सूत्रं १८० ) सरीरपयं समत्तं ॥ १२ ॥

'बेइंदियाण'मित्यादि, द्वीन्द्रियाणां सम्बन्धिभिरौदारिकशरीरैर्बद्धैः प्रतरमसङ्ख्येयाभिरुत्सर्प्पिण्यवसर्पिणीभिरपह्रियते, अत्र प्रतरमिति क्षेत्रतः परिमाणं उत्सर्प्पिण्यवसर्प्पिणीभिरिति कालतः, किंप्रमाणेन पुनः क्षेत्रेण कालेन वा अपहरणमत आह—'अंगुलपयरस्स आवलियाए य असंखेज्जइभागपलिभागेणं'ति, अङ्गुलमात्रस्य प्रतरस्य—एकप्रादेशिकश्रेणिरूपस्य असङ्ख्येयभागप्रतिभागप्रमाणेन खण्डेन, इदं क्षेत्रविषयं परिमाणं, कालपरिमाणमावलिकाया असङ्ख्येयभागप्रतिभागेनासंख्येयतमेन प्रतिभागेन, किमुक्तं भवति?—एकेन द्वीन्द्रियेणाङ्गुलासंख्येयभागप्रमाणं खण्डमावलिकाया असङ्ख्येयतमेन भागेनापह्रियते, द्वितीयेनापि तावत्प्रमाणं खण्डं तावता कालेन, एवमपह्रियमाणं प्रतरं द्वीन्द्रियैः सर्वैरसङ्ख्येयाभिरुत्सर्प्पिण्यवसर्प्पिणीभिः सकलमपह्रियते इति, मुक्तान्यौधिकमुक्तवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत्, वैक्रियाणि पुनर्बद्धानि तेषां न सन्ति, मुक्तान्यौघिकमुक्तवत्, एवं त्रिचतुरिन्द्रियाणामपि। तिर्यक्पञ्चेन्द्रियाणां बद्धानि मुक्तानि चौदारिकाणि द्वीन्द्रियवत्, वैक्रियाणि बद्धानि असङ्ख्येयानि, तत्र कालतः परिमाणचिन्तायामसङ्ख्येयाभिरुत्सर्प्पिण्यवसर्पिणीभिरपह्रियन्ते, क्षेत्रतोऽसङ्ख्येयासु श्रेणिषु यावन्तः आकाशप्रदेशास्तावत्प्रमाणानि, तासां च श्रेणीनां परिमाणं प्रतरस्यासङ्ख्येयो भागः, तथा चाह—'जहा असुरकुमाराण'मिति, यथा असुरकुमाराणां तथा वक्तव्यं, नवरं विष्कम्भसूचिपरिमाणचिन्तायां तत्राङ्गुलप्रमाणवर्गमूलस्य सङ्ख्येयो भाग उक्त इह त्वसङ्ख्येयो भागो वक्तव्यः, किमुक्तं भवति ?—अङ्गुलमात्रक्षेत्रप्रदेशराशेः यत्प्रथमं वर्गमूलं तस्यासङ्ख्येयतमे

भागे यावन्त आकाशप्रदेशास्तावत्प्रदेशात्मिका सूचिः परिगृह्यते, तावत्या च सूच्या याः श्रेणयः स्पृष्टास्तासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानि तिर्यक्पञ्चेन्द्रियाणां बद्धानि वैक्रियशरीराणि, उक्तं च—"अङ्गुलमूलासंखेयभागप्पमियाउ होंति सेढीओ । उत्तरविउव्वियाणं तिरियाणं सन्निपज्जाणं ॥ १ ॥" मुक्तान्यौधिकमुक्तवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत्, मुक्तान्यौघिकमुक्तवत्, मनुष्याणां बद्धान्यौदारिकशरीराणि स्यात्—कदाचित् सङ्ख्येयानि कदाचिदसङ्ख्येयानि, कोऽत्राभिप्रायः इति चेत् ?, उच्यते, इह द्वये मनुष्या—गर्भव्युत्क्रान्तिकाः सम्मूर्च्छिमाश्च, तत्र गर्भव्युत्क्रान्तिकाः सदावस्थायिनो, न स कश्चित्कालोऽस्ति यो गर्भव्युत्क्रान्तिकमनुष्यरहितो भवति, सम्मूर्च्छिमाश्च कदाचिद्विद्यन्ते कदाचित्सर्वथा तेषामभावो भवति, तेषामुत्कर्षतोऽन्तर्मुहूर्त्तायुष्कत्वात्, उत्पत्त्यन्तरस्य चोत्कर्षतश्चतुर्विंशतिमुहूर्त्तप्रमाणत्वात्, ततो यदा सर्वथा सम्मूर्च्छिममनुष्या न विद्यन्ते किन्तु केवला गर्भव्युत्क्रान्तिका एव तिष्ठन्ति तदा स्यात् सङ्ख्येयाः, सङ्ख्येयानामेव गर्भव्युत्क्रान्तिकानां भावात्, महाशरीरत्वे प्रत्येकशरीरत्वे च सति परिमितक्षेत्रवर्त्तित्वात्, यदा तु सम्मूर्च्छिमास्तदा असङ्ख्येयाः, सम्मूर्च्छिमानामुत्कर्षतः श्रेण्यसङ्ख्येयभागवर्त्तिनभःप्रदेशराशिप्रमाणत्वात्, तथा चाह—'जहन्नपदे संखेज्जा' इत्यादि, जघन्यपदं नाम यत्र सर्वस्तोकाः मनुष्याः प्राप्यन्ते, आह—किमत्र सम्मूर्च्छिमाणां ग्रहणमुत गर्भव्युत्क्रान्तिकानां ?, उच्यते, गर्भव्युत्क्रान्तिकानां, तेषामेव सदाऽवस्थायितया सम्मूर्च्छिमविरहे सर्वस्तोकतया प्राप्यमाणत्वात्, उत्कृष्टपदे तूभयेषामपि

ग्रहणं, यदाह मूलटीकाकारः—"सेतराणां ग्रहणमुत्कृष्टपदे, जघन्यपदे गर्भव्युत्क्रान्तिकानामेव केवलानां ग्रहण"-मिति, अस्मिन् जघन्यपदे सङ्ख्येया मनुष्याः, तत्र सङ्ख्येयकं सङ्ख्येयभेदभिन्नमिति न ज्ञायते कियन्तस्ते इति विशेषसङ्ख्यां निर्द्धारयति—सङ्ख्येयाः कोटीकोट्यः, अथवा इदमन्यत् विशेषतरं परिमाणं—'तिजमलपयस्स उवरिं चउजमलपयस्स हेट्ठा' इति, इह मनुष्यसङ्ख्याप्रतिपादिकान्येकोनत्रिंशदङ्कस्थानानि वक्ष्यमाणानि, तत्र समयपरिभाषया अष्टानां अष्टानामङ्कस्थानानां यमलपदमिति संज्ञा, चतुर्विंशत्या चाङ्कस्थानैः त्रीणि यमलपदानि लब्धानि, उपरि पञ्चाङ्कस्थानानि तिष्ठन्ति, अथ च यमलपदमष्टभिरङ्कस्थानैस्ततश्चतुर्थं यमलपदं न प्राप्यते तत उक्तं त्रयाणां यमलपदानामुपरि—पञ्चभिरङ्कस्थानैर्वर्द्धमानत्वात् चतुर्थस्य च यमलपदस्याधस्तात्—त्रिभिरङ्कस्थानैर्हीनत्वात्, अथवा द्वौ द्वौ वर्गौ समुदितौ एकं यमलं चत्वारो वर्गाः समुदिता द्वे यमले षड् वर्गाः समुदितास्त्रीणि यमलपदानि अष्टौ वर्गाः समुदिताश्चत्वारि यमलपदानि, तत्र यस्मात् षण्णां वर्गाणामुपरि वर्त्तन्ते सप्तमस्य च वर्गस्याधस्तात् तत उक्तं—त्रियमलपदस्योपरि चतुर्यमलपदस्याधस्तादिति, त्रियमलपदस्येति—त्रितयानां यमलपदानां समाहारस्त्रियमलपदं तस्य, तथा चतुर्णां यमलपदानां समाहारश्चतुर्यमलपदं तस्य, सम्प्रति स्पष्टतरं सङ्ख्यानमुपदर्शयति—'अहव णं छट्ठवग्गो पंचमवग्गपडुप्पण्णो' इति अथवेति पक्षान्तरे णमिति वाक्यालङ्कारे षष्ठो वर्गः पञ्चमवर्गेण प्रत्युत्पन्नो—गुणितः सन् यावान् भवति तावत्प्रमाणा जघन्यपदे मनुष्याः, तत्र एकस्य वर्गे एक एव स च वृद्धिं न गत इति वर्गो न

गण्यते, द्वयोर्वर्गश्चत्वारः एष प्रथमो वर्गः ४, चतुर्णां वर्गः षोडश एष द्वितीयो वर्गः १६, षोडशानां वर्गो द्वे शते षट्पञ्चाशदधिके एष तृतीयो वर्गः २५६, द्वयोः शतयोः षट्पञ्चाशदधिकयोर्वर्गः पञ्चषष्टिः सहस्राणि पञ्च शतानि षट्त्रिंशदधिकानि, एष चतुर्थो वर्गः ६५५३६, एतस्य वर्गश्चत्वारि कोटिशतानि एकोनत्रिंशत्कोट्यः एकोनपञ्चाशल्लक्षाः सप्तषष्टिः सहस्राणि द्वे शते षण्णवत्यधिके एष पञ्चमो वर्गः ४२९४९६७२९६, उक्तं च—"चत्तारि य कोडिसया अउणत्तीसं च होन्ति कोडीओ। अउणावन्नं लक्खा सत्तट्ठी चेव य सहस्सा ॥ १ ॥ दो य सया छण्णउया पंचमवग्गो समासओ होइ। एयस्स कतो वग्गो छट्ठो जो होइ तं वोच्छं ॥ २ ॥" एतस्य पञ्चमस्य वर्गस्य यो वर्गः स षष्ठो वर्गः, तस्य परिमाणमेकं कोटीकोटीशतसहस्रं चतुरशीतिः कोटीकोटीसहस्राणि चत्वारि सप्तषष्ट्यधिकानि कोटीकोटीशतानि चतुश्चत्वारिंशत्कोटिलक्षाणि सप्तकोटीसहस्राणि त्रीणि सप्तत्यधिकानि कोटिशतानि पञ्चनवतिर्लक्षाः एकपञ्चाशत्सहस्राणि षट् शतानि षोडशोत्तराणि, १८४४६७४४०७३७०९५५१६१६ एष षष्ठो वर्गः, उक्तं च—"लक्खं कोडाकोडी चउरासीइ भवे सहस्साइं। चत्तारि य सत्तट्ठा होंति सया कोडीकोडीणं ॥१॥ चउयालं लक्खाइं कोडीणं सत्त चेव य सहस्सा। तिण्णि सया सत्तयरी कोडीणं हुंति नायवा ॥ २ ॥ पंचाणउई लक्खा एकावन्नं भवे सहस्साइं। छसोलसुत्तरसया एसो छट्ठो हवइ वग्गो ॥ ३ ॥" इति, एष षष्ठो वर्गः पञ्चमवर्गेण गुण्यते, गुणिते च सति यावान् राशिर्भवति तावत्प्रमाणा जघन्यपदे मनुष्याः, ते च एतावन्तो भवन्ति;

७९२२८१६२५१४२६४३३७५९३५४३९५०३३६ एतान्येकोनत्रिंशदङ्कस्थानानि, एतानि च कोटीकोट्यादिद्वारेण कथमपि अभिधातुं न शक्यन्ते ततः पर्यन्तवर्त्तिनोऽङ्कस्थानादारभ्य अङ्कस्थानसङ्ग्रहमात्रं पूर्वपुरुषप्रणीतेन गाथाद्वयेनाभिधीयते—'छत्तिण्णि तिण्णि सुण्णं पंचेव य नव य तिण्णि चत्तारि। पंचेव तिण्णि नव पंच सत्त तिण्णेव (तिण्णि) ति चउ छट्ठो ॥१॥ दो चउ इक्को पंच दो छक्कगेक्कग(गं च अ)ट्ठेव। दो दो णव सत्तेव य ठाणाइं उवरि हुंताइं ॥२॥" ( छत्तिन्नि तिन्नि सुन्नं पंचेव य नव य तिन्नि चत्तारि। पंचेव तिण्णि नव पञ्च सत्त तिन्नेव तिन्नेव ॥ १ ॥ चउ छद्दो चउ एक्को पण छक्केक्कगो य अट्ठेव। दो दो नव सत्तेव य अंकट्ठाणा पराहुंता ॥ २ ॥ इत्यनुयोगद्वारवृत्तौ ) अथवाऽयमङ्कस्थानप्रथमाक्षरसङ्ग्रहः 'छत्तितिसु पण नव ति च प ति·ण प स ति ति चउ छंदो। च ए प दो छ ए अ वे वे ण स पढमक्खरसन्तियट्ठाणा ॥ १ ॥' एतेषामेव एकोनत्रिंशदङ्कस्थानानां पूर्वपुरुषैः पूर्वाङ्गैः परिसङ्ख्यानं कृतं तदुपदर्शयति, तत्र चतुरशीतिर्लक्षाणि पूर्वाङ्गं चतुरशीतिर्लक्षाश्चतुरशीतिर्लक्षैर्गुण्यन्ते ततः पूर्वं भवति, तस्य परिमाणं—सप्ततिः कोटिलक्षाणि षट्पञ्चाशत्कोटिसहस्राणि ७०५६००००००००००, एतेन भागो ह्रियते तत इदमागतं,—एकादश पूर्वकोटीकोट्यो द्वाविंशतिः पूर्वकोटीलक्षाणि चतुरशीतिः पूर्वकोटीसहस्राणि अष्टादशोत्तराणि पूर्वकोटीशतानि एकाशीतिः पूर्वलक्षाणि पञ्चनवतिः पूर्वसहस्राणि त्रीणि षट्पञ्चाशदधिकानि पूर्वशतानि, अत ऊर्द्धं पूर्वैर्भागो न लभ्यते ततः पूर्वाङ्गैर्भागहरणं, तत्रेदमागतं—एकविंशतिः पूर्वाङ्गलक्षाणि सप्ततिः पूर्वाङ्गस-

हस्राणि षट् एकोनपष्ठ्यधिकानि पूर्वाङ्गशतानि, तत ऊर्द्ध्वं च इदमन्यत् उद्धरितमवतिष्ठते—त्र्यशीतिर्लक्षाणि पञ्चाशत् सहस्राणि त्रीणि शतानि षट्त्रिंशदधिकानि मनुष्याणामिति ११२२८४११८८१९५३५६ । २१७०६५९ । तथा च पूर्वाचार्यप्रणीता अत्र गाथा—"मणुयाण जहन्नपदे एकारस पुव्वकोडिकोडीउ । बावीस कोडिलक्खा कोडिसहस्साइं चुलसीई ॥ १ ॥ अट्ठेव य कोडिसया पुव्वाण दसुत्तरा तओ होंति । एकासीई लक्खा पंचाणउई सहस्साइं ॥ २ ॥ छप्पण्णा तिन्नि सया, पुव्वाणं पुव्ववण्णिया अण्णे । एत्तो पुव्वंगाइं इमाइं अहियाइं अण्णाइं ॥ ३ ॥ लक्खाइं एगवीसं पुव्वंगाण सयरी सहस्सा य । छच्चेवेगूणट्ठा पुव्वंगाणं सया होंति ॥ ४ ॥ तेसीइ सयसहस्सा पण्णासं खलु भवे सहस्साइं । तिण्णि सया छत्तीसा, एवइया अविगला मणुया ॥ ५ ॥" इति, इमामेव सङ्ख्यां विशेषोपलम्भनिमित्तं प्रकारान्तरेणाह—'अहव णं छण्णउईछेयणगदायी रासी' इति, 'अहव णे'ति प्राग्वत्, पण्णवतिच्छेदनकानि यो राशिर्ददाति स पण्णवतिछेदनकदायी राशिः, किमुक्तं भवति ?—यो राशिरर्द्धेनार्द्धेन छिद्यमानः पण्णवतिं वारान् छेदं सहते पर्यन्ते च सकलमेकं रूपं पर्यवसितं भवति स पण्णवतिछेदनकदायी राशिरिति, कः पुनरेवंविध इति चेत्?, उच्यते, एप एव षष्ठो वर्गः पञ्चमवर्गगुणितः, कोऽत्र प्रत्यय इति चेत् ?, उच्यते, इह प्रथमवर्गश्छिद्यमानो द्वे छेदनके ददाति, तद्यथा—प्रथमच्छेदनकं द्वौ द्वितीयमेकमिति, द्वितीयो वर्गश्चत्वारि छेदनकानि, तत्र प्रथममष्टौ द्वितीयं चत्वारस्तृतीयं द्वौ चतुर्थमेक इति, एवं तृतीयवर्गोऽष्टौ छेदनकानि प्रयच्छति,

चतुर्थः षोडश पञ्चमो द्वात्रिंशतं षष्ठश्चतुःषष्टिं, स चैवं पञ्चमवर्गेण गुणितः षण्णवतिः, कथमेतदवसेयमिति चेत् ?, उच्यते, इह यो यो वर्गो येन येन वर्गेण गुण्यते तत्र तत्र तयोर्द्वयोरपि छेदनकानि प्राप्यन्ते, यथा प्रथमवर्गेण गुणिते द्वितीयवर्गे षट्, तथाहि—द्वितीयो वर्गः षोडशलक्षणः प्रथमवर्गेण चतुष्करूपेण गुण्यते जाता चतुःषष्टिः, तस्याः प्रथमं छेदनकं द्वात्रिंशत् द्वितीयं षोडश तृतीयमष्टौ चतुर्थं चत्वारः पञ्चमं द्वौ षष्ठं एक इति, एवमन्यत्रापि भावनीयं, तत्र पञ्चमवर्गे द्वात्रिंशच्छेदनकानि षष्ठे चतुःषष्टिः, ततः पञ्चमवर्गेण षष्ठे वर्गे गुणिते षण्णवतिछेदनकानि प्राप्यन्ते, अथवा एकं रूपं स्थापयित्वा ततः षण्णवतिवारान् द्विगुणद्विगुणीक्रियते, कृतं च सत् यदि तावत्प्रमाणो राशिर्भवति ततोऽवसातव्यं एष षण्णवतिच्छेदनकदायी राशिरिति, तदेवं जघन्यपदमभिहितम्, इदानीमुत्कृष्टपदमाह—'उक्कोसपए असंखेज्जा' इत्यादि, उत्कृष्टपदे ये मनुष्या भवन्ति ते असङ्ख्येयाः, तत्रापि कालतः परिमाणचिन्तायां प्रतिसमयमेकैकमनुष्यापहारे सामस्त्येनासङ्ख्येयाभिरुत्सर्प्पिण्यवसर्प्पिणीभिरपह्रियन्ते, क्षेत्रतो रूपे प्रक्षिप्ते मनुष्यैरेका श्रेणिः परिपूर्णाऽपह्रियते, किमुक्तं भवति ?—उत्कृष्टपदे ये मनुष्यास्तेषु मध्ये एकस्मिन्नसत्कल्पनया रूपे प्रक्षिप्ते सकलाऽपि श्रेणिरेकाऽपह्रियते, तस्याश्च श्रेणेः क्षेत्रकालाभ्यामपहारमार्गणा कालतस्तावदसङ्ख्येयाभिरुत्सर्प्पिण्यवसर्प्पिणीभिः क्षेत्रतोऽङ्गुलप्रथमवर्गमूलं तृतीयवर्गमूलप्रत्युत्पन्नं, किमुक्तं भवति ?—अङ्गुलमात्रक्षेत्रप्रदेशराशिरसत्कल्पनया षट्पञ्चाशदधिकशतद्वयप्रमाणस्तस्य यत्प्रथमं वर्गमूलमसत्कल्पनया

पोडशलक्षणं ततस्तृतीयेन वर्गमूलेनासत्कल्पनया द्विकलक्षणेन गुण्यते, गुणिते च सति यावान् प्रदेशराशिर्भवति असत्कल्पनया द्वात्रिंशत् एतावत्प्रमाणैः खण्डैरपह्रियमाणा यावत् श्रेणिर्निष्ठामियर्त्ति तावत् मनुष्या अपि निष्ठामुपयान्ति, आह—कथमेकस्याः श्रेणेर्यथोक्तप्रमाणैः खण्डैरपह्रियमाणायाः असङ्ख्येया उत्सर्पिण्यवसर्पिण्यो लगन्ति? उच्यते, क्षेत्रस्यातिसूक्ष्मत्वात्, उक्तं च सूत्रेऽपि—"सुहुमो य होइ कालो तत्तो सुहुमयरयं हवइ खेत्तं। अंगुलसेढीमेत्ते उस्सप्पिणीओ असंखेज्जा ॥ १ ॥" इति, मुक्तान्यौघिकमुक्तवत्, वैक्रियाणि बद्धानि सङ्ख्येयानि, गर्भव्युत्क्रान्तिकानामेव केषांचित् वैक्रियलब्धिसंभवात्, मुक्तान्यौघिकमुक्तवत्, आहारकाण्यौघिकाहारकवत्, तैजसकार्मणानि बद्धानि बद्धौदारिकवत्, मुक्तान्यौघिकमुक्तवत्, व्यन्तराणामौदारिकाणि यथा नैरयिकाणां, वैक्रियाणि बद्धान्यसङ्ख्येयानि, तत्र कालतः परिमाणचिन्तायां प्रतिसमयमेकैकापहारे असङ्ख्येयाभिरुत्सर्प्पिण्यवसर्प्पिणीभिरपह्रियन्ते, क्षेत्रतोऽसङ्ख्येयाः श्रेणयः, असङ्ख्यातासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानीति भावः, ताश्च श्रेणयः कियत्य इति चेत्?, उच्यते, प्रतरस्यासङ्ख्येयो भागः, प्रतरासङ्ख्येयभागप्रमिता इत्यर्थः, तथा चाह—'वेउव्वियसरीरा जहा नेरइयाणं'मिति, वैक्रियशरीराणि व्यन्तराणां यथा नैरयिकाणां, केवलं सूच्यां विशेषः, तथा चाह—'नवरं'मित्यादि, नवरं तासां श्रेणीनां विष्कम्भसूचिर्वक्तव्येति शेषः, सा च सुप्रसिद्धत्वान्नोक्ता, कथं सुप्रसिद्धेति

१ सूक्ष्मश्च भवति कालस्ततः सूक्ष्मतरं भवति क्षेत्रं। अङ्गुलमात्रायां श्रेणावुत्सर्पिण्योऽसङ्ख्येयाः ॥ १ ॥

चेत् ? उच्यते, इह महादण्डके पञ्चेन्द्रियतिर्यग्नपुंसकेभ्योऽसङ्ख्येयगुणहीना व्यन्तराः पठ्यन्ते, तत एषां विष्कम्भसूचिरपि तिर्यक्पञ्चेन्द्रियविष्कम्भसूचेरसङ्ख्येयगुणहीना वक्तव्या इति, आह च मूलटीकाकारोऽपि,—"जम्हा महादंडए पंचिंदियतिरियनपुंसएहिंतो असंखेज्जगुणहीणा वाणमंतरा पढिज्जंति, तम्हा विक्खंभसूईवि तेहिंतो असंखेज्जगुणहीणा चेव भाणियव्वा' इति, सम्प्रति प्रतिभाग उच्यते—प्रतिभागो नाम खण्डं, 'संखेज्जजोयणसयवग्गपलिभागो पयरस्स' इति सङ्ख्येययोजनशतवर्गप्रमाणः प्रतिभागः प्रतरस्य पूरणे अपहरणे वा इति वाक्यशेषः, इयमत्र भावना—असङ्ख्येययोजनशतवर्गप्रमाणे श्रेणिखण्डे यदि एकैको व्यन्तरः स्थाप्यते ततस्ते सकलमपि प्रतरमापूरयन्ति, यदिवा यद्येकैकव्यन्तरापहारे एकैकं सङ्ख्येययोजनशतवर्गप्रमाणं श्रेणिखण्डमपह्रियते तत एकत्र व्यन्तरा निष्ठां यान्ति परतः सकलं प्रतरमिति, मुक्तान्यौधिकमुक्तवत्, आहारकाणि नैरयिकवत्, तैजसकार्मणानि बद्धानि बद्धवैक्रियवत्, मुक्तान्यौधिकमुक्तवत् । ज्योतिष्काणामौदारिकाणि नैरयिकवत्, वैक्रियाणि बद्धान्यसङ्ख्येयानि, तत्र कालतो मार्गणायां प्रतिसमयमेकैकापहारे सामस्त्येनासङ्ख्येयाभिरुत्सर्प्पिण्यवसर्प्पिणीभिरपह्रियन्ते, क्षेत्रतोऽसङ्ख्येयाः श्रेणयः, ताश्च श्रेणयः प्रतरासङ्ख्येयभागप्रमिताः, तथा चाह—'जोइसियाणं एवं चेव' इति, नवरमित्यादिना विशेषं दर्शयति, नवरं तासां श्रेणीनां विष्कम्भसूचिर्वक्तव्येति शेषः, इयमपि सुप्रसिद्धत्वान्नोक्ता, कथमियं सुप्रसिद्धेति चेत् ?, उच्यते, यस्मान्महादण्डके व्यन्तरेभ्यो ज्योतिष्काः सङ्ख्येयगुणा उक्तास्तत एतेषां विष्कम्भसूचिरपि तेषां विष्कम्भसूचेः सङ्ख्ये-

यगुणा द्रष्टव्या, तथा चाह मूलटीकाकारः—'जम्हा वाणमंतरेहिंतो जोइसिया संखिज्जगुणा पढिज्जंति, तम्हा विक्खंभसूईवि तेसिं तेहिंतो संखेज्जगुणा चेव भवति,' इति नवरं प्रतिभागे स्पष्टतरो विशेषस्तमेवाह—'विछप्पण्णंगुलसयवग्गपलिभागो पयरस्स' इति षट्पञ्चाशदधिकशतद्वयाङ्गुलवर्गप्रमाणः प्रतिभागः प्रतरस्य पूरणेऽपहरणे च, अत्रापीयं भावना—षट्पञ्चाशदधिकशतद्वयाङ्गुलवर्गप्रमाणे श्रेणिखण्डे यद्येकैको ज्योतिष्कोऽवस्थाप्यते ततस्ते सकलमपि प्रतरमापूरयन्ति, यदिवा यद्येकैकज्योतिष्कापहारेण एकैकं षट्पञ्चाशदधिकशतद्वयाङ्गुलवर्गप्रमाणं श्रेणिखण्डमपह्रियते तत एकत्र ज्योतिष्काः परिसमाप्तिमुपयान्ति अपरत्र सकलं प्रतरमिति, एवं च ज्योतिष्काणां व्यन्तरेभ्यः सङ्ख्येयगुणहीनः प्रतिभागः सङ्ख्येयगुणाभ्यधिका सूचिः, पञ्चसङ्ग्रहे पुनः षट्पञ्चाशदधिकशतद्वयप्रमाण एव प्रतिभाग उक्तो नतु षट्पञ्चाशदधिकशतद्वयवर्गप्रमाणः, तथा च तद्ग्रन्थः—"छप्पन्नदोसयंगुलसूइपएसेहिं भाइयं पयरं । जोइसिएहिं हीरइ" इति, मुक्तान्यौघिकमुक्तवत्, आहारकाणि नैरयिकवत्, तैजसकार्मणानि बद्धानि वैक्रियवत्, मुक्तान्यौघिकमुक्तवत् । वैमानिकानामौदारिकाणि नैरयिकवत्, वैक्रियाणि बद्धानि असङ्ख्येयानि, तत्र कालतो मार्गणा ज्योतिष्कवत्, क्षेत्रतो मार्गणाऽसङ्ख्येयाः श्रेणयः, किमुक्तं भवति ?—असङ्ख्येयासु श्रेणिषु यावन्त आकाशप्रदेशास्तावत्प्रमाणानीति, तासां च श्रेणीनां परिमाणं प्रतरस्यासङ्ख्येयो भागः, प्रतरासङ्ख्येयभागप्रमिता ग्राह्या इत्यर्थः, तत्र प्रतरासङ्ख्येयभागो नैरयिकादिमार्गणायामपि गृहीत इति विशेषतरं परिमाणं प्रतिपादयति—'तासि ण'मित्यादि,

तासां श्रेणीनां विष्कम्भसूचिरङ्गुलद्वितीयवर्गमूलं तृतीयवर्गमूलप्रत्युत्पन्नं, एतदुक्तं भवति—अङ्गुलमात्रक्षेत्रप्रदेशराशेरसत्कल्पनया षट्पञ्चाशदधिकशतद्वयप्रमाणस्य यत् द्वितीयं वर्गमूलं, असत्कल्पनया चतुष्कलक्षणं, तत्तृतीयेन वर्गमूलेन, असत्कल्पनया द्विकरूपेण गुण्यते, गुणिते च सति यावान् प्रदेशराशिर्भवति, असत्कल्पनयां अष्टौ, तावत्प्रदेशात्मिकया विष्कम्भसूच्या परिमिताः श्रेणयः परिग्राह्याः, तत्रापि ता एव अष्टौ श्रेणय इति प्रकारद्वयेऽप्यर्थाभेदः, आहारकाणि नैरयिकवत्, तैजसकार्मणानि बद्धानि बद्धवैक्रियवत्, मुक्तान्यौघिकमुक्तवत् ॥ इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां द्वादशमं पदं समासम् ॥ १२ ॥

---

## अथ त्रयोदशं प्रारभ्यते ।

तदेवं व्याख्यातं द्वादशमं पदं, सम्प्रति त्रयोदशमारभ्यते, तस्य चायमभिसम्बन्धः—इहानन्तरपदे औदारिकादिशरीरविभाग उक्तः, तानि पुनः शरीराणि तथा परिणामे भवन्ति नान्यथा, ततः परिणामस्वरूपप्रतिपादनार्थमिदमारभ्यते, तत्र चेदमादिसूत्रं—

कतिविधे णं भंते! परिणामे पण्णत्ते?, गो०! दुविहे परिणामे पं०, तं० जीवपरिणामे य अजीवपरिणामे य ( सूत्रं १८१)

जीवपरिणामे णं भंते ! कतिविधे पं० ?, गो० ! दसविधे पं०, तं०—गतिपरिणामे १ इंदियपरिणामे २ कसायपरिणामे ३ लेसापरिणामे ४ जोगपरिणामे ५ उवओगपरि० ६ णाणपरि० ७ दंसणपरि० ८ चरित्तपरि० ९ वेदपरिणामे १० ( सूत्रं १८२ )

'कइविहे णं भंते ! परिणामे पं० ?' इत्यादि, कतिविधः—कतिप्रकारो, णमिति वाक्यालङ्कारे, भदन्त ! परिणामः प्रज्ञप्तः, परिणमनं परिणामः, 'अकर्त्तरी'ति भावे घञ्प्रत्ययः, परिणमनं च नयभेदेन विचित्रं, नयाश्च नैगमादयोऽनेके, तेषां च समस्तानामपि सङ्ग्राहकौ प्रवचने द्वौ नयौ, तद्यथा—द्रव्यास्तिकनयः पर्यायास्तिकनयश्च, तथा चाहुः श्रीमल्लवादिनः—"तित्थयरवयणसंगहविसेसपत्थारमूलवागरणा । दव्वट्ठिओ य पज्जवनओ य सेसा विगप्पासिं ॥ १ ॥" तत्र द्रव्यास्तिकनयमतेन परिणमनं नाम यत्कथञ्चित् सदेवोत्तरपर्यायरूपं धर्मान्तरमधिगच्छति, न च पूर्वपर्यायस्यापि सर्वथाऽवस्थानं नाप्येकान्तेन विनाशः, तथा चोक्तम्—"परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम् । न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥ १ ॥" पर्यायास्तिकनयमतेन पुनः परिणमनं पूर्वसत्पर्यायापेक्षया विनाश उत्तरेण चासता पर्यायेण प्रादुर्भावः, तथा चामुमेव नयमधिकृत्यान्यत्रोक्तं—'सत्पर्यायेण विनाशः प्रादुर्भावोऽसद्भावपर्ययतः । द्रव्याणां परिणामः प्रोक्तः खलु पर्ययनयस्य ॥ १ ॥" भगवानाह—गौतम ! द्विविधः

१ तीर्थकरवचनसामान्यविशेषप्ररूपणामूलव्याकर्त्तारौ । द्रव्यार्थिकः पर्यायार्थिकश्च शेषा भेदा अनयोः ॥ १ ॥

परिणामः प्रज्ञप्तः, तद्यथा—जीवपरिणामश्चाजीवपरिणामश्च, तत्र जीवस्य परिणामो जीवपरिणामः, स प्रायोगिकः, अजीवस्य परिणामोऽजीवपरिणामः, स वैश्रसिकः, चशब्दौ स्वगतानेकभेदसूचकौ, तांश्च भेदान् अग्रे सूत्रकृदेव वक्ष्यति, तथा चाह—'जीवपरिणामे णं भंते !' इत्यादि, दशविधो जीवपरिणामः, तद्यथा—गतिपरिणाम इत्यादि, तत्र गम्यते नैरयिकादिगतिकर्मोदयवशादवाप्यते इति गतिः—नैरयिकत्वादिपर्यायपरिणतिः गतिरेव परिणामो गतिपरिणामः १, तथा इन्दनादिन्द्रः—आत्मा ज्ञानलक्षणपरमैश्वर्ययोगात् तस्येदं, 'इन्द्रिय'मिति निपातनादिन्द्रशब्दादियप्रत्ययः, इन्द्रियाण्येव परिणाम इन्द्रियपरिणामः २, तथा कर्पन्ति—हिंसन्ति परस्परं प्राणिनोऽस्मिन्निति कषः—संसारस्तमयन्ते—अन्तर्भूतण्यर्थत्वात् गमयन्ति प्रापयन्ति ये ते कपायाः 'कर्मणोऽणि'त्यण् प्रत्ययः, कषाया एव परिणामः कषायपरिणामः ३, लेश्यादिशब्दार्थो वक्ष्यमाणः, लेश्या एव परिणामो लेश्यापरिणामः ४ योग एव परिणामो योगपरिणामः ५ उपयोग एव परिणाम उपयोगपरिणामः ६ एवं ज्ञानपरिणाम ७ दर्शनपरिणाम ८—चारित्रपरिणाम ९ वेदपरिणामेष्वपि भावनीयं। सम्प्रत्यमीषां पदानामित्थं क्रमेणोपन्यासे कारणमभिधीयते—तत्र सर्वे भावास्तत्तद्भावाश्रिता गतिपरिणामं विना न प्रादुष्ष्यन्ति ततः प्रथमं गतिपरिणामः १ गतिपरिणामे च सत्यवश्यमिन्द्रियपरिणाम इति तदनन्तरमिन्द्रियपरिणाम उक्तः २ इन्द्रियपरिणामे च सति इष्टानिष्टविषयसम्बन्धाद्रागद्वेषपरिणतिरुपजायते इति तदनन्तरं कषायपरिणामः ३ कषायपरिणामश्चावश्यं लेश्यापरिणामाविनाभावी, तथाहि—

लेश्यापरिणामः सयोगिकेवलिनमपि यावद्भवति, यतो लेश्यानां स्थितिनिरूपणावसरे लेश्याध्ययने शुक्ललेश्याया जघन्या उत्कृष्टा च स्थितिः प्रतिपादिता—"मुहुत्तद्धं तु जहन्ना उक्कोसा होइ पुव्वकोडी उ। नवहिं वरिसेहिं ऊणा नायव्वा सुक्कलेसाए ॥ १ ॥" इति, सा च नववर्षोनपूर्वकोटिप्रमाणा उत्कृष्टा स्थितिः शुक्ललेश्यायाः सयोगिकेवलिन्युपपद्यते, नान्यत्र, कषायपरिणामस्तु सूक्ष्मसम्परायं यावद्भवति, ततः कषायपरिणामो लेश्यापरिणामाऽविनाभूतो लेश्यापरिणामश्च कषायपरिणामं विनापि भवति, ततः कषायपरिणामानन्तरं लेश्यापरिणाम उक्तः, नतु लेश्यापरिणामानन्तरं कषायपरिणामः ४, तथा लेश्यापरिणामो योगपरिणामात्मको 'योगपरिणामो लेश्या' इति वचनात्, उपपादयिष्यते चायमर्थो लेश्यापदे सविस्तरमतो लेश्यापरिणामानन्तरं योगपरिणाम उक्तः ५ संसारिणां च योगपरिणतानामुपयोगपरिणतिस्ततो योगपरिणामानन्तरमुपयोगपरिणामः ६ सति चोपयोगपरिणामे ज्ञानपरिणाम इति तदनन्तरं ज्ञानपरिणाम उक्तः ७ ज्ञानपरिणामश्च द्विधा—सम्यग्ज्ञानपरिणामो मिथ्याज्ञानपरिणामश्च, तौ च न सम्यक्त्वमिथ्यात्वव्यतिरेकेण भवत इति तदनन्तरं दर्शनपरिणाम उक्तः ८ सम्यग्दर्शनपरिणामे च जीवानां जिनवचनाकर्णनतो नवनवसंवेगाविर्भावतश्चारित्रावरणकर्मक्षयोपशमतः चारित्रपरिणाम उपजायते ततो दर्शनपरिणामानन्तरं चारित्रपरिणाम उक्तः ९ चारित्रपरिणामवशात्ते वेदपरिणामं प्रलयमुपनयन्ति महासत्त्वास्तत-

१ जघन्या मुहूर्त्तान्तरेव भवति उत्कृष्टा पूर्वकोट्येव । नवभिर्वर्षैरूना ज्ञातव्या शुक्लेश्यायाः (स्थितिः) ॥ १ ॥

श्चारित्रपरिणामानन्तरं वेदपरिणाम उक्तः १०। तदेवमुक्ता जीवस्य गत्यादयः परिणामविशेषाः, सम्प्रत्येतेषामेव यथाक्रमं भेदान् दर्शयति—

गतिपरिणामे णं भंते! कतिविधे, पं०?, गो०! चउव्विहे पन्नत्ते, तं०—नरयगतिपरिणामे तिरियगतिप० मणुयगतिपरिणामे देवगतिप० १। इंदियपरिणामे णं भंते! कतिविधे पं०?, गो०! पंचविधे पं०, तं०—सोतिंदियपरि० चक्खिदियप० घाणिंदियप० जिब्भिदियपरिणामे फासिंदियपरिणामे २। कसायपरिणामे णं भंते! कतिविधे पं०?, गो०! चउविधे पं०, तं०—कोहकसायप० माणकसायप० मायाकसायप० लोभकसायप० ३। लेस्सापरिणामे णं भंते! कतिविधे पं०?, गो०! छव्विहे पं०, तं०—कण्हलेसाप० नीललेसाप० काउलेसाप० तेउलेसाप० पम्हलेसाप० सुक्कलेसाप० ४। जोगपरिणामे णं भंते! कइविहे पं०?, गो०! तिविधे पं०, तं०—मणजोगप० वइजोगप० कायजोगप० ५। उवओगपरिणामे णं भंते! कइविहे पं०?, गो०! दुविहे पं०, तं०—सागारोवओगप० अणागारोवओगप० ६। णाणपरिणामे णं भंते! कइविहे पं०?, गो०! पंचविहे पं०, तं०—आभिणिबोहियणाणप० सुयणाणप० ओहिनाणप० मणपज्जवणाणप० केवलणाणप०, अण्णाणपरिणामे णं भंते! कइविहे पं०?, गो०! तिविहे पं०, तं०—मइअण्णाणप० सुयअण्णाणप० विभंगणाणप० ७। दंसणपरिणामे णं भंते! कइविहे पं०?, गो०! तिविधे पं०, तं०—सम्मदंसणपरि० मिच्छादंसणप० सम्मभिच्छादंसणप० ८। चारित्तपरिणामे णं भंते! कतिविधे पं०?, गो०! पंचविहे पं०, तं०—सामाइयचारित्तप० छेदोवट्ठावणियचारित्तप० परिहारविसुद्धियचारित्तप० सुहुमसंपरायचरित्तप० अहक्खायचरित्तप० ९। वेदपरिणामे णं भंते! कइविहे पं०?, गो०!

तिविहे पं०, तं०—इत्थिवेदप० पुरिसवेदप० णपुंसगवेदप० १०॥ नेरइया गतिपरिणामेण निरयगतीया इंदियपरिणामेणं पंचिंदिया कसायपरिणामेणं कोहकसाईवि जाव लोभकसायीवि, लेसापरिणामेणं कण्हलेसावि नीललेसावि काउलेसावि, जोगपरिणामेणं मणजोगीवि वयजोगीवि कायजोगीवि, उवओगपरिणामेणं सागारोवउत्तावि अणागारोवउत्तावि, णाणपरिणामेणं आभिणिबोहियणाणीवि सुयणाणीवि ओहिणाणीवि, अण्णाणपरिणामेणं मइअण्णाणीवि सुयअण्णाणीवि विभंगणाणीवि, दंसणपरिणामेणं सम्मादिट्ठीवि मिच्छादिट्ठीवि सम्मामिच्छादिट्ठीवि, चरित्तपरिणामेणं नो चरित्ती नो चरित्ताचरित्ती अचरित्ती, वेदपरिणामेणं नो इत्थीवेदगा नो पुरिसवेदगा नपुंसगवेदगा । असुरकुमारावि एवं चेव, णवरं देवगतिया कण्हलेसावि जाव तेउलेसावि, वेदपरिणामेणं इत्थिवेदगावि पुरिसवेदगावि नो नपुंसगवेदगा, सेसं तं चेव, एवं जाव थणियकुमारा । पुढविकाइया गतिपरिणामेणं तिरियगतिया इंदियपरिणामेणं एगिंदिया, सेसं जहा नेरइयाणं, नवरं लेसापरिणामेणं तेउलेसावि, जोगपरिणामेणं कायजोगी णाणपरिणामे णत्थि अण्णाणपरिणामेणं मतिअण्णाणी सुयअण्णाणी दंसणपरिणामेणं मिच्छद्दिट्ठी, सेसं तं चेव, आउवणप्फइकाइयावि, तेऊवाऊ एवं चेव, णवरं लेसापरिणामेणं जहा नेरइया, बेइंदिया गतिपरिणामेणं तिरियगतिया इंदियपरिणामेणं बेइंदिया, सेसं जहा नेरइयाणं, णवरं जोगपरिणामेणं वयजोगी कायजोगी, णाणपरिणामेणं आभिणिबोहियणाणीवि सुअणाणीवि अण्णाणपरिणामेणं मइअण्णाणीवि सुअअण्णाणीवि नो विभंगणाणी दंसणपरिणामेणं सम्मदिट्ठीवि मिच्छदिट्ठीवि नो सम्मामिच्छादिट्ठी [वि,] सेसं तं चेव, एवं जाव चउरिंदिया, णवरं इंदियपरिवुड्ढी कायव्वा । पंचिंदियतिरिक्खजोणिया गतिपरिणामेणं तिरियगतिया, सेसं जहा नेरइयाणं, णवरं लेसापरि-

णामेणं जाव सुक्लेसावि, चरित्तपरिणामेणं नो चरित्ती अचरित्तीवि चरित्ताचरित्तीवि, वेदपरिणामेणं इत्थिवेदगावि पुरिसवेदगावि नपुंसगवेदगावि। मणुस्सा गतिपरिणामेणं मणुयगतिया इंदियपरिणामेणं पंचिंदिया अणिंदियावि कसायपरिणामेणं कोहकसाईवि जाव अकसाईवि, लेसापरिणामेणं कण्हलेसावि जाव अलेसावि, जोगपरिणामेणं मणजोगीवि जाव अजोगीवि, उवओगपरिणामेणं जहा नेरइया, णाणपरिणामेणं आभिणिबोहियणाणीवि जाव केवलणाणीवि, अण्णाणपरिणामेणं तिण्णिवि अण्णाणा, दंसणपरिणामेणं तिण्णिवि दंसणा, चरित्तपरिणामेणं चरित्तीवि अचरित्तीवि चरित्ताचरित्तीवि, वेदपरिणामेणं इत्थीवेयगावि पुरिसवेदगावि नपुंसगवेयगावि अवेयगावि। वाणमंतरा गतिपरिणामेणं देवगतिया, जहा असुरकुमारा एवं जोइसियावि नवरं तेउलेसा, वेमाणियावि एवं चेव, नवरं लेसापरिणामेणं तेउलेसावि पम्हलेसावि सुक्लेसावि, से तं जीवपरिणामे (सूत्रं १८३)

'गइपरिणामे णं भंते! कइविहे पण्णत्ते' इत्यादि, पाठसिद्धं सम्प्रति नैरयिकादयो यैः परिणामविशेषैर्विशिष्टास्तान् तथा प्रतिपादयति—'नेरइया' इत्यादि, सुगमं, नवरं नैरयिकाणां कृष्णनीलकापोतरूपास्तिस्र एव लेश्या न शेषाः, ता अपि तिस्रः पृथिवीक्रमेणैवं-आद्ययोर्द्वयोः पृथिव्योः कापोतलेश्या तृतीयस्यां कापोतलेश्या नीललेश्या च चतुर्थ्यां नीललेश्या पञ्चम्यां नीललेश्या कृष्णलेश्या च षष्ठीसप्तम्योः कृष्णलेश्यैव, तत उक्तम्—'कण्हलेसावि नीललेसावि काउलेसावि' तथा तिर्यक्पञ्चेन्द्रियमनुष्यव्यतिरेकेणान्यत्र चारित्रपरिणामः सर्वथा न भवति भवस्वाभाव्यात्, ततः

कृतश्चारित्रपरिणामनिषेधः, वेदपरिणामचिन्तायां च नैरयिका नपुंसका एव न स्त्रियो नापि पुरुषाः, "नारकसम्मूर्च्छिनो नपुंसकानी" (तत्त्वा० अ २ सूत्रं ५०) तिवचनात्, एवमसुरकुमाराणामपि, नवरं गतिमधिकृत्य देवगतिकास्तेषां च महर्द्धिकानां तेजोलेश्या अपि भवति, तत उक्तम्—'तेउलेस्सावि' इति, वेदपरिणामचिन्तायां स्त्रियः पुरुषा वा न नपुंसकाः, देवानां नपुंसकत्वस्यासम्भवात्, तथा पृथिवीकायिकसूत्रे, नवरं 'लेसापरिणामेण'मित्यादि, इह पृथिव्यम्बुवनस्पतीनां तेजोलेश्यापि सम्भवति येन सौधर्मेशानपर्यन्तानां देवानामेतेषूत्पादसम्भवात्(वः), तत उक्तम्—'तेउलेसावि' इति, एतेषां च पृथिव्यादीनां पञ्चानामपि सासादनसम्यक्त्वमपि न भवति, आगमे निषेधात्, ततो ज्ञाननिषेधः सम्यक्त्वनिषेधश्च कृतः, सम्यग्मिथ्यात्वपरिणामस्तु संज्ञिपञ्चेन्द्रियाणामेव भवति, न शेपाणामतस्तन्निषेधः, द्वीन्द्रियादीनां पुनः केषाञ्चित् करणापर्याप्तावस्थानां सासादनसम्यक्त्वमवाप्यते ततस्ते ज्ञानपरिणता अपि सम्यग्दृष्टयोऽप्युक्ताः, तिर्यक्पञ्चेन्द्रियाणां च पडपि लेश्याः सम्भवन्ति, ततः सूत्रे उक्तम्—'जाव सुक्कलेसावि' इति, तथा देशतश्चारित्रपरिणामोऽपि तेषामुल्लसति तत उक्तम्—'चरित्ताचरित्तीवि' इति, तथा ज्योतिष्काणां तेजोलेश्यैव केवला न शेषा लेश्याः, ततोऽभिहितम्—'लेसापरिणामेणं तेउलेस्सा'।

अजीवपरिणामे णं भंते ! कतिविधे पं० ?, गो० ! दसविधे पं०, तं०—बंधणपरिणामे १ गतिपरिणामे २ संठाणपरिणामे ३ भेदपरिणामे ४ वण्णपरिणामे ५ गंधपरिणामे ६ रसपरि० ७ फासपरिणामे ८ अगुरुलहुयपरिणामे ९ सद्दपरिणामे १०

( सूत्रं १८४ ) बंधणपरिणामे णं भंते! कतिविधे पं० ?, गो०! दुविहे पं०, तं०—णिद्धबंधणपरिणामे लुक्खबंधणपरिणामे य,—'समणिद्धयाए बंधो न होति समलुक्खयाएवि ण होति। वेमायणिद्धलुक्खत्तणेण बंधो उ खंधाणं ॥१॥ णिद्धस्स णिद्धेण दुयाहिएणं, लुक्खस्स लुक्खेण दुयाहिएणं। निद्धस्स लुक्खेण उवेइ बंधो, जहण्णवज्जो विसमो समो वा ॥ २॥१, गतिपरिणामे णं भंते! कतिविधे पं० ?, गो० ! दुविहे पं०, तं०—फुसमाणगतिपरिणामे य अफुसमाणगतिपरिणामे य, अहवा दीहगइपरिणामे य हस्सगइपरिणामे य २, संठाणपरिणामे णं भंते! कतिविधे पं० ?, गो० ! पंचविधे पण्णत्ते, तं०—परिमंडलसंठाणपरि० जाव आयतसंठाणपरिणामे ३, भेदपरिणामे णं भंते! कतिविधे पं० ?, गो० ! पंचविधे पं०, तं०—खंडभेदपरि० जाव उक्करियाभेदपरि० ४, वण्णपरिणामे णं भंते! कतिविधे पं० ?, गो० ! पंचविधे पं०, तं०—कालवण्णप० जाव सुक्किलवण्णपरि० ५, गंधपरिणामे णं भंते! कतिविधे पं० ?, गो० ! दुविहे पं०, तं०—सुब्भिगंधपरि० दुब्भिगंधपरिणामे य ६, रसपरिणामे णं भंते! कतिविधे पं० ?, गो० ! पंचविहे पं०, तं०—तित्तरसपरिणामे जाव महुररसपरिणामे ७, फासपरिणामे णं भंते! कतिविधे पं० ?, गो० ! अट्ठविधे पं०, तं०—कक्खडफासपरिणामे य जाव लुक्खफासपरिणामे य ८, । अगुरुलहुयपरिणामे णं भंते कतिविहे पं० ?, गो० ! एगागारे पं० ?, सद्दपरिणामे णं भंते! कतिविहे पं० ?, गो० ! दुविहे पं० तंजहा—सुब्भिसद्दपरिणामे य दुब्भिसद्दपरिणामे य १०। सेत्तं अजीवपरिणामे य ( सूत्रं १८५ ) परिणामपदं समत्तं ॥ १३ ॥

'बंधणपरिणामे णं भंते !' इत्यादि, स्निग्धबन्धनपरिणामश्च रूक्षबन्धनपरिणामश्च, तत्र स्निग्धस्य सतो बन्धनप-

रिणामः स्निग्धबन्धनपरिणामः, तथा रूक्षस्य सतो बन्धनपरिणामः रूक्षबन्धनपरिणामः, चशब्दौ स्वगतानेकभेदसूचकौ, अथ कथं स्निग्धस्य सतो बन्धनपरिणामो भवति कथं वा रूक्षस्य सत इति बन्धनपरिणामस्य लक्षणमाह—'समनिद्धयाए' इत्यादि, परस्परं समस्निग्धतायां—समगुणस्निग्धतायां तथा परस्परं समरूक्षतायां—समगुणरूक्षतायां बन्धो न भवति, किन्तु यदि परस्परं स्निग्धत्वस्य रूक्षत्वस्य च विषममात्रा भवति तदा बन्धः स्कन्धानामुपजायते, इयमत्र भावना—समगुणस्निग्धस्य परमाण्वादेः समगुणस्निग्धेन परमाण्वादिना सह सम्बन्धो न भवति, तथा समगुणरूक्षस्यापि परमाण्वादेः समगुणरूक्षेण परमाण्वादिना सह सम्बन्धो न भवति, किन्तु यदि स्निग्धः स्निग्धेन रूक्षः रूक्षेण सह विषमगुणो भवति तदा विषममात्रत्वात् भवति तेषां परस्परं सम्बन्धः। विषममात्रया बन्धो भवतीत्युक्तं ततो विषममात्रानिरूपणार्थमाह—'णिद्धस्स णिद्धेण दुयाहिएणे'त्यादि, यदि स्निग्धस्य परमाण्वादेः स्निग्धगुणेनैव सह परमाण्वादिना बन्धो भवितुमर्हति तदा नियमात् द्व्यादिकाधिकगुणेनैव परमाण्वादिनेति भावः, रूक्षगुणस्यापि परमाण्वादेः रूक्षगुणेन परमाण्वादिना सह यदि बन्धो भवति तदा तस्यापि तेन द्व्याद्यधिकादिगुणेनैव नान्यथा, यदा पुनः स्निग्धरूक्षयोर्बन्धस्तदा कथमिति चेत्?, अत आह—'णिद्धस्स लुक्खेणे'-त्यादि, स्निग्धस्य रूक्षेण सह बन्ध उपैति—उपपद्यते जघन्यवर्जो विषमः समो वा, किमुक्तं भवति?—एकगुणस्निग्धं एकगुणरूक्षं च मुक्त्वा शेषस्य द्विगुणस्निग्धादिद्विगुणरूक्षादिना सर्वेण बन्धो भवतीति। उक्तो बन्धनप-

रिणामोऽधुना गतिपरिणाममाह—'गइपरिणामे णं भंते' इत्यादि, द्विविधो गतिपरिणामः, तद्यथा—स्पृशद्गतिपरिणामोऽस्पृशद्गतिपरिणामश्च, तत्र वस्त्वन्तरं स्पृशतो यो गतिपरिणामः स स्पृशद्गतिपरिणामो, यथा—'ठिक्करिकाया जलस्योपरि प्रयत्नेन तिर्यक्प्रक्षिप्तायाः, सा हि तथा प्रक्षिप्ता सती अपान्तराले जलं स्पृशन्ती २ गच्छति, बालजनप्रसिद्धमेतत्, तथाऽस्पृशतो गतिपरिणामोऽस्पृशद्गतिपरिणामः, यद्वस्तु न केनापि सहापान्तराले संस्पर्शनमनुभवति तस्यास्पृशद्गतिपरिणाम इति भावः, अन्ये तु व्याचक्षते—स्पृशद्गतिपरिणामो नाम येन प्रयत्नविशेषात् क्षेत्रप्रदेशान् स्पृशन् गच्छति, अस्पृशद्गतिपरिणामो येन क्षेत्रप्रदेशानस्पृशन्नेव गच्छति, तन्न बुध्यामहे, नभसः सर्वव्यापितया तत्प्रदेशसंस्पर्शव्यतिरेकेण गतेरसम्भवात्, बहुश्रुतेभ्यो वा परिभावनीयं, अत्रैव प्रकारान्तरमाह—'अहवा दीहगतिपरिणामे य रहस्सगइपरिणामे य' इति, अथवेति प्रकारान्तरे अन्यथा वा गतिपरिणामो द्विविधः, तद्यथा—दीर्घगतिपरिणामो ह्रस्वगतिपरिणामश्च, तत्र विप्रकृष्टदेशान्तरप्राप्तिपरिणामो दीर्घगतिपरिणामस्तद्विपरीतो ह्रस्वगतिपरिणामः २, परिमण्डलादिसंस्थानविशेषाः खण्डभेदादयश्च प्रागेव व्याख्याता इति न भूयो व्याख्यायन्ते, ३, अगुरुलघुपरिणामो भाषादिपुद्गलानां 'कम्मगमणभासाइं एयाइं अगुरुलहुयाइं' [ कर्ममनोभाषाद्रव्याण्येतान्यगुरुलघूनि ] इति वचनात्, तथा अमूर्तद्रव्याणां वाऽऽकाशादीनां, अगुरुलघुपरिणामग्रहणमुपलक्षणं तेन गुरुलघुपरिणामोऽपि द्रष्टव्यः, स चौदारिकादिद्रव्याणां तैजसद्रव्यपर्यन्तानामवसेयः, "ओरालियवेउव्विय आहारगतेय गुरुलहू दव्वा"

[ औदारिकवैक्रियाहारकतेजांस्यगुरुलघूनि द्रव्याणि ] इति वचनात्, 'सुब्भिसद्दे' इति शुभशब्दः, 'दुब्भिसद्दे' इति अशुभशब्दः ॥ इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां त्रयोदशं पदं समाप्तम् ॥ १३ ॥

## अथ चतुर्दशं पदं ॥ १४ ॥



तदेवं व्याख्यातं त्रयोदशं पदमिदानीं चतुर्दशमारभ्यते–तस्य चायमभिसम्बन्धः, इहानन्तरपदे गत्यादिलक्षणो जीवपरिणाम उक्तः सामान्येन, सामान्यं च विशेषनिष्ठम्, अतः स एव विशेषतः कश्चित् क्वचित् प्रतिपाद्यते, तत्रैकेन्द्रियाणामपि क्रोधादिकषायभावात् 'सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलान् आदत्ते' (तत्त्वा० अ० ९ सू० २) इति वचनात् प्रधानबन्धहेतुत्वाच्चादावेव विशेषतः कषायपरिणामप्रतिपादनार्थमिदमारभ्यते, तत्र चेदमादिसूत्रम्—

कति णं भंते! कसाया पण्णत्ता, गो०! चत्तारि कसाया पं०, तं०—कोहकसाए माणकसाए मायाकसाए लोभकसाए, नेरइयाणं भंते! कतिकसाया पं०?, गो०! चत्तारि कसाया पं०?, तं०—कोहकसाए जाव लोभकसाए, एवं जाव वेमाणियाणं। (सूत्रं १८६) कतिपतिट्ठिए णं भंते! कोहे पं०?, गो०! चउपतिट्ठिए कोहे पं०, तं०—आयपतिट्ठिए परपतिट्ठिए तदुभयपतिट्ठिए अप्पइट्ठिते, एवं नेरइयाणं जाव वेमाणियाणं दंडतो, एवं माणेणं दंडतो मायाए दंडओ लोभेणं

दंडओ । कति(हिं) णं भंते! ठाणेहिं कोहुप्पत्ती भवति ?, गो०! चउहिं ठाणेहिं कोहुप्पत्ती भवति, तं०—खेत्तं पडुच्च वत्थुं पडुच्च सरीरं पडुच्च उवहिं पडुच्च, एवं नेरइयाणं जाव वेमाणियाणं । एवं माणेणवि मायाएवि लोभेणवि, एवं एतेवि चत्तारि दंडगा । ( सूत्रं १८७ ) कतिविधे णं भंते! कोधे पण्णत्ते?, गो०! चउव्विहे कोहे पं०, तं०—अणंताणुबंधि कोहे अपच्चक्खाणे कोहे पच्चक्खाणावरणे कोहे संजलणे कोहे, एवं नेरइयाणं जाव वेमाणियाणं । एवं माणेणं मायाए लोभेणं, एएवि चत्तारि दंडगा ( सूत्रं १८८ )

'कइ णं भंते! कसाया' इत्यादि, कति—कियत्सङ्ख्याकाः [कषायाः,] णमिति पूर्ववत्, भदन्त!—परमकल्याणयोगिन् कषायाः प्रज्ञप्ताः,? 'कृष विलेखने' कृषन्ति—विलिखन्ति कर्मरूपं क्षेत्रं सुखदुःखशस्योत्पादनायेति कषायाः, औणादिक आयप्रत्ययो निपातनाच्च ऋकारस्य अकारः, यदिवा कलुषयन्ति—शुद्धस्वभावं सन्तं कर्ममलिनं कुर्वन्ति जीवमिति कषायाः पूर्ववत् आयप्रत्ययः निपातनाच्च कलुषशब्दस्य णिजन्तस्य कषायादेशः, उक्तं च—"सुहदुक्खबहुस्सइयं कम्मक्खेत्तं कसंति ते जम्हा । कलुसंति जं च जीवं तेण कसायत्ति वुच्चंति ॥ १ ॥" निर्वचनसूत्रं क्षुण्णार्थं, नैरयिकादिदण्डकसूत्रमपि सुगमं, 'कइपइट्ठिए णं भंते!' इत्यादि, कतिषु—कियत्प्रकारेषु स्थानेषु प्रतिष्ठितो भदन्त! क्रोधः ?, भगवानाह—चतुष्प्रतिष्ठितः, तद्यथा—आत्मप्रतिष्ठित इत्यादि, आत्मन्येव प्रतिष्ठितः आत्मप्रतिष्ठितः, किमुक्तं भवति?—स्वयमाचरितस्य ऐहिकं प्रत्यपायमवबुध्य कश्चिदात्मन एवोपरि क्रुध्यति तदा आत्मप्रतिष्ठितः क्रोध

इति, यदा परं उदीरयति आक्रोशादिना कोपं तदा किल तद्विषयः क्रोध उपजायते इति स परप्रतिष्ठित इति, नैगमनयदर्शनमेतत्, नैगमनयो हि तद्विषयमात्रेणापि तत्प्रतिष्ठितं मन्यते यथा जीवे सम्यग्दर्शनमजीवे सम्यग्दर्शनमित्यादयोऽष्टौ भङ्गाः सम्यग्दर्शनस्याधिकरणचिन्तायामावश्यके, तदुभयप्रतिष्ठितः—आत्मपररूपोभयप्रतिष्ठितः, यदा कश्चित् तथाविधापराधवशादात्मपरविषयं क्रोधमाधत्ते इति, अप्रतिष्ठितो नाम यदैष स्वयं दुश्चरणमाक्रोशादिकं च कारणं विना निरालम्बन एव केवलक्रोधवेदनीयादुपजायते, स हि नात्मप्रतिष्ठितः स्वयं दुश्चरणाभावतः स्वात्मविषयत्वाभावात्, नापि परप्रतिष्ठितः परस्यापि निरपराधतया अपराधसम्भावनाया अभावतः क्रोधालम्बनत्वायोगात्, (तथा नोभयप्रतिष्ठितोऽपि) दृश्यते च कस्यापि कदाचिदेवमेव केवलक्रोधवेदनीयोदयादुपजायमानः क्रोधः, तथा च स पश्चात् ब्रूते—अहो मे निष्कारणः कोपो नैव (कोऽपि) विरूपं भाषते न च किञ्चिद्विनाशयति, अत एवोक्तं पूर्वमहर्षिभिः—'सापेक्षाणि निरपेक्षाणि च कर्माणि फलविपाकेषु। सोपक्रमं निरुपक्रमं च दृष्टं यथाऽऽयुष्कम् ॥ १ ॥" इति, एवं मानमायालोभा अपि आत्मपरोभयप्रतिष्ठिता अप्रतिष्ठिताश्च भावनीयाः। तदेवमधिकरणभेदेन भेद उक्तः, सम्प्रति कारणभेदतो भेदमाह—'कति (हिं) णं भंते! ठाणेहिं कोहुप्पत्ती हवइ' इत्यादि, तिष्ठन्त्येभिरिति स्थानानि—कारणानि कतिभिः—कियत्सङ्ख्याकैः स्थानैः—कारणैः क्रोधोत्पत्तिर्भवति?, भगवानाह—चतुर्भिः स्थानैः, तान्येव स्थानान्याह—'खेत्तं पडुच' इत्यादि ... येकाणां नैरयिकक्षेत्रं प्रतीत्य तिरश्चां तिर्यक्क्षेत्रं प्रतीत्य मनुष्याणां

मनुष्यक्षेत्रं देवानां देवक्षेत्रं 'वत्थुं पडुच्चे'ति वस्तु सचेतनमचेतनं वा शरीरं प्रतीत्य—दुःसंस्थितं विरूपं वा 'उपधिं प्रतीत्ये'ति यत् यस्योपकरणं तस्य तत् चौरादिनाऽपह्रियमाणमन्यथा वा प्रतीत्य, एवं नैरयिकादिदण्डकसूत्रमपि, सम्प्रति सम्यग्दर्शनादिगुणविघातित्वेन भेदमाह—'कइविहे णं भंते' इत्यादि, अनन्तानुबन्ध्यादिशब्दार्थमग्रे कर्मप्रकृतिपदे वक्ष्यामो, भावार्थस्त्वयं—सम्यक्त्वगुणविघातकृदनन्तानुबन्धी देशविरतिगुणविघाती अप्रत्याख्यानः सर्वविरतिगुणविघाती प्रत्याख्यानावरणः यथाख्यातचारित्रविघातकः संज्वलनः, एतांश्चतुरोऽपि नैरयिकादिदण्डकक्रमेण चिन्तयति, एवं मानमायालोभा अपि प्रत्येकं चतुर्विधाः सामान्यतो दण्डकक्रमेण च भावनीयाः । सम्प्रत्येतेषामेव क्रोधादीनां निर्वृतिभेदतोऽवस्थाभेदतश्च भेदमाह—

कतिविधे णं भंते! कोधे पं० ?, गो० ! चउव्विहे कोहे पं०, तंजहा—आभोगनिव्वत्तिए अणाभोगनिव्वत्तिए उवसंते अणुवसंते, एवं नेरइयाणं जाव वेमाणियाणं । एवं माणेणवि, मायाएवि, लोभेणवि, चत्तारि दंडगा । ( सूत्रं १८९ ) जीवा णं भंते! कतिहिं ठाणेहिं अट्ठ कम्मपगडीओ चिणिंसु ?, गो० ! चउहिं ठाणेहिं अट्ठ कम्मपगडिओ चिणिंसु तं०—कोहेणं माणेणं मायाए लोभेणं, एवं नेरइयाणं जाव वेमाणियाणं, जीवा णं भंते! कतिहिं ठाणेहिं अट्ठ कम्मपगडीओ चिणंति ?, गो० ! चउहिं ठाणेहिं, तं०—कोहेणं माणेणं मायाए लोभेणं, एवं नेरइया जाव वेमाणिया । जीवा णं भंते! कतिहिं ठाणेहिं अट्ठ कम्मपगडीओ चिणिस्संति ?, गो० ! चउहिं ठाणेहिं अट्ठ कम्मपगडीओ चिणिस्संति, तं०—कोहेणं माणेणं मायाए

लोभेणं, एवं नेरइया जाव वेमाणिया। जीवा णं भंते! कतिहिं ठाणेहिं अट्ठ कम्मपगडिओ उवचिणिंसु?, गो०! चउहिं ठाणेहिं अट्ठ कम्मपगडीओ उवचिणिंसु, तं०—कोहेणं माणेणं मायाए लोभेणं, एवं नेरइया जाव वेमाणिया, जीवा णं भंते! पुच्छा, गो०! चउहिं ठाणेहिं उवचिणंति जाव लोभेणं, एवं नेरइया जाव वेमाणिया, एवं उवचिणिस्संति। जीवा णं भंते! कतिहिं ठाणेहिं अट्ठ कम्मपगडीओ बंधिसु?, गो०! चउहिं ठाणेहिं, अट्ठ कम्मपगडिओ बंधिसु तं०—कोहेणं माणेणं जाव लोभेणं, एवं नेरइया जाव वेमाणिया, बंधिसु बंधंति बंधिस्संति, उदीरेंसु उदीरंति उदीरिस्संति, वेदिंसु वेदेंति वेदइस्संति, निज्जरिंसु निज्जरेंति निज्जरिस्संति, एवं एते जीवाइया वेमाणियपज्जवसाणा अट्ठारस दंडगा जाव वेमाणिया, निज्जरिंसु निज्जरेंति निज्जरिस्संति,—आतपतिट्ठिय खेत्तं पडुच्चणंताणुबंधि आभोगे। चिण उवचिण बंध उदीर वेद तह निज्जरा चेव ॥ १ ॥ (सूत्रं १९०) इति पण्णवणाए भगवईए कसायपयं समत्तं ॥ १४ ॥

'कइविहे णं भंते!' इत्यादि, यदा परस्यापराधं सम्यगवबुध्य कोपकारणं च व्यवहारतः पुष्टमवलम्ब्य नान्यथाऽस्य शिक्षोपजायते इत्याभोग्य कोपं विधत्ते तदा स कोप आभोगनिर्वर्तितः, यदा त्वेवमेव तथाविधमुहूर्त्तवशाद्गुणदोषविचारणाशून्यः परवशीभूय कोपं कुरुते तदा स कोपोऽनाभोगनिर्वर्त्तितः २ उपशान्तः—अनुदयावस्थः ३ अनुपशान्तः—उदयावस्थः ४, एवमेतद्विषयं दण्डकसूत्रमपि भावनीयं, एवं मानमायालोभाः प्रत्येकं चतुष्प्रकाराः सामान्यतो दण्डकक्रमेण च वेदितव्याः। सम्प्रति फलभेदेन कालत्रयवर्तिनां भेदमभिधातुकाम आह—'जीवा णं

भंते! कइहिं ठाणेहिं अट्ठ कम्मपगडीओ चिणिंसु' इत्यादि, जीवा भदन्त! कतिभिः स्थानैरष्टौ कर्मप्रकृतीश्चितवन्तः, चयनं नाम कषायपरिणतस्य कर्मपुद्गलोपादानमात्रं, भगवानाह—गौतम! चतुर्भिः स्थानैस्तद्यथा—क्रोधेन मानेन मायया लोभेन, एवं नैरयिकादिदण्डकेऽपि वक्तव्यं, एष दण्डकोऽतीतकालविषयः, एवं वर्तमानकालभविष्यत्काल-विषयावपि वाच्यौ, एवमुपचयबन्धोदीरणावेदननिर्जराविषयाः प्रत्येकं त्रयस्त्रयो दण्डका वाच्या इति सर्वसङ्ख्यया अष्टादश दण्डकाः, तत्र उपचयो नाम स्वस्याबाधाकालस्योपरि ज्ञानावरणीयादिकर्मपुद्गलानां वेदनार्थं निषेकः, स चैवं—प्रथमस्थितौ सर्वप्रभूतं, द्वितीयस्यां स्थितौ विशेषहीनं, ततोऽपि तृतीयस्यां विशेषहीनं, एवं विशेषहीनं २ तावद्वाच्यं यावत्तत्तत्कालबध्यमानायाः स्थितेश्चरमा स्थितिरेतच्च सविस्तरं कर्मप्रकृतिटीकायां पञ्चसंग्रहटीकायां चाभिहितमिति ततोऽवधार्यं, बन्धनं नाम—ज्ञानावरणीयादिकर्मपुद्गलानां यथोक्तप्रकारेण स्वस्वाबाधाकालोत्तर-कालं निषिक्तानां यद्भूयः कषायपरिणतिविशेषान्निकाचनं, उदीरणं—उदीरणाकरणवशतः कर्मपुद्गलानामनुदयप्राप्ता-नामुदयावलिकायां प्रवेशनं, तदपि हि किञ्चित्तथाविधकषायपरिणतिवशाद्भवतीति 'चउहिं ठाणेहिं उदीरेंसु उदी-रन्ति उदीरिस्संती'त्युक्तम्, अन्यथा कषायव्यतिरेकेणापि क्षीणमोहोदये ज्ञानावरणादीनामुदीरका वर्त्तन्ते इति, वेदना—स्वस्वाबाधाकालक्षयादुदयप्राप्तस्य उदीरणाकरणेन वा उदयमुपनीतस्य कर्मण उपभोगः, निर्जरा—कर्मपुद्गला-नामनुभूय २ अकर्मत्वापादनं, आत्मप्रदेशैः संश्लिष्टानां ज्ञानावरणीयादिकर्मपुद्गलानामनुभूय २ शातनमिति भावः,

उक्तं च—"पुव्वकयकम्मसाडण निज्जरा" इति, इयं च देशनिर्जरा द्रष्टव्या, कषायजनितत्वात्, न सर्वनिर्जरा, सा हि निष्कषायस्य सर्वनिरुद्धयोगस्य मोक्षप्रासादमधिरोहतो भवति, न शेषस्य, अत एव चतुर्विंशतिदण्डकसूत्रमपि अविरुद्धं, देशनिर्जरायाः सर्वकालं सर्वेषामपि भावात्, सम्प्रति यत् यत् पदमधिकृत्य प्राक् सूत्राण्युक्तानि तानि विनेयजनानुग्रहाय संग्रहणिगाथया निर्दिशति—'आयपतिट्ठिय' इत्यादि, प्रथमं सामान्यसूत्रं सुप्रतीतमिति न संगृहीतं, द्वितीयमात्मप्रतिष्ठितपदोपलक्षितं सूत्रं ततोऽनन्तानुबन्धिपदोपलक्षितं तदनन्तरमाभोगपदोपलक्षितं ततश्चयोपचयबन्धोदीरणवेदनानिर्जराविषयाणि क्रमेण सूत्राणि, अत्र चिणेति उपचयसूत्रोपलक्षणम् ॥ इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां चतुर्दशं पदं समाप्तम् ॥ १४ ॥

---

## अथ पंचदशं पदं ॥ १५ ॥

---

तदेवं व्याख्यातं चतुर्दशं, सम्प्रति पञ्चदशमारभ्यते—इहानन्तरपदे प्रधानबन्धहेतुत्वात् विशेषतः कषायपरिणाम उक्तः, तदनन्तरमिन्द्रियवतामेव लेश्यादिसद्भाव इति विशेषत इन्द्रियपरिणामनिरूपणार्थमिदमारभ्यते, अत्र च द्वावुद्देशकौ, तत्र च प्रथमोद्देशके येऽर्थाधिकारास्तत्संग्राहकमिदं गाथाद्वयं—

संठाणं बाहल्लं पोहत्तं कतिपदेस ओगाढे । अप्पाबहु पुट्ठ पविट्ठ विसय अणगार आहारे ॥ १ ॥
अद्दाय असी य मणी दुद्ध पाणे तेल्ल फाणिय वसा य । कंबल थूणा थिग्गल दीवोदहि लोगऽलोगे य ॥ २ ॥

'संठाणं बाहल्लं' इत्यादि, प्रथममिन्द्रियाणां संस्थानं, संस्थानं नाम आकारविशेषः, ततो बाहल्यं वक्तव्यं, बाहल्यं नाम बहलता पिण्डत्वमिति भावः, तदनन्तरं पृथुत्वं वक्तव्यं, पृथुत्वं—विस्तारः, तदनन्तरं 'कतिपदेस'त्ति कतिप्रदेशमिन्द्रियमिति वक्तव्यं, तत ओगाढमिति—कतिप्रदेशावगाढमिन्द्रियमिति वाच्यं, तदनन्तरमवगाहनाविषयं कर्कशादिगुणविषयं चाल्पबहुत्वं, ततः 'पुट्ठ'त्ति स्पृष्टग्रहणमुपलक्षणं तेन स्पृष्टास्पृष्टविषयं सूत्रं वक्तव्यं तदनन्तरं 'पविट्ठ'त्ति प्रविष्टाप्रविष्टविषयचिन्ताविषयं ततो विषयपरिमाणं ततोऽनगारविषयं सूत्रं तदनन्तरमाहारविषयं [ततो लोकविषयं] तत 'अद्दाय'त्ति आदर्शविषयं तदनन्तरमसिविषयं ततो मणिविषयं ततो दुग्धोपलक्षितं ततः पानकविषयं ततस्तैलविषयं ततः फाणितविषयं तदनन्तरं वसाविषयं ततः कम्बलविषयं ततः स्थूणाविषयं तदनन्तरं 'थिग्गल'त्ति आकाशथिग्गलविषयं ततो द्वीपोदधिविषयं ततो लोकविषयं तदनन्तरमलोकविषयं इति । तत्र संस्थानादिकमिन्द्रियाणां वक्तव्यमिति प्रथमत इन्द्रियविषयसूत्रमाह—

कति णं भंते! इंदिया पं० ?, गो० ! पंच इंदिया पं०, तं०—सोतिंदिए चक्खिदिए घाणिंदिए जिब्भिदिए फासिंदिए, सोतिंदिए णं भंते! किंसंठिए पं० ?, गो० ! कलंबुयापुप्फसंठाणसंठिते पं०, चक्खिदिए णं भंते! किंसंठिते पं० ?, गो० !

मसूरचंदसंठाणसंठिते पं०, घाणिंदिए णं भंते! पुच्छा, गो०! अइमुत्तगचंदसंठाणसंठिते, जिब्भिंदिए णं पुच्छा, गो०! खुरप्पसंठाणसंठिते पं०, फासिंदिए णं पुच्छा गो०! णाणासंठाणसंठिते पं० १। सोइंदिए णं भंते! केवइयं बाहल्लेणं पं०!, गो०! अंगुलस्स असंखेज्जइभागे बाहल्लेणं पं० २, एवं जाव फासिंदिए। सोतिंदिए णं भंते! केवइतं पोहत्तेणं पण्णत्ते!, गो०! अंगुलस्स असंखेज्जइभागं पोहत्तेणं पं०, एवं चक्खिदिएवि घाणिंदिएवि, जिब्भिंदिए णं पुच्छा गो०! अंगुलपुहुत्तेणं पं०, फासिंदिए णं पुच्छा गो०! सरीरप्पमाणमेत्ते पोहत्तेणं पं० ३। सोतिंदिए णं भंते! कतिपदेसिते पं०?, गो०! अणंतपदेसिते पं०, एवं जाव फासिंदिए। (सूत्रं १९१)

'कइ णं भंते! इंदिया पण्णत्ता' इत्यादि, कति–कियत्सङ्ख्याकानि, णमिति वाक्यालङ्कारे, भदन्त! इन्द्रियाणि प्राग्निरूपितशब्दार्थानि प्रज्ञप्तानि!, भगवानाह–गौतम! पञ्चेन्द्रियाणि प्रज्ञप्तानि, तान्येव नामत आह—'सोइंदिए' इत्यादि, एतानि च पञ्चापीन्द्रियाणि द्विधा, तद्यथा–द्रव्यतो भावतश्च, तत्र द्रव्यतो निर्वृत्त्युपकरणरूपाणि भावतो लब्ध्युपयोगात्मकानि, आह च तत्त्वार्थसूत्रकृत्–'निर्वृत्त्युपकरणे द्रव्येन्द्रियं, लब्ध्युपयोगौ भावेन्द्रिय (तत्त्वार्थे अ० २ सू० १७–१८) मिति, तत्र निर्वृतिर्नाम प्रतिविशिष्टः संस्थानविशेषः, सापि द्विधा—बाह्या अभ्यन्तरा च, तत्र बाह्या पर्प्पटिकादिरूपा, सा च विचित्रा, न प्रतिनियतरूपतयोपदेष्टुं शक्यते, तथाहि–मनुष्यस्य श्रोत्रे नेत्रयोरुभयपार्श्वतो भाविनी, भ्रुवौ चोपरितनश्रवणबन्धापेक्षया समे, वाजिनो नेत्रयोरुपरि तीक्ष्णे [illegible]ाग्रभागे इत्यादि, जातिभेदान्ना-

नाविधा, अभ्यन्तरा तु निर्वृतिः सर्वेषामपि जन्तूनां समाना, तामेव चाधिकृत्य वक्ष्यमाणानि संस्थानादिविषयाणि सूत्राणि, केवलं स्पर्शेन्द्रियस्य निर्वृतेर्बाह्याभ्यन्तरभेदो न प्रतिपत्तव्यः, पूर्वसूरिभिर्निषेधाद्, अत एव च बाह्यसंस्थानविषयमेव तत्सूत्रं वक्ष्यति—'फासिंदिए णं भंते! किंसंठाणसंठिए पण्णत्ते' इति, उपकरणं खड्गस्थानीयाया बाह्यनिर्वृतेर्या खड्गधारासमाना स्वच्छतरपुद्गलसमूहात्मिका, अभ्यन्तरा निर्वृतिस्तस्याः शक्तिविशेषः, इदं चोपकरणरूपं द्रव्येन्द्रियमान्तरनिर्वृतेः कथञ्चिदर्थान्तरं, शक्तिशक्तिमतोः कथञ्चिद्भेदात्, कथञ्चिद्भेदश्च सत्यामपि तस्यामान्तरनिर्वृतौ द्रव्यादिनोपकरणस्य विघातसम्भवात्, तथाहि—सत्यामपि कदम्बपुष्पाद्याकृतिरूपायामान्तरनिर्वृतावतिकठोरतरघनगर्जितादिना शक्त्युपघाते सति न परिच्छेत्तुमीशते जन्तवः शब्दादिकमिति, भावेन्द्रियमपि द्विधा—लब्धिः उपयोगश्च, तत्र लब्धिः—श्रोत्रेन्द्रियादिविषयः सर्वात्मप्रदेशानां तदावरणक्षयोपशमः, उपयोगः—स्वस्वविषये लब्ध्यनुसारेणात्मनो व्यापारः प्रणिधानमाह। साम्प्रतमाभ्यन्तरां निर्वृतिमधिकृत्य संस्थानादि विचिन्तयिषुः प्रथमतः संस्थानं चिन्तयति—'सोइंदिए णं भंते! किंसंठिए पण्णत्ते' इत्यादि पाठसिद्धं, अधुना बाहल्यं चिन्तयति—'सोइंदिए णं भंते! केवइयं बाहल्लेणं पण्णत्ते' इत्यादि, इदमपि पाठसिद्धम्, उक्तश्चायमर्थोऽन्यत्रापि—"बाहल्लतो य सव्वाइं अंगुलअसंखभाग"मिति [बाहल्यतश्च सर्वाणि अङ्गुलासङ्ख्यभागमानानि]। अत्राह—यद्यङ्गुलस्यासङ्ख्येयभागो बाहल्यं स्पर्शनेन्द्रियस्य ततः कथं खड्गक्षुरिकाद्यभिघाते अन्तः शरीरस्य वेदनानुभवः?, तदेतदसमीचीनं, सम्यग्वस्तुतत्त्वा-

परिज्ञानात्, त्वगिन्द्रियस्य विषयः शीतादयः स्पर्शा यथा चक्षुषो रूपं गन्धो घ्राणस्य, न च खङ्गक्षुरिकाद्यभिघाते अन्तः शरीरस्य शीतादिस्पर्शवेदनमस्ति, किन्तु केवलं दुःखवेदनं, तच्च दुःखरूपवेदनमात्मा सकलेनापि शरीरेणानुभवति न केवलेन त्वगिन्द्रियेण ज्वरादिवेदनवत् ततो न कश्चिद्दोषः, अथ शीतलपानकादिपाने अन्तः शीतस्पर्शवेदनाप्यनुभूयते ततः कथं सा घटामटाट्यते इति ?, उच्यते, इह त्वगिन्द्रियं सर्वत्रापि प्रदेशपर्यन्तवर्त्ति विद्यते, तथा पूर्वसूरिभिर्व्याख्यानात्, तथा चाह मूलटीकाकारः—"सर्वप्रदेशपर्यन्तवर्त्तित्वात् त्वचोऽभ्यन्तरेऽपि शुषिरस्योपरि त्वगिन्द्रियस्य भावादुपपद्यतेऽन्तः शीतस्पर्शवेदनानुभवः" । अधुना पृथक्त्वविषयं सूत्रमाह—'सोइंदिए णं भंते ! केवइयं पोहत्तेणं पण्णत्ते" इत्यादि, इह पृथुत्वं स्पर्शनेन्द्रियव्यतिरेकेण शेषाणां चतुर्णामिन्द्रियाणामात्माङ्गुलेन प्रतिपत्तव्यं, स्पर्शनेन्द्रियस्य उच्छ्रयाङ्गुलेन, ननु देहाश्रितानीन्द्रियाणि देहश्चोच्छ्रयाङ्गुलेन प्रमीयते 'उस्सेहपमाणतो मिणसु देह'मिति वचनात् [ उत्सेधाङ्गुलप्रमाणेन मिनुहि देहं ] तत इन्द्रियाण्यप्युच्छ्रयाङ्गुलेन मातुं युज्यन्ते नात्माङ्गुलेनेति, तदयुक्तम्, जिह्वादीनामुच्छ्रयाङ्गुलेन पृथुत्वप्रमित्यभ्युपगमे त्रिगव्यूतादीनां मनुष्यादीनां रसाभ्यवहारोच्छेदप्रसक्तेः, तथाहि—त्रिगव्यूतानां मनुष्याणां षड्गव्यूतानां च हस्त्यादीनां स्वस्वशरीरानुसारितया अतिविशालानि मुखानि जिह्वाश्च, ततो यद्युच्छ्रयाङ्गुलेन तेषां क्षुरप्राकारतयोक्तस्याभ्यन्तरनिर्वृत्त्यात्मकस्य जिह्वेन्द्रियस्याङ्गुलपृथक्त्वलक्षणो विस्तारः परिगृह्यते तदाऽल्पतया न तत्सर्वां जिह्वां व्याप्नुयात्, सर्वव्यापित्वाभावे च योऽसौ बाहल्येन सर्वा-

त्मना जिह्वाया रसवेदनलक्षणः प्रतिप्राणि प्रसिद्धो व्यवहारः स व्यवच्छेदमाप्नुयाद्, एवं घ्राणादिविषयेऽपि यथायोगं गन्धादिव्यवहारोच्छेदो भावनीयः, तस्मादात्माङ्गुलेन जिह्वादीनां पृथुत्वमवसेयं नोच्छ्रयाङ्गुलेनेति, आह च भाष्यकृत्—"इंदियमाणेवि तयं भयणिज्जं जं तिगाउयाईणं। जिब्भिदियाइमाणं संववहारे विरुज्झेज्झा ॥ १ ॥" अस्या अक्षरगमनिका—'तत्' उच्छ्रयाङ्गुलमिन्द्रियमानेऽपि आस्तामिन्द्रियविषयपरिमाणचिन्तायामित्यपिशब्दार्थः, 'भजनीयं' विकल्पनीयं, क्वापि न गृह्यते इत्यर्थः, किमुक्तं भवति ?—स्पर्शनेन्द्रियपृथुत्वपरिमाणचिन्तायां ग्राह्यमन्येन्द्रियपृथुत्वपरिमाणचिन्तायां न ग्राह्यं, तेषामात्माङ्गुलेन परिमाणकरणात् इति, कथमेतदवसेयं इति चेत् ? अतआह—'यत्' यस्मात् सर्वेषामपि इन्द्रियाणां उच्छ्रयाङ्गुलेन परिमाणकरणे त्रिगव्यूतादीनामादिशब्दात् द्विगव्यूतादिपरिग्रहो जिह्वेन्द्रियादिमानं सूत्रोक्तं संव्यवहारे विरुध्येत, यथा च विरुध्यते तथाऽनन्तरमेव भावितमिति। सम्प्रति कतिप्रदेशावगाहनाद्वारं प्रतिपादयति—

सोइंदिए णं भंते ! कतिपदेसोगाढे पं० ?, गो० ! असंखेज्जपएसोगाढे पं०, एवं जाव फासिंदिए। एएसि णं भंते ! सोतिंदियचक्खिदियघाणिंदियजिब्भिदियफासिंदियाणं ओगाहणट्ठयाए पएसट्ठयाए ओगाहणपएसट्ठयाए कतरे२हिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गो० ! सव्वत्थोवे चक्खिदिते ओगाहणट्ठयाते सोतिंदिए ओगाहणट्ठयाते संखेज्जगुणे घाणिंदिए ओगाहणट्ठयाते संखेज्जगुणे जिब्भिदिए ओगाहणट्ठयाए असंखेज्जगुणे फासिंदिए ओगाहणट्ठयाए

संखेज्जगुणे पदेसट्ठयाते सव्वत्थोवे चक्खिदिए पदेसट्ठयाए सोतिंदिए पएसट्ठयाए संखेज्जगुणे घाणिंदिए पएसट्ठयाए संखिज्जगुणे जिब्भिदिए पएसट्ठयाए असंखेज्जगुणे फासिंदिए पएसट्ठयाए संखेज्जगुणे ओगाहणपदेसट्ठयाए सव्वत्थोवे चक्खिदिए ओगाहणट्ठयाए सोतिंदिए ओगाहणट्ठयाए असंखेज्जगुणे घाणिंदिए ओगाहणट्ठयाए संखिज्जगुणे जिब्भिदिए ओगाहणट्ठयाए असंखेज्जगुणे फासिंदिए ओगाहणट्ठयाए संखिज्जगुणे फासिंदियस्स ओगाहणट्ठयाहिंतो चक्खिदिए पएसट्ठयाए अणंतगुणे सोतिंदिए पएसट्ठयाए संखेज्जगुणे घाणिंदिए पएसट्ठयाए संखिज्जगुणे जिब्भिदिए पएसट्ठयाए असंखेज्जगुणे फासिंदिए पदेसट्ठयाते संखेज्जगुणे, सोतिंदियस्स णं भंते! केवइया कक्खडगुरुयगुणा पं० ?, गो०! अणंता कक्खडगुरुयगुणा पं०, एवं जाव फासिंदियस्स, सोतिंदियस्स णं भंते! केवइया मउयलहुयगुणा पं०?, गो०!, अणंता मउयलहुयगुणा पं०, एवं जाव फासिंदियस्स। एतेसि णं भंते! सोइंदियचक्खिदियघाणिंदियजिब्भिदियफासिंदियाणं कक्खडगुरुयगुणाणं मउयलहुयगुणाण य कयरे२हिंतो अप्पा वा ४ ?, गो०! सव्वत्थोवा चक्खिदियस्स कक्खडगरुयगुणा सोतिंदियस्स कक्खडगरुयगुणा अणंतगुणा घाणिंदियस्स कक्खडगरुयगुणा अणंतगुणा जिब्भिदियस्स कक्खडगरुयगुणा अणंतगुणा फासिंदियस्स कक्खडगरुयगुणा अणंतगुणा, मउयलहुयगुणाणं सव्वत्थोवा फासिंदियस्स मउयलहुयगुणा जिब्भिदियस्स मउयलहुयगुणा अनंतगुणा घाणिंदियस्स मउयलहुयगुणा अणंतगुणा सोतिंदियस्स मउयलहुयगुणा अणंतगुणा चक्खिदियस्स मउयलहुयगुणा अणंतगुणा, कक्खडगरुयगुणाणं मउयलहुयगुणाण य सव्वत्थोवा चक्खिदियस्स कक्खडगुरुयगुणा सोतिंदियस्स कक्खडगरुयगुणा अणंतगुणा घाणिंदियस्स कक्खडगरुयगुणा अणंतगुणा जिब्भिदियस्स कक्खडगुरुयगुणा अणंत-

गुणा फासिंदियस्स कक्खडगरुयगुणा अणंतगुणा फासिंदियस्स कक्खडगुरुयगुणेहिंतो तस्स चेव मउयलहुयगुणा अणंतगुणा जिब्भिंदियस्स मउयलहुयगुणा अणंतगुणा घाणिंदियस्स मउयलहुयगुणा अणंतगुणा सोतिंदियस्स मउयलहुयगुणा अणंतगुणा चक्खिंदियस्स मउयलहुयगुणा अणंतगुणा ( सूत्रं १९२ )

'सोइंदिए णं भंते !' इत्यादि निगदसिद्धं, अल्पबहुत्वद्वारमाह—'एएसि णं भंते !' इत्यादि, सर्वस्तोकं चक्षुरिन्द्रियमवगाहनार्थतया, किमुक्तं भवति ?—सर्वस्तोकप्रदेशावगाढं चक्षुरिन्द्रियं, ततः श्रोत्रेन्द्रियमवगाहनार्थतया संख्येयगुणमतिप्रभूतेषु प्रदेशेषु तस्यावगाहनाभावात्, ततोऽपि घ्राणेन्द्रियमवगाहनार्थतया सङ्ख्येयगुणमतिप्रभूतेषु प्रदेशेषु तस्यावगाहनोपपत्तेः, ततोऽपि जिह्वेन्द्रियमवगाहनार्थतया असङ्ख्येयगुणं, तस्याङ्गुलपृथक्त्वपरिमाणविस्तारात्मकत्वात्, यस्तु दृश्यते पुस्तकेषु पाठः सङ्ख्येयगुणं इति सोऽपपाठो, युक्त्यनुपपन्नत्वात्, तथाहि—चक्षुरादीनि त्रीण्यपीन्द्रियाणि प्रत्येकमङ्गुलासङ्ख्येयभागविस्तारात्मकानि, जिह्वेन्द्रियं अङ्गुलपृथक्त्वविस्तारमतोऽसङ्ख्येयगुणमेव तदुपपद्यते न तु सङ्ख्येयगुणमिति, ततः स्पर्शनेन्द्रियं सङ्ख्येयगुणं, तथाहि—अङ्गुलपृथक्त्वप्रमाणविस्तारं जिह्वेन्द्रियं, पृथक्त्वं द्विप्रभृत्यानवभ्यः स्पर्शनेन्द्रियं तु शरीरप्रमाणमिति सुमहदपि तदुपपद्यते सङ्ख्येयगुणमिति, यस्तु बहुषु पुस्तकेषु दृश्यते पाठोऽसङ्ख्येयगुणमिति सोऽपपाठो, युक्तिविकलत्वात्, तथाहि—आत्माङ्गुलपृथक्त्वपरिमाणं जिह्वेन्द्रियं शरीरपरिमाणं तु स्पर्शनेन्द्रियं शरीरं तूत्कर्षतोऽपि लक्षयोजनप्रमाणं ततः कथमसङ्ख्येयगुणमुपपद्यते इति ?, अनेनैव च क्रमेण प्रदेशार्थ-

तथाऽपि सूत्रं भावनीयं, उक्तप्रकारेणैव चोभयसूत्रमपि, यानि कर्कशगुरुगुणादिसूत्राणि तानि पाठसिद्धानि, नवरमल्पबहुत्वसूत्रे चक्षुःश्रोत्रघ्राणजिह्वास्पर्शनेन्द्रियाणां यथोत्तरं कर्कशगुरुगुणा अमीपामेव पश्चानुपूर्व्या यथापूर्वं मृदुलघुगुणा अनन्तगुणास्तथैवो(वयथो)त्तरं कर्कशतया यथापूर्वं चातिकोमलतयोपलभ्यमानत्वात्, युगपदुभयाल्पबहुत्वसूत्रे फासिंदियकक्खडगुरुयगुणेहिंतो तस्स चेव मउयलहुयगुणा अणंतगुणा' इति, शरीरे हि कतिपया एव प्रदेशा उपरिवर्त्तिनः शीतातपादिसम्पर्कतः कर्कशा वर्त्तन्ते अन्ये तु बहवस्तदन्तर्गता अपि मृदव इति घटन्ते स्पर्शनेन्द्रियस्य कर्कशगुरुगुणेभ्यो मृदुलघुगुणा अनन्तगुणा इति । अमून्येव संस्थानादीन्यल्पबहुत्वपर्यन्तानि द्वाराणि नैरयिकेषु चिन्तयति—

नेरइयाणं भंते! कइ इंदिया पं० ?, गो०! पंच, तं०—सोतिंदिए जाव फासिंदिए, नेरइयाणं भंते! सोतिंदिए किंसंठिए पं० ?, गो०! कलंबुयासंठाणसंठिते पं० ?, एवं जहा ओहियाणं वत्तवया भणिता तहेव नेरइयाणंपि जाव अप्पाबहुयाणि दोण्णि, नवरं नेरइयाणं भंते! फासिंदिए किंसंठिए पं० ?, गो०! दुविधे पं०, तं०—भवधारणिज्जे य उत्तरवेउव्विते य, तत्थ णं जे से भवधारणिज्जे से णं हुंडसंठाणसंठिते पं०, तत्थ णं जे से उत्तरवेउव्विते सेवि तहेव, सेसं तं चेव ॥ असुरकुमाराणं भंते! कइ इंदिया पं० ?, गो०! पंच, एवं जहा ओहियाणि जाव अप्पाबहुगाणि दोण्णिवि, नवरं फासिंदिए दुविधे पण्णत्ते, तं०—भवधारणिज्जे य उत्तरवेउव्विते य, तत्थ णं जे से भवधारणिज्जे से णं समचउरंससंठाणसंठिते पं०, तत्थ

णं जे से उत्तरवेउव्विते से णं णाणासंठाणसंठिते, सेसं तं चेव एवं जाव थणियकुमाराणं ॥ पुढविकाइयाणं भंते ! कति इंदिया पं० ?, गो० ! एगे फासिंदिए पं०, पुढविकाइयाणं भंते ! फासिंदिते किंसंठाणसंठिते पं० ?, गो० ! मसूरचंदसंठाणसंठिते पण्णत्ते, पुढविकाइयाणं भंते ! फासिंदिते केवइयं बाहल्लेणं पं० ?, गो० ! अंगुलस्स असंखेज्जइभागं बाहल्लेणं पं०, पुढविकाइयाणं भंते ! फासिंदिए केवतितं पोहत्तेणं पं० ?, गो० ! सरीरप्पमाणमेत्ते पोहत्तेणं, पुढविकाइयाणं भंते ! फासिंदिए कतिपदेसिते पं० ?, गो० ! अणंतपदेसिते पं०, पुढविकाइयाणं भंते ! फासिंदिते कतिपदेसोगाढे पं० ?, गो० ! असंखेज्जपएसोगाढे पं० । एतेसि णं भंते ! पुढविकाइयाणं फासिंदियस्स ओगाहणट्ठयाए पएसट्ठयाए ओगाहणपएसट्ठाए कयरे२हिंतो अप्पा वा ४ ?, गो० ! सव्वत्थोवे पुढविकाइयाणं फासिंदिए ओगाहणट्ठयाते ते चेव पदेसट्ठयाते अणंतगुणे, पुढविकाइयाणं भंते ! फासिंदियस्सं केवइया कक्खडगरुयगुणा पं० ?, गो० ! अणंता, एवं मउयलहुयगुणावि, एतेसि णं भंते ! पुढविकाइयाणं फासिंदियस्स कक्खडगरुयगुणाणं मउयलहुयगुणाण य कयरे२हिंतो अ० ४ ?, गो० ! सव्वत्थोवा पुढविकाइयाणं फासिंदियस्स कक्खडगरुयगुणा तस्स चेव मउयलहुयगुणा अणंतगुणा । एवं आउकाइयाणवि जाव वणप्फइकाइयाणं, णवरं संठाणे इमो विसेसो दट्ठव्वो—आउकाइयाणं थिबुगबिंदुसंठाणसंठिते पं०, तेउकाइयाणं सूइकलावसंठाणसंठिते पं०, वाउकाइयाणं पडागासंठाणसंठिते पं०, वणप्फइकाइयाणं णाणासंठाणसंठिते पं० । बेइंदियाणं भंते ! कति इंदिया पं० ?, गो० ! दो इंदिया पं०, तं०—जिब्भिदिए फासिंदिए, दोण्हंपि इंदियाणं संठाणं बाहल्लं पोहत्तं पदेसं ओगाहणा य जहा ओहियाणं भणिता तहा भाणियव्वा, णवरं फासिंदिए हुंडसंठाणसंठिते पण्णत्तेत्ति इमो विसेसो, एतेसि णं

भंते ! बेइंदियाणं जिब्भिदियफासिंदियाणं ओगाहणट्ठयाते पदेसट्ठयाते ओगाहणपदेसट्ठयाते कयरे२हिंतो अ० ४?, गो० ! सव्वत्थोवे बेइंदियाणं जिब्भिदिए ओगाहणट्ठयाते फासिंदिए ओगाहणट्ठयाते संखेज्जगुणे पदेसट्ठयाते सव्वत्थोवे बेइंदियाणं जिब्भिदिते पएसट्ठयाए फासिंदिए संखेज्जगुणे ओगाहणपएसट्ठयाते सव्वत्थोवे बेइंदियस्स जिब्भिदिए ओगाहणट्ठयाते फासिंदिए ओगाहणट्ठयाते संखेज्जगुणे फासिंदियस्स ओगाहणट्ठयातेहिंतो जिब्भिदिए पएसट्ठयाते अणंतगुणा फासिंदिए पएसट्ठयाए संखेज्जगुणा, बेइंदियाणं भंते! जिब्भिदियस्स केवइया कक्खडगरुयगुणा पं०? गो० ! अणंता, एवं फासिंदियस्सवि, एवं मउयलहुयगुणावि, एतेसि णं भंते ! बेइंदियाणं जिब्भिदियफासिंदियाणं कक्खडगरुयगुणाणं मउयलहुयगुणाण कक्खडगुरुयगुणमउयलहुयगुणाण य कतरे२हिंतो अ० ४?, गो० ! सव्वत्थोवा बेइंदियाणं जिब्भिदियस्स कक्खडगरुयगुणा फासिंदियस्स कक्खडगरुयगुणा अणंतगुणा, फासिंदियस्स कक्खडगरुयगुणेहिंतो तस्स चेव मउयलहुय० अणंतगुणा जिब्भिदियस्स मउयलहुयगुणा अणंतगुणा, एवं जाव चउरिंदियत्ति, नवरं इंदियपरिवुड्ढी कातव्वा, तेइंदियाणं घाणिंदिए थोवे चउरिंदियाणं चक्खिंदिए थोवे, सेसं तं चेव ॥ पंचिंदियतिरिक्खजोणियाणं मणूसाण य जहा नेरइयाणं, णवरं फासिंदिए छव्विहसंठाणसंठिते पं०, तं०—समचउरंसे निग्गोह परिमंडले सादी खुज्जे वामणे हुंडे ॥ वाणमंतरजोइसियवेमाणियाणं जहा असुरकुमाराणं (सूत्रं १९३)

'नेरइयाणं भंते !' इत्यादि सुगमं, नवरं 'नेरइयाणं भंते ! फासिंदिए किंसंठिए पण्णत्ते' इत्यादि, द्विविधं हि नैरयिकाणां शरीरं—भवधारणीयमुत्तरवैक्रियं च, तत्र भवधारणीयं तेषां भवस्वभावत एव निर्मूलविलुप्तपक्षोत्पाटितस-

कलग्रीवादिरोमपक्षिशरीरवत् अतिबीभत्ससंस्थानोपेतं, यदप्युत्तरवैक्रियं तदपि हुंडसंस्थानमेव, तथाहि—यद्यपि ते वयमतिसुन्दरं शरीरं विकुर्विष्याम इत्यभिसन्धिना शरीरमारभन्ते तथापि तेषामत्यन्ताशुभतथाविधनामकर्मोदयाद्-तीवाशुभतरमेवोपजायते इति । असुरकुमारसूत्रे भवधारणीयं समचतुरस्रसंस्थानं तथाभवस्वाभाव्यात्, उत्तरवैक्रियं तु नानासंस्थितं; स्वेच्छया तस्य निष्पत्तिभावात् । पृथिव्यादिविषयाणि तु सूत्राणि सुप्रतीतान्येव । सम्प्रति स्पृष्टद्वारमाह—

पुट्ठाइं भंते ! सद्दाइं सुणेति अपुट्ठाइं सद्दाइं सुणेति ?, गो० ! पुट्ठाइं सद्दाइं सुणेति नो अपुट्ठाइं सद्दाइं सुणेति, पुट्ठाइं भंते ! रूवाइं पासति अपुट्ठाइं पासति ?, गो० ! नो पुट्ठाइं रूवाइं पासति, अपुट्ठाइं रूवाइं पासति, पुट्ठाइं भंते ! गंधाइं अग्घाइ अपुट्ठाइं गंधाइं अग्घाइ ?, गो० ! पुट्ठाइं गंधाइं अग्घाइ नो अपुट्ठाइं अग्घाइ, एवं रसाणवि फासाणवि, णवरं रसाइं अस्साएति फासाइं पडिसंवेदेतित्ति अभिलावो कायव्वो। पविट्ठाइं भंते ! सद्दाइं सुणेति अपविट्ठाइं सद्दाइं सुणेति ?, गो० ! पविट्ठाइं सद्दाइं सुणेति नो अपविट्ठाइं सद्दाइं सुणेति, एवं जहा पुट्ठाणि तहा पविट्ठाणिवि । ( सूत्रं १९४ )

'पुट्ठाइं भंते ! सद्दाइं सुणेति' इत्यादि, प्राकृतत्वात् सूत्रे शब्दस्य नपुंसकत्वं, अन्यथा पुंस्त्वं प्रतिपत्तव्यं, स्पृष्टान् भदन्त ! श्रोत्रेन्द्रियमिति कर्तृपदं सामर्थ्याल्लभ्यते शब्दान् शृणोति, तत्र स्पृश्यन्ते इति स्पृष्टास्तान् तनौ रेणुमिवालिङ्गितमात्रानित्यर्थः, 'पुट्ठं रेणुं व तणुंमि' [ स्पृष्टं तनौ रेणुरिव ] इति वचनात्, शब्द्यन्ते–प्रतिपाद्यन्ते अर्था

एभिरिति शब्दाः तान् शृणोति—गृह्णाति उपलभते इतियावत्, किमुक्तं भवति ?—स्पृष्टमात्राण्येव शब्दद्रव्याणि श्रोत्रेन्द्रियमुपलभते न तु घ्राणेन्द्रियादिवत् बद्धस्पृष्टानीति, कस्मादिति चेत्, उच्यते, इह शब्दद्रव्याणि घ्राणेन्द्रियादिविषयभूतेभ्यो द्रव्येभ्यः सूक्ष्माणि तथा बहूनि तथा तत्क्षेत्रभाविशब्दयोग्यद्रव्यवासकानि च, ततः सूक्ष्मत्वादतिप्रभूतत्वात्तदन्यद्रव्यवासकत्वाच्चात्मप्रदेशैः स्पृष्टमात्राण्यपि निर्वृतीन्द्रियमध्ये प्रविश्य झटित्युपकरणेन्द्रियमभिव्यञ्जयन्ति, श्रोत्रेन्द्रियं च घ्राणेन्द्रियाद्यपेक्षया स्वविषयपरिच्छेदे पटुतरं, ततः स्पृष्टमात्राण्यपि तानि श्रोत्रेन्द्रियमुपलभते, नास्पृष्टान्—सर्वथाऽऽत्मप्रदेशैः सम्बन्धमप्राप्तान्, श्रोत्रेन्द्रियस्य प्राप्तविषयपरिच्छेदस्वभावत्वात्, यथा च श्रोत्रेन्द्रियस्य प्राप्तकारिता तथा नन्द्यध्ययनटीकादौ चर्चितमिति ततोऽवधार्यं, 'पुट्ठाइं भंते ! रूवाइं' इत्यादि सुगमं, निर्वचनमाह—गौतम ! न स्पृष्टानि रूपाणि पश्यति चक्षुः किन्त्वस्पृष्टानि, चक्षुषोऽप्राप्तकारित्वात्, तच्चाप्राप्तकारित्वं तत्त्वार्थटीकादौ सविस्तरेण प्रसाधितमिति ततोऽवधारणीयं, गन्धादिविषयाणि सूत्राणि सुप्रसिद्धानि, नवरं स्पृष्टान् गन्धान् आजिघ्रति इत्यादि यद्यप्युक्तं तथापि बद्धस्पृष्टानिति द्रष्टव्यम्, यत उक्तमावश्यकनिर्युक्तौ—"पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु । गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥१॥" [स्पृष्टं शृणोति शब्दं रूपं पुनः पश्यत्यस्पृष्टमेव । गन्धं रसं च स्पर्शं च बद्धस्पृष्टं व्याकुर्यात् ॥ १ ॥ ] इति, तत्र स्पृष्टानिति पूर्ववत् बद्धानिति आत्मप्रदेशैरात्मीकृतान् 'बद्धमप्पीकयं पएसेहिं' [ बद्धमात्मीकृतं प्रदेशैः ] इति वचनात्, विशेषणसमासश्च, बद्धाश्च ते स्पृष्टाश्च बद्धस्पृष्टास्तान्, इह स्पृष्टाः

स्पर्शमात्रेणापि भवन्ति यथा शब्दस्ततः स्पर्शमात्रव्यवच्छेदेन स्पर्शविशेषप्रतिपत्तिरव्याहता स्यादिति बद्धग्रहणं, बद्धरूपा ये स्पृष्टास्तान् परिच्छिनत्ति, नान्यानि, कस्मादेवमिति चेत् ?, उच्यते, गन्धादिद्रव्याणां बादरत्वात् अल्पत्वादभावुकत्वाच्च घ्राणादीन्द्रियाणामपि च श्रोत्रेन्द्रियापेक्षया मन्दशक्तिकत्वादिति । सम्प्रति प्रविष्टाप्रविष्टविषयचिन्तां कुर्वन्नाह—'पविट्ठाइं भंते ! सद्दाइं' इत्यादि पाठसिद्धं, नवरं स्पर्शस्तनौ रेणुरिवापि भवति प्रवेशो मुखे कवलस्येवेति शब्दार्थस्य भिन्नत्वात् भिन्नविषयता स्पृष्टप्रविष्टसूत्राणामिति । सम्प्रति विषयपरिमाणनिरूपणार्थमाह—

सोतिंदियस्स णं भंते ! केवतिए विसए पण्णत्ते ?, गो० ! जहण्णेणं अंगुलस्स असंखेज्जतिभागो उक्कोसेणं बारसहिं जोअणेहिंतो अच्छिण्णे पोग्गले पुट्ठे पविट्ठातिं सद्दातिं सुणेति, चक्खिंदियस्स णं भंते ! केवतिए विसए पं० ?, गो० ! जहण्णेणं अंगुलस्स संखेज्जतिभागो उक्कोसेणं सातिरेगाओ जोयणसतसहस्साओ अच्छिण्णे पोग्गले अपुट्ठे अपविट्ठातिं रूवाइं पासइ, घाणिंदियस्स पुच्छा, गो० ! जहण्णेणं अंगुलअसंखेज्जतिभागो उक्कोसेणं णवहिं जोयणेहिंतो अच्छिण्णे पोग्गले पुट्ठे पविट्ठातिं गंधातिं अग्घाइ, एवं जिब्भिंदियस्सवि फासिंदियस्सवि ( सूत्रं १९५ )

'सोइंदियस्स णं भंते ! केवइए विसए पं०' इत्यादि, इह श्रोत्रादीनि प्राप्तविषयपरिच्छेदकत्वात् अङ्गुलासङ्ख्येयभागादप्यागतं शब्दादिद्रव्यं परिच्छिन्दन्ति, नयनं चाप्राप्तकारीति तत् जघन्यतोऽङ्गुलसङ्ख्येयभागाद्व्यवहितं परिच्छिनत्ति, किमुक्तं भवति ?—जघन्यतोऽङ्गुलसङ्ख्येयभागमात्रे व्यवस्थितं पश्यति न तु ततोऽप्यर्वाक्तरमिति, प्रतिप्राणि

प्रसिद्धश्चायमर्थः, तथा च नातिसन्निकृष्टमञ्जनरजोमलादिकं चक्षुः पश्यतीति, उक्तं च—"अवरमसंखेज्जंगुलभागातो नयणवज्जाणं ॥ संखेज्जंगुलभागो नयणस्स" [जघन्यमसङ्ख्येयाङ्गुलभागात् नयनवर्जानां सङ्ख्येयो भागो नयनस्य]इति, उत्कर्षतस्तु श्रोत्रेन्द्रियं द्वादशभ्यो योजनेभ्यः आगतान् अच्छिन्नान्—अव्यवहितान् नान्यैः शब्दान्तरैर्वातादिकैर्वा प्रतिहतशक्तिकानित्यर्थः पुद्गलान्, अनेन पौद्गलिकः शब्दो नाम्बरगुण इति प्रतिपादितं, यथा च शब्दस्य पौद्गलिकता तथा तत्त्वार्थटीकायां प्रपञ्चितमिति न भूयः प्रपञ्च्यते, स्पृष्टान्—स्पृष्टमात्रान् शब्दान् प्रविष्टान्—निर्वृतीन्द्रियमध्यप्रविष्टान् शृणोति न परतोऽप्यागतान्, कस्मादिति चेत् ?, उच्यते, परत आगतानां तेषां मन्दपरिणामत्वभावात्, तथाहि—परत आगताः खलु ते शब्दपुद्गलास्तथास्वाभाव्यान्मन्दपरिणामास्तथोपजायन्ते येन स्वविषयं श्रोत्रज्ञानं नोत्पादयितुमीश्वराः, श्रोत्रेन्द्रियस्यापि च तथाविधं अद्भुततरं बलं न विद्यते येन परतोऽपि आगतान् शब्दान् शृणुयादिति, चक्षुरिन्द्रियमुत्कर्षतः सातिरेकात् योजनशतसहस्रादारभ्याच्छिन्नान् कटकुड्यादिभिरव्यवहितान् पुद्गलान् अस्पृष्टान् दूरस्थितान् अत एवाप्रविष्टान् 'रूवाइं'ति रूपात्मकान् पश्यति, परतोऽव्यवहितस्यापि परिच्छेदे चक्षुषः शक्त्यभावात्, तच्चाङ्गुलमिह त्रिधा, तद्यथा—आत्माङ्गुलमुच्छ्रयाङ्गुलं प्रमाणाङ्गुलं च, तत्र "जे णं जया मणूसा तेसिं जं होइ माणरूवं तु। तं भणियमिहायंगुलमणिययमाणं पुण इमं तु ॥१॥" [ये यदा मनुष्यास्तेषां यद्भवति मानरूपं तु। तदेव भणितमिहात्माङ्गुलमनियतमानं पुनरिदं तु ॥१॥ ] इत्येवंरूपमात्माङ्गुलं "परमाणू तसरेणू रहरेणू अग्गयं

च वालस्स । लिक्खा जूया य जंवा, अट्ठगुणविवड्ढिया कमसो ॥ १ ॥" [ परमाणुस्त्रसरेणू रथरेणुरग्रकं च वालस्य । लिक्षा यूका च यवोऽष्टगुणविवृद्धाः क्रमशः ॥ १ ॥] इत्यादिरूपमुच्छ्रयाङ्गुलं, तृतीयं—'उस्सेहंगुलमेगं हवइ पमाणंगुलं सहस्सगुणं। तं चेव दुगुणियं खलु वीरस्सायंगुलं भणियं ॥१॥ [उत्सेधाङ्गुलादेकस्मात् भवति प्रमाणाङ्गुलं सहस्रगुणम् । तदेव द्विगुणितं वीरस्यात्माङ्गुलं भणितम् ॥ १ ॥ इत्येवं प्रमाणाङ्गुलं, तत्रात्माङ्गुलेन मीयते तत्काले वापीकूपादिकं वस्तु उच्छ्रयाङ्गुलेन नरतिर्यग्देवनैरयिकशरीराणि प्रमाणाङ्गुलेन पृथिवीविमानानि, उक्तं च—"आयंगुलेण वत्थुं उस्सेहपमाणतो मिणसु देहं । नगपुढविविमाणाइं मिणसु पमाणंगुलेणं तु ॥ १ ॥ [ आत्माङ्गुलेन वस्तु उत्सेधप्रमाणतो मिनु देहम् । नगपृथ्वीविमानानि मिनु प्रमाणाङ्गुलेनैव ॥ १ ॥ ] तत्रेदमिन्द्रियविषयपरिमाणं किमात्माङ्गुलेनाहोश्वित् उच्छ्रयाङ्गुलेन उत प्रमाणाङ्गुलेन ?, उच्यते, आत्माङ्गुलेन, तथा चाह चक्षुरिन्द्रियविषयपरिमाणचिन्तायां भाष्यकृत्—"अप्पत्तकारि नयणं मणो य नयणस्स विसयपरिमाणं। आयंगुलेण लक्खं अइरित्तं जोअणाणं तु ॥१॥" [ अप्राप्तकारि नयनं मनश्च नयनस्य विषयपरिमाणम् । आत्माङ्गुलेन लक्षमतिरिक्तं योजनानां तु ॥१॥] ननु देहप्रमाणमुच्छ्रयाङ्गुलेन तु क्रियते देहाश्रितानि चेन्द्रियाणि ततस्तेषां विषयपरिमाणमपि उच्छ्रयाङ्गुलेन कर्त्तुमुचितं, कथमुच्यते आत्माङ्गुलेनेति ?, नैष दोषः, यद्यपि हि नाम देहाश्रितानीन्द्रियाणि तथापि तेषां विषयपरिमाणमात्माङ्गुलेनैव देहादन्यत्वाद्विषयपरिमाणस्य, तथा चामुमेवार्थमाक्षेपपुरस्सरं भाष्यकृदप्याह—"नणु भणियमुस्सयंगुलपमाणतो

जाव देहमाणाइ । देहपमाणं तं चिय नउ इंदियविसयपरिमाणं ॥ १ ॥" [ ननु भणितमुच्छ्रयाङ्गुलप्रमाणतो यावत् (जीव) देहमानानि । देहप्रमाणमेव तत्, नत्विन्द्रियविपयपरिमाणं ॥१॥] अत्र 'देहपमाणं तं चिय' इति यत्तत्र उच्छ्रयाङ्गुलमेयत्वेनोक्तं तद् देहप्रमाणमात्रमेव, नत्विन्द्रियविपयपरिमाणं, तस्यात्माङ्गुलप्रमेयत्वादिति, अथ यदि विषयपरिमाणमिन्द्रियाणामुच्छ्रयाङ्गुलेन स्यात्ततः को दोष आपद्येत ?, उच्यते, पञ्चधनुःशतादिमनुष्याणां विषयव्यवहारव्यवच्छेदः, तथाहि—यद्भरतस्यात्माङ्गुलं तत्किल प्रमाणाङ्गुलं, तच्च प्रमाणाङ्गुलमुच्छ्रयाङ्गुलसहस्रेण भवति "उस्सेहंगुलमेगं हवइ पमाणंगुलं सहस्सगुण"मिति वचनात् [उच्छ्रयाङ्गुलादेकस्मात् भवति प्रमाणांगुलं सहस्रगुणम् ] ततो भरतसगरादिचक्रवर्त्तिनां या अयोध्यादयो नगर्यो ये तु स्कन्धावारा आत्माङ्गुलेन द्वादशयोजनायामतया सिद्धान्ते प्रसिद्धास्ते उच्छ्रयाङ्गुलप्रमिता अनेकानि योजनसहस्राणि स्युः, तथा च सति तत्रायुधशालादिषु ताडितभेर्यादिशब्दश्रवणं न सर्वेषामापद्येत, "बारसहिं जोयणेहिं सोयं अभिगेण्हए सद्द"मिति वचनात् [द्वादशभ्यो योजनेभ्यः श्रोत्रमभिगृह्णाति शब्दम् ॥ ] अथ समग्रनगरव्यापी समस्तस्कन्धावारव्यापी च विजयढकादिशब्द आगमे प्रतिपाद्यते तथैव च जनव्यवहारः, तत एवमागमप्रसिद्धः पञ्चधनुःशतादिमनुष्याणां विषयव्यवहारोच्छेदो मा प्रापदित्यात्माङ्गुलेनेन्द्रियाणां विषयपरिमाणमवसातव्यं नोच्छ्रयाङ्गुलेन, तथा चाह भाष्यकृत्—"जं तेणं पंच(पण)धणुसयनरादिविसयववहारवोच्छेओ । पावइ सहस्सगुणियं जेण पमाणंगुलं तत्तो ॥ १ ॥" [ यत्तेन पञ्चधनुःशतनरादिव्यवहारव्युच्छेदः । प्राप्नोति

सहस्रगुणितं येन प्रमाणाङ्गुलं ततः ॥ १ ॥] अत्र तस्मादात्माङ्गुलेनैवेन्द्रियाणां विषयपरिमाणं नोत्सेधाङ्गुलेनेति उपसंहारवाक्यं स्वतः परिभावनीयं, यदप्युक्तं प्राक् 'देहाश्रितानीन्द्रियाणीति तेषां विषयपरिमाणमुच्छ्रयाङ्गुलेने'ति, तदप्ययुक्तं, इन्द्रियाणामपि केषाञ्चित् पृथुत्वस्य आत्माङ्गुलेन मीयमानत्वाभ्युपगमात्, भावितं चैतत्प्रागपि इन्द्रियप्रमाणचिन्तायां 'भयणिज्ज'मित्यादिभाष्यकारवचनावष्टम्भनेनेति, तस्मात् सर्वमिन्द्रियविषयपरिमाणमात्माङ्गुलेनैवेति स्थितं, ननु भवत्वात्माङ्गुलेन विषयपरिमाणं तथाप्यधिकृतसूत्रोक्तं चक्षुरिन्द्रियविषयपरिमाणं न घटते, अधिकस्यापि तद्विषयपरिमाणस्यागमान्तरे प्रतिपादनात्, तथाहि—पुष्करवरद्वीपार्द्धे मानुषोत्तरपर्वतसमीपवर्त्तिनो मनुष्याः कर्कसङ्क्रान्तौ प्रमाणाङ्गुलनिष्पन्नैः सातिरेकैरेकविंशतियोजनलक्षैर्व्यवस्थितमादित्यमवलोकमानाः प्रतिपाद्यन्ते शास्त्रान्तरे, तथा च तद्ग्रन्थः—"इगवीसं खलु लक्खा चउतीसं चेव तह सहस्साइं। तह पंचसया भणिया सत्तत्तीसाए अतिरित्ता ॥ १ ॥ इइ नयणविसयमाणं पुक्खरदीवद्धवासिमणुयाणं। पुव्वेण य अवरेण य पिहं पिहं होइ मणुयाणं ॥ २ ॥"इत्यादि [ एकविंशतिः खलु लक्षाश्चतुर्विंशतिश्चैव तथा सहस्राणि। तथा पञ्च शतानि भणितानि सप्तविंशत्यातिरिक्तानि ॥ १ ॥ इति नयनविषयमानं पुष्करवरद्वीपार्धवासिमनुष्याणां। पूर्वस्यामपरस्यां च पृथक् पृथक् भवति मनुष्याणां॥२॥] ततः कथमधिकृतसूत्रमात्माङ्गुलेनापि घटते ?, प्रमाणाङ्गुलेनापि व्यभिचारभावात्, उक्तं च—"लक्खेहिँ एकवीसाए साइरेगेहिं पुक्खरद्धंमि। उदये पेच्छंति नरा सूरं उक्कोसए दिवसे ॥१॥ णयणिंदियस्स तम्हा विसयपमाणं

जहा सुए भणियं। आउस्सेहपमाणंगुलाण एक्केणवि न जुत्तं॥२॥" [लक्षेष्वेकविंशतौ सातिरेकेषु पुष्करार्धे। उदये प्रेक्षन्ते नराः सूर्यं उत्कृष्टे दिवसे ॥ १ ॥ नयनेन्द्रियस्य तस्मात् विषयप्रमाणं यथा श्रुते भणितं । आत्मोत्सेधप्रमाणाङ्गुलानामेकेनापि न युक्तं ॥ २ ॥] सत्यमेतत्, केवलमिदं सूत्रं प्रकाश्यविषयं द्रष्टव्यं, न तु प्रकाशकविषयं, ततः प्रकाशकेऽधिकतरमपि विषयपरिमाणं न विरुध्यते इति न कश्चिद्दोषः, कथमेवंविधोऽर्थोऽवसीयते इति चेत्?, उच्यते, पूर्वसूरिकृतव्याख्यानात्, सकलमपि हि कालिकश्रुतं पूर्वसूरिकृतव्याख्यानानुसारेणैव व्याख्यानयन्ति महाधियो, न यथाऽक्षरमात्रसन्निवेशं, पूर्वगतसूत्रार्थसङ्ग्रहपरतया कालिकश्रुतस्य क्वचित्सङ्क्षिप्तस्याप्यर्थस्य महता विस्तरेण क्वचिद्विस्तरवतोऽप्यतिसङ्क्षेपेणाभिधाने अर्वाक्तनैः स्वमतियथावस्थितार्थतया ज्ञातुमशक्यत्वादत एवोक्तमिदमन्यत्र—"जं जह भणियं सुत्ते तहेव जइ तं वियालणा नत्थि । किं कालियाणुओगो दिट्ठो दिट्ठिप्पहाणेहिं ? ॥ १ ॥" [यद्यथा भणितं सूत्रे तथैव यदि तद्विचालना नास्ति । किं कालिकानुयोगो दृष्टः प्रधानदृष्टिभिः ? ॥ १ ] तस्मात् पूर्वसूरिकृतव्याख्यानान्नाधिकृतग्रन्थविरोधः, आह च भाष्यकृत्—"सुत्ताभिप्पाओऽयं पयासणिज्जे तयं नउ पयासे । वक्खाणाउ विसेसो नहि संदेहादलक्खणया ॥१॥" इति [ सूत्राभिप्रायोऽयं प्रकाशनीये तकत् नतु प्रकाशके । व्याख्यानाद्विशेषो नैव संदेहादलक्षणता ॥ १ ॥] तथा घ्राणेन्द्रियजिह्वेन्द्रियस्पर्शनेन्द्रियाणि गन्धादीनुत्कर्षतो नवयोजनेभ्य आगतान् अच्छिन्नान्—द्रव्यान्तरैरप्रतिहतशक्तिकान् परिच्छिन्दन्ति न परत आगतान्, परत आगतानां मन्दपरिणा-

मत्वभावात्, घ्राणेन्द्रियादीनां च तथारूपाणामपि [दूरागतानां गन्धादिरूपाणामपि] तेषां परिच्छेदं कर्त्तुमशक्यत्वात्, आह च भाष्यकृत्—"बारसहिंतो सोत्तं सेसाणं नवहि जोयणेहिंतो। गिण्हंति पत्तमत्थं एत्तो परतो न गिण्हंति ॥ १ ॥ दव्वाण मंदपरिणामियाएँ परतो न इंदियबलंपि" इति [द्वादशभ्यः श्रोत्रं शेषाणां नवभ्यो योजनेभ्यः। गृह्णन्ति प्राप्तमर्थं अस्मात् परतो न गृह्णन्ति ॥ १॥ द्रव्याणां मन्दपरिणामितया परतो नेन्द्रियबलमपि]। इन्द्रियविषयाधिकारे इदमपि सूत्रम्—

अणगारस्स णं भंते! भावियप्पणो मारणंतियसमुग्घाएणं समोहयस्स जे चरमा णिज्जरापोग्गला सुहुमा णं ते पोग्गला पण्णत्ता समणाउसो! सव्वं लोगंपि य णं ते ओगाहित्ता णं चिट्ठंति?, हंता! गो०! अणगारस्स भावियप्पणो मारणांतियसमुग्घाएणं समोहयस्स जे चरमा णिज्जरापोग्गला सुहुमा णं ते पोग्गला पण्णत्ता समणाउसो! सव्वं लोगंपि य णं ओगाहित्ता णं चिट्ठंति। छउमत्थे णं भंते! मणूसे तेसिं णिज्जरापोग्गलाणं किं आणत्तं वा नाणत्तं वा ओमत्तं वा तुच्छत्तं वा गरुयत्तं वा लहुयत्तं वा जाणति पासति?, गो०! णो इणट्ठे समट्ठे, से केणट्ठेणं भंते! एवं वुच्चइ—छउमत्थे णं मणूसे तेसिं णिज्जरापोग्गलाणं णो किंचि आणत्तं वा णाणत्तं वा ओमत्तं वा तुच्छत्तं वा गरुयत्तं वा लहुयत्तं वा जाणइ पासइ?, देवेवि य णं अत्थेगतिए जे णं तेसिं निज्जरापोग्गलाणं नो किंचि आणत्तं वा ओमत्तं वा तुच्छत्तं वा गरुयत्तं वा लहुयत्तं वा जाणति पासति, से तेणट्ठेणं गो०! एवं वुचति—छउमत्थे णं मणूसे तेसिं णिज्जरापोग्गलाणं नो किंचि आणत्तं वा

जाव जाणंति पासंति, एवं सुहुमा णं ते पोग्गला पण्णत्ता समणाउसो!, सव्वलोगंपि य णं ते ओगाहित्ताणं चिट्ठंति । नेरइया णं भंते! निज्जरापोग्गले किं जाणंति पासंति आहारेंति उदाहु न याणंति न पासंति आहारेंति?, गो०! नेरइया णिज्जरापोग्गले न जाणंति न पासंति आहारेंति, एवं जाव पंचिंदियतिरिक्खजोणियाणं, मणूसा णं भंते! ते निज्जरापोग्गले किं जाणंति पासंति आहारंति उदाहु न याणंति न पासंति आहारंति?, गो०! अत्थेगतिया जाणंति पासंति आहारेंति, अत्थेगतिया न याणंति न पासंति आहारेंति, से केणट्ठेणं भंते! एवं वुच्चति—अत्थेगतिया जाणंति पासंति आहारेंति अत्थेगतिया न जाणंति न पासंति आहारेंति?, गो०! मणूसा दुविहा पण्णत्ता तंजहा—सण्णिभूया य असण्णिभूया य, तत्थ णं जे ते असण्णिभूया ते णं न याणंति न पासंति आहारेंति, तत्थ णं जे ते सण्णिभूया ते दुविहा पं०, तं०—उवउत्ता य अणुवउत्ता य, तत्थ णं जे ते अणुवउत्ता ते णं न याणंति न पासंति आहारेंति, तत्थ णं जे ते उवउत्ता ते णं जाणंति पासंति आहारेंति, से एएणट्ठेणं गो०! एवं वुच्चइ—अत्थेगतिया न याणंति न पासंति आहारेंति, अत्थेगतिया जाणंति पासंति आहारेंति । वाणमंतरजोइसिया जहा नेरइया । वेमाणिया णं भंते! ते निज्जरापोग्गले किं जाणंति पासंति आहारेंति?, जहा मणूसा, णवरं वेमाणिया दुविहा पं०, तं०—माइमिच्छद्दिट्ठीउववण्णगा य अमायिसम्मद्दिट्ठीउववण्णगा य, तत्थ णं जे ते माइमिच्छद्दिट्ठीउववण्णगा ते णं न याणंति न पासंति न आहारेंति, तत्थ णं जे ते अमायिसम्मद्दिट्ठिउववण्णगा ते दुविहा पं०, तं०—अणंतरोववण्णगा य परंपरोववण्णगा य, तत्थ णं जे ते अणंतरोववण्णगा ते णं न याणंति न पासंति आहारेंति, तत्थ णं जे ते परंपरोववण्णगा ते दुविहा पं०, तं०—पज्जत्तगा य अपज्जत्तगा य, तत्थ णं जे ते अप-

ज्जत्तगा ते णं न जाणंति न पासंति आहारेंति, तत्थ णं जे ते पज्जत्तगा ते दुविहा पं०, तं०—उवउत्ता य अणुवउत्ता य, तत्थ णं जे ते अणुवउत्ता ते णं न याणंति न पासंति आहारेंति, तत्थ णं जे ते उवउत्ता ते णं जाणंति पासंति आहारेंति, से एतेणट्ठेणं गो० ! एवं वुच्चति—अत्थेगतिया याणंति जाव अत्थेगतिता आहारेंति ( सूत्रं १९६ )

'अणगारस्स णं भंते !' इत्यादि, न विद्यते अगारं—गृहं द्रव्यतो भावतश्च यस्यासावनगारः—संयतस्ततस्तस्य, णमिति वाक्यालङ्कारे भदन्त ! 'भावियप्पणो' इति भावितो—वासित आत्मा ज्ञानदर्शनचारित्रैस्तपोविशेषैश्च येन स भावितात्मा तस्य मारणान्तिकसमुद्घातेन समवहतस्य ये चरमाः—शैलेशीकालान्त्यसमयभाविनो निर्जरापुद्गलाः—अपगतकर्मभावाः परमाणवः 'सुहुमा णं ते पोग्गला' इति णमिति निश्चये निपातानामनेकार्थत्वात् निश्चितमेतत् 'सूक्ष्माः' चक्षुरादीन्द्रियपथमतिक्रान्तास्ते पुद्गलाः प्रज्ञप्ता भगवद्भिः हे श्रमण ! आयुष्मन्, गौतमकृतं भगवतः सम्बोधनमेतत्, तथा निश्चितमेतत् सर्वलोकेऽपि पुद्गलाः स्पृष्ट्वा णं वाक्यालङ्कृतौ तिष्ठन्ति ?, एवं गौतमेन प्रश्ने कृते भगवानाह—'हंता ! गोयमा !' हन्तेति प्रत्यवधारणे एवमेवैतत् गौतमः 'अणगारस्स णं भावियप्पणो' इत्यादि तदेवं पुनरपि प्रश्नः, 'छउमत्थे णं भंते' इत्यादि। अथ कोऽस्य प्रश्नस्यावकाशः ?, उच्यते, इह प्रागुक्तं स्पृष्टानि प्रविष्टानि च शब्दद्रव्याणि श्रृणोतीत्यादि, निर्जरापुद्गला अपि सर्वलोकस्पर्शिन इति तेषामपि श्रोत्रादिषु स्पर्शनप्रवेशौ न स्तः ? इति संशयस्तत्र प्रश्नः—छद्मस्थो भदन्त ! मनुष्यः, छद्मस्थग्रहणं केवलिव्युदासार्थं, केवली हि सर्वैरप्यात्मशरीरप्रदेशैः सर्वं जानाति

पश्यति च, यथोक्तम्—"सव्वतो जाणइ केवली सव्वतो पासइ केवली" [ सर्वतो जानाति केवली सर्वतः पश्यति केवली ] स्तुतिकारोऽप्याह—"समन्ततः सर्वगुणं निरक्ष"मिति, छद्मस्थस्त्वङ्गोपाङ्गनामकर्मविशेपसंस्कृतैरेवेन्द्रियद्वारैर्जानाति पश्यति चेति छद्मस्थग्रहणं, अत एवेह छद्मस्थो विशिष्टावधिज्ञानविकलः परिगृह्यते, तेपां निर्जरापुद्गलानां 'आणत्त'मिति अन्यत्वं, द्वयोरनगारयोः सम्बन्धिनोर्ये निर्जरापुद्गलाः तेषां परस्परं भिन्नत्वमिति भावः 'नानात्वं'परनिरपेक्षमेकस्यैव वर्णादिकृतं वैचित्र्यं 'ओमत्वं' अवमता हीनत्वमितियावत् 'तुच्छत्वं' निःसारता 'गुरुलघुत्वे'प्रतीते, भगवानाह—नायमर्थः समर्थः, नायमर्थो युक्त्युपपन्नः, छद्मस्थमनुष्यस्तेपां निर्जरापुद्गलानामन्यत्वादिकं जानाति पश्यति, अत्रैवार्थे प्रश्नमाह—'से केणट्ठेणं भंते' इत्यादि, सुगमं, भगवानाह—'देवेवि य ण'मित्यादि, देवोऽप्यस्त्येकः कश्चित्कर्मपुद्गलविपयावधिज्ञानविकलो यस्तेपां निर्जरापुद्गलानां न किञ्चिदप्यन्यत्वादिकं जानाति पश्यति वा, किमुक्तं भवति?—देवानां किल मनुष्येभ्यः पटुतराणि इन्द्रियाणि विद्यन्ते, तत्र देवोऽपि तावन्न जानाति न पश्यति वा किमुत मनुष्य इति ?, 'से एएण'मित्याद्युपसंहारवाक्यं सुगमं, 'सुहुमा णं ते'इत्यादि, एतावन्मानेन सूक्ष्मास्ते पुद्गलाः निर्जरापुद्गलाः प्रज्ञप्ताः हे श्रमण ! हे आयुष्मन् !, गौतमस्य भगवत्कृतं सम्बोधनमेतत्, सर्वलोकमपि ते एवंरूपाः अत्यन्तसूक्ष्माः पुद्गलाः अवगाह्य तिष्ठन्ति पुद्गलाः न तु वादररूपाः, अन्यथा सांव्यवहारिकप्रत्यक्षविरोधप्रसक्तेः, सर्वलोकस्पर्शिनस्ते पुद्गलास्ततोऽयमपि प्रश्नः—'नेरइया णं भंते !' इत्यादि, नैरयिकास्तावत्तान् निर्जरापुद्गलानाहारय-

न्तीति सिद्धं, पुद्गलानां तत्तत्सामग्रीवशतो विचित्रपरिणमनस्वभावतया आहाररूपतयाऽपि तेषां परिणमनसम्भवात्, केवलमेतद् प्रष्टव्यं—ते नैरयिका जानन्तीत्यादि, प्राकृतत्वात् क्रियाहेतुत्वेऽपि वर्त्तमाना, ततोऽयमर्थः—जानन्तः पश्यन्त आहारयन्ति उताजानन्तोऽपश्यन्त इति ?, भगवानाह—अजानन्तोऽपश्यन्त इति, कस्मादिति चेत् ?, उच्यते, तेषामतिसूक्ष्मतया चक्षुरादिपथातीतत्वात् नैरयिकाणां च कार्मणशरीरपुद्गलालम्बनावधिज्ञानविकलत्वात् । एवमसुरकुमारादिविषयाण्यपि सूत्राणि तावद् वाच्यानि यावत्तिर्यक्पञ्चेन्द्रियसूत्रं । मनुष्यसूत्रे 'सन्निभूया य' इति संज्ञिनो भूताः संज्ञिभूताः संज्ञित्वं प्राप्ता इत्यर्थः, तद्व्यतिरिक्ताः असंज्ञिभूताः, संज्ञी चेह विशिष्टावधिज्ञानी परिगृह्यते यस्य ते कार्मणशरीरपुद्गला विषयभावं बिभ्रति, शेषं सुगमं । वैमानिकसूत्रे 'मायीमिच्छद्दिट्ठी' इत्यादि, माया—तृतीयः कषायः साऽन्येषामपि कषायाणामुपलक्षणं माया विद्यते येषां ते मायिन उत्कटरागद्वेषा इत्यर्थः ते च ते मिथ्यादृष्टयश्च मायिमिथ्यादृष्टयस्तथारूपा उपपन्नका—उपपन्ना मायिमिथ्यादृष्ट्युपपन्नकास्तद्विपरीता अमायिसम्यग्दृष्ट्युपपन्नकाः, इह मायिमिथ्यादृष्ट्युपपन्नकग्रहणेन नवमग्रैवेयकपर्यन्ताः परिगृह्यन्ते, यद्यप्याराතीयेष्वपि कल्पेषु ग्रैवेयकेषु च सम्यग्दृष्टयो देवाः सन्ति तथापि तेषामवधिर्न कार्मणशरीरपुद्गलविषय इति तेऽपि मायिमिथ्यादृष्ट्युपपन्नका इव मायिमिथ्यादृष्ट्युपपन्नका इत्युपमानतो मायिमिथ्यादृष्ट्युपपन्नकशब्देनोच्यन्ते, ये त्वमायिसम्यग्दृष्ट्युपपन्नकास्तेऽनुत्तरसुराः, तेऽपि द्विविधा—तद्यथा—अनन्तरोपपन्नकाः परम्परोपपन्नकाश्च, अनन्तरम्—अव्यवधानेनोपपन्नकाः अनन्तरो-

पपन्नकाः उपपत्तिप्रथमसमयवर्तिन इत्यर्थः, परम्परया उपपन्नकाः परम्परोपपन्नकाः, उत्पत्त्यनन्तरं द्वित्रादिसमयवर्त्तिन इत्यर्थः, तत्रानन्तरोपपन्नका न जानन्ति न पश्यन्ति, तेषां एकसामयिकोपयोगासम्भवादपर्यासित्वाच्च, परम्परोपपन्नका अपि द्विधा—पर्यासका अपर्यासकाश्च, तत्रापर्यासा न जानन्ति न पश्यन्त्यपर्यासत्वेन सम्यगुपयोगासम्भवात्, पर्यासा अपि द्विधा—उपयुक्ताः अनुपयुक्ताश्च, तत्रानुपयुक्ता न जानन्ति न पश्यन्ति, सामान्यरूपतया विशेषरूपतया वा परिच्छेदस्य प्रणिधानमन्तरेण कर्त्तुमशक्यत्वात्, ये तूपयुक्तास्ते जानन्ति पश्यन्ति च, कथमिति चेत्?, उच्यते–इहावश्यके अवधिज्ञानविषयचिन्तायामिदमुक्तं—"संखेज्ज कम्मदव्वे लोगे थोवूणगं पलियं" अस्यायमर्थः—कर्मद्रव्याणि–कर्मशरीरद्रव्याणि पश्यन् क्षेत्रतो लोकस्य सङ्ख्येयान् भागान् पश्यति, अनुत्तरसुराश्च सम्पूर्णां लोकनाडीं पश्यन्ति, "सम्भिन्नलोगनालिं पासंति अणुत्तरा देवा" [पश्यन्त्यनुत्तरा देवाः संपूर्णां लोकनाडीं] इति वचनात्, ततस्ते उपयुक्ता जानन्ति पश्यन्ति चावधिज्ञानेन तान्निर्जरापुद्गलानिति, आहारयन्तीति च सर्वत्रापि लोमाहारेणेति प्रतिपत्तव्यं। इन्द्रियाधिकारादयमपि प्रश्नः—

अद्दायं पेहमाणे मणूसे अद्दायं पेहति अत्ताणं पेहइ पलिभागं पेहति ?, गो० ! अद्दायं पेहति नो अप्पाणं पेहति पलिभागं पेहति, एवं एतेणं अभिलावेणं असिं मणिं दुद्धं पाणं तेल्लं फाणियं वसं (सूत्रं १९७)

'अद्दायं पेहमाणे' इत्यादि, 'अद्दाय'मिति आदर्शं 'पेहमाणे' इति प्रेक्षमाणो मनुष्यः किमादर्शं प्रेक्षते आहोश्विदा-

॥३०४॥

जाणितव्वा ३२ ॥ अहवेगे य ओरालियमिस्सासरीरकायप्पओगी य आहारगसरीरकायप्पओगी य आहारगमीसासरीरकायप्पओगी य कम्मासरीरकायप्पओगी य १ अहवेगे य ओरालियमीसासरीरकायप्पओगी य आहारगसरीरकायप्पओगी य आहारगमीसासरीरकायप्पओगी य कम्मासरीरकायप्पओगिणो य २ अहवेगे य ओरालियमीसासरीरकायप्पओगी य आहारगसरीरकायप्पओगी य आहारगमीसासरीरकायप्पओगिणो य कम्मासरीरकायप्पओगी य ३ अहवेगे य ओरालियमीसासरीरकायप्पओगी य आहारगसरीरकायप्पओगी य आहारगमीसासरीरकायप्पओगिणो य कम्मासरीरकायप्पओगिणो य ४ अहवेगे य ओरालियमीसासरीरकायप्पओगी य आहारगसरीरकायप्पओगिणो य आहारगमीसासरीरकायप्पओगी य कम्मासरीरकायप्पओगी य ५ अहवेगे य ओरालियमीसासरीरकायप्पओगी य आहारगसरीरकायप्पओगिणो य आहारगमीसासरीरकायप्पओगी य कम्मासरीरकायप्पओगिणो य ६ अहवेगे य ओरालियमीसासरीरकायप्पओगी य आहारगसरीरकायप्पओगिणो य आहारगमीसासरीरकायप्पओगिणो य कम्मासरीरकायप्पओगी य ७ अहवेगे य ओरालियमीसासरीरकायप्पओगी य आहारगसरीरकायप्पओगिणो य आहारगमीसासरीरकायप्पओगिणो य कम्मासरीरकायप्पओगिणो य ८ अहवेगे य ओरालियमीसासरीरकायप्पओगिणो य आहारगसरीरकायप्पओगी य आहारगमीसासरीरकायप्पओगी य कम्मासरीरकायप्पओगी य ९ अहवेगे य ओरालियमीसासरीरकायप्पओगिणो य आहारगसरीरकायप्पओगी य आहारगमीसासरीरकायप्पओगी य कम्मासरीरकायप्पओगिणो य १० अहवेगे य ओरालियमीसासरीरकायप्पओगिणो य आहारगसरीरकायप्पओगी य आहारगमीसासरीरकायप्पओगिणो य कम्मासरीरकायप्पओगी य ११ अहवेगे

य ओरालियमीसासरीरकायप्पओगिणो य आहारगसरीरकायप्पओगी य आहारगमीसासरीरकायप्पओगिणो य कम्मासरीरकायप्पओगिणो य १२ अहवेगे य ओरालियमीसासरीरकायप्पओगिणो य आहारगसरीरकायप्पओगिणो य आहारगमीसासरीरकायप्पओगी य कम्मासरीरकायप्पओगी य १३ अहवेगे य ओरालियमीसासरीरकायप्पओगिणो य आहारगसरीरकायप्पओगिणो य आहारगमीसासरीरकायप्पओगी य कम्मासरीरकायप्पओगिणो य १४ अहवेगे य ओरालियमीसासरीरकायप्पओगिणो य आहारगसरीरकायप्पओगिणो य आहारगमीसासरीरकायप्पओगिणो य कम्मासरीरकायप्पओगी य १५ अहवेगे य ओरालियमीसासरीरकायप्पओगिणो य आहारगसरीरकायप्पओगिणो य आहारगमीसासरीरकायप्पओगिणो य कम्मासरीरकायप्पओगिणो य १६, एवं एते चउसंजोएणं सोलस भंगा भवंति, सव्वेऽवि य णं संपिंडिया असीति भंगा भवंति । वाणमंतरजोइसवेमाणिया जहा असुरकुमारा ( सूत्रं २०४ )

'जीवाणं भंते !' इत्यादि प्रश्नसूत्रं सुगमं, निर्वचनसूत्रे सर्वेऽपि तावद् भवेयुः सत्यमनःप्रयोगिण इत्यादिरेको भङ्गः, किमुक्तं भवति ?—सदैव जीवा बहव एव सत्यमनःप्रयोगिणोऽप्यसत्यमनःप्रयोगिणोऽपि यावद्वैक्रियमिश्रशरीरकायप्रयोगिणोऽपि कार्मणशरीरकायप्रयोगिणोऽपि लभ्यन्ते, तत्र सदैव वैक्रियमिश्रशरीरकायप्रयोगिणो नारकादीनां सदैवोपपातोत्तरवैक्रियारम्भसम्भवात्, सदैव कार्मणशरीरकायप्रयोगिणः सर्वदैव वनस्पत्यादीनां विग्रहेणान्तरगतौ लभ्यमानत्वात्, आहारकशरीरी च कदाचित्सर्वथा न लभ्यते, षण्मासान् यावदुत्कर्षतोऽन्तरसम्भ-

वात्, यदापि लभ्यते तदापि जघन्यपदे एको द्वौ वा उत्कर्षतः सहस्रपृथक्त्वं, उक्तं च—"आहारगाइं लोए छम्मासे जा न होंतिवि कयाई। उक्कोसेणं नियमा एक्कं समयं जहन्नेणं ॥ १ ॥ होंताइं जहन्नेणं इक्कं दो तिण्णि पंच व हवंति। उक्कोसेणं जुगवं पुहुत्तमेत्तं सहस्साणं ॥ २ ॥ [ आहारकाणि लोके षण्मासान् यावत् न भवन्त्यपि कदाचित्। उत्कृष्टतो नियमात् एकं समयं जघन्येन ॥ १ ॥ भवन्त्यपि जघन्येन एकं द्वे त्रीणि पञ्च वा भवन्ति। उत्कृष्टेन युगपत् पृथक्त्वमात्रं सहस्राणां ॥ २ ॥ ] ततो यदा आहारकशरीरकायप्रयोगी आहारकमिश्रशरीरकायप्रयोगी चैकोऽपि न लभ्यते तदा बहुवचनविशिष्टत्रयोदशपदात्मक एको भङ्गः, त्रयोदशपदानामपि सदैव बहुत्वेनावस्थितत्वात्, यदा त्वेक आहारकशरीरकायप्रयोगी लभ्यते तदा द्वितीयः, तेऽपि यदा बहवो लभ्यन्ते तदा तृतीयः, एवमेव आहारकमिश्रशरीरकायप्रयोगिपदेनापि द्वौ भङ्गौ लभ्येते इत्येकयोगे चत्वारो भङ्गाः, द्विकसंयोगेऽपि प्रत्येकमेकवचनबहुवचनाभ्यां चत्वार इति सर्वसङ्ख्यया जीवपदेन नव भङ्गाः, नैरयिकपदे सत्यमनःप्रयोगिप्रभृतीनि वैक्रियमिश्रशरीरकायप्रयोगिपर्यन्तानि सदैव बहुवचनेन दश पदान्यवस्थितानीत्येको भङ्गः, अथ वैक्रियमिश्रशरीरकायप्रयोगिणः सदैव कथं लभ्यन्ते ?, द्वादशमौहूर्त्तिकगत्युपपातविरहकालभावात्, उच्यते, उत्तरवैक्रियापेक्षया, तथाहि—यद्यपि द्वादशमौहूर्त्तिको गत्युपपातविरहकालस्तथापि तदानीमपि उत्तरवैक्रियारम्भिणः संभवन्ति, उत्तरवैक्रियारम्भे च भवधारणीयं वैक्रियमिश्रं, तद्बलेनोत्तरवैक्रियारम्भात्, भवधारणीयप्रवेशे चोत्तरवैक्रिय-

मिश्रं, उत्तरवैक्रियवलेन भवधारणीये प्रवेशात्, तत एवमुत्तरवैक्रियापेक्षया भवधारणीयोत्तरवैक्रियमिश्रसम्भवात् तदानीमपि वैक्रियशरीरमिश्रकायप्रयोगिणो नैरयिका लभ्यन्ते, कार्मणशरीरकायप्रयोगी च नैरयिकः कदाचिदेकोऽपि न लभ्यते, द्वादशमौहूर्त्तिकगत्युपपातविरहकालभावात्, यदापि लभ्यते तदापि जघन्यत एको द्वौ वा उत्कर्षतोऽसङ्ख्येयाः, ततो यदा एकोऽपि कार्मणशरीरकायप्रयोगी न लभ्यते तदा प्रथमो भङ्गो यदा पुनरेकस्तदा द्वितीयो यदा बहवस्तदा तृतीय इति, अत एव त्रयो भङ्गाः भवनपतिव्यन्तरज्योतिष्कवैमानिकेषु भावनीयाः, पृथिव्यप्तेजोवायुवनस्पतिषु औदारिकशरीरकायप्रयोगिणोऽपि औदारिकमिश्रशरीरकायप्रयोगिणोऽपि कार्मणशरीरकायप्रयोगिणोऽपि सदा बहव एव लभ्यन्ते इति पदत्रयबहुवचनात्मकः प्रत्येकमेक एव भङ्गः, वायुकायिकेष्वौदारिकद्विकवैक्रियद्विककार्मणशरीरलक्षणपदपञ्चकबहुवचनात्मक एको भङ्गः, तेषु वैक्रियशरीरिणां वैक्रियमिश्रशरीरिणां च सदैव बहुत्वेन लभ्यमानत्वात्, द्वीन्द्रियेषु यद्यप्यान्तर्मुहूर्त्तिक उपपातविरहकालस्तथाप्युपपातविरहकालोऽन्तर्मुहूर्त्तं लघु औदारिकमिश्रगतमन्तर्मुहूर्त्तमतिबृहत्प्रमाणमत औदारिकमिश्रशरीरकायप्रयोगिणोऽपि तेषु सदैव लभ्यन्ते, कार्मणशरीरकायप्रयोगी तु कदाचिदेकोऽपि न लभ्यते, आन्तर्मुहूर्त्तिकोपपातविरहकालभावात्, यदापि लभ्यते तदापि जघन्यत एको द्वौ वा उत्कर्षतोऽसङ्ख्येयाः, ततो यदा एकोऽपि कार्मणशरीरकायप्रयोगी न लभ्यते तदा प्रथमो भङ्गः, यदा पुनरेकः कार्मणशरीरी लभ्यते तदा द्वितीयः, यदा बहवस्तदा तृतीय इति, एवं त्रिचतुरिन्द्रिये-

ष्वपि भावनीयं, 'पंचिंदियतिरिक्खजोणिया जहा नेरइया' इत्यादि, पञ्चेन्द्रियतिर्यग्योनिका यथा नैरयिकास्तथा वक्तव्याः, नवरं वैक्रियमिश्रवैक्रियशरीरकायप्रयोगिस्थाने औदारिकऔदारिकमिश्रशरीरकायप्रयोगिणो वक्तव्याः, किमुक्तं भवति ?—सत्यमनःप्रयोगिणोऽपीत्यादि तावद्वक्तव्यं यावदसत्यामृषावाग्योगिनोऽपि तत औदारिकशरीरकायप्रयोगिणोऽपि औदारिकमिश्रशरीरकायप्रयोगिणोऽपीति वक्तव्यं, एतानि दश पदानि बहुवचनेन सदाऽवस्थितानि, यद्यपि च तिर्यक्पञ्चेन्द्रियाणामप्युपपातविरहकाल आन्तर्मुहूर्त्तिकस्तथाऽप्युपपातविरहकालान्तर्मुहूर्त्तं लघु औदारिकमिश्रान्तर्मुहूर्त्तमतिबृहदित्यत्राप्यौदारिकमिश्रशरीरकायप्रयोगिणः सदा लभ्यन्ते, यस्तु द्वादशमौहूर्त्तिक उपपातविरहकालः स गर्भव्युत्क्रान्तिकपञ्चेन्द्रियतिरश्चां न सामान्यपञ्चेन्द्रियतिरश्चामिति, कार्मणशरीरकायप्रयोगी तु तेष्वपि कदाचिदेकोऽपि न लभ्यते, आन्तर्मुहूर्त्तिकोपपातविरहकालभावात्, ततो यदा एकोऽपि कार्मणशरीरी न लभ्यते तदा प्रथमो भङ्गः यदा पुनरेको लभ्यते तदा द्वितीयः यदा बहवस्तदा तृतीयः, मनुष्येषु मनश्चतुष्टयवाक्चतुष्टयौदारिकवैक्रियद्विकरूपाण्येकादश पदानि सदैव बहुवचनेन लभ्यन्ते, वैक्रियमिश्रशरीरिणः कथं सदैव लभ्यन्ते इति चेत् ? उच्यते, विद्याधराद्यपेक्षया, तथाहि—विद्याधरा अन्येऽपि केचिन्मिथ्यादृष्ट्यादयो वैक्रियलब्धिसम्पन्नाः अन्यान्यभावेन सदैव विकुर्वणायां लभ्यन्ते, आह च मूलटीकाकारः—"मनुष्या वैक्रियमिश्रशरीरप्रयोगिणः, सदैव विद्याधरादीनां विकुर्वणाभावा"दिति, औदारिकमिश्रशरीरकायप्रयोगी कार्मणशरीरकायप्रयोगी च कदाचित्सर्वथा न

लभ्यते, द्वादशमौहूर्त्तिकोपपातविरहकालभावात्, आहारकशरीरी आहारकमिश्रशरीरी च कादाचित्कः प्रागेवोक्तः, तत औदारिकमिश्राद्यभावे पदैकादशवहुवचनलक्षण एको भङ्गः, तत औदारिकमिश्रपदेन एकवचनवहुवचनाभ्यां द्वौ भङ्गौ, एवमेव द्वौ भङ्गौ आहारकपदेन द्वौ चाहारकमिश्रपदेन द्वौ कार्मणपदेनेत्येकैकसंयोगे अष्टौ भङ्गाः, द्विकसंयोगे प्रत्येकमेकवचनवहुवचनाभ्यामौदारिकमिश्राहारकपदयोश्चत्वारः, एवमेव औदारिकमिश्राहारकमिश्रपदयोश्चत्वारः औदारिकमिश्रकार्मणयोश्चत्वारः आहारकआहारकमिश्रयोश्चत्वारः आहारककार्मणयोश्चत्वारः आहारकमिश्रकार्मणयोश्चत्वार इति सर्वसङ्ख्यया द्विकसंयोगे चतुर्विंशतिर्भङ्गाः, त्रिकसंयोगे औदारिकमिश्राहारकाहारकमिश्रपदानामेकवचनवहुवचनाभ्यामष्टौ भङ्गाः, अष्टौ औदारिकमिश्राहारककार्मणानामष्टौ औदारिकमिश्राहारकमिश्रकार्मणानामष्टावाहारकाहारकमिश्रकार्मणानामिति सर्वसङ्ख्यया त्रिकसंयोगे द्वात्रिंशद्भङ्गाः, औदारिकमिश्राहारकाहारकमिश्रकार्मणरूपाणां तु चतुर्णां पदानामेकवचनवहुवचनाभ्यां षोडश भङ्गाः, सर्वसङ्कलनया भङ्गानामशीतिरिति । उक्तः प्रयोगः, प्रयोगवशाच्च जीवानामजीवानां च गतिर्भवति, ततो गतिनिरूपणार्थमाह—

कइविहे णं भंते ! गइप्पवाए पण्णत्ते ?, गो० ! पंचविहे गइप्पवाए पं०, तं०—पओगगती १ ततगती २ बंधणछेदणगती ३ उववायगती ४ विहायगती ५, से किं तं पओगगती ?, २ पण्णरसविहा पं०, तं०—सच्चमणप्पओगगती एवं जहा पओगो भणितो तहा एसावि भाणितव्वा जाव कम्मगसरीरकायप्पओगगती । जीवाणं भंते ! कतिविहा पओगगती

पं० ?, गो०—पण्णरसविहा पं०, तं०—सच्चमणप्पओगगती जाव कम्मगसरीरकायप्पओगगती, नेरइयाणं भंते! कइविहा पओगगती पं० ?, गो०—एक्कारसविहा पन्नत्ता, तं०—सच्चमणप्पओगगती, एवं उवउज्जिऊण जस्स जतिविहा तस्स ततिविहा भाणितव्वा जाव वेमाणियाणं, जीवाणं भंते ! सच्चमणप्पओगगती जाव कम्मगसरीरकायप्पओगगती ?, गो० ! जीवा सव्वेवि ताव होज्ज सच्चमणप्पओगगतीवि, एवं तं चेव पुव्ववण्णितं भाणितव्वं भंगा तहेव जाव वेमाणियाणं, से तं पओगगती १ । से किं तं ततगती ?, २ जे णं जं गामं वा जाव सण्णिवेसं वा संपट्ठिते असंपत्ते अंतरापहे वट्टति, से तं ततगती २ । से किं तं बंधणछेदणगती ?, २ जीवो वा सरीराओ सरीरं वा जीवाओ, से तं बंधणछेदणगती ३ । से किं तं उववायगती ?, २ तिविहा पं०, तं०—खेत्तोववायगती भवोववायगती नोभवोववायगती, से किं तं खेत्तोववायगती ?, २ पंचविहा पं०, तं०—नेरइयखेत्तोववायगती १ तिरिक्खजोणियखेत्तोववायगती २ मणूसखेत्तोववायगती ३ देवखेत्तोववायगती ४ सिद्धखेत्तोववायगती ५ से किं तं नेरइयखेत्तोववायगती ?, २ सत्तविहा पं०, तं०—रयणप्पभापुढविनेरइयखेत्तोववायगती जाव अधेसत्तमापुढविनेरइयखेत्तोववायगती, से तं नेरइयखेत्तोववायगती १, से किं तं तिरिक्खजोणियखेत्तोववायगती ?, २ पंचविहा पं०, तं०—एगिंदियतिरिक्खजोणियखेत्तोववायगती जाव पंचिंदियतिरिक्खजोणियखेत्तोववायगती, से तं तिरिक्खजोणियखेत्तोववायगती २, से किं तं मणूसखेत्तोववायगती ?, २ दुविहा पं०, तं०—संमुच्छिममणूस० गब्भवक्कंतियमणूसखेत्तोववायगती, से तं मणूसखेत्तोववायगती ३, से किं तं देवखेत्तोववायगती ?, २ चउविहा पं०, तं०—भवणवति० जाव वेमाणियदेवखेत्तोववायगती, से तं देवखेत्तोववायगती ४, से किं तं सिद्धखेत्तोववायगती ?,

अणेगविहा पं०, तं०—जंबुद्दीवे दीवे भरहेरवयवासे सपक्खंसपडिदिसिं सिद्धखेत्तोववायगती, जंबुद्दीवे दीवे चुल्लहिमवंतसिहरिवासहरपवतसपक्खंसपडिदिसिं सिद्धखेत्तोववायगती, जंबुद्दीवे दीवे हेमवतहेरण्णवाससपक्खंसपडिदिसिं सिद्धखेत्तोववायगती, जंबुद्दीवे दीवे सद्दावइवियडावइवट्टवेयड्ढसपक्खंसपडिदिसिं सिद्धखेत्तोववायगती जंबुद्दीवे दीवे महाहिमवंतरुप्पिवासहरपवतसपक्खंसपडिदिसिं सिद्धखेत्तो० जंबुद्दीवे दीवे हरिवासरम्मगवाससपक्खिंसपडिदिसिं सिद्धखे० जंबुद्दीवे दीवे गंधावातिमालवंतपव्वयवट्टवेयड्ढसपक्खंसपडिदिसं सिद्ध० जंबुद्दीवे दीवे णिसहणीलवंतवासहरपवतसपक्खिंसपडिदिसिं सिद्धखे० जंबुद्दीवे दीवे पुव्वविदेहावरविदेहसपक्खिंसपडिदिसिं सिद्धखे० जंबुद्दीवे दीवे देवकुरुउत्तरकुरुसपक्खिंसपडिदिसिं सिद्ध० जंबुद्दीवे दीवे मंदरपव्वयस्स सपक्खिंसपडिदिसिं सिद्धखे० लवणे समुद्दे सपक्खिं सपडिदिसिं सिद्ध० धायइसंडे दीवे पुरत्थिमद्धपच्छिमद्धमंदरपवतसपक्खिंसपडिदिसिं सिद्धखित्तो० कालोयसमुद्दसपक्खिंसपडिदिसिं सिद्ध० पुक्खरवरदीवद्धपुरत्थिमद्धभरहेरवयवाससपक्खिंसपडिदिसिं सिद्ध० एवं जाव पुक्खरवरदीवद्धपच्छिमद्धमंदरपवतसपक्खिंसपडिदिसिं सिद्धखेत्तोववायगती, से तं सिद्धखेत्तोववायगती ५, से किं तं भवोववायगती ?, २ चउविहा पं०, तं०—नेरइय० जाव देवभवोववायगती, से किं तं नेरइयभवोववायगती ?, २ सत्तविहा पं०, तं०, एवं सिद्धवज्जो भेदो भाणितवो जो चेव खेत्तोववायगतीए सो चेव, से तं देवभवोववायगती, से तं भवोववायगती, से किं तं नोभवोववायगती ?, २ दुविहा पं०, तं०—पोग्गलणोभवोववायगती सिद्धनोभवोववायगती, से किं तं पोग्गलनोभवोववायगती ?, २ जण्णं परमाणुपोग्गले लोगस्स पुरत्थिमिल्लाओ चरमंताओ पचत्थिमिल्लं चरमंतं एगसमएणं गच्छति पचत्थि-

मिल्लाओ वा चरमंताओ पुरत्थिमिल्लं चरमंतं एगसमएणं गच्छति दाहिणिल्लाओ वा चरमंताओ उत्तरिल्लं चरमंतं एगसमएणं गच्छति एवं उत्तरिल्लाओ दाहिणिल्लं उवरिल्लातो हेट्ठिल्लं हिट्ठिल्लाओ उवरिल्लं, से तं पोग्गलणोभवोववायगती, से किं तं सिद्धणोभवोववायगती?, २ दुविहा पं०, तं०—अणंतरसिद्धणोभवोववाय० परंपरसिद्धणोभवोववायगती य, से किं तं अणंतरसिद्धणोभवोववायगती?, २ पण्णरसविहा पं०, तं०—तित्थसिद्धअणंतरसिद्धणोभवोववायगती य जाव अणेगसिद्धणोभवोववायगती य, से किं तं परंपरसिद्धणोभवोववायगती?, २ अणेगविहा पं०, तं०—अपढमसमयसिद्धणोभवोववायगती एवं दुसमयसिद्धणोभवोववायगती जाव अणंतसमयसिद्धणोभवोववायगती, सेत्तं सिद्धणोभवोववायगती, से तं णोभवोववायगती, से तं उववायगती ४। से किं तं विहायगती?, २ सत्तरसविहा पण्णत्ता, तं०—फुसमाणगती १ अफुसमाणगती २ उवसंपज्जमाणगती ३ अणुवसंपज्जमाणगती ४ पोग्गलगती ५ मंडूयगती ६ णावागती ७ नयगई ८ छायागती ९ छायाणुवातगती १० लेसागई ११ लेसाणुवातगती १२ उद्दिस्सपविभत्तगती १३ चउपुरिसपविभत्तगती १४ वंकगती १५ पंकगती १६ बंधणविमोयणगती १७, से किं तं फुसमाणगती?, २ जण्णं परमाणुपोग्गले दुपएसिए जाव अणंतपएसियाणं खंधाणं अण्णमण्णं फुसंताणं गती पवत्तइ सेत्तं फुसमाणगती १, से किं तं अफुसमाणगती?, २ जण्णं एतेसिं चेव अफुसंताणं गती पवत्तति से तं अफुसमाणगती २, से किं तं उवसंपज्जमाणगती?, २ जण्णं रायं वा जुवरायं वा ईसरं वा तलवरं वा माडंबितं वा कुडुंबितं वा इब्भं वा सिट्ठिं वा सेणावतिं वा सत्थवाहं वा उवसंपज्जित्ता णं गच्छति, से तं उवसंपज्जमाणगती ३, से किं तं अणुवसंपज्जमाणगती?, २ जण्णं एतेसिं चेव अण्णमण्णं अणुवसंपज्जित्ता णं गच्छति, से तं अणुव-

संपज्जमाणगती ४, से किं तं पोग्गलगती ?, २ जं णं परमाणुपोग्गलाणं जाव अणंतपएसियाणं खंधाणं गती पवत्तति से तं पोग्गलगती ५, से किं तं मंडूयगती ?, २ जण्णं मंडूओ फिडित्ता गच्छति, से तं मंडूयगती ६, से किं तं णावागती ?, जण्णं णावा पुव्ववेतालीओ दाहिणवेयालिं जलपहेणं गच्छति, दाहिणवेतालिओ वा अवरवेतालिं जलपहेणं गच्छति, से तं णावागती ७, से किं तं णयगती ?, २ जण्णं णेगमसंगहववहारउज्जुसुयसद्दसमभिरूढएवंभूयाणं नयाणं जा गती अहवा सव्वणयावि जं इच्छंति, से तं नयगती ८, से किं तं छायागती ?, २ जं णं हयछायं वा गयछायं वा नरछायं वा किण्णरछायं वा महोरगछायं वा गंधव्वछायं वा उसहछायं वा रहछायं वा छत्तछायं वा उवसंपज्जित्ताणं गच्छति, से तं छायागती ९, से किं तं छायाणुवायगती ?, २ जेणं पुरिसं छाया अणुगच्छति नो पुरिसे छायं अणुगच्छति, से तं छायाअणुवायगती १०, से किं तं लेस्सागती ?, २ जण्णं किण्हलेसा नीललेसं पप्प तारूवत्ताए तावण्णत्ताए तागंधत्ताए तारसत्ताए ताफासत्ताते भुज्जो २ परिणमति, एवं नीललेसा काउलेसं पप्प तारूवत्ताए जाव ताफासत्ताए परिणमति, एवं काउलेसावि तेउलेसं तेउलेसावि पम्हलेसं पम्हलेसावि सुक्कलेसं पप्प तारूवत्ताते जाव परिणमति, से तं लेसागती ११, से किं तं लेसाणुवायगती ?, २ जल्लेसाइं दव्वाइं परियाइत्ता कालं करेइ तल्लेसेसु उववज्जति, तं०— किण्हलेसेसु वा जाव सुक्कलेसेसु वा, से तं लेसाणुवायगती १२, से किं तं उद्दिस्सपविभत्तगती ?, २ जण्णं आयरियं वा उवज्झायं वा थेरं वा पवत्तिं वा गणिं वा गणहरं वा गणावच्छेदं वा उद्दिसिय २ गच्छति, से तं उद्दिस्सियपविभत्तगती १३, से किं तं चउपुरिसपविभत्तगती ?, से जहानामए चत्तारि पुरिसा समगं पज्जवट्ठिया समगं पट्ठिता १ समगं पज्जवट्ठिया

विसमगं पट्टिया २ विसमं पज्जवट्ठिया विसमं पट्ठिया ३ विसमं पज्जवट्ठिया समगं पट्ठिया ४, से तं चउपुरिसपविभत्त-गती १४, से किं तं वंकगती ?, २ चउव्विहा पं०, तं०—घट्टनया थंभणया लेसणया पवडणया, से तं वंकगती १५, से किं तं पंकगती ?, २ से जहाणामते केइ पुरिसे पंकंसि वा उदयंसि वा कायं उव्विहिया गच्छति, से तं पंकगती १६, से किं तं वंधणविमोयणगती ?, २ जण्णं अंबाण वा अंबाडगाण वा माउलुंगाण वा बिल्लाण वा कविट्ठाण वा [ भवाण वा ] फणसाण वा दालिमाण वा पारेवताण वा अक्खोलाण वा चाराण वा वोराण वा तिंडुयाण वा पक्काणं परियागयाणं वंधणातो विप्पमुक्काणं निव्वाघातेणं अधे वीससाए गती पवत्तइ, से तं वंधणविमोयणगती (सूत्रं २०५) (से तं विहायोगती) १७ ॥ पण्णवणाए भगवईए पओगपदं समत्तं ॥ १६ ॥

'कइविहे णं भंते! गइप्पवाए' इत्यादि, गमनं गतिः प्राप्तिरित्यर्थः, प्राप्तिश्च देशान्तरविषया पर्यायान्तरविषया च, उभयत्रापि धात्वर्थोपपत्तेः गतिशब्दप्रयोगदर्शनाच्च, तथाहि—क्व गतो देवदत्तः ?, पत्तनं गतः, तथा वचनमात्रेणाप्यसौ गतः कोपमिति, लोकोत्तरेऽप्युभयथा प्रयोगः—परमाणुरेकसमयेन एकस्माल्लोकान्तादपरं लोकान्तं गच्छति, तथा तानि तान्यध्यवसायान्तराणि गच्छन्तीति, गतेः प्रपातो गतिप्रपातः, स कतिविधः प्रज्ञप्तः ?, कुत्र कुत्र गतिशब्दप्रवृत्तिरुपनिपततीत्यर्थः, भगवानाह—पञ्चविधः प्रज्ञप्तः, तदेव पञ्चविधत्वं दर्शयति—'प्रयोगगति'रित्यादि, प्रयोगः प्रागुक्तः पञ्चदशविधः स एव गतिः प्रयोगगतिः, इयं देशान्तरप्राप्तिलक्षणा द्रष्टव्या, सत्यमनःप्रभृतिपुद्गलानां

जीवेन व्यापार्यमाणानां यथायोगमल्पबहुदेशान्तरगमनात् १। 'ततगई' इति तता—विस्तीर्णा सा चासौ गतिश्च ततगतिः, तथाहि—यं ग्रामं सन्निवेशं वा प्रति प्रतिष्ठितो देवदत्तादिस्तं ग्रामादिकं यावदद्यापि न प्राप्नोति तावदन्तरा पथि एकैकस्मिन् पदन्यासे तत्तद्देशान्तरप्राप्तिलक्षणा गतिरस्तीति ततगतिः, इयं विस्तीर्णत्वविशेषणात् पृथगुपात्ता, अन्यथा प्रयोगगतावेवेयमन्तर्भवति, पादन्यासस्य शरीरप्रयोगात्मकत्वात्, एवमुत्तरत्रापि यथायोगं परिभावनीयं २। तथा 'बंधणछेयणगई' इति, बन्धनस्य छेदनं बन्धनच्छेदनं तस्मात् गतिर्बन्धनच्छेदनगतिः, सा च जीवेन विमुक्तस्य शरीरस्य शरीराद्वा विच्युतस्य जीवस्यावसातव्या, न तु कोशसम्बन्धविच्छेदादेरण्डबीजादेः, तस्या विहायोगतिभेदत्वेन वक्ष्यमाणत्वात् ३। 'उववायगई' इति, उपपातः—प्रादुर्भावः, स च क्षेत्रभवनोभवभेदात् त्रिविधः, तद्यथा—क्षेत्रोपपातो भवोपपातो नोभवोपपातश्च, तत्र क्षेत्रं—आकाशं यत्र नारकादयो जन्तवः सिद्धाः पुद्गला वा अवतिष्ठन्ते, भवः—कर्मसम्पर्कजनितो नैरयिकत्वादिकः पर्यायः, भवन्ति कर्मवशवर्त्तिनः प्राणिनोऽस्मिन्निति भव इति व्युत्पत्तेः, नोभवः—भवव्यतिरिक्तः कर्मसम्पर्कसम्पाद्यनैरयिकत्वादिपर्यायरहित इति भावः, स च पुद्गलः सिद्धो वा, उभयस्यापि यथोक्तलक्षणभवातीतत्वात्, उपपात एव गतिरुपपातगतिरिति ४। विहायसा—आकाशेन गतिर्विहायोगतिः, सा चोपाधिभेदात् सप्तदशविधा, तद्यथा—स्पृशद्गतिरित्यादि, तत्र परमाण्वादिकं यदन्येन परमाण्वादिकेन परस्परं संस्पृश्य संस्पृश्य—सम्बन्धमनुभूयानुभूयेत्यर्थः इति भावः गच्छति सा स्पृशद्गतिः, स्पृशतो

गतिरिति व्युत्पत्तेः, तद्विपरीता अस्पृशद्गतिः, यत्परमाण्वादिकमन्येन परमाण्वादिना सह परस्परसम्बन्धमननुभूय गच्छति यथा परमाणुरेकेन समयेन एकस्माल्लोकान्तादपरं लोकान्तमिति, उपसंपद्यमानगतिर्यदन्यमुपसम्पद्य—आश्रित्य तदवष्टम्भेन गमनं यथा धनसार्थवाहावष्टम्भेन धर्मघोषसूरीणां, अनुपसम्पद्यमानगतिर्यत् परस्परमुपष्टम्भरहितानां पथि गमनं, मण्डूकगतिर्यत् मण्डूकस्येवोत्प्लुत्य गमनं, नावागतिर्यन्नावा महानद्यादौ गमनं, नयगतिर्यन्नयानां नैगमादीनां स्वस्वमतपोषणं अथवा यन्नयानां सर्वेषां परस्परसापेक्षाणां प्रमाणाबाधितवस्तुव्यवस्थापनं सा नयगतिः, छायागतिः—छायामनुसृत्य तदुपष्टम्भेन वा समाश्रयितुं गतिः छायागतिः, छायानुपातगतिरिति छायायाः स्वनिमित्तपुरुषादेरनुपातेन—अनुसरणेन गतिः छायानुपातगतिः, तथाहि—छाया पुरुषमनुसरति न तु पुरुषः छायामतश्छायाया अनुपातगतिः, लेश्यागतिर्यत्तिर्यङ्मनुष्याणां कृष्णादिलेश्याद्रव्याणि नीलादिलेश्याद्रव्याणि सम्प्राप्य तद्रूपादितया परिणमन्ति सा लेश्यागतिरिति, लेश्यानुपातगतिरिति लेश्याया अनुपातः—अनुसरणं तेन गतिर्लेश्यानुपातगतिः, लेश्याया इत्यत्र विग्रहवेलायां कर्मणि षष्ठी, यतो वक्ष्यति—'यानि लेश्याद्रव्याणि पर्यादाय जीवः कालं करोति तल्लेश्येषूपजायते न शेषलेश्येषु' ततो जीवो लेश्याद्रव्याण्यनुसरति, न तु तानि जीवमनुसरन्तीति, 'उद्दिश्यप्रविभक्तगति'रिति प्रविभक्तं—प्रतिनियतमाचार्यादिकमुद्दिश्य यत्तत्पार्श्वे गच्छति सा उद्दिश्यप्रविभक्तगतिः, 'चतुःपुरुषप्रविभक्तगति'रिति चतुर्द्धा पुरुषाणां प्रविभक्तगतिः चतुःपुरुषप्रविभक्तगतिः, तच्चतुर्द्धात्वं 'समगं पज्जवट्ठिया'

इत्यादिना ग्रन्थेन स्वयमेव वक्ष्यति, तथा वंका—वक्रा सा चासौ गतिश्च वंकगतिः, सा च चतुर्द्धा, तद्यथा—घट्टनता स्तम्भनता श्लेपणता पतनता, तत्र घट्टनशब्दस्य भावः–प्रवृत्तिनिमित्तं घट्टनमेव वेति, एवं शेपपदशब्दार्थोऽपि भावनीयः, तत्र घट्टनं—खञ्जा गतिः स्तम्भनं–ग्रीवायां धमण्यादीनां तिष्ठतो वाऽऽत्मनोऽङ्गप्रदेशानां श्लेपणं—ऊर्वादीनां जानुप्रभृतिभिः सम्बन्धः पतनं—तिष्ठत एव गच्छतो वा यल्लुठनं, एतानि च घट्टनादीनि जीवस्यानीप्सितत्वादप्रशस्यत्वाच वंकगतिशब्दवाच्यानि, तथा पङ्के गतिः पङ्कगतिः, पङ्कग्रहणमुदकस्याप्युपलक्षणं, तेन पङ्के उदके वाऽतिदुस्तरं यदात्मीयं कायं केनापि सहोद्रुध्य तद्बलेन गच्छति सा पङ्कगतिः, बन्धनविमोचनगतिरिति बन्धनाद्विमोचनं बन्धनविमोचनं तेन गतिर्बन्धनविमोचनगतिः—यदाम्रादिफलानामतिपरिपाकगतानामत एव बन्धनाद्विच्युतानां यदधो विश्रसया–निर्व्याघातेन गमनं सा बन्धनविमोचनगतिरिति भावः, एतदेव सूत्रकृदुपदर्शयति—'से किं तं पयोगगई' इत्यादि सुगमस्यापदपरिसमाप्तेः, नवरं 'जंबुद्दीवे दीवे भरहेरवयवासस्स सपक्खं सपडिदिसिं सिद्धिखेत्तोववायगई' इति जंबूद्वीपे द्वीपे यत् भरतवर्षं ऐरावतवर्षं च तयोरुपरि सिद्धिक्षेत्रोपपातगतिर्भवति, कथमित्याह—'सपक्षं सप्रतिदिक् च' तत्र सह पक्षाः—पार्श्वाः पूर्वापरदक्षिणोत्तररूपाः यस्मिन् सिद्धिक्षेत्रोपपातगतिभवने तत् सपक्षं सह प्रतिदिशो—विदिश आग्नेय्यादयो यस्मिन् तत्सप्रतिदिक्, क्रियाविशेपणमेतत्, एपोऽत्र भावार्थः—जंबूद्वीपे द्वीपे भरतैरावतवर्षयोरुपरि सर्वासु दिक्षु विदिक्षु च सर्वत्र सिद्धिक्षेत्रोपपातगतिर्भवतीति, एवं शेपसूत्रे-

ष्वपि भावनीयं, उपसंपद्यमानगतिसूत्रे 'जण्णं रायं वा' इत्यादि, राजा—पृथिवीपतिः युवराजो—राज्यचिन्ताकारी राजप्रतिशरीरं ईश्वरः—अणिमाद्यैश्वर्ययुक्तस्तलवरः—परितुष्टनरपतिप्रदत्तपट्टबन्धविभूपितो राजस्थानीयः माडम्बिकः—छिन्नमडम्बाधिपः कौटुम्बिकः—कतिपयकुटुम्बस्वामी इभमर्हतीतीभ्यो—धनवान् श्रेष्ठी—श्रीदेवताध्यासितसौवर्णपट्टभूषितोत्तमाङ्गः सेनापतिः—नृपतिनिरूपितचतुरङ्गसैन्यनायकः सार्थवाहः—सार्थनायकः, नौगतिसूत्रे 'पुव्ववेतालिओ' इत्यादि वैतालीशब्दोऽत्र देशीवचनत्वाद्वेतालातटवाची ॥ इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां षोडशं प्रयोगपदं समाप्तम् ॥

## अथ सप्तदशं पदं ॥ १७ ॥

तदेवमुक्तं षोडशं प्रयोगपदं, सम्प्रति सप्तदशमारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरपदे प्रयोगपरिणाम उक्तः, सम्प्रति परिणामसाम्याल्लेश्यापरिणाम उच्यते—अथ लेश्येति कः शब्दार्थः ?, उच्यते, लिष्यते—श्लिष्यते आत्मा कर्मणा सहानयेति लेश्या, कृष्णादिद्रव्यसाचिव्यादात्मनः परिणामविशेषः, उक्तं च—"कृष्णादिद्रव्यसा-

चिन्न्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रवर्त्तते ॥ १ ॥" अथ कानि कृष्णादीनि द्रव्याणि ?, उच्यते, इह योगे सति लेश्या भवति, योगाभावे च न भवति, ततो योगेन सहान्वयव्यतिरेकदर्शनात् योगनिमित्ता लेश्येति निश्चीयते, सर्वत्रापि तन्निमित्तत्वनिश्चयस्यान्वयव्यतिरेकदर्शनमूलत्वात्, योगनिमित्ततायामपि विकल्पद्वयमवतरति—किं योगान्तर्गतद्रव्यरूपा योगनिमित्तकर्म्मद्रव्यरूपा वा ?, तत्र न तावद्योगनिमित्तकर्म्मद्रव्यरूपा, विकल्पद्वयानतिक्रमात्, तथाहि—योगनिमित्तकर्म्मद्रव्यरूपा सती घातिकर्म्मद्रव्यरूपा अघातिकर्म्मद्रव्यरूपा वा ?, न तावद् घातिकर्म्मद्रव्यरूपा, तेषामभावेऽपि सयोगिकेवलिनि लेश्यायाः सद्भावात्, नापि अघातिकर्म्मरूपा, तत्सद्भावेऽपि अयोगिकेवलिनि लेश्याया अभावात्, ततः पारिशेष्यात् योगान्तर्गतद्रव्यरूपा प्रत्येया, तानि च योगान्तर्गतानि द्रव्याणि यावत्कषायास्तावत्तेषामप्युदयोपबृंहकाणि भवन्ति, दृष्टं च योगान्तर्गतानां द्रव्याणां कषायोदयोपबृंहणसामर्थ्यं, यथा पित्तद्रव्यस्य, तथाहि—पित्तप्रकोपविशेषादुपलक्ष्यते महान् प्रवर्द्धमानः कोपः, अन्यच्च बाह्यान्यपि द्रव्याणि कर्म्मणामुदयक्षयोपशमादिहेतव उपलभ्यन्ते, यथा—ब्राह्मयौषधिर्ज्ञानावरण[स्य] क्षयोपशमस्य सुरापानं ज्ञानावरणोदयस्य, कथमन्यथा युक्तायुक्तविवेकविकलतोपजायते, दधिभोजनं निद्रारूपदर्शनावरणोदयस्य, तत्किं योगद्रव्याणि न भवन्ति ?, तेन यः स्थितिपाकविशेषो लेश्यावशादुपगीयते शास्त्रान्तरे स सम्यगुपपन्नः, यतः स्थितिपाको नामानुभाग उच्यते, तस्य निमित्तं कषायोदयान्तर्गतकृष्णादिलेश्यापरिणामाः,

ते च परमार्थतः कषायस्वरूपा एव, तदन्तर्गतत्वात्, केवलं योगान्तर्गतद्रव्यसहकारिकारणभेदवैचित्र्याभ्यां ते कृष्णादिभेदैर्भिन्नाः तारतम्यभेदेन विचित्राश्चोपजायन्ते, तेन यद् भगवता कर्मप्रकृतिकृता शिवशर्म्माचार्येण शतकाख्ये ग्रन्थेऽभिहितं "ठिइअणुभागं कसायओ कुणइ" इति तदपि समीचीनमेव, कृष्णादिलेश्यापरिणामानामपि कषायोदयान्तर्गतानां कषायरूपत्वात्, तेन यदुच्यते कैश्चिद्—योगपरिणामत्वे लेश्यानां "जोगा पयडिपएसं ठिइअणुभागं कसायओ कुणइ" इति वचनात् प्रकृतिप्रदेशबन्धहेतुत्वमेव स्यान्न कर्म्मस्थितिहेतुत्वमिति, तदपि न समीचीनं, यथोक्तभावार्थापरिज्ञानात्, अपि च—न लेश्याः स्थितिहेतवः, किंतु कषायाः, लेश्यास्तु कषायोदयान्तर्गताः अनुभागहेतवः, अत एव च 'स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेण' इत्यत्रानुभागप्रतिपत्त्यर्थं पाकग्रहणं, एतच्च सुनिश्चितं कर्म्मप्रकृतिटीकादिषु, ततः सिद्धान्तपरिज्ञानमपि न सम्यक् तेषामस्ति, यदप्युक्तम्—'कर्म्मनिष्यन्दो लेश्या, निष्यन्दरूपत्वे हि यावत् कषायोदयः तावन्निष्यन्दस्यापि सद्भावात् कर्म्मस्थितिहेतुत्वमपि युज्यते एवे'त्यादि, तदप्यश्लीलं, लेश्यानामनुभागबन्धहेतुतया स्थितिबन्धहेतुत्वायोगात्, अन्यच्च—कर्म्मनिष्यन्दः किं कर्म्मकल्क उत कर्म्मसारः?, न तावत्कर्म्मकल्कः, तस्यासारतयोत्कृष्टानुभागबन्धहेतुत्वानुपपत्तिप्रसक्तेः, कल्को हि असारो भवति असारश्च कथमुत्कृष्टानुभागबन्धहेतुः ?, अथ चोत्कृष्टानुभागबन्धहेतवोऽपि लेश्या भवन्ति, अथ कर्म्मसार इति पक्षस्तर्हि कस्य कर्म्मणः सार इति वाच्यं ?, यथायोगमष्टानामपीति चेत् अष्टानामपि कर्म्मणां

शास्त्रे विपाका वर्ण्यन्ते, न च कस्यापि कर्म्मणो लेश्यारूपो विपाक उपदर्शितः, ततः कथं कर्म्मसारपक्षमङ्गीकुर्म्महे ?, तस्मात् पूर्वोक्त एव पक्षः श्रेयानित्यङ्गीकर्त्तव्यः, तस्य हरिभद्रसूरिप्रभृतिभिरपि तत्र (तत्र) प्रदेशे अङ्गीकृतत्वादिति । अस्मिंश्च लेश्यापदे षट् उद्देशकाः, तत्रेयं प्रथमोद्देशकार्थसङ्ग्रहगाथा—

आहार समसरीरा उस्सासे कम्मवन्न लेसासु । समवेदण समकिरिया समाउया चेव बोद्धवा ॥१॥ णेरइया णं भंते ! सवे समाहारा सवे समसरीरा सवे समुस्सासनिस्सासा ?, गो० ! णो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ—नेरइया नो सवे समाहारा जाव णो सवे समुस्सासनिस्सासा ?, गोयमा ! णेरइया दुविहा पन्नत्ता, तंजहा—महासरीरा य अप्पसरीरा य, तत्थ णं जे ते महासरीरा ते णं बहुतराए पोग्गले आहारेंति बहुतराए पोग्गले परिणामेंति बहुतराए पोग्गले उस्ससंति बहुतराए पोग्गले नीससंति अभिक्खणं आहारेंति अभि० परिणामेंति अभि० ऊससंति अभि० नीससंति, तत्थ णं जे ते अप्पसरीरा ते णं अप्पतराए पो० आहा० अप्प० पो० परि० अप्प० पो० ऊससंति अप्प० पो० नीससंति आहच्च आहारेंति आहच्च परिणामेंति आहच्च ऊससंति आहच्च नीससंति, से एएणट्ठेणं गो० ! एवं वुच्चइ—नेरइया नो सवे समाहारा नो सवे समसरीरा णो सवे समुस्सासनिस्सासा (सूत्रं २०६) नेरइया णं भंते ! सवे समकम्मा ?, गो० ! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ ?—नेरइया नो सवे समकम्मा, गो० ! नेरइया दुविहा पन्नत्ता, तंजहा—पुवोववन्नगा य पच्छोववन्नगा य, तत्थ णं जे ते पुवोववन्नगा ते णं अप्पकम्मतरागा, तत्थ णं जे ते पच्छोववन्नगा ते णं महाकम्मतरागा, से

तेणट्ठेणं गो० ! एवं वुच्चइ—नेरइया णो सव्वे समकम्मा । नेरइया णं भंते! सव्वे समवन्ना ?, गो० ! णो इणट्ठे समट्ठे, से केणट्ठेणं भंते! नेरइया नो सव्वे समवन्ना ?, गो० ! णेरइया दुविहा पन्नत्ता, तंजहा—पुव्वोववन्नगा य पच्छोववन्नगा य, तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धवन्नतरागा, तत्थ णं जे ते पच्छोववन्नगा ते णं अविसुद्धवन्नतरागा, से एएणट्ठेणं गो० ! एवं वुच्चइ—नेरइया नो सव्वे समवन्ना । एवं जहेव वन्नेण भणिया तहेव लेसासु विसुद्धलेसतरागा अविसुद्धलेसतरागा य भाणियव्वा । नेरइया णं भंते! सव्वे समवेदणा ?, गो० ! नो इणट्ठे समट्ठे, से केण० एवं वुच्चति नेरइया णो सव्वे समवेयणा ?, गो० ! नेरइया दुविहा पन्नत्ता, तंजहा—सन्निभूया य असन्निभूया य, तत्थ णं जे ते सन्निभूता ते णं महावेदणतरागा, तत्थ णं जे ते असन्निभूता ते णं अप्पवेदणतरागा, से तेणट्ठेणं गो० ! एवं वुच्चइ—नेरइया नो सव्वे समवेयणा (सूत्रं २०७)

समशब्दः पूर्वार्द्धे प्रत्येकमपि सम्बध्यते, उत्तरार्द्धे प्रतिपदं साक्षात्सम्बन्धित एवास्ति, ततोऽयमर्थः—प्रथमोऽधिकारः सर्वे समाहाराः सर्वे समशरीराः सर्वे समोच्छ्वासा इति प्रश्नोपलक्षितः, द्वितीयः समकर्म्माण इति, तृतीयः समवर्णा इति, चतुर्थः समलेश्याका इति, पञ्चमः समवेदनाका इति, षष्ठः समक्रिया इति, सप्तमः समायुष इति । अथ लेश्यापरिणामविशेषाधिकारे कथममीषामर्थानामुपन्यासोपपत्तिः ?, उच्यते, अनन्तरप्रयोगपदे उक्तं—'कतिविहे णं भंते! गइप्पवाए इति (पं०) ?, गोयमा! पंचविहे०, पयोगगई ततगई बंधणछेदणगई उववायगई विहायोगई, तत्थ जा सा उववायगई सा तिविहा—खित्तोववायगई भवोववायगई नोभवोववायगई, तत्थ भवोववायगई चउव्विहा—

नेरइयभवोववायगई देवभवो० तिरिक्खजोणियभवो० मणुस्सभवोववायगई' इति, तत्र नारकत्वादिभवत्वेनोत्पन्नानां
जीवानामुपपातसमयादारभ्य आहाराद्यर्थसम्भवोऽवश्यंभावी ततो लेश्याप्रक्रमेऽपि तेषामुपन्याससूत्रं । 'यथोद्देशं
निर्देश' इति न्यायात् प्रथमं समाहारा इत्यादिप्रश्नोपलक्षितमर्थाधिकारमाह—'नेरइया णं भंते' इत्यादि प्रश्नसूत्रं
सुगमं, भगवानाह—'गोयमा' इत्यादि, नायमर्थः समर्थः—नायमर्थो युक्त्युपपन्न इति भावः, पुनः प्रश्नयति—'से
केणट्ठेण'मित्यादि, सेशब्दोऽथशब्दार्थः, अथ केनार्थेन—केन प्रयोजनेन केन प्रकारेणेति भावः भदन्त! एवमुच्यते-
नैरयिकाः सर्वे समाहारा इत्यादि ?, भगवानाह—'गोयमे'त्यादि, इहाल्पत्वं महत्त्वं चापेक्षिकं, तत्र जघन्यमल्पत्वं
अङ्गुलासङ्ख्येयभागमात्रत्वं उत्कृष्टं महत्त्वं पञ्चधनुःशतमानत्वं, एतच्च भवधारणीयशरीरापेक्षया, उत्तरवैक्रियापेक्षया
तु जघन्यमल्पत्वं अङ्गुलसङ्ख्यातभागमात्रत्वं इतरद्धनुःसहस्रमानत्वं, एतावता च किं समशरीरा इत्यस्य प्रश्नस्योत्तर-
मुक्तं । अथ शरीरप्रश्नो द्वितीयस्थानोक्तः तत्कथमस्य प्रथमत एव निर्वचनमुक्तं ?, उच्यते, शरीरविषमताभिधाने
सति आहारोच्छ्वासयोर्वैषम्यं सुप्रतिपादितं भवतीति द्वितीयस्थानोक्तस्यापि शरीरप्रश्नस्य प्रथमं निर्वचनमुक्तं ।
इदानीं आहारोच्छ्वासयोर्निर्वचनमाह—'तत्थ ण'मित्यादि, 'तत्र' अल्पशरीरमहाशरीररूपराशिद्वयमध्ये 'ण' मिति
वाक्यालङ्कारे ये यतो महाशरीरास्ते तदपेक्षया बहुतरान् पुद्गलानाहारयन्ति महाशरीरत्वादेव, दृश्यते हि लोके बृह-
च्छरीरो बह्वाशी यथा हस्ती, अल्पशरीरोऽल्पभोजी शशकवत्, बाहुल्यापेक्षं चेदमुदाहरणमुपन्यस्यते, अन्यथा कोऽपि

बृहच्छरीरोऽप्यल्पमश्नाति कश्चिदल्पशरीरोऽपि भूरि भुङ्क्ते, तथाविधमनुष्यवत्, नारकाः पुनरुपपातादिसद्वेद्यानुभावादन्यत्रासद्वेद्योदयवर्त्तित्वादेकान्तेन यथा महाशरीराः दुःखितास्तीव्राहाराभिलाषाश्च भवन्ति तथा नियमाद् बहुतरान्पुद्गलानाहारयन्ति तथा बहुतरान् पुद्गलान् परिणामयन्ति, आहारपुद्गलानुसारित्वात् परिणामस्य, परिणामश्चापृष्टोऽप्याहारकार्यमित्युक्तः, तथा 'बहुतराए पुग्गले उस्ससंति' इति बहुतरान् पुद्गलान् उच्छ्वासतया गृह्णन्ति 'नीससंति' इति निःश्वासतया मुञ्चन्ति, महाशरीरत्वादेव, दृश्यन्ते हि बृहच्छरीरास्तज्जातीयेतरापेक्षया बहूच्छ्वासनिःश्वासा इति, दुःखिता अपि तथैव, दुःखिताश्च नारका इति । आहारस्यैव कालकृतं वैषम्यमाह—'अभिक्खण'मित्यादि, अभीक्ष्णं—पौनःपुन्येनाहारयन्ति, ये यतो महाशरीरास्ते तदपेक्षया शीघ्रशीघ्रतराहारग्रहणस्वभावा इत्यर्थः, अभीक्ष्णं उच्छ्वसन्ति अभीक्ष्णं निःश्वसन्ति, महाशरीरत्वेन दुःखिततरत्वादनवरतमुच्छ्वासादि कुर्वन्तीति भावः, 'तत्थ णं जे ते' इत्यादि, 'जे ते' इति इह ये इत्येतावतैवार्थसिद्धौ ये ते इति (यद्) उच्यते तद्भाषामात्रमेव, अल्पशरीरास्ते अल्पतरान् पुद्गलानाहारयन्ति, ये यतोऽल्पशरीरास्ते तदाहरणीयपुद्गलापेक्षया अल्पतरान् पुद्गलानाहारयन्ति, अल्पशरीरत्वादेवेति भावार्थः, 'आहच्च आहारयन्ति' इति कदाचिदाहारयन्ति कदाचिन्नाहारयन्ति, महाशरीराहारग्रहणान्तरालापेक्षया बहुतरकालान्तरतयेत्यर्थः 'आहच्च ऊससंति आहच्च नीससंति' एते हि अल्पशरीरत्वेनैव महाशरीरापेक्षया अल्पतरदुःखत्वादाहच्च—कदाचित् सान्तरमित्यर्थः, उच्छ्वासादि कुर्वन्तीति भावः, अथवा अपर्याप्तिकाले अल्पश-

रीराः सन्तो लोमाहारापेक्षया नाहारयन्ति उच्छ्वासापर्याप्तकत्वेन च नोच्छ्वसन्ति, अन्यदा त्वाहारयन्ति उच्छ्वसन्ति
चेत्यत [आह]–'आहच्च आहारयन्ति आहच्च ऊससंती'त्युक्तं । 'से एएणट्ठेण'मित्यादि निगमनवाक्यं सुगमं । संप्रति
समकर्मत्वाधिकारमाह—'नेरइयाण'मित्यादि 'पुव्वोववन्नगा य पच्छोववन्नगा य' इति पूर्वं—प्रथमं उपपन्नाः पूर्वो-
त्पन्नाः त एव 'स्वार्थिकः क' इति कप्रत्ययविधानात् पूर्वोत्पन्नकाः, एवं पश्चादुत्पन्नकाः, तत्र पूर्वोत्पन्नपश्चादुत्पन्नानां
मध्ये ये पूर्वोत्पन्नास्तैर्नरकायुर्नरकगत्यसातवेदनीयादिकं प्रभूतं निर्जीर्णमल्पं विद्यत इति अल्पकर्म्मतरकाः, इतरे
तद्विपर्ययात् महाकर्म्मतरकाः, एतच्च समानस्थितिका ये नारकास्तानधिकृत्य प्रणीतमवसेयं, अन्यथा हि रत्नप्रभायां
उत्कृष्टस्थितेर्नारकस्य बहुन्यायुषि क्षयमिते पल्योपमावशेषे च तिष्ठति तस्यामेव रत्नप्रभायां दशवर्षसहस्रस्थितिर्नारको-
ऽन्यः कश्चिदुत्पन्नः स किं प्रागुत्पन्नं पल्योपमावशेषायुषं नारकमपेक्ष्य वक्तुं शक्यो यथा महाकर्म्मेति ?, वर्णसूत्रे
'विशुद्धवर्णतरका' इति विशुद्धतरवर्णा इत्यर्थः, कथमिति चेद्, उच्यते, इह यस्मान्नैरयिकाणामप्रशस्तवर्णनामकर्म्म-
णोऽशुभस्तीव्रोऽनुभागोदयो भवापेक्षः, तथा चोक्तम्—"कालभवखेत्तवेक्खो उदओ सविवागअविवागो" [कालभ-
वक्षेत्रापेक्ष उदयः सविपाकोऽविपाकः] नन्वायूंषि तत्र भवविपाकानि उक्तानि तत्कथमप्रशस्तवर्णनामकर्मण उदयो
भवापेक्षो वर्ण्यते ?, सत्यमेतत्, तथाप्यसौ वर्णनामकर्मणोऽप्रशस्तस्योदयस्तीव्रानुभागो ध्रुवश्च भवापेक्षः पूर्वाचार्यैर्व्यव-
हृतः, स पूर्वोत्पन्नैः प्रभूतो निर्जीर्णः स्तोकः शेषोऽवतिष्ठते, पुद्गलविपाकि च वर्णनाम, तेन पूर्वोत्पन्ना विशुद्धतर-

वर्णाः, पश्चादुत्पन्नैस्तु नाद्यापि प्रभूतो निर्जीर्ण इति ते अविशुद्धतरवर्णाः, एतदपि समानस्थितिनैरयिकविषयमवसेयं, अन्यथा पूर्वोक्तरीत्या व्यभिचारसंभवात्, 'एवं जहेव वन्ने भणिया' इत्यादि, एवम्—उक्तेन प्रकारेण यथैव वर्णे भणितास्तथैव लेश्यास्वपि वक्तव्याः, तद्यथा—'नेरइया णं भंते ! सवे समलेस्सा ?, गोयमा ! नो इणट्ठे समट्ठे' इत्यादि, सुगमं चैतत्, नवरं पूर्वोत्पन्ना विशुद्धलेश्याः यस्मात्पूर्वोत्पन्नैः प्रभूतान्यप्रशस्तलेश्याद्रव्याणि अनुभूय अनुभूय क्षयं नीतानि तस्मात्ते विशुद्धलेश्याः, इतरे पश्चादुत्पन्नतया विपर्ययादविशुद्धलेश्याः, एतदपि लेश्यासूत्रं समानस्थितिकनैरयिकापेक्षमवसेयं । समवेदनपदोपलक्षितार्थाधिकारप्रतिपादनार्थमाह—'नेरइया णं भंते !' इत्यादि, समवेदनाः—समानपीडाः 'सन्निभूया य' इति संज्ञिनः—संज्ञिपञ्चेन्द्रियाः सन्तो भूता—नारकत्वं गताः संज्ञिभूताः ते महावेदनाः, तीव्राशुभाध्यवसायेनाशुभतरकर्म्मबन्धनेन महानरकेषूत्पादात्, असञ्ज्ञिनः—असञ्ज्ञिपञ्चेन्द्रियाः सन्तो भूता असञ्ज्ञिभूताः, असञ्ज्ञिनो हि चतसृष्वपि गतिषूत्पद्यन्ते, तद्योग्यायुर्बन्धसंभवात्, तथा चोक्तम्—"कइविहे णं भंते ! असन्निआउए पन्नत्ते ?, गोयमा ! चउविहे असन्निआउए पन्नत्ते, तंजहा—नेरइयअसन्निआउए तिरिक्खजोणियअसन्निआउए मणुस्सजोणियअसन्निआउए देवअसन्निआउए" इति, तत्र देवेषु नैरयिकेषु च असञ्ज्ञ्यायुषो जघन्यतः स्थितिर्दश वर्षसहस्राणि उत्कर्षतः पल्योपमासङ्ख्येयभागः, तिर्यक्षु मनुष्येषु च जघन्यतोऽन्तर्मुहूर्त्तं उत्कर्षतः पल्योपमासङ्ख्येयभागः, एवं चासञ्ज्ञिनः सन्तो ये नरकेषूत्पद्यन्ते तेऽतितीव्राशुभाध्यवसायाभावात् रत्नप्र-

भायामनतितीव्रवेदनेषु नरकेपूत्पद्यन्ते अल्पस्थितिकाश्चेत्यल्पवेदनाः, अथवा सञ्ज्ञीभूताः—पर्याप्तकीभूतास्ते महा-वेदनाः, पर्याप्तत्वादेव, असञ्ज्ञिनस्तु अल्पवेदनाः, अपर्याप्ततया प्रायो वेदनाया असंभवात्, यदिवा 'सन्निभूय'त्ति सञ्ज्ञा—सम्यग्दर्शनं सा एषामस्तीति सञ्ज्ञिनः सञ्ज्ञिनो भूताः—याताः सञ्ज्ञीभूताः सञ्ज्ञित्वं प्राप्ता इत्यर्थः ते महावेदनाः, तेषां हि यथावस्थितं पूर्वकृतकर्म्मविपाकमनुस्मरतामहो महद्दुःखसंकटमिदमस्माकमापतितं न कृतो भगवदर्हत्प्रणीतः सकलदुःखक्षयंकरोऽतिविषमविषयविषपरिभोगविप्रलुब्धचेतोभिर्धर्म्म इत्येवं महद्दुःखं मनस्युपजायते ततो महावेदनाः, असञ्ज्ञिनस्तु मिथ्यादृष्टयः, ते तु स्वकृतकर्म्मफलमिदमित्येवं न जानते, अजानानाश्चानुपतप्तमा-नसा अल्पवेदना इति। अधुना 'समकिरिया' इत्यधिकारं विभावयिषुराह—

णेरइया णं भंते ! सव्वे समकिरिया ?, गो० ! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चति ? नेरइया णो सव्वे समकिरिया, गो० ! नेरइया तिविहा पन्नत्ता, तंजहा—सम्मद्दिट्ठी मिच्छद्दिट्ठी सम्ममिच्छद्दिट्ठी, तत्थ णं जे ते सम्मद्दिट्ठी तेसि णं चत्तारि किरियाओ कज्जंति तंजहा—आरंभिया परिग्गहिया मायावत्तिया अपच्चक्खाणकिरिया, तत्थ णं जे ते मिच्छ-द्दिट्ठी जे सम्मामिच्छद्दिट्ठी तेसि णं नियताओ पञ्च किरियाओ कज्जंति, तंजहा—आरंभिया परिग्गहिया मायावत्तिया अपच्चक्खाणकिरिया मिच्छादंसणवत्तिया, से तेणट्ठे णं गो० ! एवं वुच्चइ–नेरइया नो सव्वे समकिरिया। नेरइया णं भंते ! सव्वे समाउआ ?, गो० ! णो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गो० ! नेरइया चउविहा पन्नत्ता, तंजहा—

अत्थेगतिया समाउआ समोववन्नगा अत्थेगतिया समाउया विसमोववन्नगा अत्थेगतिया विसमाउया समोववन्नगा अत्थेगतिया विसमाउया विसमोववन्नगा, से तेणट्ठेणं गो० ! एवं वुच्चइ–नेरइया नो सव्वे समाउया नो सव्वे समोववन्नगा (सूत्रं २०८)

'नेरइया णं भंते ! सव्वे समकिरिया' इत्यादि, समाः—तुल्याः क्रियाः—कर्म्मनिवन्धनभूता आरम्भिक्यादिका येषां ते समक्रियाः 'चत्तारि किरियाओ कज्जंति' इति क्रियन्ते इति कर्म्मकर्त्तरिप्रयोगः तेन भवन्तीत्यर्थः, आरम्भः—पृथिव्याद्युपमर्दनं स प्रयोजनं—कारणं यस्याः सा आरंभिकी 'परिग्गहिय'त्ति परिग्रहो—धर्म्मोपकरणवर्जवस्तुस्वीकारः धर्म्मोपकरणमूर्च्छा स च प्रयोजनं यस्याः सा पारिग्रहिकी 'मायावत्तिया' इति माया—अनार्जवमुपलक्षणत्वात् क्रोधादिरपि स च प्रत्ययः—कारणं यस्याः सा मायाप्रत्यया 'अपच्चक्खाणकिरिया' इति अप्रत्याख्यानेन—निवृत्त्यभावेन क्रिया—कर्मवन्धकारणं अप्रत्याख्यानक्रियेति, 'नियइयाओ' इति नैयतिक्यो नियता इत्यर्थः अवश्यंभावित्वात्, सम्यग्दृष्टीनां त्वनियताः, संयतादिषु व्यभिचारात्, 'मिच्छादंसणवत्तिय'त्ति मिथ्यादर्शनं प्रत्ययः—कारणं यस्याः सा मिथ्यादर्शनप्रत्यया, ननु मिथ्यात्वाविरतिकषाययोगाः कर्म्मवन्धहेतव इति प्रसिद्धिः, इह तु आरम्भिक्यादयस्तेऽभिहिता इति कथं न विरोधः ?, उच्यते, इहारम्भपरिग्रहशब्दाभ्यां योगः परिगृहीतो, योगानां तद्रूपत्वात्, शेषपदैस्तु शेषा वन्धहेतव इत्यदोषः, 'सव्वे समाउआ' इत्यादेः प्रश्नस्य या निर्वचनचतुर्भङ्गी तद्भावना क्रियते—निवद्धदशवर्षसहस्रप्रमाणायुषो युगपच्चोत्पन्ना इति प्रथमो भङ्गः, तेषु एव दशवर्षसहस्रस्थितिषु नरकेषु एके

प्रथमतरसुत्पन्नाः अपरे पश्चादिति द्वितीयः, अन्यैर्विषममायुर्निबद्धं कैश्चिद्दशवर्षसहस्रस्थितिषु कैश्चिन्न पञ्चदशवर्षसहस्रस्थितिषु उत्पत्तिः पुनर्युगपदिति तृतीयः, केचित् सागरोपमस्थितयः केचित्तु दशवर्षसहस्रस्थितय इत्येवं विषमायुषो विषममेव चोत्पन्ना इति चतुर्थः ॥ सम्प्रति असुरकुमारादिषु आहारादिपदनवकं विभावयिषुरिदमाह—

असुरकुमारा णं भंते! सवे समाहारा एवं सवेवि पुच्छा?, गो०! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते! एवं वुच्चइ—जहा नेरइया। असुरकुमारा णं भंते! सवे समकम्मा?, गो०! णो इणट्ठे समट्ठे, से केण० एवं वुच्चइ?, गो०! असुरकुमारा दुविहा पन्नत्ता, तंजहा—पुवोववन्नगाय पच्छोववन्नगा य, तत्थ णं जे ते पुवो० ते णं महाकम्म० तत्थ णं जे ते पच्छोववन्नगा ते णं अप्पक०, से तेणट्ठेणं गो०! एवं वुचति—असुरकुमारा णो सवे समकम्मा एवं वन्नलेस्साए पुच्छा, तत्थ णं जे ते पुवोववन्नगा ते णं अविसुद्धवन्नतरागा तत्थ णं जे ते पच्छोववन्नगा ते णं विसुद्धवन्नतरागा से तेणट्ठेणं गो०! एवं वुच्चइ—असुरकुमारा णं सवे णो समवन्ना, एवं लेस्साएवि, वेयणाए जहा नेरइया, अवसेसं जहा नेरइयाणं, एवं जाव थणियकुमारा ॥ (सूत्रं २०९)

'असुरकुमारा णं भंते! सवे समाहारा' इत्यादि, तत्रास्मिन् सूत्रे नारकसूत्रसमानेऽपि भावना विशेषेण लिख्यते—असुरकुमाराणामल्पशरीरत्वं भवधारणीयशरीरापेक्षया जघन्यतोऽङ्गुलासङ्ख्येयभागमानत्वं महाशरीरत्वं तूत्कर्षतः सप्तहस्तप्रमाणत्वं, उत्तरवैक्रियापेक्षया तु अल्पशरीरत्वं जघन्यतोऽङ्गुलसङ्ख्येयभागमानत्वं उत्कर्षतो महाशरीरत्वं योजनलक्षमानत्वमिति, तत्रैते महाशरीरा बहुतरान् पुद्गलानाहारयन्ति, मनोभक्षणलक्षणाहारापेक्षया, देवानां हि असौ

संभवति प्रधानश्च, प्रधानापेक्षया च शास्त्रे निर्देशो वस्तूनां, ततोऽल्पशरीरग्राह्याहारपुद्गलापेक्षया ये पुद्गला बहुतरास्ते तानाहारयन्ति, बहुतरान्परिणामयन्तीत्यादिपदत्रयव्याख्यानं प्राग्वत्, तथाऽभीक्ष्णमाहारयन्ति अभीक्ष्णमुच्छ्वसन्ति, अत्र ये चतुर्थादेरुपर्याहारयन्ति स्तोकसप्तकादेश्चोपर्युच्छ्वसन्ति तानाश्रित्याभीक्ष्णमुच्यते, ये सातिरेकवर्षसहस्रस्योपर्याहारयन्ति सातिरेकपक्षस्य चोपर्युच्छ्वसन्ति तानङ्गीकृत्यैतेषामल्पकालीनाहारोच्छ्वासत्वेन पुनः पुनराहारयन्तीत्यादिव्यपदेशविषयत्वात्, तथाऽल्पशरीरा अल्पतरान् पुद्गलानाहारयन्ति उच्छ्वसन्ति च अल्पशरीरत्वादेव, यत्पुनस्तेषां कादाचित्कत्वमाहारोच्छ्वासयोस्तन्महाशरीराहारोच्छ्वासान्तरालापेक्षया बहुतमान्तरालत्वात्, तत्र हि अन्तराले ते आहारादि न कुर्वन्ति तदन्यत्र ते कुर्वन्तीत्येवंविवक्षणान्महाशरीराणामप्याहारोच्छ्वासयोरन्तरालमस्ति किं तु तदल्पमित्यविवक्षितत्वादभीक्ष्णमित्युक्तं, सिद्धं च महाशरीराणां तेषामाहारोच्छ्वासयोरल्पान्तरत्वं, अल्पशरीराणां तु महान्तरत्वं, यथा सौधर्मादिदेवानां सप्तहस्तमानतया महाशरीराणां तयोरन्तरं वर्षसहस्रद्वयं पक्षद्वयं च अनुत्तरसुराणां च हस्तमानतयाऽल्पशरीराणां त्रयस्त्रिंशद्वर्षसहस्राणि त्रयस्त्रिंशदेव च पक्षा इति, एषां च महाशरीराणामभीक्ष्णाहारोच्छ्वासाभिधानेनाल्पस्थितिकत्वमवसीयते इतरेषां तु विपर्ययः वैमानिकवदेवेति, अथवा लोमाहारापेक्षयाऽभीक्ष्णम्—अनुसमयमाहारयन्ति महाशरीराः पर्याप्तकावस्थायां उच्छ्वासस्तु यथोक्तमानेनापि भवन् परिपूर्णभवापेक्षया पुनः पुनरित्युच्यते, अपर्याप्तकावस्थायां त्वल्पशरीरा लोमाहारतो नाहारयन्ति ओजा(ज आ)हारत एवाहर-

णात् ततस्ते कदाचिदाहारयन्तीत्युच्यते, अपर्याप्तकावस्थायां च नोच्छ्वसन्ति अन्यदा तूच्छ्वसन्ति तत उच्यते आहच्चोच्छ्वसन्तीति ॥ कर्म्मसूत्रमाह—'असुरकुमारा णं भंते ! सवे समकम्मा' इत्यादि, अत्र नैरयिकसूत्रापेक्षया विपर्यासः, नैरयिका हि पूर्वोत्पन्ना अल्पकर्म्माण उक्ता इतरे तु महाकर्म्माणः असुरकुमारास्तु ये पूर्वोत्पन्नास्ते महाकर्म्माणः इतरेऽल्पकर्म्माणः, कथमिति चेद्, उच्यते, इहासुरकुमाराः स्वभवादुद्धृतास्तिर्यक्षूत्पद्यन्ते मनुष्येषु च, तिर्यक्षूत्पद्यमानाः केचिदेकेन्द्रियेषु पृथिव्यब्वनस्पतिषूत्पद्यन्ते केचित् पञ्चेन्द्रियेषु, मनुष्येष्वपि चोत्पद्यमानाः कर्म्मभूमिकगर्भव्युत्क्रान्तिकमनुष्येषूत्पद्यन्ते न शेषेषु, षण्मासावशेषायुषश्च सन्तः पारभविकमायुर्बध्नन्ति, पारभविकायुर्बन्धकाले च या एकान्ततिर्यग्योनिकयोग्या एकान्तमनुष्ययोग्या वा प्रकृतयस्ता उपचिन्वन्ति, ततः पूर्वोत्पन्ना महाकर्म्मतराः, ये तु पश्चादुत्पन्नास्ते नाद्यापि पारभविकमायुर्बध्नन्ति नापि तिर्यग्मनुष्ययोग्याः प्रकृतीरुपचिन्वन्ति ततस्तेऽल्पकर्म्मतराः, एतदपि सूत्रं समानस्थितिकसमानभवपरिमितासुरकुमारविषयमवसेयं, पूर्वोत्पन्नका अपि बद्धपारभविकायुषः पश्चादुत्पन्ना अपि अबद्धपारभविकायुषः स्तोककालान्तरिता ग्राह्याः, अन्यथा तिर्यग्मनुष्ययोग्यप्रकृतिबन्धेऽपि पूर्वोत्पन्नकात् पश्चादुत्पन्न उत्कृष्टस्थितिकोऽभिनवोत्पन्नोऽनन्तसंसारिकश्च महाकर्म्मतर एव भवति। वर्णसूत्रे ये ते पूर्वोत्पन्नकास्ते अविशुद्धवर्णतराः, कथमिति चेदुच्यते—एतेषां हि भवापेक्षः प्रशस्तवर्णनाम्नः शुभस्तीव्रानुभाग उदयः, स च पूर्वोत्पन्नानां प्रभूतः क्षयमुपगत इति ते अविशुद्धतरवर्णाः, इतरे तु पश्चादुत्पन्नतया नाद्यापि

प्रभूतो निर्जीर्ण इति विशुद्धवर्णाः, एतच्च समानस्थितिकासुरकुमारविषयं सूत्रं, 'एवं लेस्साएऽवी'ति एवं वर्णसूत्रवत् लेश्यासूत्रमपि वक्तव्यं, पूर्वोत्पन्नाः अविशुद्धलेश्या वक्तव्याः पश्चादुत्पन्ना विशुद्धलेश्या इति भावः, काऽत्र भावनेति चेदुच्यते—इह देवानां नैरयिकाणां च तथाभवस्वाभाव्यात् लेश्यापरिणाम उपपातसमयात् प्रभृत्याभवक्षयाद् भवति, यतो वक्ष्यति तृतीये लेश्योद्देशके—'से नूणं भंते ! कण्हलेसे नेरइए कण्हलेसेसु नेरइएसु उववज्जइ कण्हलेसे उवट्टइ?, जल्लेसे उववज्जइ तल्लेसे उवट्टइ?' इति, अस्यायं भावार्थः—पञ्चेन्द्रियतिर्यग्योनिको मनुष्यो वा नरकेषूत्पद्यमानो यथाक्रमं तिर्यगायुषि मनुष्यायुषि वा क्षीणे नैरयिकायुः संवेदयमान ऋजुसूत्रनयदर्शनेन विग्रहेऽपि वर्तमानो नारक एव लभ्यते तस्य च कृष्णादिलेश्योदयः पूर्वभवायुषि अन्तर्मुहूर्त्तावशेषायुष्के एव वर्त्तमानस्य भवति, तथा चोक्तम्—"अन्तमुहुत्तम्मि गए अन्तमुहुत्तम्मि सेसए चेव । लेस्साहि परिणयाहिं जीवा वच्चंति परलोयं ॥ १ ॥" [अन्तर्मुहूर्त्ते गतेऽन्तर्मुहूर्ते शेष एव । लेश्यायाः परिणामे जीवा व्रजन्ति परलोकम् ॥ १ ॥] एवं देवेष्वपि भावनीयं, तथा लेश्याध्ययने नैरयिकादिषु कृष्णादिलेश्यानां जघन्योत्कृष्टा च स्थितिरियमुक्ता—"दस वाससहस्साइं काऊए ठिई जहन्निया होइ । उक्कोसा तिन्नुदही पलियस्स असंखभागं च ॥ १ ॥ नीलाएँ जहन्नठिई तिन्नुदहि असंखभाग पलियं च । दस उदही उक्कोसा पलियस्स असंखभागं च ॥ २ ॥ कण्हाए जहन्नठिई दस उदही असंखभाग पलियं च । तित्तीससागराइं मुहुत्तअहियाइं उक्कोसा ॥ ३ ॥ एसा नेरइयाणं लेसाण ठिई उ वन्निया इणमो । तेण परं वोच्छामि

तिरियाण मणुस्सदेवाणं ॥४॥ [दश वर्षसहस्राणि कापोत्याः स्थितिर्जघन्या भवति । उत्कृष्टा त्रय उदधयः पल्यस्यासङ्ख्यभागश्च ॥ १ ॥ नीलाया जघन्या स्थितिस्त्रय उदधयोऽसङ्ख्यभागः पल्यस्य। दशोदधय उत्कृष्टा पल्यस्यासङ्ख्यभागश्च ॥२॥ कृष्णाया जघन्या स्थितिर्दशोदधयोऽसङ्ख्यभागः पल्यस्य । त्रयस्त्रिंशत्सागरोपमाणि मुहूर्त्ताधिकान्युत्कृष्टा ॥३॥ एषा नैरयिकाणां लेश्यानां स्थितिस्तु वर्णितेयं । ततः परं वक्ष्ये तिरश्चां मनुष्यदेवानां ॥ ४ ॥] अंतोमुहुत्तमद्धा लेसाण ठिई जहिं जहिं जा उ । तिरियाण नराणं वा वज्जित्ता केवलं लेसं ॥ ५ ॥" अस्या अक्षरगमनिका—अन्तर्मुहूर्त्तं कालं यावत् लेश्यानां स्थितिर्जघन्योत्कृष्टा च भवति, कासामित्याह—'जहिं जहिं जा उ' यस्मिन् यस्मिन्—पृथिवीकायिकादौ संमूर्च्छिममनुष्यादौ च याः—कृष्णाद्या लेश्यास्तासां, एता हि क्वचित् काश्चिद् भवन्ति, पृथिव्यब्वनस्पतीनां कृष्णनीलकापोततेजोरूपाश्चतस्रो लेश्याः, तेजोवायुद्वित्रिचतुरिन्द्रियसंमूर्च्छिमतिर्यक्पञ्चेन्द्रियमनुष्याणां कृष्णनीलकापोतरूपास्तिस्रः, गर्भजतिर्यक्पञ्चेन्द्रियाणां गर्भजमनुष्याणां च षडपीति, नन्वेवं शुक्ललेश्याया अपि अन्तर्मुहूर्त्तमेव स्थितिः प्राप्नोतीत्याशङ्कायामुक्तं—वर्जयित्वा केवलां शुद्धलेश्यां—शुक्ललेश्यामिति भावः, तस्या इयं स्थितिः "मुहुत्तद्धं तु जहन्ना उक्कोसा होइ पुव्वकोडी उ । नवहिं वरिसेहिं ऊणा नायव्वा सुक्कलेस्साए ॥ १ ॥ एसा तिरियनराणं लेसाण ठिई उ वन्निया होइ । तेण परं वोच्छामि लेसाण ठिई उ देवाणं ॥ २ ॥ दस वाससहस्साइं कण्हाइ ठिई जहन्निया होइ । पल्लासंखियभागो उक्कोसा होइ नायव्वा ॥ ३ ॥ जा कण्हाइ ठिई खलु उक्कोसा चेव समय-

म्भहिया । नीलाइ जहन्नेणं पलियासंखं च उक्कोसा ॥ ४ ॥ जा नीलाइ ठिई खलु उक्कोसा चेव समयमब्भहिया । काऊइ जहन्नेणं पलियासंखं च उक्कोसा ॥ ५ ॥ तेण परं वोच्छामि तेउलेस्सं जहा सुरगणाणं । भवणवइवाणमंतर-जोइसवेमाणियाणं च ॥ ६ ॥ दस वाससहस्साइं तेऊएँ ठिई जहन्निया होइ । उक्कोसा दो उदही पलियस्स असंखभागं च ॥ ७ ॥ जा तेऊइ ठिई खलु उक्कोसा चेव समयमब्भहिया । पम्हाइ जहन्नेणं दसमुहुत्तहियाइं उक्कोसा ॥ ८ ॥" [ मुहूर्त्तान्तस्तु जघन्योत्कृष्टा भवति पूर्वकोट्येव । नवभिर्वर्षैरूना ज्ञातव्या शुक्ललेश्यायाः ॥ १ ॥ एषा नरतिरश्चां लेश्यानां स्थितिर्वर्णिता तु भवति । ततः परं वक्ष्ये लेश्यानां स्थितीस्तु देवानां ॥ २ ॥ दश वर्षसहस्राणि कृष्णायाः स्थितिर्जघन्या भवति । पल्यासङ्ख्यभाग उत्कृष्टा भवति ज्ञातव्या ॥ ३ ॥ या कृष्णायाः स्थितिः खलूत्कृष्टा समयाभ्यधिकैव । नीलाया जघन्येन पल्यासङ्ख्यश्च भाग उत्कृष्टा ॥ ४ ॥ या नीलायाः स्थितिः खलु समयाभ्यधिकैवोत्कृष्टा । कापोत्याः स्थितिर्जघन्येन पल्यासङ्ख्यश्चोत्कृष्टः ॥ ५ ॥ ततः परं वक्ष्ये तेजोलेश्यां यथा सुरगणानां । भवनपतिव्यन्तरज्योतिष्कवैमानिकानां च ॥ ६ ॥ दशवर्षसहस्राणि तैजस्याः स्थितिर्जघन्या भवति । उत्कृष्टा द्वौ उदधी पल्यस्यासङ्ख्यो भागश्च ॥ ७ ॥ या तैजस्याः स्थितिः खलु उत्कृष्टा समयाभ्यधिका । पद्मायाः जघन्येन दश (सागरोपमाणि) मुहुर्त्ताभ्यधिकान्युत्कृष्टा ॥ ८ ॥ ] दश सागरोपमाण्यन्तर्मुहूर्त्ताभ्यधिकान्युत्कृष्टेतिभावः, अन्तर्मुहूर्त्तं चाभ्यधिकं यत्प्राग्भवभाव्यन्तर्मुहूर्त्तं यच्चोत्तरभवभावि तद्द्वयमप्येकं विवक्षित्वोक्तं, देवनैरयिकाणां हि स्वस्वलेश्या

प्रागुत्तरभवान्तर्मुहूर्त्तद्वयनिजायुःकालप्रमाणावस्थाना भवति, तथा "जा पम्हाइ ठिई खलु उक्कोसा चेव समयमब्भहिया। सुक्काएँ जहन्नेणं तेत्तीसुक्कोस [मुहुत्त] मब्भहिया॥ १॥" इति [या पद्मायाः स्थितिः खलु उत्कृष्टा समयाभ्यधिकैव। शुक्लाया जघन्येन त्रयस्त्रिंशत्सागरोपमाणि मुहूर्त्ताभ्यधिकानि उत्कृष्टा ॥ १ ॥] ततोऽस्माल्लेश्यास्थितिपरिमाणात् प्रागुक्ताच्च तृतीयलेश्योद्देशवक्ष्यमाणसूत्रादवसीयते—देवानां नैरयिकाणां च लेश्याद्रव्यपरिणाम उपपातसमयादारभ्या- भवक्षयात् भवति इति। पूर्वोत्पन्नैश्चासुरकुमारैः प्रभूतानि तीव्रानुभागानि लेश्याद्रव्याणि अनुभूयानुभूय क्षयं नीतानि स्तोकानि मन्दानुभावान्यवतिष्ठन्ते ततस्ते पूर्वोत्पन्ना अविशुद्धलेश्याः पश्चादुत्पन्नास्तु तद्विपर्ययाद्विशुद्धलेश्याः। 'वेयणाए जहा नेरइया' इति वेदनायां यथा नैरयिका उक्तास्तथा वक्तव्याः, तत्राप्यसञ्ज्ञिनोऽपि लभ्यमानत्वात्, तत्र यद्यपि वेदनासूत्रं पाठतो नारकाणामिवासुरकुमाराणामपि तथापि भावनायां विशेषः, स चायं—ये सञ्ज्ञीभूतास्ते सम्यग्दृष्टित्वात् महावेदनाः चारित्रविराधनाजन्यचित्तसन्तापात्, इतरे तु असञ्ज्ञीभूता मिथ्यादृष्टित्वादल्पवेदना इति, 'अवसेसं जहा नेरइयाणं'ति अवशेषं क्रियासूत्रमायुःसूत्रं च यथा नैरयिकाणां तथा वक्तव्यं, एतच्च सुगमत्वात् स्वयं परिभावनीयं 'एव'मित्यादि, एवमसुरकुमारोक्तेन प्रमाणेन नागकुमारादयोऽपि तावद्वक्तव्याः यावत्स्तनितकुमाराः ॥

पुढविकाइया आहारकम्मवन्नलेस्साहिं जहा नेरइया, पुढविकाइया सव्वे समवेयणा [प०] ?, हंता गो०! सव्वे समवेदणा, से

केणट्ठेणं ?, गो० ! पुढविकाइया सवे असन्नी असन्निभूयं अणिययं वेयणं वेयन्ति, से तेणट्ठेणं गो० ! पुढविकाइया सवे समवेदणा । पुढविकाइया णं भंते ! सवे समकिरिया ?, हंता गो० ! पुढविकाइया सवे समकिरिया, से केणट्ठेणं ?, गो० ! पुढविकाइया सवे माइमिच्छादिट्ठी तेसिं णियइयाओ पंच किरियाओ कज्जंति, तं०—आरंभिया परिग्गहिया मायावत्तिया अप्पच्चक्खाणकिरिया मिच्छादंसणवत्तिया य, से तेणट्ठेणं गो० ! एवं०, जाव चउरिंदिया, पंचेंदियतिरिक्खजोणिया जहा नेरइया नवरं किरियाहिं सम्मदिट्ठी मिच्छद्दिट्ठी सम्मामिच्छद्दिट्ठी, तत्थ णं जे ते सम्मदिट्ठी ते दुविहा पन्नत्ता, तंजहा—असंजता य संजयासंजता य, तत्थ णं जे ते संजयासंजया तेसि णं तिन्नि किरियाओ कज्जंति, तं०—आरं० परि० माया०, तत्थ णं जे अस्संजता तेसि णं चत्तारि किरिया कज्जंति, तं०—आरं० परि० माया० अपच्च०, तत्थ णं जे ते मिच्छादिट्ठी जे य सम्मामिच्छदिट्ठी तेसि णं णियइयाओ पंच किरि० कज्जंति, तं०—आरंभि० परि० माया० अपच्च० मिच्छा०, सेसं तं चेव ( सूत्रं २१० )

'पुढविकाइया' इत्यादि, पृथिवीकायिका आहारकर्मवर्णलेश्याभिर्यथा नैरयिका उक्तास्तथा वाच्याः, पृथिवीकायिकानामाहारादिविषयाणि चत्वारि सूत्राणि नैरयिकसूत्राणीव पृथिवीकायिकाभिलापेनाभिधातव्यानीति भावः, केवलमाहारसूत्रे भावनैवं—पृथिवीकायिकानामङ्गुलासङ्ख्येयभागमात्रशरीरत्वेऽप्यल्पशरीरत्वमहाशरीरत्वे आगमवचनादवसेये, स चायमागमः—"पुढविकाइए पुढविकाइयस्स ओगाहणट्ठयाए चउट्ठाणवडिए" इत्यादि, तत्र महाश-

रीरा लोमाहारतो बहुतरान् पुद्गलानाहारयन्त्युच्छ्वसन्ति च अभीक्ष्णमाहारयन्त्यभीक्ष्णं चोच्छ्वसन्ति, महाशरीरत्वादेव, अल्पशरीराणामल्पाहारोच्छ्वासत्वं अल्पशरीरत्वादेव, कादाचित्कत्वं चाहारोच्छ्वासयोः पर्याप्तेतरावस्थापेक्षमिति। वेदनासूत्रमाह—'पुढविकाइया णं भंते! सव्वे समवेयणा' इत्यादि, असन्नीति—मिथ्यादृष्टयोऽमनस्का वा 'असन्निभूयं'ति असञ्ज्ञीभूता असञ्ज्ञिनां या जायते तामित्यर्थः, एतदेव व्यनक्ति—'अणिययं'ति अनियताम्—अनिर्धारितां वेदयन्ते, वेदनामनुभवन्तोऽपि न पूर्वोपात्ताशुभकर्मपरिणतिरियमित्यवगच्छन्ति, मिथ्यादृष्टित्वादमनस्कत्वाद्वा मत्तमूर्च्छितादिवदितिभावः, क्रियासूत्रे 'माइमिच्छद्दिट्ठि'त्ति मायावन्तो हि तेषु प्रायेणोत्पद्यन्ते, यदाह शिवशर्म्माचार्यः—"उम्मग्गदेसओ मग्गनासओ गूढहियय माइल्लो। सढसीलो य ससल्लो तिरियाउं बंधई जीवो॥१॥" [उन्मार्गदेशको मार्गनाशको गूढहृदयो मायावी। शठता (शठोऽ) शीलश्च सशल्यस्तिर्यगायुर्बध्नाति जीवः॥१॥] ततस्ते मायिन उच्यन्ते, अथवा माया इह समस्तानन्तानुबन्धिकषायोपलक्षणं ततो मायिन इति किमुक्तं भवति?—अनन्तानुबन्धिकषायोदयवन्तः अत एव मिथ्यादृष्टयः, 'ताणं णियइयाओ' इति तेषां—पृथिवीकायिकानां नैयतिक्यो–नियताः पञ्चैव न तु त्रिप्रभृतय इत्यर्थः 'से एएणट्ठेण'मित्यादि, निगमनं 'जाव चउरिंदिया' इति इह महाशरीरत्वाल्पशरीरत्वे स्वस्वावगाहनानुसारेणावसेये, आहारश्च द्वीन्द्रियादीनां प्रक्षेपलक्षणोऽपीति, 'पंचिंदियतिरिक्खजोणिया जहा नेरइया' इति प्रतीतं, नवरमिह महाशरीरा अभीक्ष्णमाहारयन्ति अभीक्ष्णमुच्छ्वसन्तीति यदुच्यते तत्सङ्ख्यात-

वर्षायुषोऽपेक्ष्य तथैव दर्शनात्, नासङ्ख्यातवर्षायुषः, तेषां प्रक्षेपाहारस्य षष्ठस्योपरि प्रतिपादितत्वात्, अल्पशरीराणां त्वाहारोच्छ्वासयोर्यत् कादाचित्कत्वं तदपर्याप्तावस्थायां लोमाहारोच्छ्वासयोरभवनेन पर्याप्तावस्थायां तद्भवनेन चाव-सेयं, कर्म्मसूत्रे यत्पूर्वोत्पन्नानामल्पकर्म्मत्वं इतरेषां तु महाकर्म्मत्वं तदायुष्कादितद्भवेवद्यकर्म्मापेक्षं, वर्णलेश्यासूत्र-योरपि यत्पूर्वोत्पन्नानां शुभवर्णाद्युक्तं तत्तारुण्यात् पश्चादुत्पन्नानां चाशुद्धवर्णादि बाल्यादवसेयं, लोके तथादर्शना-दिति, तथा 'संजयासंजया' इति देशविरताः स्थूलात् प्राणातिपातादेर्निवृत्तत्वात् इतरस्मादनिवृत्तत्वात् ॥ मनुष्य-विषयं सूत्रमाह—

मणुस्सा णं भंते ! सवे समाहारा ?, गो० ! णो इणट्ठे समट्ठे, से केण० ?, गो० ! मणुस्सा दुविहा पं०, तं०—महासरीरा य अप्पसरीरा य, तत्थ णं जे ते महासरीरा ते णं बहुतराए पोग्गले आहारेंति जाव बहुतराए पोग्गले नीससंति आहच्च आहारेंति आहच्च नीससंति तत्थ णं जे ते अप्पसरीरा ते णं अप्पतराए पोग्गले आहारेंति जाव अप्पतराए पोग्गले नीस-संति अभिक्खणं आहारेंति जाव अभिक्खणं नीससंति, से तेणट्ठेणं गो० ! एवं वुच्चति—मणुस्सा सवे णो समाहारा, सेसं जहा नेरइयाणं, नवरं किरियाहिं मणूसा तिविहा पन्नत्ता, तंजहा—सम्मद्दिट्ठी मिच्छादिट्ठी सम्मामिच्छदिट्ठी, तत्थ णं जे ते सम्मदिट्ठी ते तिविहा पन्नत्ता, तंजहा—संयता असंयता संयतासंयता, तत्थ णं जे ते संयता ते दु० पं०, तं—सरागसं-यता वीयरागसंयता य, तत्थ णं जे ते वीयरागसंयता ते णं अकिरिया, तत्थ णं जे ते सरागसंयता ते दु० पं०, तं०—

पमत्तसंयता य अपमत्तसंयता य, तत्थ णं जे ते अपमत्तसंजया तेसिं एगा मायावत्तिया किरिया कज्जति, तत्थ णं जे ते पमत्तसंजया तेसिं दो किरियाओ कज्जंति–आरंभिया मायावत्तिया य, तत्थ णं जे ते संजयासंजया तेसिं तिन्नि किरियाओ कज्जंति तं–आरंभिया परिग्गहिया मायावत्तिया, तत्थ णं जे ते अस्संजया तेसिं चत्तारि किरियाओ कज्जंति, तंजहा–आरंभिया परिग्गहिया मायावत्तिया अपच्चक्खाणकिरिया, तत्थ णं जे ते मिच्छदिट्ठी जे सम्मामिच्छदिट्ठी तेसिं नियइयाओ पंच किरियाओ कज्जंति, तंजहा–आरंभिया परिग्गहिया मायावत्तिया अपच्चक्खाणकिरिया मिच्छादंसणवत्तिया, सेसं जहा नेरइयाणं ॥ (सूत्रं २११)

'मणुस्सा णं भंते ! सवे समाहारा' इत्यादि, सुगमं नवरं 'आहच्च आहारेंति आहच्च ऊससंति आहच्च नीससंति' इति, महाशरीरा हि मनुष्या देवकुर्वादिमिथुनकास्ते च कदाचिदेवाहारयन्ति कावलिकाहारेण "अट्ठमभत्तस्स आहारो" [ अष्टमभक्तेनाहारः ] इति वचनात् उच्छ्वासनिःश्वासावपि तेषां शेषमनुष्यापेक्षया अतिसुखित्वात् कादाचित्कौ, अल्पशरीरास्त्वभीक्ष्णमल्पं चाहारयन्ति, बालानां तथादर्शनात्, संमूर्च्छिममनुष्याणामल्पशरीराणामनवरतमाहारसंभवाच्च, उच्छ्वासनिःश्वासावप्यल्पशरीराणामभीक्ष्णं प्रायो दुःखबहुलत्वात्, 'सेसं जहा नेरइयाण'मिति शेषं–कर्मवर्णादिविषयं सूत्रं यथा नैरयिकाणां तथाऽवसेयं, नवरमिह पूर्वोत्पन्नानां शुद्धवर्णादित्वं तारुण्याद् भावनीयं, क्रियासूत्रे विशेषमाह—नवरं 'किरियाहिं मणुया तिविहा' इत्यादि, तत्र सरागसंयता—अक्षीणानुपशान्तकषाया

वीतरागसंयता—उपशान्तकषायाः क्षीणकषायाश्च 'अकिरिया' इति वीतरागत्वेनारम्भादीनां क्रियाणामभावात्, 'एगा मायावत्तिया' इति अप्रमत्तसंयतानामेकैव मायाप्रत्यया क्रिया 'कज्जइ'त्ति क्रियते भवति, कदाचिदुड्डाहरक्षणप्रवृत्तानाम्, अक्षीणकषायत्वात्, 'आरंभिया मायावत्तिया' इति प्रमत्तसंयतानां हि सर्वः प्रमत्तयोग आरम्भ इति भवत्यारम्भिकी क्रिया अक्षीणकषायत्वाच्च मायाप्रत्ययेति, 'सेसं जहा नेरइयाण'मिति शेषमायुर्विषयं सूत्रं यथा नैरयिकाणां तथा वक्तव्यं, तच्च सुगमत्वात् स्वयं भावनीयं ।

वाणमंतराणं जहा असुरकुमाराणं, एवं जोइसियवेमाणियाणवि, नवरं ते वेदणाए दु० पं० तं०—माइमिच्छदिट्ठीउववन्नगा य अमाइसम्मदिट्ठीउववन्नगा य, तत्थ णं जे ते माईमिच्छदिट्ठीउववन्नगा ते णं अप्पवेदणतरागा तत्थ णं जे ते अमाईसम्मदिट्ठीउववन्नगा ते णं महावेदणतरागा, से तेण० गो० ! एवं वु०, सेसं तहेव ( सूत्रं २१२ )

'वाणमन्तराणं जहा असुरकुमाराण' मित्यादि, यथा असुरकुमारा 'सन्निभूया य असन्निभूया य, तत्थ णं जे सन्निभूया ते महावेयणा असन्निभूया अप्पवेयणा' इत्येवमधीता व्यन्तरा अपि तथैवाध्येतव्याः, यतोऽसुरादिषु व्यन्तरान्तेषु देवेष्वसञ्ज्ञिन उत्पद्यन्ते, तथा चोक्तं व्याख्याप्रज्ञप्तौ प्रथमशते द्वितीयोद्देशके—"असन्नी णं जहन्नेणं भवणवासीसु उक्कोसेणं वाणमंतरेसु" इति [असंज्ञिनो जघन्येन भवनवासिषु उत्कृष्टेन व्यन्तरेषु] ते चासुरकुमारप्रकरणोक्तयुक्तेरल्पवेदना भवन्तीत्यवसेयं, यत्तु प्राग् व्याख्यानं कृतं सञ्ज्ञिनः सम्यग्दृष्टयोऽसञ्ज्ञिनस्त्वितरे इति, तदेवमपि

घटते इति वृद्धव्याख्यानुसरणतः कृतमित्यदोषः 'एव' मित्यादि, एवमसुरकुमारोक्तप्रकारेण ज्योतिष्कवैमानिकानामपि वक्तव्यं, नवरं ते वेदनायामेवमध्येतव्या—'दुविहा जोइसिया पन्नत्ता, तंजहा—मायिमिच्छदिट्ठीउववन्नगा य' इत्यादि, अथ कस्मादेवमधीयते यावता असुरकुमारवत् 'असन्निभूया य' इति किन्नाधीयते ?, उच्यते, तेष्वसञ्ज्ञिन उत्पादाभावात्, एतदपि कथमवसेयं इति चेत् ?, उच्यते, युक्तिवशात्, तथाहि—असङ्ख्यायुष उत्कृष्टा स्थितिः पल्योपमासङ्ख्येयभागः, ज्योतिष्काणां च जघन्यापि स्थितिः पल्योपमसङ्ख्येयभागः, वैमानिकानां पल्योपमं, ततोऽवसीयते नास्ति तेष्वसञ्ज्ञी, तदभावाचोपदर्शितप्रकारेणैवाध्येतव्या नासुरकुमारोक्तप्रकारेणेति, तत्र मायिमिथ्यादृष्टयोऽल्पवेदना इतरे महावेदनाः शुभवेदनामाश्रित्येति । अथ चतुर्विंशतिदण्डकमेव सलेश्यपदविशेषितमाहारादिपदैर्निरूपयति—

सलेसा णं भंते ! नेरइया सव्वे समाहारा समसरीरा समुस्सासनिस्सासा सव्वेवि पुच्छा, गो० ! एवं जहा ओहिगमओ तहा सलेसागमओवि निरवसेसो भाणियव्वो जाव वेमाणिया । कण्हलेसा णं भंते ! नेरइया सव्वे समाहारा पुच्छा, गो० जहा ओहिया, नवरं नेरइया वेयणाए माइमिच्छदिट्ठीउववन्नगा य अमाइसम्मदिट्ठीउववन्नगा य भाणियव्वा, सेसं तहेव जहा ओहियाणं, असुरकुमारा जाव वाणमंतरा, एते जहा ओहिया, नवरं मणुस्साणं किरियाहिं विसेसो जाव तत्थ णं जे ते सम्मदिट्ठी ते तिविहा पन्नत्ता, तंजहा—संजया अस्संजया संजयासंजया य, जहा ओहियाणं, जोइसियवेमाणिया आइल्लियासु

तिसु लेसासु ण पुच्छिज्जंति, एवं जहा किण्हलेसा विचारिया तहा नीललेस्सा विचारेयव्वा, काउलेसा नेरइएहिंतो आरब्भ जाव वाणमंतरा, नवरं काउलेस्सा नेरइया वेदणाए जहा ओहिया। तेउलेसा णं भंते! असुरकुमाराणं ताओ चेव पुच्छाओ, गो०! जहेव ओहिया तहेव नवरं वेयणाए जहा जोइसिया, पुढविआउवणस्सइपंचेंदियतिरिक्खमणुस्सा जहा ओहिया तहेव भाणियव्वा, नवरं मणूसा किरियाहिं जे संजता ते पमत्ता य अपमत्ता य भाणियव्वा सरागवीयरागा नत्थि, वाणमंतरा तेउलेसाए जहा असुरकुमारा एवं जोइसियवेमाणियावि, सेसं तं चेव, एवं पम्हलेसावि भाणियव्वा, नवरं जेसिं अत्थि, सुक्कलेस्सावि तहेव जेसिं अत्थि, सव्वं तहेव जहा ओहियाणं गमओ, नवरं पम्हलेस्ससुक्कलेस्साओ पंचेंदियतिरिक्खजोणियमणूसवेमाणियाणं चेव, न सेसाणंति ( सूत्रं २१३ )। पन्नवणाए भगवईए लेस्साए पढमो उद्देसओ समत्तो।

'सलेसा णं भंते! नेरइया' इत्यादि, यथा अनन्तरमौघिको—विशेषणरहितः प्राक् गम उक्तस्तथा सलेश्यगमोऽपि निरवशेषो वक्तव्यः यावद्वैमानिकाः—वैमानिकविषयं सूत्रं, सलेश्यपदरूपविशेषणमन्तरेणान्यस्य विशेषणस्य क्वचिदप्यभावात्॥ अधुना लेश्याभेदकृष्णादिविशेषितान् षड् दण्डकानाहारादिपदैर्विभणिषुराह—'कण्हलेसा णं भंते! नेरइया' इत्यादि, यथा औघिका—विशेषणरहिताः आहारशरीरोच्छ्वासकर्म्मवर्णलेश्यावेदनाक्रियोपपाताख्यैर्नवभिः पदैः प्राग् नैरयिका उक्तास्तथा कृष्णलेश्याविशेषिता अपि वक्तव्याः, नवरं वेदनापदे नैरयिका एवं वक्तव्याः—'माइमिच्छदिट्ठीउववन्नगा य अमायिसम्मदिट्ठीउववन्नगा य' इति, न चौघिकसूत्रे इव 'सन्निभूया य' इति, कस्मादिति चेद्, उच्यते,

इहासञ्ज्ञिनः प्रथमपृथिव्यामेवोत्पद्यन्ते "असन्नी खलु पढम"मिति [ असंज्ञिनः खलु प्रथमां ] वचनात्, प्रथमायां च पृथिव्यां न कृष्णलेश्या यत्र च पञ्चम्यादिषु पृथिवीषु कृष्णलेश्या न तत्रासञ्ज्ञिन इति, तत्र मायिनो मिथ्यादृष्टयश्च महावेदना भवन्ति, यतः प्रकर्षपर्यन्तवर्त्तिनीं स्थितिमशुभां ते निर्वर्त्तयन्ति, प्रकृष्टायां च तस्यां महती वेदना इतरेषु विपरीतेति । असुरकुमारादयो यावत् व्यन्तरास्तावद्यथा औधिका उक्तास्तथा वक्तव्याः, नवरं मनुष्याणां क्रियाभिर्विशेषः, तमेव विशेषं दर्शयति—'तत्थ णं जे ते' इत्यादि, तत्र—तेषु सम्यग्दृष्ट्यादिषु मध्ये ये ते सम्यग्दृष्टयस्ते त्रिविधाः प्रज्ञप्ताः, तद्यथा—संयता असंयताः संयतासंयताश्च, 'जहा ओहियाण'मिति एतेषां यथौघिकानामुक्तं तथा कृष्णलेश्यापदविशेषितानामपि वक्तव्यं, तद्यथा—संयतानां द्वे क्रिये आरम्भिकी मायाप्रत्यया च, कृष्णलेश्या हि प्रमत्तसंयतानां भवति नाप्रमत्तसंयतानां, तेषां तु यथोक्तरूपे एव द्वे क्रिये, संयतासंयतानां तिस्रः—आरम्भिकी पारिग्रहिकी मायाप्रत्यया च, असंयतानां चतस्रः—आरम्भिकी पारिग्रहिकी मायाप्रत्यया अप्रत्याख्यानक्रिया चेति । ज्योतिष्कवैमानिकास्तु आद्यासु तिसृषु लेश्यासु न पृच्छ्यन्ते, किमुक्तं भवति ?—तद्विषयं सूत्रं न वक्तव्यं, तासां तेष्वभावात्, यथा च कृष्णलेश्याविषयं सूत्रमुक्तं तथा नीललेश्याविषयमपि वक्तव्यं, नानात्वाभावाद्, एतदेवाह—'एवं जहा किण्हलेसा विचारिया तहा नीललेस्सा विचारेयव्वा' नीललेश्याविषयोऽपि सूत्रदण्डक एवमेव, केवलं कृष्णलेश्यापदस्थाने नीललेश्यापदमुच्चरितव्यमिति भावः, 'कापोतलेस्सा' इत्यादि, कापोतलेश्या हि

सूत्रतो नीललेश्येव नैरयिकेभ्य आरभ्य यावद्व्यन्तरास्तावद्वक्तव्या, नवरं कापोतलेश्यायां नैरयिका वेदनासूत्रे यथौ-
धिकास्तथा वक्तव्याः—'नेरइया दुविहा पन्नत्ता—सन्निभूया य असन्निभूया य' इत्येवं वक्तव्या इति भावः, अस-
ञ्ज्ञिनामपि प्रथमपृथिव्यामुत्पादात् तत्र च कापोतलेश्याभावात्, तेजोलेश्याविषयं सूत्रमाह—'तेउलेस्सा णं भंते !
असुरकुमारा' इत्यादि, इह नारकतेजोवायुविकलेन्द्रियाणां तेजोलेश्या न संभवति ततः प्रथमत एवासुरकुमार-
विषयं सूत्रमुक्तं, अत एव तेजोवायुविकलेन्द्रियसूत्रमपि न वक्तव्यं, असुरकुमारा अपि यथा प्रागोघत उक्तास्तथा
वक्तव्याः, नवरं वेदनापदे यथा ज्योतिष्कास्तथा वक्तव्याः, 'सन्निभूया य असन्निभूया य' इति न वक्तव्याः, किंतु
'माइमिच्छदिट्ठिउववन्नगा अमाइसम्मदिट्ठिउववन्नगा' इति वक्तव्या इति भावः, असञ्ज्ञिनां तेजोलेश्यावत्सूत्पादा-
भावात्, पृथिव्यब्वनस्पतयः तिर्यक्पञ्चेन्द्रिया मनुष्याश्च यथा प्रागोघिकास्तथा वक्तव्याः, नवरं मनुष्याः क्रियाभिर्ये
संयतास्ते प्रमत्ताश्चाप्रमत्ताश्च भणनीयाः, उभयेषामपि तेजोलेश्यायाः संभवात्, 'सरागा वीयरागा य नत्थि'त्ति
सरागसंजया वीअरागसंजया य इति न वक्तव्या इत्यर्थः, वीतरागाणां तेजोलेश्याया असंभवेन वीतरागपदोपन्यासस्य
तेजोलेश्यायाः सरागत्वाव्यभिचारात् सरागपदोपन्यासस्य चायोगात्, 'वाणमंतरा तेउलेसाए जहा असुरकुमारा'
इति, तेऽपि 'माइमिच्छदिट्ठिउववन्नगा अमाइसम्मदिट्ठिउववन्नगा य' इत्येवं वक्तव्याः न तु 'सन्निभूया य असन्नि-
भूया य' इति, तेष्वपि तेजोलेश्यावत्सु मध्येऽसञ्ज्ञिनामुत्पादाभावात् 'एवं पम्हलेसावि भाणियव्वा' इति, एवं—

तेजोलेश्योक्तप्रकारेण पद्मलेश्याऽपि वक्तव्या, किमविशेषेण सर्वेष्वपि ?, नेत्याह—'नवरं जेसिं अत्थि' इति नवरम्—अयं विशेषः येषां पद्मलेश्याऽस्ति तेष्वेव वक्तव्या, न शेषेसु तत्र पञ्चेन्द्रियतिरश्चां मनुष्याणां वैमानिकानां चास्ति न शेषाणामिति तद्विषयमेवैतस्याः सूत्रं, शुक्लेश्याऽपि तथैव वक्तव्या यथा पद्मलेश्या, साऽपि येषामस्ति तेषां वक्तव्या सर्वमपि सूत्रं तथैव यथौघिकानां गम उक्तः, पद्मलेश्या शुक्लेश्या च येषामस्ति तान् साक्षादुपदर्शयति—'नवरं पम्हलेससुक्कलेसाओ' इत्यादि सुगमं ॥ इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां लेश्यापदस्य प्रथम उद्देशकः समाप्तः ॥

---

उक्तः षड्द्वाराद्यर्थाभिधायी प्रथम उद्देशकः, अधुना द्वितीय उद्देशक उच्यते, तत्र चेदमादिसूत्रम्

कइ णं भंते ! लेसाओ पन्नत्ताओ ?, गोयमा ! छल्लेसाओ पन्नत्ताओ, तंजहा—कण्हलेसा नीललेसा काउलेसा तेउलेसा पम्हलेसा सुक्कलेस्सा ( सूत्रं २१४ ) नेरइयाणं भंते ! कइ लेसाओ पन्नत्ताओ ?, गो० ! तिन्नि, तं०—किण्ह० नील० काउलेसा । तिरिक्खजोणियाणं भंते ! कइ लेस्साओ पन्नत्ताओ ?, गो० ! छल्लेसाओ पं०, तं०—कण्हलेस्सा जाव सुक्कलेसा । एगिंदियाणं भंते ! कइ लेसाओ पं० ?, गो० चत्तारि लेसाओ प०, तं०—कण्ह० जाव तेउलेसा। पुढविकाइयाणं भंते ! कइ लेसाओ पं० ?, गो० ! एवं चेव, आउवणस्सइकाइयाणवि एवं चेव, तेउवाउबेइंदियतेइंदियचउरिंदियाणं जहा

नेरइयाणं । पंचेंदियतिरिक्खजोणियाणं पुच्छा, गो० ! छल्लेस्सा—कण्ह० जाव सुक्कलेसा, संमुच्छिमपंचेंदियतिरिक्खजोणियाणं पुच्छा, गो० ! जहा नेरइयाणं, गब्भवक्कंतियपंचेंदियतिरिक्खजोणियाणं पुच्छा, गो० ! छल्लेसा कण्ह० जाव सुक्कलेसा, तिरिक्खजोणिणीणं पुच्छा, गो० ! छल्लेसा एयाओ चेव । मणूसाणं पुच्छा, गो० ! छल्लेसा एयाओ चेव, संमुच्छिममणुस्साणं पुच्छा, गो० ! जहा नेरइयाणं, गब्भवक्कंतियमणुस्साणं पुच्छा, गो० ! छल्लेसाओ तं०—कण्ह० जाव सुक्कलेसा, मणुस्सीणं पुच्छा, गो० ! एवं चेव । देवाणं पुच्छा, गो० ! छ एयाओ चेव, देवीणं पुच्छा, गो० ! चत्तारि कण्ह० जाव तेउलेस्सा, भवणवासीणं भंते ! देवाणं पुच्छा, गो० ! एवं चेव, एवं भवणवासिणीणवि, वाणमंतरदेवाणं पुच्छा, गो० ! एवं चेव, वाणमंतरीणवि, जोइसियाण पुच्छा, गो० ! एगा तेउलेसा, एवं जोइसिणीणवि । वेमाणियाणं पुच्छा, गो० ! तिन्नि, तं०—तेउ० पम्ह० सुक्कलेस्सा, वेमाणिणीणं पुच्छा, गो० ! एगा तेउलेस्सा ( सूत्रं २१५ ) एतेसि णं भंते ! जीवाणं सलेस्साणं कण्हलेसाणं जाव सुक्कलेस्साणं अलेस्साण य कयरे २ अप्पा वा ४?, गो० ! सव्वत्थोवा जीवा सुक्कलेस्सा पम्हलेस्सा संखेज्जगु० तेउलेस्सा संखेज्जगु० अलेस्सा अणंतगु० काउलेसा अणंतगु० नीललेसा विसेसाहिया कण्हलेसा विसेसाहिया सलेस्सा विसेसाहिया ( सूत्रं २१६ )

'कइ णं भंते ! लेसाओ' इत्यादि, कः पुनरस्य सूत्रस्य सम्बन्ध इति चेद् ?, उच्यते, उक्तं प्रथमोद्देशके 'सलेसा णं भंते ! नेरइया' इत्यादि इह तु ता एव लेश्याश्चिन्त्यन्ते 'कइ लेसा' इति, तत्र लेश्याः प्राग्निरूपितशब्दार्थाः 'कइ'त्ति

किंपरिमाणाः प्रज्ञप्ताः?, भगवानाह—गौतम! षड्, ता एव नामतः कथयति—'कण्हलेसा' इत्यादि, कृष्णद्रव्यात्मिका कृष्णद्रव्यजनिता वा लेश्या कृष्णलेश्या एवं नीललेश्येत्यादिपदेष्वपि भावनीयं। 'नेरइयाणं भंते!' इत्यादि, सूत्रमल्पबहुत्ववक्तव्यतायाः प्राक् सकलमपि सुगमं, नवरं वैमानिकसूत्रे यद्वैमानिकानामेका तेजोलेश्योक्ता तत्रेदं कारणं—वैमानिक्यो हि देव्यः सौधर्मेशानयोरेव, तत्र च केवला तेजोलेश्येति, सामान्यतः सङ्ग्रहणिगाथा अत्रेमाः—"किण्हा नीला काऊ तेऊलेसा य भवणवंतरिया। जोइससोहम्मीसाण तेउलेसा मुणेयव्वा ॥ १ ॥ कप्पे सणंकुमारे माहिंदे चेव वंभलोए य। एएसु पम्हलेसा तेण परं सुक्कलेसा उ ॥ २ ॥ पुढवी आउ वणस्सइ वायर पत्तेय लेस चत्तारि। गब्भयतिरियनरेसुं छल्लेसा तिन्नि सेसाणं ॥ ३ ॥" [ कृष्णा नीला कापोती तैजसी च लेश्या भवनव्यन्तराणां। ज्योतिष्कसौधर्मेशानाः तेजोलेश्याका ज्ञातव्याः ॥ १ ॥ कल्पे सनत्कुमारे माहेन्द्रे चैव ब्रह्मलोके च। एतेषु पद्मलेश्या ततः परं शुक्ललेश्यैव ॥ २ ॥ पृथ्व्यब्वनस्पतिबादरप्रत्येकानां चतस्रो लेश्याः। गर्भजतिर्यङ्नरेषु षड् लेश्याः शेषाणां तिस्रः ॥ ३] सम्प्रति लेश्यादीनामष्टानामल्पबहुत्वमाह—'एएसि णं भंते! जीवाणं सलेस्साण'मित्यादि, अमीषामष्टानां मध्ये कतरे कतरेभ्योऽल्पाः कतरे कतरेभ्यो बहवः कतरे कतरैः सह तुल्याः, इह प्राकृतत्वात् तृतीयायामपि कतरेहिंतो निर्देशोऽयं भवतीत्येवं व्याख्यायामदोषः, तथा कतरे कतरेभ्यो विशेषाधिकाः?, एवं गौतमेन प्रश्ने कृते भगवानाह—गौतम! सर्वस्तोकाः शुक्ललेश्याः, शुक्ला शुक्लद्रव्यजनिता वा लेश्या येषां ते

शुक्ललेश्याः, एवं शेषपदेष्वपि विग्रहभावना कार्या, सर्वस्तोकाः, कतिपयेषु पञ्चेन्द्रियतिर्यक्षु मनुष्येषु च लान्तकादिदेवेषु च तस्याः सद्भावात्, तेभ्यः पद्मलेश्याः सङ्ख्येयगुणाः, सङ्ख्येयगुणेषु तिर्यक्पञ्चेन्द्रियेषु मनुष्येषु सनत्कुमारमाहेन्द्रब्रह्मलोककल्पवासिषु च देवेषु पद्मलेश्याभावात्, अथ लान्तकादिदेवेभ्यः सनत्कुमारादिकल्पत्रयवासिनो देवा असङ्ख्यातगुणाः ततः शुक्ललेश्येभ्यः पद्मलेश्याः असङ्ख्येयगुणाः प्राप्नुवन्ति कथं सङ्ख्येयगुणा उक्ताः ?, उच्यते, इह जघन्यपदेऽप्यसङ्ख्यातानां सनत्कुमारादिकल्पत्रयवासिदेवेभ्योऽसङ्ख्येयगुणानां पञ्चेन्द्रियतिरश्चां शुक्ललेश्या ततः पद्मलेश्याचिन्तायां सनत्कुमारादिदेवप्रक्षेपेऽप्यसङ्ख्येयगुणत्वं न भवति किं तु यदेव तिर्यक्पञ्चेन्द्रियापेक्षयैव सङ्ख्येयगुणत्वं तदेवास्तीति सङ्ख्येयगुणाः शुक्ललेश्येभ्यः पद्मलेश्याः, तेभ्योऽपि सङ्ख्येयगुणाः तेजोलेश्याः, बादरपृथिव्यप्प्रत्येकवनस्पतिकायिकेषु सङ्ख्येयगुणेषु तिर्यक्पञ्चेन्द्रियमनुष्येषु भवनपतिव्यन्तरज्योतिष्कसौधर्म्मेशानदेवेषु च तेजोलेश्याभावात्, भावना सङ्ख्येयगुणत्वे प्राग्वदत्रापि कर्त्तव्या, तेभ्योऽप्यनन्तगुणा अलेश्याः, सिद्धानामलेश्यानां प्राक्तनेभ्योऽनन्तगुणत्वात्, तेभ्योऽपि कापोतलेश्या अनन्तगुणाः, सिद्धेभ्योऽप्यनन्तगुणानां वनस्पतिकायिकानां कापोतलेश्यावतां सद्भावात्, तेभ्योऽपि नीललेश्या विशेषाधिकाः, तेभ्योऽपि कृष्णलेश्या विशेषाधिकाः, क्लिष्टक्लिष्टतराध्यवसायानां प्रभूततराणां सद्भावात्, कृष्णलेश्येभ्योऽपि सलेश्या विशेषाधिकाः, नीललेश्यादीनामपि तत्र प्रक्षेपात् ॥

तदेवं सामान्यतोऽल्पबहुत्वं चिन्तितं, सम्प्रति नैरयिकेषु तदल्पबहुत्वं चिन्तयन्नाह—

एएसि णं भंते ! नेरइयाणं कण्हलेसाणं नीललेस्साणं काउलेस्साण य कयरे २ हिंतो अप्पा वा ४ ?, गो० ! सवथोवा नेरइया कण्हलेसा नीललेसा असं० काउले० असं० (सूत्रं २१७) एतेसि णं भंते ! तिरिक्खजोणियाणं कण्हलेसाणं जाव सुक्कलेसाण य कयरे २ ?, अप्पा वा ४ गो० ! सव० तिरिक्खजोणिया सुक्कलेसा एवं जहा ओहिया नवरं अलेस [सलेस] वज्जा, एएसिं एगिंदियाणं कण्ह० नील० काउ० तेउलेस्साण य कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! सवत्थोवा एगिंदिया तेउलेस्सा काउले० अणं० नीलले० विसेसा कण्हलेसा० (विसेसा०)। एएसि णं भंते ! पुढविकाइयाणं कण्हलेसाणं जाव तेउलेस्साण य कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! जहा ओहिया एगिंदिया नवरं काउलेस्सा असंखेज्जगुणा, एवं आउकाइयाणवि, एतेसि णं भंते ! तेउकाइयाणं कण्हलेस्साणं नीललेस्साणं काउलेस्साण य कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! सवत्थोवा तेउकाइया काउलेस्सा नीललेस्सा विसेसाहिया कण्हलेस्सा विसेसाहिया, एवं वाउकाइयाणवि, एतेसि णं भंते ! वणस्सइकाइयाणं कण्हलेस्साणं जाव तेउलेस्साण य जहा एगिंदिय० ओहियाणं, बेइंदियाणं तेइंदियाणं चउरिंदियाणं जहा तेउकाइयाणं, एएसि णं भंते ! पंचेंदियतिरिक्खजोणियाणं कण्हलेसाणं एवं जाव सुक्कलेसाण य कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! जहा ओहियाणं तिरिक्खजोणियाणं नवरं काउलेस्सा असंखेज्जगुणा, संमुच्छिमपंचेंदियतिरिक्खजोणियाणं जहा तेउकाइयाणं, गब्भवक्कंतियपंचेंदियतिरिक्खजोणियाणं जहा ओहियाणं तिरिक्खजोणियाणं नवरं काउलेस्सा संखेज्जगुणा, एवं तिरिक्खजोणिणीणवि, एएसि णं भंते ! संमुच्छिमपंचेंदियतिरिक्खजोणियाणं गब्भवक्कंतियपंचेंदियतिरिक्खजोणियाण य कण्ह० जाव सुक्कलेसाण य कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! सवत्थोवा गब्भवक्कंतियपंचेंदियतिरि० सुक्क०

पम्ह० संखेज्जगुणा तेउले० संखे० काउ० संखे० नीललेस्सा विसेसा० कण्हलेसा विसेसा० काउलेसा संमुच्छिमपंचेंदिय-तिरिक्खजोणिया असंखेज्ज० नीललेसा विसेसा० कण्हलेसा विसेसा०, एएसि णं भंते ! संमुच्छिमपंचेंदियतिरिक्खजोणियाणं तिरिक्खजोणिणीण य कण्हले० जाव सुक्कलेसाण य कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! जहेव पंचमं तहा इमं छट्ठं भाणियव्वं, एएसि णं भंते ! गब्भवक्कंतियपंचेंदियतिरिक्खजोणियाणं तिरिक्खजोणिणीण य कण्हलेसाणं जाव सुक्कलेसाण य कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! सव्वत्थोवा गब्भवक्कंतियपंचेंदियतिरिक्खजोणिया सुक्कलेसा सुक्कलेसाओ तिरिक्खजोणिणीओ संखेज्जगुणाओ पम्हलेसा गब्भवक्कंतियपंचेंदियतिरिक्खजोणिया संखे० पम्हलेसाओ तिरिक्खजोणिणीओ संखेज्ज० तेउले० तिरिक्खजोणिया संखे० तेउलेसा तिरिक्खजोणिणीओ सं० काउले० सं० नीलले० विसेसा० कण्हले० विसेसा० काउलेसाओ सं० नीललेसाओ विसेसाहियाओ कण्हलेसाओ विसेसाहियाओ, एएसि णं भंते ! संमुच्छिमपंचें० तिरिक्खजोणि० गब्भवक्कंतियपंचें० तिरिक्खजोणिणीण य कण्हलेसाणं जाव सुक्कलेस्साण य कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! सव्वत्थोवा गब्भ० तिरिक्खजोणिया सुक्कलेसा सुक्कलेसाओ संखेज्जगुणाओ पम्हलेसा गब्भव० संखेज्ज० पम्हलेसाओ तिरिक्ख० संखेज्जगुणाओ तेउलेसा गब्भव० तिरिक्ख० संखेज्जगु० तेउलेसाओ तिरि० संखेज्जगुणाओ काउलेसाओ सं० नीललेसा विसे० कण्हले० विसे० काउले० सं० नीललेसा वि० कण्हलेसाओ विसेसाहियाओ कण्हले० संमु० पंचेंदि० तिरिअ० सं० नीलले० विसे० कण्हले० विसेसाहिया। एएसि णं भंते ! पंचेंदियतिरिक्खजोणियाणं तिरिक्खजोणिणीण य कण्हलेस्साणं जाव सुक्कलेसाणं कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! सव्वत्थोवा पंचेंदियतिरि०

सुक्कलेस्सा सुक्कलेसाओ संखि० पम्हलेसा सं० पम्हलेसाओ संखेज्जगुणाओ तेउलेसा सं० तेउलेस्साओ संखिज्जगुणाओ काउले० संखे० नीललेसाओ विसेसाहिआओ कण्हलेसा विसेसा० काउले० असंखेज्जगुणा नीलले० विसे० कण्हले० विसेसाहियाओ, एएसि णं भंते ! तिरि० तिरिक्खजोणिणीण य कण्हले० जाव सुक्क० कयरे कयरेहिंतो अप्पा वा ४ ?, गो० ! जहेव नवमं अप्पाबहुगं तहा इमंपि, नवरं काउले० तिरि० अणं०, एवं एते दस अप्पाबहुगा तिरिक्खजोणियाणं (सूत्रं २१८)।

'एएसि णं भंते! नेरइयाण'मित्यादि, नैरयिकाणां हि तिस्रो लेश्याः, तद्यथा—कृष्णलेश्या नीललेश्या कापोतलेश्या, उक्तं च "काउय दोसु तईयाएँ मीसिया नीलिया चउत्थीए। पंचमियाए मिस्सा कण्हा तत्तो परमकण्हा ॥१॥" [कापोती द्वयोस्तृतीयस्यां मिश्रा नीला चतुर्थ्यां। पञ्चम्यां मिश्रा कृष्णा ततः परमकृष्णा ॥ १ ॥ ] ततोऽत्र त्रयाणामेव पदानां परस्परमल्पबहुत्वचिन्ता, तत्र सर्वस्तोकाः कृष्णलेश्यानैरयिकाः, कतिपयपञ्चमपृथिवीगतनरकावासेषु षष्ठ्यां सप्तम्यां च पृथिव्यां नैरयिकाणां कृष्णलेश्यासद्भावात्, ततोऽसङ्ख्येयगुणा नीललेश्याः, कतिपयेषु तृतीयपृथिवीगतनरकावासेषु चतुर्थ्यां समस्तायां पृथिव्यां कतिपयेषु च पञ्चमपृथिवीगतनरकावासेषु नैरयिकाणां पूर्वोक्तेभ्योऽसङ्ख्येयगुणानां नीललेश्याभावात्, तेभ्योऽप्यसङ्ख्येयगुणाः कापोतलेश्याः, प्रथमद्वितीयपृथिव्योस्तृतीयपृथिवीगतेषु च कतिपयेषु नरकावासेषु नारकाणामनन्तरोक्तेभ्योऽसङ्ख्येयगुणानां कापोतलेश्यासद्भावात्। अधुना तिर्यक्-

पञ्चेन्द्रियेष्वल्पबहुत्वमाह—'एएसि णं भंते!' इत्यादि, 'एवं जहा ओहिया' इति एवम्—उपदर्शितेन प्रकारेण यथा प्रागोघिकास्तथा वक्तव्याः, नवरमलेश्यावर्जाः, तिरश्चामलेश्यानामसंभवात्, ते चैवं—सर्वस्तोकाः तिर्यग्योनिकाः शुक्लेश्याः, ते च जघन्यपदेऽप्यसङ्ख्याता द्रष्टव्याः, तेभ्य सङ्ख्येयगुणाः पद्मलेश्याः, तेभ्योऽपि सङ्ख्येयगुणास्तेजोलेश्याः, तेभ्योऽप्यनन्तगुणाः कापोतलेश्याः, तेभ्योऽपि नीललेश्या विशेषाधिकाः, तेभ्योऽपि कृष्णलेश्या विशेषाधिकाः, तेभ्योऽपि सलेश्या विशेषाधिकाः। साम्प्रतमेकेन्द्रियेष्वल्पबहुत्वमाह—'एएसि णं भंते! एगिंदियाण'—मित्यादि, सर्वस्तोका एकेन्द्रियास्तेजोलेश्याः, कतिपयेषु बादरपृथिव्यब्वनस्पतिकायिकेष्वपर्याप्तावस्थायां तस्याः सद्भावात्, तेभ्यः कापोतलेश्या अनन्तगुणाः, अनन्तानां सूक्ष्मबादरनिगोदजीवानां कापोतलेश्यासद्भावात्, तेभ्योऽपि नीललेश्या विशेषाधिकाः, तेभ्योऽपि कृष्णलेश्या विशेषाधिकाः, अत्र भावना प्रागेवोक्ता। सम्प्रति पृथिवीकायिकादिविषयमल्पबहुत्वं वक्तव्यं, तत्र पृथिव्यब्वनस्पतिकायानां चतस्रो लेश्याः तेजोवायूनां तिस्र इति तथैव सूत्रमाह—'एएसि णं भंते! पुढविकाइयाण' मित्यादि, सुगमं, द्वित्रिचतुरिन्द्रियविषयमपि, पञ्चेन्द्रियतिर्यग्योनिकसूत्रे कापोतलेश्या असङ्ख्यातगुणा नत्वनन्तगुणाः, पञ्चेन्द्रियतिरश्चां सर्वसङ्ख्ययाऽप्यसङ्ख्यातत्वात्, संमूर्च्छिमपञ्चेन्द्रियतिरश्चां यथा तेजस्कायिकानामुक्तं तथा वक्तव्यं, तेजस्कायिकानामिव तेषामप्याद्यलेश्यात्रयमात्रसद्भावात्, गर्भव्युत्क्रान्तिकपञ्चेन्द्रियतिर्यग्योनिकसूत्रे तेजोलेश्याभ्यः कापोतलेश्या असङ्ख्येयगुणा वक्तव्याः, तावतामेव तेषां केवलवे-

दसोपलब्धत्वात्, शेषमौघिकसूत्रवद् वक्तव्यं, एवं तिर्यग्योनिकीनामपि सूत्रं वक्तव्यं, तथा चाह–'एवं तिरिक्खजोणिणीणवि'। अधुना संमूर्च्छिमगर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रियतिर्यक्स्त्रीविषयं सूत्रमाह—'एएसि णं भंते !' इत्यादि सुगमं, एतच्च प्राग्वद् भावनीयं, इदं किल पञ्चेन्द्रियतिर्यग्योनिकाधिकारे षष्ठं सूत्रमनन्तरोक्तं च पञ्चममत उक्तं 'जहेव पंचमं तहा इमं छट्ठं भाणियव्वं,' अधुना गर्भव्युत्क्रान्तिकतिर्यक्पञ्चेन्द्रियतिर्यक्स्त्रीविषयं सप्तमं सूत्रमाह—'एएसि णं भंते !' इत्यादि सुगमं, नवरं सर्वास्वपि लेश्यासु स्त्रियः प्रचुराः, सर्वसङ्ख्ययापि च तिर्यक्पुरुषेभ्यस्तिर्यक्स्त्रियस्त्रिगुणाः "तिगुणा तिरूवअहिया तिरियाणं इत्थिया मुणेयव्वा" [ त्रिगुणास्त्रिरूपाधिकास्तिरश्चां स्त्रियो ज्ञातव्याः ] इति वचनात्, ततः सङ्ख्यातगुणा उक्ताः, नपुंसकास्तु गर्भव्युत्क्रान्तिकाः कतिपय इति न ते यथोक्तमल्पबहुत्वं व्याप्नुवन्ति, सम्प्रति संमूर्च्छिमपञ्चेन्द्रियतिर्यग्योनिकगर्भव्युत्क्रान्तिकपञ्चेन्द्रियतिर्यग्योनिकतिर्यक्स्त्रीविषयमष्टमं सामान्यतः पञ्चेन्द्रियतिर्यग्योनिकतिर्यक्स्त्रीविषयं नवमं सामान्यतस्तिर्यग्योनिकतिर्यक्स्त्रीविषयं दशमं सूत्रमाह ।

एवं मणुस्साणवि अप्पाबहुगा भाणियव्वा, नवरं पच्छिमगं अप्पाबहुगं नत्थि ( सूत्रं २१९ ) एएसि णं भंते ! देवाणं कण्हलेसा जाव सुक्कलेसाण य कयरे कयरेहिंतो ?, अप्पा वा ४ गो० ! सव्वत्थोवा देवा सुक्कले० पम्हलेस्सा असं० काउले० असं० नीललेस्सा विसेसा० कण्ह० विसेसा० तेउलेसा संखेज्जगुणा, एएसि णं भंते ! देवीणं कण्हले० जाव तेउलेसाण य

॥३४७॥

कयरे कयरेहिंतो अप्पा वा ४?, गो० ! सव्वत्थोवा देवीओ काउले० नीललेसाओ विसे० कण्हले० विसेसा० तेउले० संखे० एवं, एएसि णं भंते ! देवाणं देवीण य कण्हले० जाव सु० कयरे २ अप्पा वा ४?, गो० ! सव्वत्थोवा देवा सुक्कले० पम्हले० असं० काउले० असं० नीलले० विसे० कण्हले० विसे० काउले० देवीओ संखे० नीलले० विसे० कण्हले० विसे० तेउले० देवा संखे० तेउ० देवीओ संखे०, एएसि णं भंते ! भवणवासीणं देवाणं कण्हले० जाव तेउलेस्साण य कयरे २ अप्पा वा ४, गो० ! सव्व० भवणवासी देवा तेउले० काउलेसा० असं० नीललेसा विसे० कण्हलेसा विसेसा। एतेसि णं भंते ! भवणवासिणीणं देवीणं कण्हले० जाव तेउले० कतरे कतरेहिंतो अप्पा वा ४?, गो० ! एवं चेव, एएसि णं भंते ! भवणवासीणं देवाणं देवीण य कण्हलेसाणं जाव तेउलेसाण य कयरे २? अप्पा वा ४?, गो० ! सव्वत्थो० भवणवासी देवा तेउलेसा भवणवासिणीओ तेउलेसाओ संखे० काउले० भवणवासीओ असंखे० नीललेसा विसे० कण्हलेसा विसे० काउलेसाभवणवासिणीओ देवीओ संखेज्जगु० नीलले० विसे० कण्हलेसाओ विसेसाहियाओ, एवं वाणमंत० तिन्नेव अप्पाबहुया जहेव भवणवासिणं तहेव भा०। एतेसि णं भंते ! जोइसि० देवाणं देवीण य तेउलेसाणं कयरे २? अप्पा वा ४?, गो० ! सव्वत्थो० जोइसिया देवा तेउले० जोइसिणीओ देवीओ० तेउले० संखेज्जाओ। एएसि णं भंते! वेमाणियाणं देवाणं तेउले० पम्हलेसाणं सुक्कलेसाण य कयरे २? अप्पा वा ४?, गो० ! सव्वत्थो० वेमाणिया देवा सुक्कलेस्सा पम्हलेसा असं० तेउलेसा० असं०, एतेसि णं भंते! वेमाणियाणं देवाणं देवीण य तेउलेसा० पम्हसुक्कलेस्साण य कयरे २ अप्पा वा ४?, गो० ! सव्वत्थोवा वेमाणिया देवा सुक्कलेस्सा पम्हलेस्सा असंखेज्जगुणा तेउलेस्सा असं-

खेज्जगुणा तेउलेसाओ वेमाणिणीओ देवीओ संखेज्जगुणाओ, एएसि णं भंते ! भवणवासीदेवाणं वाणमंतराणं जोइसियाणं वेमाणियाण य देवाण य कण्हलेसाणं जाव सुक्कलेसाणं कयरे २ अप्पा वा ४ ?, गो० !, सव्वत्थोवा वेमाणिया देवा सुक्कलेस्सा पम्हलेस्सा असंखेज्जगुणा तेउलेस्सा असंखेज्जगुणा तेउलेसा भवणवासीदेवा असं० काउलेस्सा असं० नीलले० विसेसा० कण्हले० विसेसा० तेउलेसा वाणमंतरा देवा असं० काउले० असं० नीलले० विसेसा कण्हले० विसेसा तेउलेसा जोइसिया देवा संखे०, एएसि णं भंते ! भवणवासिणीणं वाणमंतरीणं जोइसिणीणं वेमाणिणीण य कण्हलेसाणं जाव तेउलेस्साण य कयरे २ ?, गो० ! सव्वत्थोवाओ देवीओ वेमाणिणीओ तेउलेसाओ भवणवासिणीओ तेउलेसाओ असं० काउलेसाओ असं० नीललेसाओ विसेसा० कण्हले० विसेसा० तेउलेसाओ वाणमंतरीओ देवीओ असं० काउले० असं० नीललेसाओ विसेसा० कण्हलेसाओ विसेसा० तेउलेसाओ जोइसिणीओ देवीओ संखेज्जगुणाओ ॥ एएसि णं भंते! भवणवासीणं जाव वेमाणियाणं देवाण य देवीण य कण्हलेसाणं जाव सुक्कलेसाण य कयरे २ अप्पा वा ४?, गो० ! सव्वत्थोवा वेमाणिया देवा सुक्कलेसा पम्हलेसा असंखे० तेउलेसा असंखे० तेउलेसाओ वेमाणियदेवीओ संखे० तेउले० भवणवासीदेवा असं० तेउलेसाओ भवणवासीदेवीओ संखे० काउलेसा भवणवासी असं० नीलले० विसेसा० कण्हले० विसेसा० काउलेसाओ भवणवासिणिओ संखे० नीलले० विसेसाहियाओ कण्हलेसाओ विसे० तेउलेसा वाणमंतरा सं० तेउलेसाओ वाणमंतरीओ संखे० काउले० वाणमंतरा असं० नीलले० विसेसा० कण्हले० विसेसा० काउले० वाणमं० संखे० नीललेसाओ विसे० कण्हलेसा विसेसा० तेउले० जोइसिया संखे० तेउले० जोइसिणीओ संखिज्जगुणाओ । (सूत्रं २२०)

एएसि णं भंते ! कण्हलेसाणं जाव सुक्कलेसाण य कयरे २ अप्पड्ढिया वा महड्ढिया वा ?, गो० ! कण्हलेसेहिंतो नीललेसा महड्ढिया नीललेसेहिंतो काउलेसा महड्ढिया एवं काउलेस्सेहिंतो तेउलेसा महड्ढिया तेउलेसेहिंतो पम्हलेसा महड्ढिया पम्हलेसेहिंतो सुक्कलेसा महड्ढिया, सवप्पड्ढिया जीवा कण्हले० सवमहड्ढिया सुक्कलेसा ॥ एएसि णं भंते ! नेरइयाणं कण्हलेसाणं नीललेसाणं काउलेसाण य कयरे २ अप्पड्ढिया वा महड्ढिया वा ?, गो० ! कण्हलेसेहिंतो नीलले० महड्ढिया नीललेसेहिंतो काउलेसा महड्ढिया, सवप्पड्ढिया नेरइया कण्हले०, सवमहड्ढिया नेरइया काउले० ॥ एएसि णं भंते ! तिरिक्खजोणियाणं कण्हलेसाणं जाव सुक्कलेसाण य कयरे कयरेहिंतो अप्प० मह० ?, गो० !, जहा जीवाणं । एएसि णं भंते ! एगिंदियतिरिक्खजोणि० कण्हले० जाव तेउलेसाण य कयरे कयरेहिंतो अप्पड्ढिया वा महड्ढिया वा ?, गो० !, कण्हलेसेहिंतो एगिंदियतिरिक्खजो० नीलले० महड्ढिया नीलले० तिरि० काउले० मह० काउले० तेउले० महड्ढिया, सवप्पड्ढिया एगेंदियतिरिक्खजोणिया कण्हले० सवमहड्ढिया तेउले० । एवं पुढविकाइयाणवि, एवं एएणं अभिलावेणं जहेव लेस्साओ भावियाओ तहेव नेयवं जाव चउरिंदिया । पंचेंदियतिरिक्खजोणि० तिरिक्खजोणिणीणं संमुच्छिमाणं गब्भवक्कंतियाण य सवेसिं भाणि० जाव अप्पड्ढिया वेमाणिया देवा तेउले० सवमह० वेमा० सुक्कलेसा । केई भणंति—चउवीसं दंडएणं इड्ढी भाणि० ( सूत्रं २२१ ) बीओ उद्देसओ समत्तो ॥

'एएसि णं भंते !' इत्यादि भावना प्रागुक्तानुसारेण कर्त्तव्या, तिर्यग्योनिकविषयसूत्रसंकलनामाह—'एवमेए

दस अप्पाबहुगा तिरिक्खजोणियाण'मिति सुगमं, नवरमिहेमे पूर्वाचार्यप्रदर्शिते सङ्ग्रहणिगाथे—"ओहिय पणिंदि १
संमुच्छिमा २ य गब्भे ३ तिरिक्खइत्थीओ ४ । संमुच्छगब्भतिरिया ५ मुच्छतिरिक्खी य ६ गब्भंमि ७ ॥१॥ सम्मु-
च्छिमगब्भ इत्थी ८ पणिंदितिरिगित्थीया ९ य ओहित्थी १० । दस अप्पबहुगभेया तिरियाणं होंति नायव्वा ॥२॥"
यथा तिरश्चामल्पबहुत्वान्युक्तानि तथा मनुष्याणामपि वक्तव्यानि, नवरं पश्चिमं दशममल्पबहुत्वं नास्ति, मनुष्याणा-
मनन्तत्वाभावात्, तदभावे काउलेसा अणंतगुणा इति पदासम्भवात्। अधुना देवविषयमल्पबहुत्वमाह—'एएसि णं
भंते! देवाण'मित्यादि, सर्वस्तोका देवाः शुक्ललेश्याः, लान्तकादिदेवलोकेष्वेव तेषां सद्भावात्, तेभ्यः पद्मलेश्याः असङ्ख्ये-
यगुणाः, सनत्कुमारमाहेन्द्रब्रह्मलोककल्पदेवेषु पद्मलेश्याभावात्, तेषां च लान्तकादिदेवेभ्योऽसङ्ख्यातगुणत्वात्, तेभ्यः
कापोतलेश्याः असङ्ख्येयगुणाः, भवनपतिव्यन्तरदेवेषु सनत्कुमारादिदेवेभ्योऽसङ्ख्येयगुणेषु कापोतलेश्यासद्भावात्, ते-
भ्योऽपि नीललेश्या विशेषाधिकाः, प्रभूततराणां भवनपतिव्यन्तराणां तस्याः सम्भवात्, तेभ्योऽपि कृष्णलेश्या विशेषा-
धिकाः प्रभूततमानां तेषां कृष्णलेश्याकत्वात्, तेभ्योऽपि तेजोलेश्याः सङ्ख्येयगुणाः, कतिपयानां भवनपतिव्यन्तराणां
समस्तानां ज्योतिष्कसौधर्मेशानदेवानां तेजोलेश्याभावात्॥ अधुना देवीविषयं सूत्रमाह—'एएसि णं भंते! देवीण'मि-
त्यादि देव्यश्च सौधर्मेशानान्ता एव न परत इति तासां चतस्र एव लेश्यास्ततस्तद्विषयमेवाल्पबहुत्वमभिधित्सुना
'जाव तेउलेस्साण य' इत्युक्तं सर्वस्तोका देव्यः कापोतलेश्याः कतिपयानां भवनपतिव्यन्तरदेवीनां कापोतले-

श्याभावात् तेभ्यो विशेषाधिका नीललेश्याः प्रभूतानां भवनपतिव्यन्तरदेवीनां तस्याः संभवात् तेभ्योऽपि कृष्णलेश्या विशेषाधिकाः प्रभूतानां तासां कृष्णलेश्याकत्वात्, ताभ्यस्तेजोलेश्याः सङ्ख्येयगुणाः, ज्योतिष्कसौधर्म्मेशानदेवीनामपि समस्तानां तेजोलेश्याकत्वात् । सम्प्रति देवदेवीविषयं सूत्रमाह—'एएसि ण'मित्यादि, सर्वस्तोका देवाः शुक्ललेश्याः, तेभ्योऽसङ्ख्येयगुणाः पद्मलेश्याः, तेभ्योऽप्यसङ्ख्येयगुणाः कापोतलेश्याः, तेभ्यो नीललेश्या विशेषाधिकाः, तेभ्योऽपि कृष्णलेश्या विशेषाधिकाः, एतावत्प्रागेव भावितं, तेभ्योऽपि कापोतलेश्याका देव्यः सङ्ख्येयगुणाः, ताश्च भवनपतिव्यन्तरनिकायान्तर्गता वेदितव्याः, अन्यत्र देवीनां कापोतलेश्याया असंभवात्, देव्यश्च देवेभ्यः सामान्यतः प्रतिनिकायं द्वात्रिंशद्गुणाः ततः कृष्णलेश्येभ्यो देवेभ्यः कापोतलेश्या देव्यः सङ्ख्येयगुणा अपि घटन्ते, ताभ्यो नीललेश्या विशेषाधिकाः, ताभ्यः कृष्णलेश्या विशेषाधिकाः, अत्रापि प्राग्वद् भावना, ताभ्योऽपि तेजोलेश्या देवाः सङ्ख्येयगुणाः, कतिपयानां भवनपतिव्यन्तराणां समस्तानां ज्योतिष्कसौधर्म्मेशानदेवानां तेजोलेश्याकत्वात्, तेभ्योऽपि तेजोलेश्याका देव्यः सङ्ख्येयगुणाः द्वात्रिंशद्गुणत्वात् । सम्प्रति भवनवासिदेवविषयं सूत्रमाह—'एएसि णं भंते !' इत्यादि, सर्वस्तोकास्तेजोलेश्या महर्द्धयो हि तेजोलेश्याका भवन्ति महर्द्धयश्चाल्पे इति ते सर्वस्तोकाः, तेभ्योऽसङ्ख्येयगुणाः कापोतलेश्याः, अतिशयेन प्रभूतानां कापोतलेश्यासंभवात्, तेभ्यो

नीललेश्या विशेषाधिकाः, अतिप्रभूततराणां तस्याः संभवात्, तेभ्योऽपि कृष्णलेश्या विशेषाधिकाः, अतिप्रभूततमानां कृष्णलेश्याभावात् । एवं भवनपतिदेवीविषयमपि सूत्रं भावनीयं । अधुना भवनपतिदेवदेवीविषयं सूत्रमाह—'एएसि ण' मित्यादि, सर्वस्तोका भवनवासिनो देवाः तेजोलेश्याकाः, युक्तिरत्र प्रागेवोक्ता, तेभ्यस्तेजोलेश्याका भवनवासिन्यो देव्यः सङ्ख्येयगुणाः, देवेभ्यो हि देव्यः सामान्यतः प्रतिनिकायं द्वात्रिंशद्गुणास्तत उपपद्यते सङ्ख्येयगुणत्वमिति, तेभ्यः कापोतलेश्या भवनवासिनो देवा असङ्ख्येयगुणाः, तेभ्यो नीललेश्या विशेषाधिकाः, तेभ्योऽपि कृष्णलेश्या विशेषाधिकाः, युक्तिरत्र प्रागुक्ताऽनुसरणीया, तेभ्यः कापोतलेश्या भवनवासिन्यो देव्यः सङ्ख्येयगुणाः, भावना प्रागुक्तभावनानुसारेण भावनीया, ताभ्यो नीललेश्या विशेषाधिकाः, ताभ्यः कृष्णलेश्या विशेषाधिकाः, एवं वानमन्तरविषयमपि सूत्रत्रयं भावनीयं, ज्योतिष्कविषयमेकमेव सूत्रं, तन्निकाये तेजोलेश्याव्यतिरेकेण लेश्यान्तरासम्भवतः पृथग् देवदेवीविषयसूत्रद्वयासम्भवात्, वैमानिकदेवविषयं सूत्रमाह—'एएसि णं भंते ! वेमाणियाण'मित्यादि, सर्वस्तोका वैमानिका देवाः शुक्लेश्याः, लान्तकादिदेवानामेव शुक्लेश्यासम्भवात्, तेषां चोत्कर्षतोऽपि श्रेण्यसङ्ख्येयभागगतप्रदेशराशिमानत्वात्, तेभ्यः पद्मलेश्या असङ्ख्येयगुणाः, सनत्कुमारमाहेन्द्रब्रह्मलोककल्पवासिनां सर्वेषामपि देवानां पद्मलेश्यासम्भवात्, तेषां चातिबृहत्तमश्रेण्यसङ्ख्येयभागवर्त्तिनभःप्रदेशराशिप्रमाणत्वात्, लान्तकादिदेवपरिमाणहेतुश्रेण्यसङ्ख्येयभागापेक्षया ह्यमीषां परिमाणहेतुः श्रेण्यसङ्ख्येयभागो-

ऽसङ्ख्येयगुणः, तेभ्योऽपि तेजोलेश्या असङ्ख्येयगुणाः, तेजोलेश्या हि सौधर्म्मेशानदेवानां, ईशानदेवाश्चाङ्गुलमात्रक्षेत्रप्रदेशराशेः सम्बन्धिनि द्वितीयवर्गमूले तृतीयेन वर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति तावत्प्रमाणासु घनीकृतस्य लोकस्य एकप्रादेशिकीषु श्रेणिषु यावन्तो नभःप्रदेशाः तावत्प्रमाण ईशानकल्पगतदेवदेवीसमुदायः, तद्गतकिञ्चिदूनद्वात्रिंशत्तमभागकल्पा देवाः, तेभ्योऽपि च सौधर्म्मकल्पदेवाः सङ्ख्येयगुणाः, ततो भवन्ति पद्मलेश्येभ्यस्तेजोलेश्या असङ्ख्येयगुणाः, देव्यश्च सौधर्म्मेशानकल्पयोरेव, तत्र च केवला तेजोलेश्या, ततो लेश्यान्तरासम्भवान्न तद्विषयं पृथक्सूत्रं अतः। सम्प्रति देवदेवीविषयं सूत्रमाह—'एएसि णं भंते! वेमाणियाणं देवाणं देवीण य' इत्यादि सुगमं, नवरं 'तेउलेसाओ वेमाणिणीओ देवीओ संखेज्जगुणाओ' इति, देवेभ्यो देवीनां द्वात्रिंशद्गुणत्वात्॥ अधुना भवनपतिव्यन्तरज्योतिष्कवैमानिकविषयं सूत्रमाह—'एएसि णं भंते! भवणवासीण'मित्यादि, तत्र सर्वस्तोका वैमानिका देवाः शुक्ललेश्याः, पद्मलेश्या असङ्ख्येयगुणाः, तेजोलेश्या असङ्ख्येयगुणा इत्यत्र भावनाऽनन्तरमेव कृता, तेभ्योऽपि भवनवासिनो देवास्तेजोलेश्याका असङ्ख्येयगुणाः, कथमिति चेद् ?, उच्यते, अङ्गुलमात्रक्षेत्रप्रदेशराशेः सम्बन्धिनि प्रथमवर्गमूले तृतीयवर्गमूलेन गुणिते यावान् प्रदेशराशिर्भवति तावत्प्रमाणासु घनीकृतस्य लोकस्यैकप्रादेशिकीषु श्रेणिषु यावान् प्रदेशराशिस्तावत्प्रमाणो भवनपतिदेवदेवीसमुदायः, तद्गताकिंचिदूनद्वात्रिंशत्तमभागकल्पा भवनपतयो देवाः, तत इमे प्रभूता इति घटन्ते सौधर्म्मेशानदेवेभ्यस्तेजोलेश्याका असङ्ख्येयगुणाः, तेभ्यः

कापोतलेश्या भवनपतय एवासङ्ख्येयगुणाः, अल्पर्द्धिकानामप्यतिप्रभूतानां कापोतलेश्यासम्भवात्, तेभ्योऽपि भवनवासिन एव नीललेश्या विशेषाधिकाः, युक्तिरत्र प्रागेवोक्ता, तेभ्योऽपि वानमन्तरास्तेजोलेश्याका असङ्ख्येयगुणाः, कथमिति चेद्, उच्यते, इह सङ्ख्येययोजनकोटीकोटीप्रमाणानि सूचिरूपाणि खण्डानि यावन्त्येकस्मिन्प्रतरे भवन्ति तावान् व्यन्तरदेवदेवीसमुदायः, तद्गतकिंचिदूनद्वात्रिंशत्तमभागकल्पा व्यन्तरदेवाः, तत इमे भवनपतिभ्योऽतिप्रभूततमा इत्युपपद्यते, कृष्णलेश्येभ्यो भवनपतिभ्यो वानमन्तरास्तेजोलेश्याका असङ्ख्येयगुणाः, तेभ्योऽपि वानमन्तरा एव कापोतलेश्याका असङ्ख्येयगुणाः, अल्पर्द्धिकानामपि कापोतलेश्याभावात्, तेभ्योऽपि वानमन्तरा नीललेश्या विशेषाधिकाः, तेभ्योऽपि कृष्णलेश्या विशेषाधिकाः, अत्रापि युक्तिः प्रागुक्ताऽनुसरणीया, तेभ्यस्तेजोलेश्या ज्योतिष्का देवाः सङ्ख्येयगुणाः, यतः षट्पञ्चाशदधिकाङ्गुलशतद्वयप्रमाणानि सूचिरूपाणि यावन्ति खण्डान्येकस्मिन् प्रतरे भवन्ति तावत्प्रमाणो ज्योतिष्कदेवदेवीसमुदायः, तद्गतकिञ्चिदूनद्वात्रिंशत्तमभागकल्पा ज्योतिष्कदेवाः, ततः कृष्णलेश्येभ्यो वानमन्तरेभ्यः सङ्ख्येयगुणा एव घटन्ते ज्योतिष्कदेवा न त्वसङ्ख्येयगुणाः, सूचिरूपखण्डप्रमाणहेतोः सङ्ख्येययोजनकोटीकोट्यपेक्षया षट्पञ्चाशदधिकाङ्गुलशतद्वयस्य सङ्ख्येयभागमात्रवर्त्तित्वात् ॥ सम्प्रति भवनवास्यादिदेवदेवीविषयं तदनन्तरं भवनवास्यादिदेवदेवीसमुदायविषयं सूत्रमाह—एतच्च सूत्रद्वयमपि प्रागुक्तभावनानुसारेण भावनीयं । सम्प्रति लेश्याविशिष्टानामल्पर्द्धिकत्वमहर्द्धिकत्वे प्रतिपिपादयिषुरिदमाह—'एएसि णं भंते ! जीवाणं

कण्हलेसाण'मित्यादि, सुगमं, नवरं लेश्याक्रमेण यथोत्तरं महर्द्धिकत्वं यथाऽर्वाक् अल्पर्द्धिकत्वं भावनीयं, एवं नैरयिकतिर्यग्योनिकमनुष्यवैमानिकविषयाण्यपि सूत्राणि येषां यावत्यो लेश्यास्तेषां तावतीः परिभाव्य भावनीयानि ॥ इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां लेश्यापदस्य द्वितीयोद्देशकः समाप्तः



उक्तो द्वितीय उद्देशकः, सम्प्रति तृतीय आरभ्यते, तस्य चेदमादिसूत्रम्—

नेरइए णं भंते ! नेरइएसु उववज्जइ अनेरइए नेरइएसु उववज्जइ ?, गो० !, नेरइए नेरइएसु उववज्जइ नो अनेरइए नेरइएसु उववज्जइ, एवं जाव वेमाणियाणं। नेरइए णं भंते ! नेरइएहिंतो उववट्टइ अनेरइए नेरइएहिंतो उववट्टति ?, गो० !, अनेरइए नेरइएहिंतो उववट्टति णो नेरइए नेरइएहिंतो उववट्टइ, एवं जाव वेमाणिए, नवरं जोइसियवेमाणिएसु चयणंति अभिलावो कायवो। से नूणं भंते ! कण्हलेसे नेरइए कण्हलेसेसु नेरइएसु उववज्जति कण्हलेसे उववट्टइ, जल्लेसे उववज्जइ तल्लेसे उववट्टइ ?, हंता गो० !, कण्हलेसे नेरइए कण्हलेसेसु नेरइएसु उववज्जति कण्हलेसे उववट्टइ, जल्लेसे उववज्जइ तल्लेसे उववट्टइ, एवं नीललेस्सेवि, एवं काउलेस्सेवि। एवं असुरकुमाराणवि जाव थणियकुमारा, नवरं लेस्सा अब्भहिया, से नूणं भंते ! कण्हलेसे पुढविकाइए कण्हलेसेसु पुढविकाइएसु उववज्जति कण्हलेसे उवट्टइ जल्लेसे उववज्जति तल्लेसे उववट्टति ?,

हंता गो !, कण्हलेसे पुढविकाइए कण्हलेसेसु पुढविकाइएसु उववज्जति, सिय कण्हलेसे उववट्टइ सिय नीललेसे उववट्टइ सिय काउलेसे उववट्टइ सिय जल्लेसे उववज्जति सिय तल्लेसे उववट्टइ, एवं नीलकाउलेस्सासुवि, से नूणं भंते ! ( तेउल्लेसे पुढवीकाइए ) तेउलेस्सेसु पुढविकाइएसु उववज्जइ पुच्छा, हंता गो० !, तेउलेस्सेसु पुढविकाइएसु उववज्जइ, सिय कण्हलेसे उववट्टइ सिय नीललेसे उववट्टइ सिय काउलेसे उववट्टइ तेउलेसे उववज्जइ नो चेव णं तेउलेसे उववट्टइ, एवं आउकाइया वणस्सइकाइयावि, तेऊवाऊ एवं चेव, नवरं एतेसिं तेउलेस्सा नत्थि, बितियचउरिंदिया एवं चेव तिसु लेसासु, पंचेंदियतिरिक्खजोणिया मणुस्सा य जहा पुढविकाइया आदिल्लिया तिसु लेसासु भणिया तहा छसुवि लेसासु भा०, नवरं छप्पि लेस्साओ चारेयव्वाओ। वाणमं० जहा असुरकु०, से नूणं भंते ! तेउलेस्से जोइसिए तेउलेस्सेसु जोइसिएसु उवव० जहेव असुरकु०, एवं वेमाणियावि, नवरं दोण्हंपि चयंतीति अभिलावो। से नूणं भंते ! कण्हलेसे नीललेसे काउलेसे नेरइए कण्हलेसेसु नीललेसेसु काउलेसेसु नेरइएसु उवव० कण्ह० नील० काउले० उववट्टइ जल्लेसे उवव० तल्लेसे उववट्टइ ?, हंता गो० !, कण्हनीलकाउलेसे उववज्जइ जल्लेसे उववज्जइ तल्लेसे उववट्टइ, से नूणं भंते ! कण्हलेसे जाव तेउलेस्से असुरकुमारे कण्हलेसेसु जाव तेउलेसेसु असुरकुमारेसु उववज्जइ, एवं जहेव नेरइए तहा असुरकुमारावि जाव थणियकुमारावि, से नूणं भंते ! कण्हलेसे जाव तेउलेसे पुढविकाइए कण्हलेसेसु जाव तेउलेसेसु पुढविकाइएसु उववज्जइ ?, एवं पुच्छा जहा असुरकुमाराणं, हंता गो० !, कण्हलेसे जाव तेउलेसे पुढविकाइए कण्हलेसेसु जाव तेउलेसेसु पुढविकाइएसु सिय कण्हलेसे उववट्टइ सिय नीललेसे सिय काउलेसे उवट्टइ सिय जल्लेसे उववज्जइ तल्लेसे उववट्टइ, तेउलेसे उववज्जइ नो

चेव णं तेउलेसे उववट्टइ, एवं आउकाइया वणस्सइकाइयावि भाणियव्वा, से नूणं भंते ! कण्हलेसे नीललेसे काउलेसे तेउकाइए कण्हलेसेसु नीललेसेसु काउलेसेसु तेउकाइएसु उववज्जइ कण्हलेसे नीललेसे काउलेसे उववट्टइ जल्लेसे उववज्जइ तल्लेसे उववट्टइ ?, हंता गो० !, कण्ह० नील० काउलेसे तेउकाइए कण्ह० नील० काउलेसेसु तेउकाइएसु उववज्जइ सिय कण्हलेसे उव्वट्टइ सिय नीललेसे उववट्टति सिय काउलेसे उववट्टइ सिय जल्लेसे उववज्जइ तल्लेसे उववट्टइ, एवं वाउकाइयवेइंदियतेइंदियचउरिंदियावि भाणियव्वा । से नूणं भंते ! कण्हलेसे जाव सुक्कलेसे पंचेंदियतिरिक्खजोणिया कण्हलेसेसु जाव सुक्कलेसेसु पंचेंदियतिरिक्खजोणिएसु उववज्जइ ?, पुच्छा, हंता गोयमा !, कण्हलेसे जाव सुक्कलेस्से पंचेंदियतिरिक्खजोणिए कण्हलेसेसु जाव सुक्कलेसेसु पंचेंदियतिरि० उवव० सिय कण्हलेसे उववट्टइ जाव सिय सुक्कलेसे उववट्टइ सिय जल्लेसे उववज्जइ तल्लेसे उववट्टइ । एवं मणूसेवि । वाणमंतरा जहा असुरकुमारा जोइसियवेमाणियावि एवं चेव, नवरं जस्स जल्लेसा, दोण्हवि चयणंति भाणियव्वं ( सूत्रं २२२ )

'नेरइए णं भंते ! नेरइएसु उववज्जइ' इत्यादि, अस्य चायमभिसम्बन्धः—द्वितीयोद्देशके नारकादीनां लेश्यापरिसङ्ख्यानं अल्पबहुत्वं महर्द्धिकत्वं चोक्तं, इह तु तेषामेव नारकादिजीवानां तास्ता लेश्याः किमुपपातक्षेत्रोपपन्नानामेव भवन्ति उत विग्रहेऽपि इत्यस्यार्थस्य प्रतिपादनार्थं प्राक् नयान्तरमाश्रित्य नारकादिव्यपदेशं पृच्छति 'नेरइए णं भंते ! नेरइएसु उववज्जइ अनेरइए नेरइएसु उववज्जइ' इति, इदं च प्रश्नसूत्रं सुगमं, भगवानाह—गौतम !

नैरयिको नैरयिकेषूत्पद्यते नो अनैरयिकः, कथमिति चेद् ?, उच्यते, इह यस्मान्नारकादिभवोपग्राहकमायुरेव न शेषं, तथाहि—नारकायुषि उदयमागते नारकभवो भवति मनुष्यायुषि मानुषभव इत्यादि, ततो नारकाद्यायुर्वेदनप्रथमसमये एव नारकादिव्यपदेशं लभते, एतच्च ऋजुसूत्रनयदर्शनं, तथा च नयविद्भिः ऋजुसूत्रनयस्वरूपनिरूपणं कुर्वद्भिरिदमुक्तं—"पलालं न दहत्यग्निर्भिद्यते न घटः क्वचित् । नाशून्ये निष्क्रमोऽस्तीह, न च शून्यं प्रविश्यते ॥ १ ॥ नारकव्यतिरिक्तश्च, नरके नोपपद्यते । नरकान्नारकश्चास्य, न कश्चिद्विप्रमुच्यते ॥ २ ॥" इत्यादि, 'एवं जाव वेमाणिए' एवं—नैरयिकोक्तप्रकारेण तावद्वक्तव्यं यावद्वैमानिको—वैमानिकविषयं सूत्रं, तच्च सुगमत्वात् स्वयं परिभावनीयं ॥ अधुना उद्वर्त्तनाविषयं नैरयिकेषु सूत्रमाह—'नेरइए णं भंते !' इत्यादि, एतदपि ऋजुसूत्रनयदर्शनेन वेदितव्यं, तथाहि—परभवायुषि उदयमागते तत उद्वर्त्तते यद्भवायुश्चोदयमागतं तेन भवेन व्यपदेशः, यथा नारकायुषि उदयमागते नारकभवेन नारक इति, ततो नैरयिकेभ्योऽनैरयिक एवोद्वर्त्तते न नैरयिक इति । एवं चतुर्विंशतिदण्डकक्रमेण तावत्सूत्रं वक्तव्यं यावद्वैमानिकविषयं, नवरं ज्योतिष्कवैमानिकविषये च्यवनं इत्यभिलापः कर्त्तव्यः, तेभ्य उद्वर्त्तनस्य च्यवनमिति प्रसिद्धेः, तथा चाह—'एवं जाव वेमाणिए नवर'मित्यादि ॥ अधुना कृष्णलेश्याविषयमुत्पत्तौ सूत्रमाह—'से नूणं भंते !' इत्यादि, सेशब्दोऽथशब्दार्थः स चेह प्रश्ने नूनं—निश्चितमेतत् भदन्त ! कृष्णलेश्यो नैरयिकः कृष्णलेश्येषु नैरयिकेषु मध्ये उत्पद्यते तेभ्यश्च कृष्णलेश्येभ्यो नैरयिकेभ्य उद्व-

र्त्तमानः कृष्णलेश्य एवोद्वर्त्तते, एतदेव निश्चयदार्ढ्योत्पादनार्थं प्रकारान्तरेणाह—यल्लेश्य उत्पद्यते तल्लेश्य उद्वर्त्तते न लेश्यान्तरगत इति ?, भगवानाह—'हंता गोयमा !' इत्यादि, हन्तेत्यनुमतौ अनुमतमेतत् मम गौतम ! 'कण्हलेसेसु नेरइए' इत्यादि, अथ कथं कृष्णलेश्यः सन् कृष्णलेश्येषु नैरयिकेषूत्पद्यते न लेश्यान्तरोपेतः ?, उच्यते, इह तिर्यक्पञ्चेन्द्रियो मनुष्यो वा वद्धायुष्कतया नरकेषूत्पत्ति(तितु)कामो यथाक्रमं तिर्यगायुषि मनुष्यायुषि च साकल्येनाक्षीणेऽन्तर्मुहूर्त्तशेषे यल्लेश्येषु नरकेषूत्पत्स्यते तद्गतलेश्यया परिणमति, ततस्तेनैवाप्रतिपतितेन परिणामेन नरकायुः प्रतिसंवेदयते, तत उच्यते कृष्णलेश्यः कृष्णलेश्येषु नैरयिकेषूत्पद्यते न लेश्यान्तरयुक्तः, अथ कथं कृष्णलेश्याक एवोद्वर्त्तते ?, उच्यते, देवनैरयिकाणां हि लेश्यापरिणाम आभवक्षयाद् भवति, एतच्च प्रागेव प्रपञ्चत उपपादितं, एवं नीललेश्याविषयं कापोतलेश्याविषयं च सूत्रं वक्तव्यं, एवं असुरकुमारादीनामपि सनत्कुमारपर्यवसानानां वक्तव्यं, नवरं तेजोलेश्यासूत्रं तत्राभ्यधिकमभिधेयं, तेजोलेश्याया अपि तेषां भावात् ॥ अधुना पृथिवीकायिकेषु कृष्णलेश्याविषयं सूत्रमाह—'से नूणं भंते !' इत्यादि, इह तिरश्चां मनुष्याणां च लेश्यापरिणाम आन्तर्मुहूर्त्तिकस्ततः कदाचित् यल्लेश्य उद्वर्त्तते कदाचिल्लेश्यान्तरपरिणतोऽपि उद्वर्त्तते, एष पुनर्नियमो यो यल्लेश्येषूत्पद्यते स नियमतस्तल्लेश्य एवोत्पद्यते, "अंतमुहुत्तम्मि गए अंतमुहुत्तम्मि सेसए आउं (चेव) । लेसाहिं परिणयाहिं जीवा वच्चंति परलोयं ॥१॥"

[ अन्तर्मुहूर्त्ते गतेऽन्तर्मुहूर्त्ते शेष आयुषि (एव)। लेश्यापरिणामे जीवा व्रजन्ति परलोकम् ॥ १ ॥ ] इति वचनात्, तत उक्तं 'गोयमा ! कण्हलेसे पुढविकाइए कण्हलेसेसु पुढविकाइएसु उववज्जइ सिय कण्हलेसे उवट्टइ' इत्यादि, एवं नीललेश्याविषयं कापोतलेश्याविषयं च सूत्रं वक्तव्यं, तथा यदा भवनपतिव्यन्तरज्योतिष्कसौधर्म्मेशानदेवाः तेजोलेश्यावन्तः स्वभवाच्च्युत्वा पृथिवीकायिकेषूत्पद्यन्ते तदा कियत्कालमपर्याप्तावस्थायां तेषु तेजोलेश्याऽपि लभ्यते तत ऊर्द्ध्वं तु न भवति, तथा भवस्वभावतया तेजोलेश्यायोग्यद्रव्यग्रहणशक्त्यसम्भवात्, ततस्तेजोलेश्यासूत्रे उक्तं—'तेउलेसे उववज्जइ नो चेव णं तेउलेसे उववट्टइ' इति, यथा च पृथिवीकायिकानां चत्वारि सूत्राण्युक्तानि तथाऽप्कायिकवनस्पतिकायिकानामपि वक्तव्यानि, तेषामप्यपर्याप्तावस्थायां तेजोलेश्यासंभवात्, तेजोवायुद्वित्रिचतुरिन्द्रियविषयाणि प्रत्येकं त्रीणि सूत्राणि वक्तव्यानि, तेषां तेजोलेश्याया असम्भवात् ॥ पञ्चेन्द्रियतिर्यग्योनिका मनुष्याश्च यथाऽऽद्यासु तिसृषु लेश्यासु पृथिवीकायिका उक्ताः तथा षट्स्वपि लेश्यासु वक्तव्याः, षण्णामप्यन्यतमया लेश्यया तेषामुत्पत्तिसम्भवात्, उत्पत्तिगतैकैकलेश्याविषये चोद्वर्त्तनायां षण्णां विकल्पानां सम्भवात्, सूत्रपाठश्चैवं—'से नूणं भंते ! कण्हलेसे पंचिंदियतिरिक्खजोणिए कण्हलेसेसु पंचिंदियतिरिक्खजोणिएसु उववज्जइ कण्हलेसेसु उववट्टइ जल्लेसे उववज्जइ तल्लेसे उववट्टइ ?, हंता गोयमा !, कण्हलेसे पंचिंदियतिरिक्खजोणिए कण्हलेसेसु पंचिंदियतिरिक्खजोणिएसु उववज्जइ सिय कण्हलेसे उववट्टइ सिय नीललेसे उववट्टइ सिय काउलेसे उव-

वट्टइ सिय तेउलेसे उववट्टइ सिय पम्हलेसे उववट्टइ सिय सुक्कलेसे उववट्टइ सिय जल्लेसे उववज्जइ तल्लेसे उववट्टइ' एवं नीलकापोततेजःपद्मशुक्ललेश्याविषयाण्यपि सूत्राणि वक्तव्यानि 'वाणमंतरा जहा असुरकुमारा' इति 'जल्लेसे उववज्जइ तल्लेसे उववट्टइ' इति वक्तव्या इति, सर्वदेवानां लेश्यापरिणामस्याऽऽभवक्षयाद् भावात्, एवं लेश्यापरिसङ्ख्यानं परिभाव्य ज्योतिष्कवैमानिकविपयाण्यपि सूत्राणि वक्तव्यानि, नवरं तत्र 'चयन्ती'त्यभिलपनीयं, तदेवमेकैकलेश्याविषयाणि चतुर्विंशतिदण्डकक्रमेण नैरयिकादीनां सूत्राण्युक्तानि तत्र कश्चिदाशङ्केत—प्रविरलैकैकनारकादिविषयमेतत् सूत्रकदम्बकं यदा तु बहवो भिन्नलेश्याकास्तस्यां गतावुत्पद्यन्ते तदाऽन्यथाऽपि वस्तुगतिर्भवेत्, एकैकगतधर्मापेक्षया समुदायधर्मस्य कचिदन्यथाऽपि दर्शनात्, ततस्तदाशङ्काऽपनोदाय येषां यावत्यो लेश्याः सम्भवन्ति तेषां युगपत्तावल्लेश्याविषयमेकैकं सूत्रमनन्तरोदितार्थमेव प्रतिपादयति—'से नूणं भंते ! कण्हलेसे नीललेसे काउलेसे नेरइए कण्हलेसेसु नीललेसेसु काउलेसेसु नेरइएसु उववज्जइ' इत्यादि, समस्तं सुगमं । सम्प्रति कृष्णलेश्यादिनैरयिकसत्कावधिज्ञानदर्शनविषयक्षेत्रपरिमाणतारतम्यमाह—

कण्हलेसे णं भंते ! नेरइए कण्हलेसं नेरइयं पणिहाए ओहिणा सव्वओ समंता समभिलोएमाणे केवतियं खेत्तं जाणइ केवइयं खेत्तं पासइ ?, गो० !, णो बहुयं खेत्तं जाणइ णो बहुयं खेत्तं पासइ णो दूरं खेत्तं जाणइ णो दूरं खेत्तं पासइ इत्तरियमेव खित्तं जाणइ इत्तरियमेव खेत्तं पासइ, से केणट्ठेणं भंते ! एवं वुच्चइ कण्हलेसे णं नेरइए तं चेव जाव इत्तरियमेव खेत्तं

पासइ?, गो०!, से जहा नामए केइ पुरिसे बहुसमरमणिज्जंसि भूमिभागंसि ठिच्चा सव्वओ समंता समभिलोएज्जा, तए णं से पुरिसे धरणितलगयं पुरिसं पणिहाए सव्वओ समंता समभिलोएमाणे णो बहुयं खेत्तं जाव पासइ जाव इत्तरियमेव खेत्तं पासइ, से तेणट्ठेणं गोयमा! एवं वुच्चइ कण्हलेसे णं नेरइए जाव इत्तरियमेव खेत्तं पासइ, नीललेसे णं भंते! नेरइए कण्हलेसं नेरइयं पणिहाय ओहिणा सव्वओ समंता समभिलोएमाणे २ केवतियं खेत्तं जाणइ केवतियं खेत्तं पासइ?, गो०!, बहुतरागं खेत्तं जाणइ बहुतरागं खेत्तं पासइ दूरतरखेत्तं जाणइ दूरतरखेत्तं पासइ वितिमिरतरगं खेत्तं जाणइ वितिमिरतरगं खेत्तं पासइ विसुद्धतरागं खेत्तं जाणइ विसुद्धतरागं खेत्तं पासइ, से केणट्ठेणं भंते! एवं वुच्चइ—नीललेसे णं नेरइए कण्हलेसं नेरइयं पणिहाय जाव विसुद्धतरागं खेत्तं जाणइ विसुद्धतरागं खेत्तं पासइ?, से जहा नामए केइ पुरिसे बहुसमरमणिज्जाओ भूमिभागाओ पव्वयं दुरूहित्ता सव्वओ समंता समभिलोएज्जा तए णं से पुरिसे धरणितलगयं पुरिसं पणिहाय सव्वओ समंता समभिलोएमाणे २ बहुतरागं खेत्तं जाणइ जाव विसुद्धतरागं खेत्तं पासइ, से तेणट्ठेणं गोयमा! एवं वुच्चइ—नीललेस्से नेरइए कण्हलेसं जाव विसुद्धतरागं खेत्तं पासइ, काउलेस्से णं भंते! नेरइए नीललेस्सं नेरइयं पणिहाय ओहिणा सव्वओ समंता समभिलोएमाणे २ केवतियं खेत्तं जाणइ पासइ?, गो०! बहुतरागं खेत्तं जाणइ पासइ जाव विसुद्धतरागं खेत्तं पासति, से केणट्ठेणं भंते! एवं वु०—काउलेस्से णं नेरइए जाव विसुद्धतरागं खेत्तं पासइ?, गो०! से जहा नामए केइ पुरिसे बहुसमरमणिज्जाओ भूमिभागाओ पव्वयं दुरूहइ २ दोवि पाए उच्चाविया (वइत्ता) सव्वओ समंता समभिलोएज्जा तए णं से पुरिसे पव्वयगयं धरणितलगयं च पुरिसं पणिहाय सव्वओ समंता समभिलोएमाणे बहुतरागं खेत्तं

जाणइ बहुतरागं खेत्तं पासइ जाव वितिमिरतरागं पासइ, से तेणट्ठेणं गोयमा! एवं वुच्चइ—काउलेस्से णं नेरइए नीललेस्सं नेरइयं पणिहाय तं चेव जाव वितिमिरतरागं खेत्तं पासइ ॥ (सूत्रं २२३)

'कण्हलेसे णं भंते !' इत्यादि, कृष्णलेश्यो भदन्त कश्चिन्नैरयिकोऽपरं कृष्णलेश्याकं प्रणिधाय—अपेक्ष्यावधिना-अवधिज्ञानेन सर्वतः—सर्वासु दिक्षु समन्ततः—सर्वासु विदिक्षु समभिलोकमानो—निरीक्षमाणः कियत्—किंपरिमाणं क्षेत्रं जानाति कियद्वा क्षेत्रमवधिदर्शनेन पश्यति ?, भगवानाह—गौतम ! न बहु क्षेत्रं जानाति नापि बहु क्षेत्रं पश्यति, किमुक्तं भवति ?—अपरं कृष्णलेश्याकं नैरयिकमपेक्ष्य न विवक्षितः कृष्णलेश्याको योग्यतानुसारेणातिविशुद्धोऽपि नैरयिकोऽतिप्रभूतं क्षेत्रमवधिना जानाति पश्यति, एतदेवाह—न दूरम्—अतिविप्रकृष्टं क्षेत्रं जानाति नाप्यतिविप्रकृष्टं क्षेत्रं पश्यति, किं तु इत्वरमेव—स्वल्पमेवाधिकं क्षेत्रं जानाति इत्वरमेवाधिकं क्षेत्रं पश्यति, एतच्च सूत्रं समानपृथिवीककृष्णलेश्यनैरयिकविषयमवसेयमन्यथा व्यभिचारसम्भवात्, तथाहि—सप्तमपृथिवीगतः कृष्णलेश्याको नैरयिको जघन्यतो गव्यूतार्द्धं जानाति उत्कर्षतो गव्यूतं, षष्ठपृथिवीगतः कृष्णलेश्याको जघन्यतो गव्यूतमुत्कर्षतः सार्द्धं, पञ्चमपृथिवीगतः कृष्णलेश्याको जघन्यतः सार्द्धं गव्यूतमुत्कर्षतः किञ्चिदूने द्वे गव्यूते, ततो द्विगुणत्रिगुणाधिकक्षेत्रसंभवाद् भवत्यधिकृतसूत्रस्य व्यभिचारः, यथा समानपृथिवीकमपरं कृष्णलेश्याकं नैरयिकमपेक्ष्यातिविशुद्धोऽपि कृष्णलेश्याको नैरयिको मनागधिकं पश्यति नातिप्रभूतं तथा दृष्टान्तेनोपपिपादयिपुराह—'से केणट्ठे-

णं भंते !' इत्यादि, इयमत्र भावना—यथा समभूभागव्यवस्थित एव कश्चित् विवक्षितः पुरुषः चक्षुर्नैर्मल्यवशात् मनागधिकं पश्यति न प्रभूततरं तथा विवक्षितोऽपि कश्चित् कृष्णलेश्याको नैरयिकः स्वभूमिकानुसारेणातिविशुद्धोऽपि समानपृथिवीकमपरं कृष्णलेश्याकं नैरयिकमपेक्ष्य यदि परमवधिना मनागधिकं पश्यति न तु प्रभूततरं, अत्र समभूभागस्थानीया समाना पृथिवी स्वभूमिकासमाना च कृष्णरूपा लेश्या चक्षुःस्थानीयमवधिज्ञानमेतावता चैतदपि ध्वनितं—यथा समभूभागव्यवस्थितः पुरुषः सर्वतः समन्तादभिलोकमानो गर्त्तागतं पुरुषमपेक्ष्यातिप्रभूततरं पश्यति तथा पञ्चमपृथिवीगतः स्वभूमिकानुसारेणातिविशुद्धः कृष्णलेश्याको विवक्षितोऽपि नैरयिकः सप्तमपृथिवीगतं कृष्णलेश्याकमतिमन्दानुभागावधिनैरयिकमपेक्ष्यातिप्रभूतं पश्यति, मनागधिकत्रिगुणक्षेत्रसम्भवात् ॥ सम्प्रति नीललेश्याकविषयं सूत्रमाह—'नीललेसे णं भंते ! नेरइए कण्हलेसं नेरइयं पणिहाए' इत्यादि, अक्षरगमनिका सुगमा, नवरं 'वितिमिरतरागं खेत्तं जाणइ' इति विगतं तिमिरं—तिमिरसम्पाद्यो भ्रमो यत्र तद्वितिमिरं, इदं वितिमिरमिदं वितिमिरमनयोरतिशयेन वितिमिरं वितिमिरतरं 'द्वयोर्विभज्ये तरबि'ति तरप्प्रत्ययः, ततः प्राकृतलक्षणात् स्वार्थे कप्रत्ययः पूर्वस्य च दीर्घत्वं, अत एव विशुद्धतरं—निर्मलतरं अतीव स्फुटप्रतिभासमितियावत्, भावना त्वियं—यथा धरणितलगतं पुरुषमपेक्ष्य पर्वतारूढः पुरुषोऽतिदूरं क्षेत्रं पश्यति तदपि प्रायः स्फुटप्रतिभासं तथा विवक्षितोऽपि नीललेश्याको नैरयिको योग्यतानुसारेणातिविशुद्धावधिः कृष्णलेश्याकं नैरयिकमपेक्ष्यातिदूरं वितिमिर-

तरं स्फुटप्रतिभासं च क्षेत्रं जानातीति, अत्र पर्वतस्थानीया उपरितनी तृतीया पृथिवी अतिविशुद्धा च स्वभूमिकानुसारेण नीललेश्या धरणितलस्थानीया अधस्तनी कृष्णलेश्या चक्षुःस्थानीयमवधिज्ञानमिति ॥ सम्प्रति नीललेश्याकमपेक्ष्य कापोतलेश्याविषयं सूत्रमाह—'काउलेस्से णं भंते! नेरइए नीललेस्सं नेरइयं पणिहाये'त्यादि, अक्षरगमनिका सुगमा, नवरं 'दोवि पाए उच्चावइत्ता' इति द्वावपि पादौ उच्चैः कृत्वा, द्वावपि पार्ष्णी उत्पाट्येत्यर्थः, भावना त्वियं—यथा पर्वतस्योपरि वृक्षमारूढः सर्वतः समन्तादवलोकमानो बहुतरं पश्यति स्पष्टतरं च तथा कापोतलेश्यो नैरयिकोऽपरं नीललेश्याकमपेक्ष्य प्रभूतं क्षेत्रमवधिना जानाति पश्यति च तदपि च स्पष्टतरमिति, इह वृक्षस्थानीया कापोतलेश्या उपरितनी च पृथिवी पर्वतस्थानीया नीललेश्या तृतीया च पृथिवी चक्षुःस्थानीयमवधिज्ञानमिति ॥ सम्प्रति का लेश्याः कतिषु ज्ञानेषु लभ्यन्ते इति निरूपयितुकाम आह—

कण्हलेसे णं भंते ! जीवे कइसु नाणेसु होज्जा ?, गो० ! दोसु वा तिसु वा चउसु वा नाणेसु होज्जा, दोसु होमाणे आभिणिबोहियसुयनाणे होज्जा, तिसु होमाणे आभिणिबोहियसुयनाणओहिनाणेसु होज्जा, अहवा तिसु होमाणे आभिणिबोहियसुयनाणमणपज्जवनाणेसु होज्जा, चउसु होमाणे आभिणिबोहियसुयओहिमणपज्जवनाणेसु होज्जा, एवं जाव पम्हलेसे, सुक्कलेसेणं भंते ! जीवे कइसु नाणेसु होज्जा ?, गो० ! दोसु वा तिसु वा चउसु वा होज्जा, दोसु होमाणे

आभिणिबोहियनाण एवं जहेव कण्हलेसाणं तहेव भाणियव्वं जाव चउहिं, एगंमि नाणे होज्जा, एगंमि केवलनाणे होज्जा ( सूत्रं २२४ ) पन्नवणाए भगवईए लेस्सापए तइओ उद्देसओ समत्तो ॥

'कण्हलेसे णं भंते ! जीवे कइसु नाणेसु होज्जा' इत्यादि प्रश्नसूत्रं सुगमं, भगवानाह—गौतम ! द्वयोस्त्रिषु चतुर्षु च ज्ञानेषु भवति, तत्र द्वयोराभिनिबोधिकश्रुतज्ञानयोः त्रिषु आभिनिबोधिकश्रुतावधिज्ञानेषु यदिवाऽऽभिनिबोधिकश्रुतमनःपर्यायज्ञानेषु, इहावधिरहितस्यापि मनःपर्यवज्ञानमुपजायते, सिद्धप्राभृतादावनेकशस्तथा प्रतिपादनात्, अन्यच्च विचित्रा प्रतिज्ञानं तदावरणक्षयोपशमसामग्री, तत्र कस्यापि चारित्रिणोऽप्रमत्तस्यामर्षौषध्याद्यन्यतमकतिपयलब्धिसमन्वितस्य मनःपर्यायज्ञानावरणक्षयोपशमनिमित्ता सामग्री तथारूपाध्यवसायादिलक्षणा सम्पद्यते न त्ववधिज्ञानावरणक्षयोपशमनिमित्ता ततस्तस्य मनःपर्यवज्ञानमेव भवति, ननु मनःपर्यवज्ञानमतिविशुद्धस्योपजायते कृष्णलेश्या च संक्लिष्टाध्यवसायरूपा ततः कथं कृष्णलेश्याकस्य मनःपर्यायज्ञानसम्भवः ?, उच्यते, इह लेश्यानां प्रत्येकासङ्ख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि, तत्र कानिचित् मन्दानुभावान्यध्यवसायस्थानानि प्रमत्तसंयतस्यापि लभ्यन्ते, अत एव कृष्णनीलकापोतलेश्या अन्यत्र प्रमत्तसंयतान्ता गीयन्ते, मनःपर्यवज्ञानं च प्रथमतोऽप्रमत्तसंयतस्योत्पद्यते ततः प्रमत्तसंयतस्यापि लभ्यते इति सम्भवति कृष्णलेश्याकस्यापि मनःपर्यवज्ञानं, चतुर्ष्वाभिनिबोधिकश्रुतावधिमनःपर्यवज्ञानेषु, 'एवं जाव पम्हलेसे' इति एवं—कृष्णलेश्योक्तेन प्रकारेण तावद् वक्तव्यं

यावत् पद्मलेश्या, किमुक्तं भवति ?—नीललेश्यः कापोतलेश्यः तेजोलेश्यः पद्मलेश्यश्च उक्तप्रकारेण द्वयोस्त्रिषु चतुर्षु वा ज्ञानेषु भणनीयः, स च एवं 'नीललेस्से णं भंते ! जीवे कइसु नाणेसु होज्जा ?, गोयमा ! दोसु वा तिसु वा चउसु वा नाणेसु होज्जा' इत्यादि, शुक्लेश्येषु विशेष इति तं पृथक् वक्ति—'सुक्कलेसे णं भंते !' इत्यादि, इह शुक्लेश्यायामेव केवलज्ञानं न लेश्यान्तरे ततः शेषलेश्याकेभ्योऽस्य शुक्लेश्यस्य विशेषः ॥ इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां लेश्यापदस्य तृतीयोद्देशकः ।



उक्तस्तृतीयोद्देशकः, सम्प्रति चतुर्थ आरभ्यते, तत्र चेयमादावधिकारगाथा—

प्रथमं परिणामाधिकारः द्वितीयो वर्णाधिकारः तृतीयो रसाधिकारः चतुर्थो गन्धाधिकारः पञ्चमः शुद्धाशुद्धाधिकारः षष्ठः प्रशस्ताप्रशस्ताधिकारः सप्तमः संक्लिष्टासंक्लिष्टाधिकारः अष्टम उष्णशीताधिकारः नवमो गत्यधिकारः दशमः परिणामाधिकारः एकादशोऽप्रदेशः प्रदेशप्ररूपणाधिकारः द्वादशोऽवगाहाधिकारः त्रयोदशो वर्गणाधिकारः चतुर्दशः स्थानप्ररूपणाधिकारः पञ्चदशोऽल्पबहुत्वाधिकारः । तत्र प्रथमं परिणामलक्षणमभिधित्सुर्यासां परिणामो वक्तव्यः ता एव लेश्याः प्रतिपादयति—

परिणामवन्नरसगंधसुद्धअपसत्थसंकिलिट्ठुण्हा । गतिपरिणामपदेसोगाढवग्गणठाणाणमप्पबहुं ॥ १ ॥ कइ णं भंते ! लेसाओ

पन्नत्ताओ ?, गो० ! छल्लेसाओ पन्नत्ताओ, तंजहा—कण्ह० जाव सुक्कलेसा, से नूणं भंते ! कण्हलेसा नीललेसं पप्प तारूवत्ताए तावण्णत्ताए तागंधत्ताए तारसत्ताए ताफासत्ताए भुज्जो २ परिणमति, हंता गो० ! कण्हलेस्सा नीललेस्सं पप्प तारूवत्ताए जाव भुज्जो २ परिणमति, से केणट्ठेणं भंते! एवं वुच्चइ—कण्हलेस्सा नीललेस्सं पप्प तारूवत्ताए जाव भुज्जो २ परिणमति ?, गो० ! से जहा नामए खीरे दूसिं पप्प सुद्धे वा वत्थे रागं पप्प तारूवत्ताए जाव ताफासत्ताए भुज्जो २ परिणमइ, से तेणट्ठेणं गो० ! एवं वुच्चइ—कण्हलेसा नीललेसं पप्प तारूवत्ताए जाव भुज्जो २ परिणमइ, एवं एतेणं अभिलावेणं नीललेसा काउलेसं पप्प काउले० तेउलेसं पप्प तेउले० पम्हलेसं पप्प पम्हले० सुक्कलेसं पप्प जाव भुज्जो २ परिणमइ, से नूणं भंते ! कण्हलेसा नीललेसं काउलेसं तेउलेसं पम्हलेसं सुक्कलेसं पप्प तारूत्ताए तावण्णत्ताए तागंधत्ताए तारसत्ताए ताफासत्ताए भुज्जो २ परिणमइ ?, हंता गोयमा ! कण्हलेसा नीललेसं पप्प जाव सुक्कलेसं पप्प तारूव० तागंध० ताफा० भुज्जो २ परिणमइ, से केणट्ठेणं भंते ! एवं वुच्चइ—कण्हले० नीलले० जाव सुक्कलेसं पप्प तारूवत्ताए जाव भुज्जो २ परिणमइ ?, गोयमा ! से जहा नामए वेरुलियमणी सिया कण्हसुत्तए वा नीलसुत्तए वा लोहिय० हालिद्द० सुक्किल्ल० आइए समाणे तारूव० जाव भुज्जो २ परिणमइ, से तेणट्ठेणं एवं वुच्चइ—कण्हलेसा नीललेसं जाव सुक्कलेसं पप्प तारूवत्ताए भुज्जो २ परिणमति । से नूणं भंते ! नीललेसा किण्हलेसं जाव सुक्कलेसं पप्प तारूवत्ताए जाव भुज्जो २ परिणमइ, हंता गोयमा ! एवं चेव, काउलेसा किण्हलेसं नील० तेउ० पम्ह० सुक्कलेसं, एवं तेउलेसा किण्ह० नील० काउ० पम्ह० सुक्कलेसं, एवं पम्हलेसा किण्ह० नील० काउ० तेउ० सुक्कलेसं पप्प जाव भुज्जो २ परिणमइ ?, हन्ता

गोयमा ! तं चेव, से नूणं भंते ! सुक्कलेसा किण्ह० नील० काउ० तेउ० पम्ह० लेसं पप्प जाव भुज्जो २ परिणमइ ?, हंता गोयमा ! तं चेव ( सूत्रं २२५ )

'कइ णं भंते ! लेसाओ पन्नत्ताओ' इत्यादि, इदं सूत्रं प्रागप्युक्तं परं परिणामाद्यर्थप्रतिपादनार्थं भूय उपन्यस्तं 'से नूणं भंते' इत्यादि, अथ भदन्त कृष्णलेश्या–कृष्णलेश्यायोग्यानि द्रव्याणि नीललेश्यां—नीललेश्यायोग्यानि द्रव्याणि प्राप्य—अन्योऽन्यावयवसंस्पर्शमासाद्य तद्रूपतया—नीललेश्यारूपतया, रूपशब्दोऽत्र स्वभाववाची, नीललेश्यास्वभावतयेत्यर्थः भूयो भूयः परिणमतीति योगः, तत्स्वभावश्च तद्वर्गणा(द्वर्णा)दिरूपतया भवति तत आह—तद्वर्णतया तद्रसतया तद्गन्धतया तत्स्पर्शतया, सर्वत्रापि तच्छब्देन नीललेश्यायोग्यानि द्रव्याणि परामृशन्ति, भूयो भूयः—अनेकवारं तिर्यग्मनुष्याणां तत्तद्भवसङ्क्रान्तौ शेषकालं वा परिणमते, इदं हि तिर्यग्मनुष्यानधिकृत्य वेदितव्यं, एवं गौतमेन प्रश्ने कृते भगवानाह–'हंता गो० !' इत्यादि, हन्तेत्यनुमतौ अनुमतमेतत् गौतम ! कृष्णलेश्या नीललेश्यां प्राप्येत्यादि प्राग्वत्, इयमत्र भावना—यदा कृष्णलेश्यापरिणतो जन्तुस्तिर्यग्मनुष्यो वा भवान्तरसङ्क्रान्तिं चिकीर्षुर्नीललेश्यायोग्यानि द्रव्याणि गृह्णाति तदा नीललेश्यायोग्यद्रव्यसम्पर्कतस्तानि कृष्णलेश्यायोग्यानि द्रव्याणि तथारूपजीवपरिणामलक्षणं सहकारिकारणमासाद्य नीललेश्याद्रव्यरूपतया परिणमन्ते, पुद्गलानां तथातथापरिणमनस्वभावत्वात्, ततः स केवलनीललेश्यायोग्यद्रव्यसाचिव्यान्नीललेश्यापरिणतः सन् कालं कृत्वा भवान्तरे समुत्प-

